न च 'अनन्तं विश्वतोमुखम्' (११.११) 'निधानं बीजमव्ययम्' (भाग.१.३.५) इति वाक्यमुपचरितार्थं स्तुतिर्वेति शङ्क्यम् । ईश्वरेऽचिन्त्यशक्त्यैव मुख्यार्थोपपत्तावुपचारादिकल्पनाया अनुचितत्वादिति भाष्याभिप्राय इति भावः । 'उक्ता' इत्यनूद्य शेषमाह – **उक्ता इति ॥ उच्यते** अव्ययत्वम् । आत्मनोऽनादित्वम् आत्मानादित्वमित्यत्र आत्मशब्दार्थमाह – **आत्मन इति ॥** देहतोऽप्यनादित्वादेराक्षेपे अजत्वादिमात्रं कथमुच्यते ? इति कृतचोद्यस्य 'अजोऽपि' इत्यत्र देहतोऽप्यजत्वं विवक्षितमिति परिहारं भाष्यारूढं कर्तुम्, प्रस्तुतत्वाद् 'आत्माव्ययत्वम्' इति भाषणीये यद् 'आत्मानादित्वम्' इति भाषितं तत्प्रयोजनमाह – **विग्रहस्यापीति ॥ तस्यैव** विग्रहस्यैव । **अभिप्रायः** गीताचार्यस्य । अत्र तु स्वरूपस्यैवोच्यते इति किन्न स्यादिति चोद्यं परिहरति – **अत इति ॥ तद्विषयः** स्वरूपानादित्वविषयः । **आक्षेपः** 'न तर्ह्यनादिर्भवान्' (गी.भा.४.६) इत्याक्षेपः । स्वयं दूषणान्तरमाह – **आत्मशब्दोऽपीति ॥ अन्यथा** आक्षेपस्य स्वरूपानादित्वविषयत्वे । न केवलं स्वरूपानादित्वं सर्वजीवानामप्यस्तीत्युक्तदोष इत्यपिशब्दः । **इत्युक्तम्** 'अव्यय आत्मा देहोऽपी'ति भाष्ये ।

**भावदीपिका (श्री.टि.)– ॥ यदीति ॥** 'बहूनि मे व्यतीतानि जन्मानि' इत्युक्तत्वेन यदि ते जन्मानि व्यतीतानि तर्हीत्यर्थः ॥ **मरणेति ॥** 'अव्ययात्मा भूतानामीश्वरोऽपि सन्' इति परिहारे उक्तत्वादिति भावः ॥ **उक्तविरोध इति ॥** 'न त्वेवाहम्' इत्युक्तविरोध इत्यर्थः ॥ **कथमुच्यत इति ॥** तस्य स्वरूपपरत्वेनापि सावकाशत्वादिति भावः । **तथैव व्याख्येयमिति ॥** देहतोऽप्युत्पत्तिरहित इति व्याख्येयम् । एवं व्याख्याने देहतोऽप्यनादित्वं लभ्यत इत्याशयः ॥ **गीताचार्यस्येति ॥** गीतोपदेष्टुर्भगवतो वासुदेवस्येत्यर्थः । रूपशब्दो देहपरः । ननु ग्रहणम् अव्ययत्वाविरोधीति चेत्, तत्राऽह– **गृहीतस्य चेति ॥**

ननु द्वितीयाध्यायान्तेऽत्रार्थे आगमानामेवोक्तत्वात् कथं युक्तय इत्युक्तम्? इत्यत आह– **युज्यत इति ॥** 'अर्थ' इति शेषः । युज्यते उपपन्नो भवतीत्यर्थः । प्रतिपाद्यत इत्यर्थ इत्यपि आहुः ॥ **असम्भावनेति ॥** 'अव्ययात्मत्वादिविषयक' इति शेषः। **अत्र त्विति ॥** 'अव्ययात्मा' इत्यत्रेत्यर्थः । ननु 'आत्माव्ययत्वम्' इति वक्तव्ये 'अनादित्वम्' इत्युक्तिः कथमित्यत आह– **विग्रहस्यापीति ॥ तद्विषयः स्वरूपविषयः ।** 'न तर्हि' इत्याक्षेपः । 'अजोऽपि' इत्यादिपरिहारः ॥ **आत्मशब्दोऽपीति ॥** स्वरूपाव्ययत्वप्रतिपादनस्य 'अव्यय' इत्यनेनैव सम्भवाद् आत्मशब्दो व्यर्थ इत्यर्थः ॥

श्लोकः ६

**भावप्रकाशः (कृ.टि.)**– 'अजोपी'त्यत्र देहस्याप्यनादित्वोक्तेः तद्व्यावृत्त्याशङ्कां दर्शयितु-माह– **देहतोऽपीति** ।। अव्ययात्मेत्यादिविशेषणद्वयनिवर्त्यशङ्कां दर्शयितुमाह– **उपलक्षणमिति** ।। **उक्तविरोध इति** ।। नासतो विद्यते भाव इत्यादिनेश्वरानादिनित्यत्वस्यान्तवन्त इमे देहा इत्यत्र शरीरिण इति ईश्वरव्यावर्तकविशेषणबलेन तद्देहनित्यत्वस्य न मे पार्थास्ति कर्तव्यं नानवाप्त-मवाप्तव्यमित्यादिनेश्वरत्वस्य चोक्तत्वादिति भावः । बहुव्रीहित्वप्रदर्शनार्थमाह– **अस्येत्यध्याहार्या-मिति** ।। ननु भगवतो जन्माभावे 'न चापि राघवाज्ज्ञात' इत्याद्यागमानामुदाहृतत्वात् कथं युक्तय इत्युच्यत इत्यत आह – **युज्यत एभिरितीति** ।। यद्यपि स्त्रियां क्तिनो विधानात् आभिरिति वक्तव्यम् । तथाऽपि सामान्ये नपुंसकमित्येतदनुसृत्यैवमुक्तम् ।। **असम्भावनादीति** ।। आदिपदे-नौपचारकत्वस्तुतित्वयोः सङ्ग्रहः ।।

।। **अचिन्त्यशक्तित्वाद्या इति** ।। उभयविधवाक्यान्यथानुपपत्तिः । पदार्थवैचित्र्यं चादि-शब्दार्थः । अयमर्थः । उभयविधवाक्यान्यथानुपपत्त्या अनन्तमित्यादाव्ययत्वं 'जगृहे' इत्यत्र च व्यक्तिरुच्यत इति कल्प्यते । न चेश्वरस्य व्यक्तिरसम्भाविनी । अचिन्त्यशक्तेः । नचान्यत्रा-दृष्ट्याऽपलापः । तथा सति मूर्खे पाण्डित्यादृष्टेः पण्डितेऽपि तदभावप्रसङ्गात् । नच 'अनन्तम्' इत्यादिकमुपचरितार्था स्तुतिः वा स्तामिति वाच्यम् । ईश्वरे अचिन्त्यशक्त्या मुख्यार्थस्यैवोपपत्तौ उपचारादिकल्पनाऽनवकाशादिति 'अव्ययात्मा' इत्यव्ययत्वस्यैव प्रकृतत्वात् 'आत्माव्ययत्वम्' इति वक्तव्ये आत्मानादित्वमिति यदुक्तं तत्कृत्यमाह– **देहस्यापीति** ।। **अनादिनित्यस्येति** ।। यद्यप्यनादित्वस्य जन्मना सह परस्परविरहरूपत्वाख्यो व्याघातः, नतु नित्यत्वस्य । तथाऽपि परस्परविरहव्याप्यत्वात्मकविरोधोऽस्तीति सूचनाय नित्यत्वग्रहणम् ।।

## भाष्यम्

**कथमनादिनित्यस्य जनिः? प्रकृतिं स्वामधिष्ठाय । प्रकृत्या जातेषु वसुदेवादिषु । तथैव तेषां जात इव प्रतीयत इत्यर्थः । न तु स्वतन्त्रा-मधिष्ठायेत्याह– स्वामिति ।। 'द्रव्यं कर्म च' (भाग.२.१०.१२) इति ह्युक्तम् । सा हि तत्रोक्ता । ततः सर्वसृष्टेः ।।**

भावप्रदीपिका (प.टी.)– ननु यदि भगवान् स्वरूपतो देहतश्चानादिः, कथं तर्हि जनिः ? इत्याशङ्क्याह– **कथमिति** ।'भ्रमतां भ्रमति क्षितिः' इति न्यायात् स्वयं प्रकृत्या जातत्वात् भगवन्तमपि प्राकृतं पश्यतीत्यर्थः । वसुदेवादिवत् प्रकृतिसम्बन्ध एव तव कुतो नेत्यत आह– **न त्विति** ॥ प्रकृतेर्भगवदधीनत्वाच्च सा(ऽ)बन्धिका, किन्तु अविद्यमानबन्धमेव तेषां दर्शयतीत्यर्थः । प्रकृतेर्हर्यधीनत्वे प्रमाणमाह– **द्रव्यमिति** ॥ नात्र प्रकृतिः श्रूयत इत्यत आह– **सा हीति** । द्रव्यपदेनेत्यर्थः । द्रव्यपदेन पृथिव्यादिकं किं न स्यात् ? इत्यत आह– **तत इति** । सर्वकारणगणने पठितत्वात् द्रव्यपदेन प्रकृतिरेव । तस्या एव सर्वकारणत्वादित्यर्थः ।

भावप्रकाशिका (न.टी.)– अत्र केचित् वश्यप्रकृतित्वात् देहोपादानसंन्यासावीशस्य स्वेच्छयैवेति जीवेभ्यो विशेषं वर्णयन्ति । तदयुक्तम् । अनुपचरितस्वतन्त्रो हि वश्यप्रकृतिः । न चासौ जडादिनित्यदेहान् इच्छति, अनाद्यनन्तापरिमिततज्ज्ञानानन्दादिसान्द्रदेहं विना । देहस्येच्छया देहसृष्ट्याद्यपि चिन्त्यम् । 'अनन्तं विश्वतोमुखम्' इत्याद्यनन्तवेदेतिहासादिविरोधश्च तत्पक्षे ॥

भवत्वेवमनादिनित्यत्वं तद्देहस्यापि । तथाविधस्य कीदृशी जनिरिति भावेनाशङ्क्य, तदुत्तरत्वेनोत्तरार्धं व्याचष्टे – **कथमिति** ॥ प्राकृतदेहवतामेव जात इव प्रतीयत इति व्याख्यायाः 'भ्रमतां भ्रमति क्षितिः' इत्यादिवत् 'सम्भवामि' इत्युक्तेऽपि न विरोध इत्युक्तं भवति । न चैवं वसुदेवादीनामिव भगवतोऽपि देहकर्ता, तदधीनत्वादिति भावेन विशेषणमवतारयति – **न त्विति** ॥

ननु वशीकृताशेषचेतनायाः प्रकृतेर्भगवद्वशत्वे किं मानमित्यत आह – **द्रव्यमिति** ॥ ननु द्रव्यादेर्भगवद्वशत्वप्रतिपादकवाक्यं प्रकृतेर्भगवद्वशत्वे कथमुदाहृतमित्यत आह – **सा हीति** ॥ प्रकृतिर्हि तत्रोक्ता द्रव्यशब्देनेत्यर्थः । ननु पृथिव्यादिकमेव द्रव्यपदोक्तं किं न स्यात् ? इत्यत आह – **तत इति** । सर्वस्रष्टृणां भगवद्वशत्वप्रतिपादकं ह्येतद्वाक्यम् । न हि पृथिव्यादिभिः महदादिसृष्टिरिति भावः ॥

प्रमेयदीपिका (ज.टी.)– एवं तर्हि 'प्रकृतिं स्वामधिष्ठाय' इति कथमुक्तम्'? इत्यतस्तदन्यथाव्याख्यातुमाह – **कथमिति** ॥ स्वरूपतो देहतश्चानादिनित्यस्य 'सम्भवामि' इति जनिः कथमुच्यते? व्याहतत्वादित्यत 'आह' इति शेषः । अधिष्ठाय इत्यतः परम् इतिशब्दश्च ।

श्लोकः ६

कथमनेन परिहार इत्यतो व्याचष्टे — **प्रकृत्येति** ॥ वसुदेवादिषु 'प्रादुर्भूतत्वात्' इति शेषः । अनेन जन्मभ्रान्तेर्निमित्तमुक्तम् । यथोक्तम् 'स्त्रीपुम्प्रसङ्गात्' (म.भा.ता.नि.१०.५०) इत्यादि । भ्रान्तेरुपादानमाह — **तथैवेति** ॥ तमोरूपया । यदि मातापितृसम्बन्धोऽङ्गीकृतस्तर्हि तन्निमित्तं दुःखादिकमपि प्रसज्यत इत्याशङ्कानिरासाय स्वामिति पदं व्याख्याति — **नन्विति** ॥

प्रकृतेर्भगवदधीनत्वं कुतः? इत्यत आह — **द्रव्यमिति** ॥ अत्र वाक्ये प्रकृतिर्न श्रूयत इत्यत आह— **सा हि इति** ॥ 'द्रव्यपदेन' इति शेषः । तस्यात्र प्रकृतिवाचित्वं कुत इत्यत आह— **तत इति** ॥ सर्वसृष्टिकारणानि ह्यत्र निर्दिश्यन्ते । तच्च प्रकृतेरेव सम्भवति । न पृथिव्यादेरित्यर्थः ॥

**भावदीपः (रा.टि.)**– ॥ **यथोक्तमिति** ॥ भारततात्पर्ये दशमे 'स्त्रीपुंप्रसङ्गात् परतो यतो हरिः प्रादुर्भवत्येव विमोहयन् जनम् । अतो मलोत्थोऽयमिति स्म मन्यते जनोऽशुभः पूर्णगुणैकविग्रहम्' इति जन्मभ्रान्तेर्निमित्तमुक्तमित्यर्थः ॥ **तमोरूपयेति** ॥ अनाद्यविद्यारूपयेत्यर्थः ॥ **तस्यात्रेति** ॥ 'द्रव्यं कर्म च' इति वचने द्रव्यपदस्येत्यर्थः ॥ **अत्र निर्दिश्यन्त इति** ॥ 'द्रव्यं कर्म च' इत्यत्रेत्यर्थः ॥ द्वितीयस्कन्धे दशमे 'द्रव्यं कर्म च' इत्युक्त्वा,

'एको नानात्वमन्विच्छन् योगतल्पात् समुत्थितः ।
वीर्यं हिरण्मयं देवो मायया व्यसृजत् त्रिधा ॥' इत्युक्तिरिति भावः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **स्वरूपतो देहतश्चेति** ॥ 'अजोऽपि' इति स्वरूपतो देहतश्चाजत्वम्, 'अव्ययात्मा' इति स्वरूपतो देहतश्च नित्यत्वमुक्तम्, इत्यनादिनित्यत्वं लभ्यत इत्यर्थः । **व्याहतत्वादिति** ॥ अजस्य जनिरस्ति, अव्ययदेहस्य देहग्रहणरूपजनिरस्तीत्यस्य विप्रतिषिद्धत्वादित्यर्थः । अनादित्वस्य जन्मना सह परस्परविरहरूपत्वरूपो व्याघातः । भावगत-नित्यत्वस्य तूत्सर्गतः परस्परविरहरूपत्वरूपो विरोधोऽस्तीति भावेन अनादिनित्यत्वस्य जन्युक्त्या व्याघात इत्यप्याहुः । **इतिशब्दश्च** 'शेषः' इत्यनुषज्यते । **निमित्तं** प्रकृत्या जातेषु वसुदेवदशरथादिषु प्रादुर्भाव एव जन्मभ्रमस्य निमित्तमित्यर्थः । अत्र सम्मतिमाह– **यथोक्तमिति** ॥

'स्त्रीपुंप्रसङ्गात् परतो यतो हरिः प्रादुर्भवत्येष विमोहयन् जनम् ।
अतो मलोत्थोऽयमिति स्म मन्यते जनोऽशुभः पूर्णगुणैकविग्रहम् ॥' (१०.५०)

इति भारततात्पर्यनिर्णये स्त्रीपुंप्रसङ्गात् पश्चादेव **जनं** प्राकृतं विमोहयन् । 'लक्षणहेत्वोः' इति शतृप्रत्ययः । विमोहयितुं प्रादुर्भवति यतः, अतो मलोत्थदेह इत्यशुभो जनो भ्रमतीति भ्रान्तेर्निमित्तमुक्तमित्यर्थः ।

**उपादानमिति** ।। 'एतत्सर्वं मन एव' इति श्रुतेर्मनसो भ्रान्तिं प्रत्युपादानत्वेऽपि तमोगुणात्मक प्रकृत्यवलम्बनेनैव तदुपादानमिति भावेनेयमुक्तिः । 'प्रमादमोहौ तमसो भवतोऽज्ञानमेव च' इति गीतां मनसि निधायाह– **तमोरूपयेति** ।। 'दुःखादिकम्' इत्यत्रादिपदेन तन्निमित्तनीचतादिग्रहः । **अत्र वाक्ये**–

'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ।।' इति वाक्ये ।

**सा** इति प्रकृतिर्भाष्ये । **तस्य** द्रव्यपदस्य । **निर्दिश्यन्ते** 'द्रव्यं कर्म च कालश्च' इति पदैः । तत्र कालः कर्माणि सर्वसृष्टिकारणानि । तत्साहचर्याद् द्रव्यमपि तथाभूतमेव ग्राह्यम् । तच्च सर्वकारणत्वं न द्रव्येषु प्रकृतेरन्यस्य पृथिव्यादेः सम्भवति । अतो द्रव्यपदेन प्रकृतिरेवात्र वाक्ये वक्तव्येति भावः । 'प्रकृतेरेव' इत्यतःपरं 'मुख्यतः' इति शेषः ।।

अनेन 'द्रव्यशब्देन प्रकृत्यादि तत्त्वमुच्यते' इति सुधाविरोधो नेति मन्तव्यम् । **एतत्** 'आत्ममायया' इति वचनम् । **अनेन** आत्मज्ञानेनेति व्याख्यानेन । **किन्न स्यादिति** ।। 'मायां तु प्रकृतिं विद्यात्' इति वचनादिति भावः ।

**भावदीपिका (श्री.टि.)**– ।। **निमित्तमिति** ।। वसुदेवादिशरीरद्वारा प्रकृतिरेव भ्रमे निमित्त-मिति भावः ।। **यथोक्तमिति** ।। महाभारततात्पर्यनिर्णय इत्यर्थः । 'इत्यादि' इति आदिपदात्–

'स्त्रीपुंप्रसङ्गात् परतो यतो हरिः प्रादुर्भवत्येष विमोहयन् जनम् ।
अतो मलोत्थोऽयमिति स्म मन्यते जनोऽशुभः पूर्णगुणैकविग्रहम् ।।'

इति श्लोको ग्राह्यः । 'प्रमादमोहौ तमस' इति वचनात् 'तमोरूपया' इत्युक्तम् ।।। **तन्निमित्तम्** मातृगर्भवासादिप्रयुक्तम् ।।। **प्रकृतिवाचित्वं कुत इति** ।। 'भूतानि द्रव्यनामानि' इति प्रमाणबलात् पृथिव्यादिपञ्चमहाभूतान्येवात्र द्रव्यपदेनोच्यन्त इति किं नाङ्गीक्रियत इति वाक्यशेषः ।।

**भावप्रकाशः (कृ.टि.)**– ।। **स्त्रीपुंप्रसङ्गादित्यादीति** ।।

श्लोकः ६

'स्त्रीपुंप्रसङ्गात् परतो यतो हरिः प्रादुर्भवत्येष विमोहयन् जनम् ॥
अतो मलोत्थोऽयमिति स्म मन्यते जनोऽशुभः पूर्णगुणैकविग्रहम् ॥

इति भारततात्पर्यनिर्णये उक्तमित्यर्थः । भ्रान्तेरुपादानमिति ॥ तमोगुणात्मकप्रकृतिविशिष्टं मन एव भ्रान्तेरुपादानं, न तु केवलस्तमोगुणः, तेनैतत्सर्वं मन एवेति श्रुतिविरोधो नेति ध्येयम् । प्रमादमोहौ तमसो भवतो ज्ञानमेव चेति वाक्यं मनसि निधायाह– **तमोरूपयेति** ॥ एतेन 'तया' इत्यत्र सत्वरजोन्यतरग्रहणे 'सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च' इति गीताविरोध इत्यपास्तम् ॥ दुःखादिकमिति ॥ आदिपदेन जन्मादिसङ्ग्रहः ॥

## भाष्यम्

**आत्ममायया आत्मज्ञानेन । प्रकृतेः पृथगभिधानात् ॥ 'केतुः । केतः । चेतः । चित्तम् । मतिः । क्रतुः । मनीषा । माया' इत्यभिधानात् ।**

भावप्रदीपिका (प.टी.)– यथा वसुदेवादयो विद्यमानजननीं तव पश्यन्ति तथा सा तवापि भ्रमोत्पादिका न वा ? इति शङ्कायामाह– **आत्मेति** । मायाशब्दस्य प्रकृतौ रूढत्वात् कथमेतद्व्याख्यानमित्यत आह– **प्रकृतेरिति** । मायापदेन ज्ञानं कुतः ? इत्यत आह– **केतुरिति** ॥

भावप्रकाशिका (न.टी.)– ननु प्रकृत्या जातानां भगवति जातवत् बुद्धिश्चेत् ब्रह्मादीनामपि सा किं न स्यात् ? इत्याशङ्क्य परिहारत्वेनान्त्यपदं व्याचष्टे– **आत्मेति** ॥ **भगवज्ज्ञानेनेति** ॥ भगवदिच्छयैव केचिज्ज्ञातवत् पश्यन्ति भगवन्तमित्यर्थः ।

'.................................मायया ॥
लक्ष्म्या वशगया लोको विष्णुनैव विमोहितः' इति ह्यन्यत्र ।

'आत्मचिद्बलान्मूढचेतसाम्' इत्यत्रापि वक्ष्यति । न चायं मायाशब्दः प्रकृतावित्याह– **प्रकृतेरिति** ॥ तस्य ज्ञानवाचित्वे प्रमाणमाह– **केतुरिति** ॥

प्रमेयदीपिका (ज.टी.)– 'आत्ममायया आत्मविद्यया' इति प्रतीतिनिरासायाह– **आत्मेति** ॥ कुतो हेतोरेवं जीवविलक्षणं ते जन्म? इत्याशङ्कानिरासार्थमेतत् । अन्यथाप्रतीतिरप्यनेन परिहृता । सर्वज्ञस्याविद्याऽयोगात् । प्रकृतिरत्र माया किं न स्यात्? इत्यत

आह– **प्रकृतेरिति** ॥ मायाशब्दस्य ज्ञानवाचित्वं कुतः? इत्यत आह– **केतुरिति** ॥ 'इति प्रज्ञायाः नामधेयानि' इति वाक्यशेषात् ॥

भावरत्नकोशः (सु.टि.)– अत्र वाक्ये ज्ञानं न श्रूयते इत्यत आह– इति **प्रज्ञाया इति** ॥

भावदीपिका (श्री.टि.)– अन्यथाप्रतीतिः 'आत्माविद्यया' इति प्रतीतिः । कथमित्यत आह– **सर्वज्ञस्येति** ॥ यथोक्तम् 'अज्ञताऽखिलसंवेत्तुर्घटते न कुतश्चन' इति ॥

## भाष्यम्

**सृष्टिकारणया तेषां शरीरादि सृष्ट्वा विमोहिकयाऽजात एव जात इव प्रतीयते वा । उक्तं च–**

> **'महदादेस्तु माता या श्रीर्भूमिरिति कल्पिता ।**
> **विमोहिका च दुर्गाख्या ताभिर्विष्णुरजोऽपि हि ।**
> **जातवत् प्रथते ह्यात्मचिद्बलान्मूढचेतसाम् ॥' इति ।**

भावप्रदीपिका (प.टी.)– अस्तु वा 'माया'शब्दः प्रकृतिवाची । तथाऽपि नात्र पुनरुक्तिरिति भावेनाह **सृष्टीति** ॥ अर्धद्वये प्रमाणमाह– **उक्तं चेति** ॥

भावप्रकाशिका (न.टी.)– भवतु चायं मायाशब्दः प्रकृतावपि । तथाऽपि नात्र पुनरुक्तिरित्येतत् सप्रमाणकमाह–**सृष्टीति** । आत्मचिद्बलादित्येतत् मायाशब्दस्याद्यव्याख्याने प्रमाणम् ।

प्रमेयदीपिका (ज.टी.)– प्राक् 'प्रकृतिं स्वामधिष्ठाय' इत्यनेनैव भ्रमनिमित्तत्वमुपादानत्वं च प्रकृतेरुक्तमिति मायाशब्दो न प्रकृतिवाची । पुनरुक्तिप्रसङ्गादित्युक्तम् । इदानीं तस्य निमित्तमात्रपरत्वे मायाशब्दस्य प्रकृत्यर्थतायामपि न दोषः । उपादानप्रतिपादनार्थत्वादिति भावेनाऽह– **सृष्टीति** ॥ 'प्रकृत्या' इति शेषः । **तेषां** वसुदेवादीनाम् । **सृष्ट्वा** तत्र प्रादुर्भूतः । **विमोहिकया** मायाख्यया । अत्रागमसम्मतिमाह– **उक्तं चेति** ॥ आत्मचिद्बलाद् अजात एव ॥

भावदीपः (रा.टि.)– ॥ **अनेनेति** ॥ उक्तशङ्कानिरासार्थं प्रवृत्तत्वेनेति वा आत्मज्ञानेनेति व्याख्यानेनेति वा अर्थः ॥ **निमित्तमात्रपरत्व इति** ॥ हरेर्जन्मभ्रान्तेरिति योज्यम् । उपादानेति ॥ तमोरूपोपादानार्थत्वादित्यर्थः । 'भ्रान्तेः' इति शेषः ॥ **'सृष्टिकारणया'** इति स्त्रीलिङ्गनिर्वाहाय

श्लोकः ६

विशेष्यमाह– **प्रकृत्येति शेष इति** ॥ ल्यबन्तस्य नपुंसकत्वेऽप्यत्र स्त्रीलिङ्गत्वोक्तिनिर्वाहो 'बहवः कर्मकारणाः' इत्यत्रोक्तदिशा ध्येय इति भावः ॥ 'अजोऽपि' इत्यस्यार्थः– **जात एवेति** ॥

**भावरत्नकोशः (सु.टि.)**– **तस्य** प्रकृतिपदस्य । **'निमित्त'** इति हरेर्जन्मभ्रान्तेरिति योज्यम् । **'सृष्टिकारणया'** इति भाष्ये करोतेर्ण्यन्तात्करणे 'ण्यासश्रन्थो युच्' इति युच्प्रत्यये तस्य 'स्त्रियाम्' इत्यधिकारविहितत्वात् स्त्रीलिङ्गत्वमिति ज्ञातव्यम् । **तत्र प्रादुर्भूत** इति तु शेषोक्तिः । **मायाख्यया** 'प्रकृत्या' इत्यनुवर्तनीयम् । भाष्ये **महदादेः** महदाद्यभिमानिनः । 'आत्मचिद्बलाद्' इत्यस्य 'अजोऽपि' इत्यनेनान्वय इत्याह– **आत्मेति** ॥ अपिरवधारणार्थ इति भावः । अनेन प्रकृतिशब्देन श्रीभूम्यभिमन्यमानप्रकृतिः गृह्यते । मायाशब्देन तु दुर्गाभिमन्यमाना प्रकृतिरिति विभावितं भवति ॥

**भावदीपिका (श्री.टि.)**– ॥ भाष्ये – **पृथगिति** ॥ 'प्रकृतिं स्वाम्' इत्यनेनेत्यर्थः । **तस्य** 'प्रकृतिं स्वामधिष्ठाय' इत्यस्य । निमित्तमात्रपरत्वे भ्रमनिमित्तमात्रकथनपरत्वाङ्गीकार इत्यर्थः ॥ **न दोष इति** ॥ पुनरुक्त्याख्यः ॥ **उपादानार्थत्वादिति** ॥ भ्रमोपादानप्रतिपादनार्थत्वादित्यर्थः । 'अजात एव' इति शेषं पूरणीयम् ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **तच्च प्रकृतेरेवेति** ॥ कर्मकालादीनां सर्वसृष्टिकारणानां साहचर्यात् द्रव्यपदेनापि सर्वसृष्टिकारणमेव ग्राह्यम् । तच्च सर्वकारणत्वं प्रकृतेरेव न पृथिव्यादेः । अतो द्रव्यपदेन प्रकृतिरेव ग्राह्येति भावः । मूले **सृष्टिकारणयेति** ॥ करोतेर्ण्यन्तात्करणे 'ण्यासश्रन्थो युच्' इति युच्प्रत्यये स्त्रीलिङ्गत्वमिति बोध्यम् ॥ 'आत्मचिद्बलाद्' इत्यस्य 'अज' इत्यनेनान्वयं दर्शयन् अजोऽपीत्यस्यार्थमाह – **आत्मचिद्बलादजात एवेति** ॥ अपिरवधारणार्थ इति भावः ॥

## भाष्यम्

**ईश्वरः ईशेभ्योऽपि वरः । तच्चोक्तम् -'ईशेभ्यो ब्रह्मरुद्रश्रीशेषादिभ्यो यतो भवान् । वरोऽत ईश्वराख्या ते मुख्या नान्यस्य कस्यचित् ॥' इति ब्रह्मवैवर्ते । 'समर्थ ईश इत्युक्तस्तद्वरत्वात् त्वमीश्वरः' इति च ॥ ६ ॥**

**भावप्रदीपिका (प.टी.)**– ननु ब्रह्मादीनामविद्यमानं वश्यप्रकृतित्वं तव कथमित्यत आह– **ईशेभ्य इति** ॥ ६ ॥

**भावप्रकाशिका (न.टी.)**– ईशनशीलानामपि रमाविधिहरादीनां पराधीनविशेषास्त्यादि-

जननादिदर्शनात्, नायमीश्वरशब्द ईशनशीलवाची, किन्त्वीशवाचीत्येतत् सप्रमाणकमाह– **ईश्वर इत्यादिना** । अकारलोपश्छान्दसः ॥ ६ ॥

**प्रमेयदीपिका** (ज.टी.)– नन्वीशनशीलानामपि ब्रह्मादीनामुत्पत्तिमरणदर्शनेन विरोधाभावात् 'ईश्वरोऽपि सम्भवामि' इति कथमुच्यते? इत्यतः '**स्थेशभासपिसकसो वरच्**' (पा.सू. ३.२.१७५) इत्येतद्विहायान्यथा व्याचष्टे– **ईश्वर इति** ॥ कुत एतत्? इत्यत आह– **ईशेभ्य इति** ॥ एतदागमवलादेव समासाकारलोपावनुमन्तव्यौ । अजत्वादेः सम्भवेन शाब्दो व्याघातः, अस्य तु व्याप्त्येति ज्ञापनाय क्रममुल्लङ्घ्य व्याख्यातम् ॥ ६ ॥

**भावबोधः** (र.टि.)– ॥ **समासाकारलोपाविति** । 'पञ्चमी' इति योगविभागेन पञ्चमीतत्पुरुषसमासः । ईशेतिपद-गताकारलोपश्चेत्यर्थः । नन्वजोऽपीति पादव्याख्यानानन्तरमेव भूतानामीश्वरोऽपीत्येतद् व्याख्येयम् । 'प्रकृतिं स्वाम्' इति द्वितीयार्धं व्याख्याय पश्चादेतद्व्याख्याने किन्निमित्तमित्यत आह – **अजत्वादेरिति** ॥ **व्याप्त्येति** ॥ यत्र सम्भवः तत्र श्रीब्रह्मादीश्वरत्वाभाव इति व्यतिरेकव्याप्त्येत्यर्थः ॥

**भावदीपः** (रा.टि.)– वरच्प्रत्ययस्य 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' (पा.सू.३.२. १३४) इति सूत्राद् अनुवृत्तताच्छील्यार्थे विधानादीशनशीला इति ईश्वरशब्दार्थोऽनूदितः ॥ **स्थेशभासेति** ॥ 'ष्ठा गतिनिवृत्तौ' स्थावरः। 'ईश ऐश्वर्ये' ईश्वरः । 'भासृ दीप्तौ' भास्वरः । 'कसृ गतौ' कस्वरः इति पाणिन्युक्तं स्थाप्रभृतिधातुभ्यस्ताच्छीलार्थकवरच्प्रत्ययान्तत्वं विहायेत्यर्थः ॥

ननु 'पञ्चमी भयेन' (पा.सू.२.१.३७) इति पञ्चम्यन्तस्य भयेनैव 'चोराद्भयं चोरभयम्' इत्यादावेव समासोक्तेः इह कथं समासः? ईशेभ्योऽपि वर इति विग्रहे च ईशावर इति भाव्यम् । कथं शकारस्थाकारलोपः? इत्यत आह– **एतदागमवलादेवेति** ॥ 'प्रकृतिम्' इत्यादि व्याख्यानानन्तरमेवेश्वरपदव्याख्याने तात्पर्यमाह– **अजत्वादेरिति** ॥

**सम्भवेनेति** ॥ 'सम्भवामि' इत्युक्तसम्भवशब्दितजन्मना अजत्वाव्ययदेहत्वयोः शब्दकृतो व्याघातः । अस्य त्वीश्वरपदोक्तब्रह्मरुद्रादीशशब्दितसमर्थेभ्योऽपि वरत्वस्य तु 'योऽयं निवारणेऽतिसमर्थः स तद्वान्न' इति व्याप्तावशक्तस्य ईश्वरस्य कथं जन्मादि? इति व्याघातोऽनुमेय इत्यजादिपदव्याख्यानन्तरमेव अव्याख्याय पश्चाद् व्याख्यातमित्यर्थः । तदुक्तं 'सर्वधर्मोपपत्तेश्च' इत्यत्र 'ईश्वरः सर्वदा त्यक्तसमस्तजननमरणादिदोषः । तज्जिहासुत्वे सति तत्र शक्तत्वात्' इत्यादि ॥

श्लोकः ६

## श्रीपाण्डुरङ्गीकेशवाचार्यविरचितवाक्यार्थप्रदीपः

॥ **स्थेशभासेति** ॥ ष्ठा गतिनिवृत्तौ । ईश ऐश्वर्ये । भासृ दीप्तौ । पिसृ पेसृ = गतौ, कसृ गतौ इत्येतेभ्यो धातुभ्यः वरचूप्रत्ययो भवतीति सूत्रार्थः । एतत्सूत्रपुरस्कारे ईशनशीलत्वमात्रस्य लाभात् तादृशानामपि ब्रह्मादीनाम् उत्पत्यादेः दर्शनेन विरोधाभावात् ईश्वरोऽपि सम्भवामि इति असम्भावितत्वोक्त्या अनुपपत्तिप्रसङ्गात् एतद्विहायेत्युक्तमिति ध्येयम् । ननु ईशेभ्यो वर इति पञ्चमीसमासो न युक्तः । वरशब्देन पञ्चम्याः समासविधायकाभावात् । ईशवर इति प्रयोगापाताच्चेत्यत आह– **एतदागमवलादेवेति** ॥ 'पञ्चमी भयेन' इति सूत्रे 'पञ्चमी' इति योगविभागात् समासः । निर्वचनत्वात् ईशेति पदगताकारलोपश्चेति भावः ॥

**भावरत्नकोशः** (सु.टि.)– ताच्छीलकार्थकवरजन्तत्वमाश्रित्य चोदयति– **नन्वीशनशीलानामिति** ॥ **स्थेशेति** ॥ ष्ठा गतिनिवृत्तौ, ईश ऐश्वर्ये, भासृ दीप्तौ, पिसृ पेसृ गतौ, कस गतावित्येतेभ्यो धातुभ्यो वरच्प्रत्ययो भवति । स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः । इति सूत्रार्थोदाहरणानि । **एतद्विहाय** ईशधातोर्वरजिति शास्त्रं विहाय । ननु 'पञ्चमी भयेन' इति सूत्रे वरशब्दाभावात् कथं पञ्चमीसमासः ? उक्तविग्रहे 'ईशवरः' इति च निर्देशः स्यादित्यत आह– **एतदिति** ॥ 'पञ्चमी' इति योगविभागात्समासः, ईशशब्दगताकारलोपश्च पृषोदरादित्वाद् आगमानुमत्या कल्पनीयावित्यर्थः ।

ननु 'अव्ययात्मा' इति पदव्याख्यानानन्तरमेवेश्वरपदं व्याख्यातव्यम् । क्रमप्राप्तत्वात् । मध्ये द्वितीयार्धं व्याख्यायैतद्व्याख्याने किन्निमित्तमित्यत आह– **अजत्वादेरिति** ॥ आदिपदेनाव्ययात्मत्वं ग्राह्यम् । तच्चाव्ययात्मत्वरूपं नित्यत्वं वेदेषु पञ्चाशद्वर्णेषु अव्याकृताकाश इव 'कूटस्थतया आद्यन्तशून्यत्वं नित्यत्वम्' इति तत्त्वसङ्ख्यानटीकोक्तरीत्या विवक्षितम् । अत एव भाष्येऽन्तशून्यत्वं स्फुटप्रतिभासमिति भावेन 'आत्मानादित्वम्' इत्युक्तम् ।

एवं चाजत्वस्याव्ययात्मत्वस्य च 'सम्भवामि' इति पदोपस्थापितसम्भवशब्दितजन्मना पदयोः परस्परविरहरूपार्थप्रतिपादकतया शाब्दो व्याघातः । अस्य ईश्वरपदोक्तश्रीब्रह्मरुद्राद् ईशशब्दितसमर्थोत्तमत्वस्य तु सम्भवे परस्परविरहव्याप्तत्वरूप एव व्याघातः । यत्रेश्वरत्वं तत्र सम्भवाभावः । यत्र सम्भवः तत्रेश्वरत्वाभाव इति व्याप्तेः । ईश्वरः जन्ममरणादिशून्यः तज्जिहासुत्वे सति तत्त्यागे शक्तत्वात् । यो यन्निवारणे समर्थः स तद्धातेति व्याप्तेर्वेति साक्षात्परम्परया च विरोध इति वैलक्षण्यं ज्ञापयितुं पश्चाद् ईश्वरपदं व्याख्यातमिति सप्रयोजनमेव क्रमोल्लङ्घनमिति भावः ॥

श्लोकः ६

अनेन 'ईशानशीलानां श्रीब्रह्मादीनाम् उत्पत्तिमरणदर्शनेन विरोधाभावाद् 'ईश्वरोऽपि सम्भवामि' इति कथम्' इति चोद्यं निरस्तम् । ईश्वरे भगवति जननादिदोषराहित्यस्य व्याप्तिसिद्धत्वाद् इतीममर्थं द्योतयितुम् अजत्वस्य स्वशब्देन ग्रहणम्, अव्ययात्मत्वस्य त्वादिशब्देनेति ज्ञातव्यम् ।

केचित्तु 'अजत्वादेः' इत्यत्र आदिपदेन 'अजोऽपि सन्' इत्यत्र सत्पदोक्तं सत्त्वं गृह्यते । सत्त्वं च सद्भावो विद्यमानत्वम् । 'सद्भावे साधुभावे च सदित्येव प्रयुज्यते' इति वचनात् । 'सत्प्रशस्ते विद्यमाने सत्याभ्यर्हितसाधुषु' इति कोशाच्च । तथा च सन्नपि विद्यमानोऽपि 'सम्भवामि' इत्युक्तेः सत्त्वसम्भवयोरस्ति शाब्दो व्याघातः । असतः सत्तासम्बन्धस्यैव सम्भवशब्दितजनित्वाभ्युपगमात् । ईश्वरत्वस्य तु व्याप्त्या व्याघात उक्तरीत्या व्याख्येयः । एतदभिप्रायेणैव 'सन्' इति द्विरुक्तम् । एकस्य 'विद्यमानः' इत्यर्थः, अपरस्य 'भवन्' इत्यर्थ इति पदद्वयं स्वरसमित्याहुः ॥

अन्ये तु आदिपदेनाव्ययत्वग्रहणे तस्य सम्भवेन शब्दव्याघातो नास्तीति मन्यमानाः, आदीयते उपादीयते व्याख्यायत इत्यादिः । अजत्वं चासावादिश्चेति कर्मधारयः । ततश्चाजत्वादेरित्यस्य अजत्वरूपव्याख्यानवतो अजशब्दस्येत्यर्थः पर्यवस्यतीति तस्य सम्भवेन शाब्दो व्याघातः । ईश्वरपदस्य तु व्याप्त्या इति ज्ञापनायेत्यर्थ इत्याहुः ॥

**गीताक्षरार्थस्तु** - जन्मान्यतीतानि चेत्, तर्हि न जननमरणराहित्यम् ईश्वरत्वं वा भवतः स्यात् । तथा च 'न त्वेवाहम्' 'अविनाशि तु तद्विद्धि' इत्युक्तविरोध इत्यत उच्यते **अजोऽपीति** ॥ स्वरूपतो देहतश्च जननरहितोऽपि अव्ययः अविनाशी आत्मा देहो यस्यासौ अव्ययात्मा सन्नपि ये भूतानाम् ईशाः श्रीब्रह्मरुद्राद्याः तेभ्यो वरोऽपि सन् सम्भवामि । स्वरूपतो देहतश्चानादिनित्यस्य सम्भवः कथम् ? व्याहतत्वाद् इत्ययुक्तम् । प्रकृतिम् प्रकृतिजातान् वसुदेवादीन् अधिष्ठाय अनुप्रविश्य सम्भवामि इति । कुतो हेतोरेवं जीवविलक्षणं ते जन्म इत्याशङ्कानिरासार्थमुक्तम् – **आत्ममाययेति** ॥ आत्ममायया आत्मज्ञानेनाजोऽपि सम्भवामि, इत्यतो लोकस्य जात इति भ्रमः । 'भ्रमतां भ्रमति क्षितिः' इति यथा । यदि मातापितृसम्बन्धोऽङ्गीकृतस्तर्हि तन्निमित्तं दुःखादिकमपि प्रसज्यत इत्यत उक्तम् – **स्वामिति** ॥ स्वकीयां स्वाधीनामित्यर्थः । स्वाधीनप्रकृत्या वसुदेवादिदेहान् निर्माय तान् अनुप्रविश्य प्रादुर्भवामीत्यतो लोको मां जनिमन्तं जानातीति भावः । नन्ववतरसि चेत् प्रयोजनेन

भाव्यम् । तथा च 'नानवाप्तम्' (३.२२) इत्युक्तविरोध इत्याशङ्कापरिहाराय प्रयोजनाभावेऽप्यवतारादिकं तादृशस्वभावत्वाद्युज्यत इति भावेनोक्तम्– **प्रकृतिमिति** ॥ स्वां प्रकृतिं स्वस्वभावम् अधिष्ठाय सम्भवामि । स्वस्वरूपमितिवद् उपचारत्वशङ्कानिरासार्थं 'स्वाम्' इत्युक्तम् ॥ ६ ॥

**भावदीपिका (श्री.टि.)**– ॥ **ईशनशीलानामिति** ॥ प्रेरणशीलानामित्यर्थः । 'स्थेशभासपिसकसो वरच्' ष्ठा गतिनिवृत्तौ । ईश ऐश्वर्यप्रेरणे । भासृ दीप्तौ , पिसृ गतौ । कसृ हिंसायाम् । एभ्यो धातुभ्यो वरच्प्रत्ययः स्यात् ताच्छील्ये । गतिनिवृत्तिशीलः स्थावरः । ईशनशीलः ईश्वरः । भासनशीलो भास्वरः । गतिशीलः पेस्वरः । हिंसनशीलः कस्वर इत्युदाहरणानि । तथा चानेन सूत्रेण ईशधातोस्ताच्छील्ये वरच्प्रत्यये ईशन-शीलत्वम् ईश्वरशब्दार्थ इति द्रष्टव्यम् ॥ **अन्यथा व्याचष्ट इति** ॥ नायं वरच्प्रत्ययान्तः, किं तूत्तमत्वार्थको वरशब्द इति व्याचष्ट इत्यर्थः । ननु 'ईशेभ्यो वर ईश्वर' इति पञ्चमीसमासो न युक्तः । 'पञ्चमी भयेन' इति भयशब्दयोगे पञ्चम्याः समासविधानात् । तथा 'ईशेभ्यो वर ईशवर' इति स्यात्, न त्वीश्वर इति । ईशपदगताकारलोपविधायकाभावादित्यत आह– **एतदागमबलादेवेति** ॥ 'पञ्चमी भयेन' इत्यत्र योगविभागोऽभिमत एतदागमबलादेव । तथा च समासोपपत्तिः, ईशपदगताकारलोपश्च एतदागमबलादेव द्रष्टव्य इति न दोष इत्यर्थः ।

ननु 'अजोऽपि' इति पादव्याख्याऽनन्तरमेव 'भूतानामीश्वरोऽपि' इत्येतद् व्याख्येयम् । क्रममुल्लङ्घ्याऽऽदौ 'प्रकृतिं स्वाम्' इति द्वितीयार्धं व्याख्याय पश्चादेतद्व्याख्याने किं निमित्तम्? इत्यत आह– **अजत्वादेरिति** ॥ आदिपदेनाव्ययात्मत्वग्रहणम् ॥ 'सम्भवेन' इत्युपलक्षणम् । 'मरणेन' इत्यपि ग्राह्यम् । 'बहूनि मे व्यतीतानि जन्मानि' इति मरणस्यापि प्रस्तुतत्वात् । अत एव पूर्वं 'न तर्ह्यनादिर्भवान्' इति वाक्यव्याख्यानावसरे 'उपलक्षणं चैतत् । मरणरहित इत्यपि द्रष्टव्यम्' इत्युक्तम् । अन्यथा 'सम्भवेन' इति पदेन मरणानुपलक्षणे 'अजत्वादेः' इत्यादिपदोक्ताव्ययात्मत्वस्य सम्भवेन शाब्दव्याघातोक्त्यसम्भवात् । न हि नाशाभावसम्भवयोः परस्परविरहरूपत्वमस्ति । आदिपदेनाव्ययात्मत्वाग्रहणे चान्यस्य तत्सङ्ग्राह्यस्याभावेन तद्वैयर्थ्यमेव स्यादिति भावः । 'सम्भवादिना' इति पाठे न कोऽपि शङ्कालेश इति ज्ञेयम् । **अस्य तु व्याप्येति** ॥ श्रीब्रह्मादीश्वरत्वं यत्र तत्र सम्भवाभावः । यत्र सम्भवस्तत्र श्रीब्रह्मादीश्वरत्वाभाव इति परस्परविरहव्याप्यत्वेनेश्वरत्वस्य सम्भवेन विरोध इत्यर्थः ॥ ६ ॥

श्लोकः ७,८

**भावप्रकाशः (कृ.टि.)**– ईश्वरशब्दस्य ताच्छीलिकवरच्प्रत्ययान्तत्वमाश्रित्याह– **ईशनशीलानामिति** ॥ **स्थेशेति** ॥ स्थावरः ईश्वर इत्याद्युदाहरणानि । **समासाकारलोपाविति** ॥ पञ्चमीति योगविभागात् समासः । पृषोदरादित्वादीशशब्दाकारलोपश्चेत्यर्थः । ननु पाठक्रमादव्ययात्मेत्येतद्व्याख्यानानन्तरमेव भूतानामीश्वरोऽपीत्येतद्व्याख्येयम् । मध्ये द्वितीयार्धव्याख्याने किं निमित्तमित्यत आह– **अजत्वादेरिति** ॥ आदीयते उपादीयते व्याख्यायत इत्यादिः । अजत्वं चासावादिश्चेति कर्मधारयः । ततश्चाजत्वादेरित्यस्याजत्वरूपव्याख्येयस्येत्यर्थः पर्यवस्यति । तेनादिपदोक्ताव्ययत्वस्य सम्भवेन शाब्दो व्याघातः कथमित्यपास्तम् । अयमर्थः । सत्यम् । अव्ययात्मेत्येतद्व्याख्याय भूतानामीश्वर इत्येतद्व्याख्येयमिति । तथाऽप्यव्ययात्मेत्येतद्व्याख्यानन्यायेन व्याख्येयं यदजत्वं तस्य सम्भवेन सह शब्दतो व्याघातः प्रतीयते । 'अजः सम्भवामि' इत्यनयोः परस्परविरहरूपार्थप्रतिपादकत्वात् । ईश्वरत्वस्य तु सम्भवेन परस्परविरहव्याप्यत्वरूप एव विरोधः । यत्रेश्वरत्वं तत्र सम्भवाभावः । यत्र सम्भवस्तत्रेश्वरत्वाभाव इति व्याप्तेः । तथा चोक्तं वैलक्षण्यज्ञापनाय क्रमोल्लङ्घनेन व्याख्यानं युक्तमेवेति ॥ ६,७ ॥

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ ७ ॥**

**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ ८ ॥**

## भाष्यम्

**न जन्मनैव परित्राणादिकं कार्यमिति नियमः । तथाऽपि लीलया स्वभावेन च यथेष्टचारी । तथा ह्युक्तम्–**

**'देवस्यैष स्वभावोऽयम्', 'लोकवत्तु लीलाकैवल्यम्'**

**'क्रीडतो बालकस्येव चेष्टां तस्य निशामय' (वि.पु.१.२.१८)**

**'अरिभयादिव स्वयं पुराद् व्यवात्सीद् यदनन्तवीर्यः' (भाग ३.२.१६),**

श्लोकः ७,८

**'पूर्णोऽयमस्यात्र न किञ्चिदाप्यं तथाऽपि सर्वाः कुरुते प्रवृत्तीः ।**
**अतो विरुद्धेषुमिमं वदन्ति परावरज्ञा मुनयः प्रशान्ताः ॥'**

**इत्यादि ऋग्वेदखिलेषु ॥ ८ ॥**

भावप्रदीपिका (प.टी.)– ननु साधुपरित्राणादि कर्तुं यदि परमात्मनो जन्म, तर्हि जन्माभावे कर्तुमशक्तिः स्यात् । तत्फलस्य पूर्वमभावेनापूर्णता चेत्यत आह– **नचेति** ॥ यद्यपि जन्म विना परित्राणादौ समर्थस्तथाऽपि लीलया प्रादुर्भूत्वैव करोति । नापि तेन फलमस्ति, किन्तु स्वभावेनैव करोतीत्यर्थः । अत्रैव प्रमाणान्याह– **तथा हीति** । **विरुद्धेषुं** विरुद्धेच्छम् ॥ ८ ॥

भावप्रकाशिका (न.टी.)– उत्तरश्लोकद्वयस्य पूर्वसङ्गतेः व्याख्यानस्य सुगमत्वात् तदुद्भवाशङ्कामेवापाकरोति न जन्मनेत्यादिना । साधुपरित्राणादिप्रयोजनाय 'सम्भवामि' इति वदन्नपि, सम्भवं विना परित्राणादि कर्तुं न शक्नोतीति नाशङ्कनीयम् । अनन्तवीर्यत्वात् । तथाऽपि इच्छयैव जन्मानुकुर्वन् स्वावतारादि करोति । न चान्यथापि कर्तुं समर्थस्य किं जन्मानुकरणादिक्लेशेनेति वाच्यम् । लीलयैव तदनुकरणात् । न चेतरवदालस्यादिपरिहाराय भगवतो जन्माद्यनुकरणलीलेति वाच्यम् । तस्यालस्यादिदोषाभावात् । अतः स्वभावादेव लीलया यथावशं चरतीत्यर्थः ।

अस्मिन्नेवार्थे प्रमाणमाह– **तथा हीति** । एतादृशी भगवच्चेष्टा, याऽरिभयादिव पुराद् व्यवात्सीत् । न चारिभयं तस्यास्ति। अनन्तवीर्यत्वात् । पूर्णकामोऽयं देवः । अत एवास्य न किञ्चिदाप्यमस्ति । आसाद्यमिष्टमपनोद्यमनिष्टं च नास्तीत्यर्थः । तथाऽपीष्टानिष्टप्राप्ति-परिहारार्थाः प्रवृत्तीः करोति । अत इमं **विरुद्धेच्छुं वदन्ति** । अतोऽयं देवस्य स्वभावः, योऽयम् आ समन्तात् इच्छया जगत उत्पत्त्यादिप्रणयनव्यापारः । स एव च तल्लीला केवलभावः स चान्येषां सुखदुःखमध्यसम्प्राप्त्यै भवतीत्यनवद्यम् ॥ ८ ॥

प्रमेयदीपिका (ज.टी.)– परित्राणाय साधूनाम् इति साधुपरित्रणादिकं भगवदवतारस्य प्रयोजनमुक्तम् । तत्र किं जन्मनैव परित्राणादिकं कार्यमिति नियमः? इत्यपेक्षायामाह– **नेति** ॥ जन्मना विनाऽपि कर्तुं समर्थत्वादिति भावः ॥ तर्हि किमर्थं जन्म? इत्यत आह– **तथाऽपीति** ॥

**यथेष्टचारी इच्छयैव तथा आचरति । तथेच्छैव किमर्था ? इत्यत उक्तम्– *लीलयेति* ॥ *लीलाऽप्यालस्यपरिहाराद्यर्था न भवतीत्युक्तम्–* स्वभावेनचेति ॥**

**अत्रैव प्रमाणान्याह– तथा हीति ॥ अयमेषः इयमिच्छा । अत्र प्रवृत्तिपु । विरुद्धेषुं लोकविपरीतेच्छुम् ॥ ७-८ ॥**

**भावदीपः (रा.टि.)–** 'एषः' इत्येतच्छब्दरूपं न भवति । किन्तु 'इषु इच्छायाम्' (पा.धा. १३५१) इत्यतः भावे घञ्प्रत्ययान्तः । अतो न पौनरुक्त्यमित्याह– **अयमेषः इयमिच्छेति** ॥ 'अत्र न किञ्चिदाप्यम्' इत्यत्रत्य अत्रपदानुवादेनार्थमाह– **अत्र प्रवृत्तिष्विति** ॥ इच्छतेर्भावे कप्रत्यय इति भावेनाऽह– **विरुद्धेषुमिति** ॥ ८ ॥

**भावरत्नकोशः (सु.टि.)–** किञ्च स्वप्रयोजनाभावेऽपि परप्रयोजनोद्देशेन सम्भवो युज्यत इत्यभिप्रेत्य तस्य कालः प्रयोजनविशेषश्चोच्यते **'यदा यदा'** इति द्वाभ्याम् । **धर्मस्य** वर्णाश्रमोचितलक्षणस्य **ग्लानिः** हानिः । **अधर्मस्य** श्रुतिस्मृतिप्रतिषिद्धाचरणस्य **अभ्युत्थानम्** उद्भवः तदाऽऽत्मानं सृजामि तस्मिन् कालेऽहम् अवतरामीति यावत् ॥

'परित्राणादिकम्' इत्यत्र पापकारिनाशनं धर्मसंस्थापनं वा आदिपदार्थः । तादर्थ्ये चतुर्थीति भावेनोक्तम्– **प्रयोजनमिति** ॥ कुतो नियम इत्यतो भाष्यभावमाह– **जन्मना विनेति** ॥ अनेन 'यद्यपि जन्म विनापि त्राणादौ समर्थत्वात् जन्मनैव तत्कार्यमिति नियमो नास्ति । तथाऽपि' इति भाष्ययोजनोक्ता भवति । **तर्हि** यदि जन्मना विना कर्तुं समर्थस्तर्हि– **इच्छयैवेति** । अनेन 'इषु इच्छायाम्' इत्यतो भावे निष्ठा, इष्टमनतिक्रम्य यथेष्टं चरितुं शीलमस्येति यथेष्टचारीति भाष्यार्थ उक्तो भवति । **'परिहाराद्यर्था'** इत्यत्राप्राप्तसुखावाप्तिरादिपदार्थः । 'एषोऽयम्' इति पदद्वयम् एतद्इदंशब्दरूपमिति पुनरुक्तिरित्यत आह– **अयमेष इति** । 'इषु इच्छायाम्' इत्यतो भावे घञि 'एषः' इति रूपमित्यर्थे भेदान्नोक्तदोष इति भावः । मत्तादेर्नृत्तगानादिक्रिया यथा तथेशस्यापि सृष्टिपालनादिक्रिया । लीलायाः कैवल्यं केवलं प्रयोजनं विना कृता लीलेव । प्रयोजनाभावेऽपि सुखोद्रेकात्, स्वभावादेव भगवतो विश्वसृष्टिपालनादिक्रियेति ब्रह्मसूत्रार्थः ।

भाष्ये **चेष्टां** साधुजनपरित्राणादिरूपां **निशामय** पश्य । स्वयम् **आत्मना** स्वेच्छयैव पुराद् विवासमकरोत् । तच्चारिभयादिवादर्शयत् । कुतः ? यतोऽनन्तवीर्य इति । अत्र भगवतः

श्लोकः ९

प्रवृत्तिरिच्छामात्रेति विभाव्यते । तथा च प्राचीनटीका 'एतादृशी भगवच्चेष्टा या अरिभयादिव पुराद् व्यवात्सीत् । न चारिभयं तस्यास्ति । अनन्तवीर्यत्वादिति'। भाष्यस्थम् 'अत्र' इतिपदमनूद्यार्थ-माह– **अत्रेति** ॥ **प्रवृत्तिषु** अर्जुनत्राणादिरूपासु । 'प्रवृत्तिः' इत्युपरिश्रवणादिति भावः । भाष्ये अयं देवः **पूर्णः** पूर्णकामः, अत एव अस्य न किञ्चिदाप्यमस्ति । आप्यमिष्टम् अपनोद्यमनिष्टं च नास्ति । तथाऽपीष्टानिष्टप्राप्तिपरिहारार्थाः प्रवृत्तीः कुरुते करोति । इतरपदार्थः प्राचीनटीकातो अवधेयः । इच्छतेर्भावे कुप्रत्यये इषुशब्द इच्छावाचीति भावेनाह– **विरुद्धेषुमिति** ॥ ८ ॥

**गीताक्षरार्थस्तु** - परित्राणाय परिरक्षणाय । दुष्कृतां पापकारिणां विनाशाय च । किञ्च धर्मसंस्थापनार्थाय च धर्मस्य सम्यग् व्यवस्थापनलक्षणप्रयोजनाय युगेयुगे वीप्सायां द्विर्वचनम् । धर्महान्यधर्मवृद्धिकाले इति ॥ ८ ॥

**भावदीपिका (श्री.टि.)**– ॥ **तथाऽऽचरतीति** ॥ जन्मना परित्राणाद्याचरतीत्यर्थः ॥ **तथेच्छैवेति** ॥ 'जन्मना परित्राणाद्याचरिष्ये' इतीच्छैवेत्यर्थः । 'अयम्' इत्युक्तत्वात् 'एष' इत्यस्य वैयर्थ्यपरिहारायानुवाद इत्याह– **अयमेष इयमिच्छेति** ॥ 'इषु इच्छायाम्' इत्यस्माद् एषणम् एष इति भावे घञि गुणे च एषशब्द इच्छावाचीति द्रष्टव्यम् ॥ **प्रवृत्तिष्विति** ॥ प्रवृत्तिषु कृतासु सतीषु न किञ्चिदाप्यमित्यर्थः । 'इषु इच्छायाम्' इति धातोरिषुशब्दवाच्येच्छायाः प्रमाणविरुद्धत्वा-भावादाह– **लोकविपरीतेति** ॥ यथोक्तम् 'तदन्यत्र त्वसन्त्यप्यविरोधेन गोविन्दे सन्ति' इति ॥ ७,८ ॥

**भावप्रकाशः (कृ.टि.)**– 'अयमेषः' इत्यनयोरन्यतरवैय्यर्थ्यनिरासायाह– **इयमिच्छेति** ॥ इषु इच्छायामित्यतो भावे घञिति भावः ॥ ८ ॥

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥**

## भाष्यम्

**पृथङ्मुक्त्युक्तिः सर्वज्ञाननियमदर्शनार्थम् । न तु तावन्मात्रेण मुक्ति-रित्युक्तम् ।**

श्लोकः ९

'वेदाद्युक्तं तु सर्वं यो ज्ञात्वोपास्ते सदा हि माम् ।
तस्यैव दर्शनपथं यामि नान्यस्य कस्यचित् ॥'

इत्युक्तेश्च महाकौर्मे । अत्रोक्तस्यैतज्ज्ञात्वैव जन्म नैति इति गतिः । इतरवाक्यानां नान्या गतिः । 'नान्यस्य कस्यचित्' इति विशेषणात् । 'तत्त्वतः' इति विशेषणाच्च सर्वं ज्ञानमापतति । यत्रैवं भवति तत्र तत्त्वत इति विशेषणेन विरोधः । उक्तं च–

'एकं च तत्त्वतो ज्ञातुं विना सर्वज्ञतां नरः ।
न समर्थो महेन्द्रोऽपि तस्मात् सर्वत्र जिज्ञसेत् ॥' इति स्कान्दे ॥९॥

भावप्रदीपिका (प.टी.)– यद्यपि 'जन्म कर्म' इतीश्वरे जन्मादिज्ञानमात्रेण मुक्तिः श्रूयते । तथाऽपि सा न तावन्मात्रेणेत्याह– **पृथगिति** । एतावन्मात्रेणापि मोक्षः किं न स्यात् ? इत्यत आह– **न त्विति** । इतश्च नैकदेशज्ञानान्मोक्ष इत्याह– **वेदेति** । ननु वचनत्वाविशेषात् कुतोऽस्य जन्म कर्म चेत्यस्य बाधः ? इत्यत आह– **अत्रेति** । कौर्मवाक्यस्यापि केषाञ्चि-देवमिति गतिः किं न स्यात् ? इत्यत आह– **नान्यस्येति** । इतश्च सर्वज्ञानेनैव मोक्ष इत्याह– **तत्त्वत इति** । एतमेव न्यायमन्यत्रातिदिशति– **यत्रेति** ॥ 'तत्त्वतः' इति विशेषणे कथं सर्वज्ञानापात इत्यत आह– **उक्तं चेति** ॥ ९ ॥

भावप्रकाशिका (न.टी.)– ननूक्तलक्षणजन्मकर्मज्ञानमात्रेण मुक्तिश्चेत् 'नान्यः पन्था अयनाय विद्यते' इत्यादिश्रुतिविरोध इत्यत आह – **पृथगिति** । एतदपि ज्ञात्वैव मुक्ति-रित्येवार्थो, नत्वेतदेव ज्ञात्वेत्युक्तं गताध्याये । इतोऽपि नैकदेशज्ञानमात्रेण मुक्तिः । किन्तु सर्ववेदाद्युक्तपरमात्मस्वरूपं ज्ञात्वा, उपास्य, दृष्ट्वेति भावेन प्रमाणमाह– **वेदादिति** । ननूभयोरपि प्रामाण्याविशेषात्, 'जन्म कर्म च' इत्यस्यानुसारेणान्येषां गतिः किं न स्यात् ? इत्यत आह– **अत्रोक्तस्येति** । इतोऽपि नैकदेशज्ञानमात्रेण मुच्यत इत्याह– **तत्त्वत इति** । यत्र यत्रैकदेशज्ञाने मुक्तिरुच्यते तत्रतत्र तत्त्वत इति विशेषणे सति न विरोध इत्याह– **यत्रैव-मिति** । तत्त्वत इति विशेषणे सर्वज्ञानं कथमापतति ? इत्यत आह– **उक्तं चेति** ॥ ९ ॥

प्रमेयदीपिका (ज.टी.)– 'जन्म कर्म च' इति ॥ 'भगवज्जन्मादिज्ञानमात्रेण मुक्ति-रुच्यते' इति प्रतीतिनिरासायाऽह– **पृथगिति** ॥ एकदेशज्ञानेनेत्यर्थः । **दर्शनार्थम्**

श्लोकः ९

उपलक्षणार्थम् । यथाप्रतीत एवार्थः किं न स्यात्? इत्यत आह— **न त्विति** ॥ उक्तं तृतीये (गी.भा.३.४२,४३) । प्रमाणान्तरं चाह— **वेदादीति** ॥ वाक्यत्वाविशेषादेतस्य गीता-बाधकत्वं कुतः? इत्यतः सावकाशत्वनिरवकाशत्वाभ्यामित्याह— **अत्रेति** ॥ अयोगव्यवच्छेद-मात्रपरत्वमित्यर्थः । एतच्च पूर्वोक्तादर्थान्तरमिति ज्ञेयम् ॥

इतरवाक्यान्यधिकारिविशेषापेक्षया सावकाशानीति कुतो नान्या गतिः? इत्यत आह— **नेति** ॥ **विशेषणात्** पक्षान्तरव्यवच्छेदात् । इतोऽप्यत्र सर्वज्ञानमङ्गीकार्यमित्याह— **तत्त्वत इति** ॥ आपतति इत्यनेनाऽर्थापत्तिमभिप्रैति ॥ एतमेव न्यायमन्यत्राप्यतिदिशति— **यत्रेति** ॥ एवं भवति सर्वज्ञाने प्रमितेऽप्येकदेशज्ञानोक्तिर्भवति । तत्त्वतो ज्ञानं कुतस्सार्वज्ञमाक्षिपति? इत्यत आह— **उक्तं चेति** ॥ **जिज्ञसेत्** जिज्ञासेत । अन्यत्रापि 'एको भावः तत्त्वतो येन दृष्टः सर्वे भावाः तत्त्वतस्तेन दृष्टाः' इति । सर्वत्र सार्वज्ञं यथाशक्ति विवक्षितमित्यवधेयम् ॥ ९ ॥

**भावबोधः (र.टि.)**– पृथगित्यस्यार्थाप्रतीतेराह – **एकदेशज्ञानेनेति** ॥ तथाऽपि एकदेश-ज्ञानेन मुक्त्युक्तेः सर्वज्ञाननियमे दर्शनार्थत्वाभावेन विरोधः स्यादित्यत आह– **दर्शनार्थ-मुपलक्षणार्थमिति** ॥ **एतच्चेति** ॥ सर्वज्ञान-नियमदर्शनार्थमिति पूर्वोक्तादर्थाज्जन्मकर्मादिकं सर्वथा ज्ञातव्यमेवेत्येतदर्थान्तरमित्यर्थः ॥

**भावदीपः (रा.टि.)**– ॥ **तृतीय इति** ॥ तृतीयाध्यायान्त्यभागे 'नच तत्र तत्रोक्तैक-देशज्ञानमात्रेण भवति मुक्तिः' इत्यादिनेति भावः ॥ **पूर्वोक्तादिति** ॥ उपलक्षणार्थमित्युक्ता-दित्यर्थः । 'ज्ञा–श्रु–स्मृ–दृशां सनः' (पा.सू.१.३.५७) इत्यात्मनेपदोक्तेः 'जिज्ञासेत' इति छान्दसप्रयोग इति भावेनाऽह – **जिज्ञसेत् जिज्ञासेत इति** ॥ **अन्यत्रापीति** ॥ एकस्य तत्त्वतो ज्ञानेन सर्वज्ञानं भवतीत्येतदुक्तमित्यर्थः ॥ ९ ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **प्रतीतीति** ॥ सार्वत्रिकगुणोपसंहारस्य स्थितत्वात् सा निरसनीयेति भावः । पृथक्छब्दस्य नात्र 'वैलक्षण्यम्' अर्थः । मुक्तेस्तदधिकारिणामप्यत्र वैलक्षण्यानभिधानादित्यत आह – **एकदेशेति** ॥ पूर्वाध्याये तत्र तत्रैकदेशज्ञानमात्रेण भवति मुक्तिरिति भाषणात् पृथक्शब्द एकदेशार्थो व्याख्यातव्य इति भावः । एकदेशज्ञानेन मुक्त्युक्तेः सर्वज्ञाननियमदर्शनार्थत्वायोगादाह **दर्शनार्थमुपलक्षणार्थमिति** ॥ एकदेशग्रहणम् इतरगुणोप-लक्षणार्थमित्यर्थः ।

श्लोकः ९

तृतीये 'अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि । सर्वत्र ये गुणाः प्रोक्ताः' इति तृतीयाध्यायान्ते । **'दर्शनपथम्'** इत्यत्र भाष्ये 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्तप्रत्यय इत्यकारान्तत्वं युक्तम् । **सावकाशत्वनिरवकाशत्वाभ्यामिति** ॥ निरवकाशेन सावकाशबाधः 'यावत्या वाचा कामयीत तावत्या वाचा दीक्षणीयायामनुब्रूयाद्' इत्यत्र पूर्वतन्त्रे व्यवस्थापित इति भावः । 'ज्ञात्वैव जन्म नैति' इत्युक्तेऽपि जन्मादिज्ञानमेव मोक्षसाधनमित्युक्तं स्यात् । तच्चायुक्तम् । गुणपूर्णत्व-ज्ञानापादितप्रसादस्यैव तत्साधनत्वस्थितेरित्यत आह – **अयोगेति** ॥ एवकारो ह्ययोगव्यवच्छेदे, अन्ययोगव्यवच्छेदे, अत्यन्तायोगव्यवच्छेदे च वर्तते । अयं च भाष्यस्थैवकारः मोक्षे जनयितव्ये जन्मादिज्ञानायोगो नास्तीत्ययोगव्यवच्छेदार्थः, न त्वन्ययोगव्यवच्छेदार्थ इत्यर्थः ।

ननु मोक्षे जन्मादिज्ञानायोगव्यवच्छेदे कृतेऽपि तन्नियम एवोक्तः स्यात् । तथा च 'नियम-दर्शनार्थम्' इति ग्रन्थेन पुनरुक्तिरित्यत आह – **एतच्चेति** ॥ पूर्वत्रोपलक्षणतया सर्वज्ञाननियम उक्तः । अत्र तु जन्मादिज्ञानं मोक्षहेतुरेवेति नियम उच्यत इत्यर्थभेदो ज्ञातव्य इति न पुनरुक्तिरिति भावः ।

**इतरवाक्यानि** 'वेदाद्युक्तं तु सर्वं यः' इत्यादीनि । **अधिकारिविशेषः** ब्रह्मादिः । नीलोत्पल-मित्यत्र नैल्यस्येव 'नान्यस्य कस्यचिद्' इत्यस्य व्यावर्तकत्वाभावाद् विवक्षितार्थमाह– **पक्षान्तरेति** ॥ अधिकारिविशेषविषयत्वेन सावकाशत्वसम्पादनं पक्षान्तरम् । **अत्र** 'जन्म कर्म च' इत्यत्र । **अर्थापत्तिं** 'तत्त्वतः' इति विशेषणान्यथाऽनुपपत्त्या तदुपपादकसर्वज्ञानबुद्धिम् । **एतम्** 'तत्त्वतः' इति विशेषणे सर्वज्ञानमङ्गीकार्यमिति न्यायम् । 'तत्त्वतः' इति विशेषणमात्रेण कुतः सर्वज्ञानापात इत्यर्थः । 'सर्वज्ञानम्' इति भाष्यस्य एकस्मिन् वस्तुनि तत्तद्गुणकर्मेतरवैलक्षण्यवत्तया ज्ञातव्ये तत्तद्गुणकर्मादिज्ञानं वैलक्षण्यबोधस्य विचित्रप्रतियोगिज्ञानप्रयोज्यत्वेन तथा तथा तत्तज्ज्ञानं चाभ्युपगन्तव्यमिति सार्वज्ञ्यमित्यर्थ इत्याहुः ॥

ननु 'ज्ञाश्रुस्मृदृशां सनः' इति सन्नन्तधातोरात्मनेपदमनुष्ठितम् । तत्कथमत्र परस्मैपदमित्या-शङ्क्य छन्दस्त्वादुपपद्यत इति भावेनाह– **जिज्ञसेत् जिज्ञासेतेति** ॥ धातोराकारस्य ह्रस्वता च छन्दस्त्वेनैव निर्वोढव्येति भावः । भाष्ये 'सार्वज्ञाभावे तत्त्वतो ज्ञानाभावः' इति व्यतिरेक-प्रमाणमुक्तम् । 'तत्त्वज्ञाने सति सार्वज्ञ्यम्' इत्यन्वयेऽपि स्वयं प्रमाणं दर्शयति– **अन्यत्रापीति** ॥ **भावः** पदार्थः । नन्वेवं सार्वज्ञस्यावश्यकत्वे मनुष्याणामुपासनाऽभावप्रसङ्गः । तेषां सर्वगुणोप-

श्लोकः ९

संहारादावसमर्थत्वाद् इत्यत आह– **सर्वत्रेति** ॥ सर्वाधिकारिष्वित्यर्थः । **यथाशक्तीति** ॥ मानुषेणापि स्वयोग्यं सर्वं सम्यगुपसंहृत्यैव ज्ञानमापाद्यमिति भावः ॥ ९ ॥

**गीताक्षरार्थस्तु-** एवं स्वभावादेवावतारादिस्वव्यापारमुक्त्वा तज्ज्ञाने फलमुच्यते– **जन्मेति** ॥ एवम् उक्तप्रकारेण दिव्यं लोकविलक्षणं मे जन्म प्रादुर्भावरूपं कर्म साधुपरित्राणादि । उपलक्षणमेतत् । स्वस्वयोग्यान् गुणान् । यो वेत्ति सः देहं त्यक्त्वा पुनर्जन्म नैति पुनरुद्भवं न गच्छति, किन्तु मामेति । यद्वा जन्म कर्म च ज्ञात्वैव जन्म नैतीत्ययोगव्यवच्छेदपरत्वेन व्याख्येयमिति ॥ ९ ॥

**भावदीपिका (श्री.टि.)–** 'पृथग्' इत्यस्यार्थमाह– **एकदेशज्ञानेनेति** ॥ भगवज्जन्म-कर्माख्यैकदेशज्ञानमात्रेणेत्यर्थः । सर्वज्ञाननियमस्य श्लोकेऽप्रदर्शनाद् 'दर्शनार्थम्' इति कथमुक्त-मित्यत आह– **उपलक्षणार्थमिति** ॥ **तृतीय इति** ॥ तृतीयाध्यायान्ते ॥ **अयोगेति** ॥ 'सर्वं वाक्यं सावधारणम्' इति न्यायात् 'यो जन्म कर्म च वेत्त्येव स जन्म नैति' जन्म कर्म ज्ञात्वैव मुक्तिः, नाज्ञात्वा इत्ययोगव्यवच्छेद एवाभिमतः, नतु जन्मकर्मज्ञानेनैव मुक्तिः, नान्यज्ञानेनेत्यन्ययोग-व्यवच्छेदः, येनैतदेव गीतावाक्यं महाकौर्मवाक्यबाधकं स्यादिति भावः । भाष्ये सावकाशत्वं गतिशब्दार्थः । ननु 'पृथङ्मुक्त्युक्ति' इत्यनेनैव गीतावाक्यस्य सावकाशत्वं लब्धमेव, पुनः सावकाशत्वं किमर्थमुच्यत इत्यत आह– **एतच्चेति** ॥ पृथङ्मुक्त्युक्तिः सर्वज्ञाननियमदर्शनार्थमिति पूर्वोक्तादर्थाद् जन्मादिकं सर्वथा ज्ञातव्यमेवेत्यर्थान्तरम् 'अत्रोक्तस्य' इत्यनेनोच्यत इत्यर्थः । तथा च प्रकारान्तरेणोपलक्षणं विना सावकाशत्वस्योच्यमानत्वाददोष इति भावः ।

**इतरवाक्यानि** 'वेदाद्युक्तं तु' इत्यादीनि ॥ **कुतो नान्येति** ॥ अधिकारिविशेषो ब्रह्मा, तस्यैव वेदाद्युक्तसर्वज्ञानपूर्वकोपास्त्या ज्ञानम् । इतरेषां तु यत्किञ्चिज्ज्ञानमेवापेक्षितमिति सावकाशा-नीत्यन्या गतिरस्तीत्यर्थः ॥ **पक्षान्तरेति** ॥ अधिकारिविशेषस्यैव सर्वज्ञानम्, इतरेषां तु यत्किञ्चि-ज्ज्ञानमेवापेक्षितमिति पक्षान्तरव्यवच्छेदादित्यर्थः । तथा च वेदाद्युक्तसर्वज्ञानमेवापेक्षितमिति सावकाशत्वाभावान्नान्या गतिरिति भावः । **अर्थापत्तिरिति** ॥ आपतति इत्यस्याक्षिपत्यर्थकत्वात् 'तत्वत' इति विशेषणेन सर्वज्ञानमाक्षिप्यत इत्यर्थः ।

ननु 'ज्ञाश्रुस्मृदृशां सन' इति सूत्रेण सन्नन्तेभ्यः 'ज्ञा अवबोधने' इत्येतेभ्यो धातुभ्य आत्मनेपदविधानात् कथं 'जिज्ञासेत्' इति विधिलिङ्-परस्मैपदप्रयोग इत्यत आह– **जिज्ञासेतेति** ॥

श्लोकः ९

'चान्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदम्' इति वचनादिति भावः ॥ **अन्यत्रापीति** ॥ 'एकं च तत्त्वतो ज्ञातुम्' इत्यत्रोक्तमेव प्रमेयमुक्तमित्यर्थः । तदुदाहरति– **एको भाव इति** ॥ **एको भावः** पदार्थः **येन** पुंसा **तत्त्वतः** पलपरिमाणेयत्ताविशेषवत्त्वेन कालदिगदृष्टरूपनिमित्तवत्त्वेनादृष्टा-श्रवैतादृशपुरुषविशेषप्रयोजनाय निर्मितत्वादिना रूपेण दृष्टः तेन सर्वे भावास्तत्त्वतो दृष्टा इत्यर्थः ।

ननु सर्ववेदाद्युक्तज्ञानपूर्वकोपास्तौ सर्वेषामधिकाराभावाद् अपरोक्षज्ञानाभाव एव प्रसज्यते इत्यतः–

> 'यथाशक्त्यखिलान् वेदान् विज्ञायोपासनं भवेत् ।
> तत्राखिलस्य विज्ञप्तिः सम्यग् ब्रह्मण एव हि ।
> तदन्येषां यथायोगम् अखिलज्ञप्तिरिष्यते ॥'

इत्यनुव्याख्यानं मनसि निधायाह– **सर्वत्रेति** ॥ ९ ॥

**भावप्रकाशः (कृ.टि.)**– ननु पृथक्शब्दो न वैलक्षण्यार्थः । मुक्तेः तदुक्तेर्वा वैलक्षण्यानुप-लम्भात् । नापि पुनरर्थः । जन्मादिज्ञानेन मुक्तेरधुनेवोच्यमानत्वेन पुनर्मुक्त्युक्तेरभावादित्यत आह– **एकदेशज्ञानेनेत्यर्थ इति** ॥ तथाऽप्येकदेशज्ञानेन मुक्त्युक्तेः सर्वज्ञाननियमदर्शनार्थत्वाभावादाह– **उपलक्षणार्थमिति तृतीय इति** ॥ तृतीयाध्यायान्त इत्यर्थः । तत्र 'अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि' इत्यादिप्रमाणानामुक्तत्वादिति भावः । नन्वेतज्ज्ञात्वैव जन्म नैतीत्यस्य जन्मादिज्ञानेनैव मोक्ष इति फलितार्थः । न चासौ युक्तः । जन्मादिज्ञानान्येन गुणपूर्णत्वज्ञानेन वा भगवत्प्रसादेन वा मोक्षोक्तेरित्यत आह– **अयोगव्यवच्छेदमात्रेति** ॥ मोक्षे जनयितव्ये जन्मादिज्ञानायोगो नास्तीत्य-योगव्यवच्छेद एवैवकारार्थो न त्वन्ययोगव्यवच्छेद इत्यर्थः ॥ ननु मोक्षं प्रति जन्मादिज्ञानायोग-व्यवच्छेदे कृते तन्नियम एवोक्तः स्यात् । तथा च नियमदर्शनार्थमिति ग्रन्थेन पुनरुक्तिरित्यत आह– **एतच्चेति** ॥ पूर्वमुपलक्षणतया सर्वज्ञाननियम उक्तः । अत्र तु जन्मादिज्ञानमात्रनियम इति भेद इत्यर्थः ॥

**इतरवाक्यानीति** ॥ 'वेदाद्युक्तं तु सर्वं यः' इत्यादीनीत्यर्थः । **अधिकारिविशेषेति** ॥ चतुर्मुखादीत्यर्थः । नीलोत्पलमित्यादौ नैल्यादेरिव नान्यस्य कस्यचिदित्यस्य व्यावर्तकत्वा-भावादाह– **पक्षान्तरव्यवच्छेदादिति** ॥ ननु ज्ञाश्रुस्मृदृशां सन इति सन्नन्ताज्ज्ञाधातोरात्मने-पदविधानाज्जिज्ञासेदिति कथमित्यत आह– **जिज्ञासेतेति** ॥ भाष्ये सार्वज्ञ्याभावे तत्त्वतो ज्ञानाभाव

श्लोकः १०

इति व्यतिरेके प्रमाणमुक्तम् । तत्त्वज्ञाने सति सार्वज्ञ्यमित्यन्वयेऽपि स्वयं प्रमाणमाह– **अन्यत्रापीति** ॥ ननु सार्वज्ञ्यास्यावश्यकत्वे मनुष्याणामुपासनाभावप्रसङ्गः । तेषां सार्वत्रिक-गुणोपसंहाराभावादित्यत आह– **सर्वत्र सार्वज्ञ्यमिति** ॥ ९ ॥

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

## भाष्यम्

**सन्ति च तथा मुक्ता इत्याह– वीतरागेति ॥ मन्मयाः मत्प्रचुराः। सर्वत्र मां विना न किञ्चित् पश्यन्तीत्यर्थः ॥ १० ॥**

भावप्रदीपिका (प.टी.)– एतज्ज्ञानेन मुक्तजातस्य प्रत्यक्षसिद्धत्वेनात्र श्रद्धस्वेत्यभि-प्रायेणोत्तरश्लोकमवतारयति – **सन्तीति** । 'मन्मय'पदमन्यथाप्रतीतिनिरासाय व्याचष्टे– **मन्मया इति** । मन्मया इति कथं भगवत्प्राचुर्यं तेषामित्यत आह– **सर्वत्रेति** । सर्वत्र नियामकत्वेन हरिरेव स्थित इति जानन्तीत्यर्थः ॥ १० ॥

भावप्रकाशिका (न.टी.)– तत्त्वतो भगवज्जन्म कर्म च ज्ञात्वा बहवो मुक्ताः । अतोऽस्मिन्नादरः साधने कर्तव्य इति भावेनोत्तरं श्लोकमवतार्य व्याचष्टे– **सन्ति चेति** । सर्वेषु पदार्थेषु स्थितं हरिं विनाऽन्यं न पश्यन्तीत्यर्थः ॥ १० ॥

प्रमेयदीपिका (ज.टी.)– किञ्च, उत्तरश्लोकेऽधिकानुवादान्नात्रैतावन्मात्रं विवक्षितमिति भावेन तत्तात्पर्यमाह– **सन्ति चेति** ॥ **तथा** उक्तज्ञानेन । **आह** 'श्रद्धोत्पादनार्थम्' इति शेषः । **'मन्मया मदात्मकाः'** इति प्रतीतिनिरासार्थमाह– **मन्मया इति** ॥ सर्वेषां भगवान् प्रचुरः । को विशेषो ज्ञानिनाम्? इत्यत आह– **सर्वत्रेति** ॥ सर्वेषु पदार्थेषु । **किञ्चित्** सत्तादिकम् । मदायत्तमेव सर्वं पश्यन्ति इत्यर्थः ॥ १० ॥

भावदीपः (रा.टि.)– ॥ तथा इत्यनुवादः, 'उक्तज्ञानेन' इति व्याख्या । स्वयोग्य-सर्वज्ञानेनेत्यर्थः ॥ 'आह' इत्यनुवादेन तत्र दोषमाह– आहेति ॥ १० ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **अधिकानुवादात्** 'मन्मया मामुपाश्रिताः' इति जन्मकर्मज्ञानमात्रापेक्षया अधिकस्य मोक्षसाधकत्वेनानुसङ्कीर्तनात् । **अत्र** 'जन्म कर्म' इति श्लोके । **एतावन्मात्रं** जन्मकर्मज्ञानमात्रम् । 'तथा' इत्यनूद्यार्थमाह– **तथेति** ॥ स्वयोग्यसर्वज्ञानेनेत्यर्थः । **मदात्मका इति** ॥ मयट् तादात्म्यार्थे इति प्रत्येतुर्हृदयम् ॥ **प्रचुर इति** । प्रधानभूत इत्यर्थः । अनेन 'मयट् प्राचुर्यार्थः' इत्युक्तं भवति । **सत्तादिकं** सत्ताप्रवृत्त्यादिकम् । पदार्थेषु मां विना सत्तादिकं न पश्यन्तीत्यस्य तात्पर्यमाह– **मदायत्तमेवेति** ॥ १० ॥

**गीताक्षरार्थस्तु** - एवंविधज्ञानेन मोक्षोऽस्तीत्यत्र श्रद्धोत्पादनार्थमुच्यते– **वीतरागेति** ॥ वीतः विगतः रागो विषयाभिलाषः, भयं मरणादेः, क्रोधश्च येभ्यस्ते तथोक्ताः । मन्मया मत्प्रचुराः सर्वपदार्थेषु सत्तादिकं मदायत्तमेव जानन्त इति यावत् । मामुपाश्रिताः मदेकशरणाः । मद्भजनपरायणा इत्यर्थः । स्वयोग्योपासनाविषयगुणविशिष्टभगवज्ज्ञानस्य तपसा पूताः दग्धाशुभकर्माणः बहवो ज्ञानिनः मद्भावं मयि सत्तां सायुज्यलक्षणां स्थितिम् अष्टमे वक्ष्यमाणरीत्या मद्भक्तत्वं वा आगताः । 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तः, प्राप्तवन्तः सन्तीति ॥ १० ॥

**भावदीपिका (श्री.टि.)**– ॥ **अधिकानुवादादिति** ॥ जन्मकर्मज्ञानापेक्षयाऽप्यधिकस्य 'मन्मया मामुपाश्रिता' इति विशेषणस्याधिकस्योक्तत्वात् 'जन्म कर्म च' इति श्लोके जन्मकर्मपरिज्ञानमात्रमेव मोक्षसाधनत्वेन न विवक्षितमित्यर्थः । **उक्तज्ञानेनेति** ॥ महाकौर्मादिप्रमाणाभिप्रेतयथाशक्तिसर्वपरिज्ञानेनेत्यर्थः ॥ **सर्वेषां भगवान् प्रचुर इति** ॥ भगवतः सर्वोत्तमत्वरूपं प्राचुर्यं सर्वान् प्रत्यप्यविशिष्टमित्यर्थः । 'सर्वत्र' इत्यस्यार्थमाह– **सर्वेष्विति** ॥ वाक्यस्य फलितमाह– **मदायत्तमिति** ॥ १० ॥

भावप्रकाशः (कृ.टि.)– ॥ अधिकानुवादादिति ॥ 'मन्मया' इत्यादिनेति शेषः ॥ १० ॥

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥**

## भाष्यम्

**न च मद्भजनमात्रेण मुक्तिर्भवत्यन्यदेवतादिरूपेण । तथाऽपि**

श्लोकः ११

**सर्वेषामानुरूप्येण फलं ददामीत्याह– ये यथेति ॥ भजामि सेवयामि फलदानेन। नतु गुणभावेन ॥**

भावप्रदीपिका (प.टी.)– ननु यदि त्वद्भजनेन मुक्तिः, तर्हि देवतान्तरमिष्ट्वा त्वदर्पणे-नापि भवति फलान्तर-मित्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकमवतारयति– **नचेति** ॥। 'भजामि' इति पदमन्यथा-प्रतीतिनिरासाय व्याचष्टे– **सेवयामीति** ॥

भावप्रकाशिका (न.टी.)– येषामेतादृशज्ञानं नास्ति, किन्तु सामान्यतः सर्वदेवोत्तमो विष्णुरिति ज्ञात्वा, अन्यदेवानपीष्ट्वा, अन्ते विष्णौ समर्पयन्ति तेषां का गतिः ? इत्या-काङ्क्षोत्तरत्वेन उत्तरश्लोकार्धमवतार्य व्याचष्टे– **नचेति** ॥ एवंविधाधिकारिभिरन्यदेवताद्युद्दिष्ट-मपि हविर्भगवान् भुङ्क्ते इत्येतदेवान्यदेवतादिरूपेण तद्भजनम् । नच सेवकस्य गुणभावदर्शना-दस्यापि स स्यादित्याशङ्कनीयम् । सर्वप्रमाणविरोधात् इति भावेनाह– **सेवयामीति** ।

प्रमेयदीपिका (ज.टी.)– 'ये यथा' इति वाक्यं न प्रकृतेन साक्षात् सङ्गतम् । अतस्त-त्सङ्गमयितुं मध्ये शङ्कान्तरं निराकरोति– **नचेति** ॥ 'मामुपाश्रिताः' 'मद्भावमागताः' इत्युक्त्याऽन्यदेवतादिरूपेण मद्भजनमात्रेण त्रैविद्यानामपि मुक्तिर्भवतीति नाऽशङ्कनीयमित्यर्थः । विष्णुं सामान्यतः सर्वोत्तमं ज्ञात्वाऽन्यदेवताः पितॄंश्चेष्ट्वाऽन्ते विष्णौ समर्पणम् अन्यदेवतादि-रूपेण भगवद्भजनम्। उपपत्तिं तूत्तरत्र वक्ष्यामीति भगवतोऽभिप्रायः ॥

तत्किं त्रैविद्यानां त्वद्भजनं निरर्थकमेव? इत्यत आह– **तथाऽपीति** ॥ यद्यपि न मुक्तिं ददामि । तथाऽपि 'तदभिप्रेतं स्वर्गादिकं ददामि' इति शेषः । एवं तर्हि ज्ञानिभ्यो मुक्तिं, त्रैविद्येभ्योऽल्पं फलं ददद्विषमो भगवान् स्यादित्याशङ्कानिरासार्थत्वेनोत्तरवाक्यं सङ्गमयन् आह– **सर्वेषामिति** ॥ आनुरूप्येण सेवानुसारेण । सर्वेषां ज्ञानिनां त्रैविद्यानां चेति चतुर्थ्यर्थे षष्ठी । 'तथैव भजामि' इत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे– **सेवयामीति** ॥ 'बहुलमेत-न्निदर्शनम्'('हनस्तो'.पा.सू.७.३.३२.उदा.गणसूत्रम्.२०८) इति वचनात् स्वार्थे णिच् ॥

भावबोधः (र.टि.)– ॥ उत्तरत्रेति ॥ 'येऽप्यन्यदेवताभक्ता' इति हि वक्ष्यतीत्यत्रेत्यर्थः । भगवतः भाष्यकारस्य ।

भावदीपः (रा.टि.)– ॥ उपपत्तिं तूत्तरत्र वक्ष्यामीति ॥ त्रैविद्यानां मुक्तिर्नेत्यत्र 'त्रैविद्या मां सोमपाः'(९.२०) 'येऽप्यन्यदेवताभक्ताः' इत्यादौ च नवमे सम्यग् भगवज्ज्ञानाभाव-

स्वर्गादिप्रार्थनाविधिपूर्वकयजनाद्युपपत्तिं वक्ष्यामीत्यर्थः ॥ 'चातुर्वर्ण्यम्' (४.१३) इत्यत्र टीकोक्तदिशा वेति ज्ञेयम् ॥

**चतुर्थ्यर्थे षष्ठीति** ॥ 'ददाति' इति दानक्रियायोगे सम्प्रदानत्वप्राप्त्या 'सर्वेभ्यः' इति भाव्यमित्यतो व्यत्ययेन तदर्थ एव षष्ठीत्यर्थः । 'सेवे' इति वक्तव्ये 'सेवायाम्' इति कथं प्रयोगः? इत्यत आह – **बहुलमिति** ॥ 'सत्याप,पाश,रूप,वीणा,तूल,श्लोक, सेना, लोम, त्वच, वर्म, वर्ण, चूर्ण, चुरादिभ्यो णिच्' इति स्वार्थिकणिज्विधायकसूत्रस्थ चुरादिगणपाठे 'चुरादि' इत्यत्र आदिपदोक्तधातूनां प्रदर्शनं बहुलं ज्ञेयम् । अन्येऽपि धातवः प्रयोगवशाद् ध्येयाः' इत्युक्तवचनादित्यर्थः । तथाच 'णिचश्च' इति सूत्रेण णिजन्तस्य कर्त्रभिप्राय एव क्रियाफले आत्मनेपदविधानात् परस्मैपदं च साध्विति भावः ॥

**वाक्यार्थप्रदीपः** (पां.टि.)– ननु 'कर्मणा यमभिप्रैति स सम्प्रदान'मिति दानकर्मणा अभिप्रेतत्वेन सम्प्रदानत्वात् सर्वेभ्य इति चतुर्थ्या भवितव्यम् । सर्वेषामिति षष्ठी तु कथमित्यत आह– **चतुर्थ्यर्थ इति** ॥ 'चतुर्थ्यर्थे बहुलं छन्दसि' इति सूत्रे चतुर्थीषष्ठ्यौ परस्परार्थे भवत इत्यभिधानात् चतुर्थ्यर्थे षष्ठीत्यर्थः । ननु फलदानादिना सेवाकर्तृत्वस्यैव वक्तव्यत्वात् तांस्तथैव सेव इत्येव वक्तव्यम् । सेवयामीति सेवाकारयितृत्वोक्तिरयुक्तेत्यत आह– **बहुलमेतदिति** ॥ यद्यपि (चुरादीत्यत्रादिपदोक्तधातूनां )एतत् चुरादावुदन्तधातुनिदर्शनं बहुलं वेदितव्यम् । अतः अनुक्ता अपीह धातवो वेदितव्या इति व्याख्यातम् । तथाप्येतन्नवगणिपठितेभ्योऽपि क्वचित्स्वार्थे णिच् । रामो राज्यमचीकरदिति यथेति । चुरादिभ्य एव बहुलं णिजिति परकीयमेतद्व्याख्यानमनुसृत्य एतदुदाहरणमिति द्रष्टव्यम् ॥

**भावरत्नकोशः** (सु.टि.)– ॥ **प्रकृतेन** उक्तज्ञानेन मोक्षोऽस्तीति पूर्वश्लोकप्रकृतार्थेन । शङ्काबीजमाह– **मामुपाश्रिता इति** ॥ **त्रैविद्यानामिति** ॥ तिस्रो विद्या ऋग्यजुस्सामलक्षणाः येषां ते त्रिविद्याः त एव त्रैविद्याः । प्रज्ञादित्वात् स्वार्थेऽण् । यद्वा त्रिविधा विद्यास्त्रिविद्याः । ता अधीयते विदन्ति वेति 'तदधीते तद्वेद' इत्यण्प्रत्यये त्रैविद्याः, तेषां वेदत्रयापातार्थविदामित्यर्थः । भगवद्भजनस्य कथमन्यदेवताभजनरूपत्वमिति शङ्कां भाष्यभावोक्तिव्याजेनापनुदन् ऋगादि-वेदवेदिनां कथं न मुक्तिः ? इति चोद्यं च त्रैविद्यस्वरूपविवरणेन परिहरति– **विष्णुमिति** ॥ देवपित्रादिषु स्थित्वा यज्ञभोक्ता सर्वकर्मकर्ता च विष्णुरेवेत्यनुसन्धानव्यावृत्तये **'सामान्यतः'**

इत्युक्तम् । **नाशङ्कनीयमिति** ॥ साध्यसाधने को हेतुरित्यत आह– **उपपत्तिमिति** ॥ त्रैविद्यानामन्यदेवतायाजित्वात्, अतिशयितभक्तिज्ञानाभावात्, कामनावत्त्वात्, सर्वदा मत्स्मरणमदुद्देशादियोगाभावात्, अविधिपूर्वकं यष्टृत्वाच्चेत्युपपत्तिं नवमे 'त्रैविद्या मां सोमपा' (९.२०) इत्यादिना वक्ष्यामीति भगवतो गीताचार्यस्याभिप्राय इत्यर्थः । यद्वा यस्मादहमेव चातुर्वर्ण्यस्य कर्ता, त्रैविद्याश्च तदन्तर्भूताः, तस्मात् स्वपितरं मां परित्यज्य अन्यदेवता यजन्तः कथं महाफलभाजो भवेयुरित्युपपत्तिम् **उत्तरत्र** 'चातुर्वर्ण्यं मया' इति श्लोके वक्ष्यामीत्यर्थः ।

केचित्तु उत्तरत्र 'ये यथा माम्' इत्यत्र उपपत्तिं सेवावैलक्षण्यरूपामित्यर्थ इत्याहुः ॥ मैवम् । 'ये यथा' इति श्लोकावतार एव मध्ये भाष्यकारेण शङ्कनाद् भाष्यकारस्यैवेयं शङ्का, न गीताकारस्येति तु चोद्यमात्रम् । 'उपपत्तिं वक्ष्यामि' इति टीकायामाशङ्कायाः कृष्णाभिप्रेतत्वविभावनादिति अपरे ।

**स्वर्गादिकमिति** ॥ तेन 'त्वद्भजनं निरर्थकमेव किमिति चोद्यं समाहितम् । आनुरूप्यं सप्रतियोगिकमित्यतस्तद्दर्शयन् तदर्थमाह– **सेवाऽनुसारेणेति** ॥ **'सर्वेषाम्'** इत्यनुवादः 'ज्ञानिनाम्' इति व्याख्या । 'ददामि' इति दानक्रियायोगात् 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति सम्प्रदानत्वे, सम्प्रदाने चतुर्थीविभक्तौ 'सर्वेभ्यः' इति स्यादित्यत आह– **चतुर्थ्यर्थे षष्ठीति** ॥ 'चतुर्थ्यर्थे बहुलं छन्दसि' इति सूत्रादिति भावः । **अन्यथाप्रतीतीति** ॥ 'राजानं भृत्य इव तानहं सेवे' इत्यन्यथाप्रतीतीत्यर्थः ।

ननु 'सेवयामि' इत्यस्य हेतुमण्णिजन्तत्वेन 'भजामि' इत्येतदर्थत्वानुपपत्तिः । स्वार्थे णिजन्तत्वे न शास्त्रमित्यत आह– **बहुलमिति** ॥ 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्णचूर्णचुरादिभ्यो णिच्' इति स्वार्थे णिज्विधायकसूत्रे चुरादिधातुगणपाठे 'बहुलमेतन्निदर्शनम् । एतत् चुरादीत्यत्रादिपदोक्तधातूनां प्रदर्शनं बहुलं ज्ञेयम् । एवमन्येऽपि धातवः प्रयोगवशात् स्वार्थणिजन्ता वेदितव्या' इति वचनादत्र स्वार्थेणिचि 'णिचश्च' इति कर्त्रभिप्राय एव क्रियाफले आत्मनेपदविधानाद्, अत्र सेवाफलस्य स्वात्मगामित्वाद् 'भजामि' इत्यस्य 'सेवयामि' इति परस्मैपदिना युक्तं व्याख्यानमिति भावः । यद्वा आधुनिकनवगणिपठितेभ्योऽपि क्वचित्स्वार्थे णिच् 'रामो राज्यमचीकरत्' इति । तथाऽनन्तधातुदर्शनं तु बहुलमित्यर्थ इति बहुलमेतदित्यन्तगणसूत्रं व्याख्याय 'श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरइतकलोपश्च' इत्यत्र 'णिङ् अङ्गात् निरसने'

इत्यतो णिङ्' इति नानुवर्तयन्ति । किन्तु णिचमेवानुवर्तयन्ति । तेन परस्मैपदमपि तन्मते भवति । श्वेतयति अश्वयतीति व्याकुर्वन् । तथा चात्रापि भौवादिकस्य 'सेवृ सेवने' इत्यस्य णिचि उक्तरीत्या परस्मैपदं चोपपद्यत इति 'सेवयामि' इति भाष्यप्रयोगो युक्त इति भावः ॥

**भावदीपिका** (श्री.टि.)– अभेदेन भजनप्रतीतिनिरासायान्यदेवतादिरूपेण भगवद्भजनं विवृणोति– **विष्णुमिति** ॥ **सामान्यतः** राजादिसाधारण्येन । अन्यदेवतादिरूपेण मद्भजनमात्रेण मुक्तिर्न भवतीत्युक्तम् । कुतो न भवतीत्याशङ्कायामाह– **उपपत्तिमिति** ॥ 'चातुर्वर्ण्यं मया सृष्टम्' इत्यत्र तस्मात् स्वपितरं मां परित्यज्यान्यदेवताः यजन्तः कथं महाफलभाजो भवेयुरित्युपपत्तिं वक्ष्यामीति भगवतः कृष्णस्याभिप्राय इत्यर्थः । केचित्तु 'येऽप्यन्यदेवताभक्ता इति हि वक्ष्यति' इत्यनेनोपपत्तिं तूत्तरत्र वक्ष्यामीति भगवतो भाष्यकारस्याभिप्राय इत्यर्थ इत्यप्याहुः । सामान्यतो विष्णुं सर्वोत्तमं ज्ञात्वाऽन्यदेवादीन् इष्ट्वा, अन्ते विष्णौ समर्पयन्तस्त्रैविद्याः । तेषां ददद्भगवान् विषमः स्यादित्यन्वयः ।

ननु 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति सूत्रेण दानकर्मणा सर्वेषाम् अभिप्रेतत्वात् तत्र सम्प्रदानसञ्ज्ञायां 'सम्प्रदाने चतुर्थी' इति चतुर्थ्या भाव्यम् । तथा च 'सर्वेभ्य' इति स्यादित्यत आह– **चतुर्थ्यर्थ इति** ॥ ननु 'षेवृ सेवन'इत्यस्य धातोः सत्यापपाशादिषु, चुरादिषु चाभावात् कथं 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्णचूर्णचुरादिभ्यो णिच्' इत्यनेन स्वार्थे णिजित्यत आह– **बहुलमेतदिति** ॥ सत्यापपाशादिभ्यश्च यत् स्वार्थे णिच्प्रत्ययप्रदर्शनं तद् बहुलप्रयोगमनु-सृत्योक्तम् । प्रयोगानुसारेणैतदन्यत्रापि द्रष्टव्यमित्यर्थः ॥

**भावप्रकाशः** (कृ.टि.)– ॥ **त्रैविद्यानामिति** ॥ त्रिविधा विद्या त्रिविद्या, तामधीयते विदन्ति वा त्रैविद्याः, 'तदधीते तद्वेद' इत्यण् । 'उक्थादित्वेऽप्यङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्न' इति ठको निषेधात् । **तेषां** वेदत्रयापातार्थविदामित्यर्थः । ननु भजनं नाम माहात्म्यज्ञानपूर्वः स्नेहः । तथान्यदेवतादिरूपेणेत्यस्य तदैक्यानुसन्धानेत्यर्थोक्तौ परस्परव्याघात इत्यत आह– **विष्णुमिति** ॥ देवपित्रादिषु भोक्ता सर्वकर्मकर्ता च विष्णुरेवेत्यनुसन्धानव्यावृत्त्यै– **सामान्यत इत्युक्तम्** ॥ **उत्तरत्रेति** ॥ चातुर्वर्ण्यं मया सृष्टमित्यत्र । तस्मात् स्वपितरं मां परित्यज्यान्यदेवता यजन्तः कथं महाफलभाजो भवेयुरित्युपपत्तिं वक्ष्यामीति भगवतः कृष्णस्याभिप्राय इत्यर्थः । यद्वा सेवावैलक्षण्य-रूपामुपपत्तिं ये यथेत्युत्तरत्र वक्ष्यामीति भगवतोऽभिप्राय इत्यर्थः । **न मुक्तिं ददामीति** ॥ न चात्र

श्लोकः ११

'विज्ञानेनात्मयोग्येन निजरूपे व्यवस्थिति'रिति नित्योपलब्धिसूत्रभाष्यविरोधः । तत्र नित्य-संसारिणां मिश्रज्ञानेन स्वरूपाविर्भावस्य स्फुटप्रतीतेः स्वरूपाविर्भावस्यैव च मुक्तित्वादिति वाच्यम् । रूपमनुरूपं योग्यमित्येवं निजरूपपदेन अस्य स्वयोग्यफलस्य विवक्षितत्वात् ।

'सामान्यैः ये त्वविज्ञेया विशेषा मम गोचराः ।
देवादीनां तु तज्ज्ञानं विज्ञानमिति कीर्तित'मिति

प्रमाणबलेन विज्ञानपदस्य विशेषज्ञानार्थत्वात् नित्यसंसारिणां च सुखदुःखात्मकसंसारफलस्य मिश्रज्ञानजन्यत्वात् । यथोक्तम् । 'मानुषामिश्रमतयो विमिश्रगतयोऽपि च' इति । सुधायां च 'सुखदुःखात्मकसंसारफलाः' इति व्याख्यातम् । यदि च तेषां स्वरूपाविर्भाव एव तदा वक्तव्यम् । स मुक्तिपदवाच्यो न वा । नाद्यः ।

'चेतनस्य द्वयं भोग्यं संसारो मुक्तिरेव च ।
संसारस्त्रिविधस्तत्र स्वर्गो मध्यमधस्तथा ।
मुक्तिश्च द्विविधा तत्र सुखं नित्यं तथापरम् ।
नित्यदुःखमिति ज्ञेयम् .............'

इत्याद्यनुव्याख्याने मुक्तिद्वित्वोक्तिविरोधात् । न च द्वित्वोक्तिरुपलक्षणम् । मुक्तेः पृथक्त्वेन संसारोक्त्ययोगात् । नान्त्यः । 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः ' इत्युक्तमुक्ति-लक्षणस्यातिव्याप्तिप्रसङ्गात् ।

किञ्च तेषां स्वरूपाविर्भावपक्षे 'मध्यमा मानुषा ये तु सृतियोग्याः सदैव हि । 'त्रिदिव-निरयभूगोचरान् नित्यबद्धान्' इत्यादिविरोधः । नच सुखदुःखानुभोगो बन्धादिशब्दार्थः । स च लिङ्गभङ्गात् प्राग्वैषम्येण पश्चात्तु साम्येनेति न विरोध इति वाच्यम् । भूतबन्धो हि बन्धः । 'भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्' इति भाष्य-तद्गृहीतस्मृतिविरोधात् । शास्त्रे शास्त्रीयार्थस्यैव ग्राह्यत्वात् ।

एतेन मध्यममानुषाणां नित्यमानन्दादीनामुपलब्धिः दुःखाद्युपब्धिश्च समैव स्यादिति तत्त्व-प्रकाशिकाविरोधोऽप्यपहस्तितः । तस्या आवरणसद्भाव एव तात्पर्यात् । 'अतोऽस्त्येवावरणम्' इत्युपसंहारात् । मध्यमानामप्यावरणनिवृत्तौ तात्पर्ये तु 'भगवत्प्रसादेन तन्निवृत्तिश्च' इत्युत्तरवाक्य-विरोधात् । मध्यमानां भगवत्प्रसादाभावादिति दिक् ॥

श्लोकः ११

ननु ददामीति दानक्रियायोगात् सर्वेभ्य इति चतुर्थ्या भाव्यम् । 'कर्मणा यमभिप्रैति स सम्प्रदान'मिति सम्प्रदानत्वे सति 'चतुर्थी सम्प्रदाने' इति चतुर्थीस्मरणादित्यत आह– **चतुर्थ्यर्थ इति** ।। चतुर्थ्यर्थे बहुलं च्छन्दसीति सूत्रादिति भावः । **बहुलमेतदिति** ।। चुरादिभ्यः स्वार्थे णिच्प्रदर्शनं बहुलं स्यात् । नवगणिपठितेभ्योऽपि धातुभ्यः क्वचित् स्यादित्यर्थः । ज्ञानिनामपीश्वर-परिवारत्वादिना अन्यदेवतायाजित्वात् तन्निरासायाह– **त्रैविद्या इति यावदिति** ।।

# भाष्यम्

## कथमयं विशेषः? इत्यत आह – मम वर्त्मेति ।। अन्यदेवता यजन्तोऽपि मम वर्त्मैवानुवर्तन्ते । सर्वकर्मकर्तृत्वाद् भोक्तृत्वाच्च मम ।।

भावप्रदीपिका (प.टी.)– नन्वन्यदेवतायाजिभ्यो भगवान् फलदातेत्ययं विशेषः कुतः ? इत्याशङ्क्य, उत्तरत्वेन श्लोकमवतार्य व्याचष्टे – **कथमिति** । यतोऽहमेव कर्मकर्ता, अतो यजमानहस्तेन मां प्रत्येव कारयामि, तस्य चाहं भोक्ता, अतो मम वर्त्मैवानुवर्तन्ते, अत-स्तेभ्यः फलदाते-त्यर्थः । न चैतावता फलप्राप्तिरवैष्णवानां शङ्क्या । भगवानेव मया कारयति, स एव भोक्तेति भावाभावादिति ।।

भावप्रकाशिका (न.टी.)– अन्यदेवतायाजिनामपि भगवानेव फलद इत्ययं विशेषः कथमित्याकाङ्क्षोत्तरत्वेन उत्तरश्लोकमवतार्य व्याचष्टे– **कथमिति** । अन्यदेवता यजन्तोऽपि हि द्विविधा भगवन्मार्गमनुवर्तन्ते । बिम्बभूतस्य भगवतः सर्वकर्मकर्तृत्वात् तदनुकुर्वन्तः तत्प्रति-बिम्बरूपिणोऽन्यदेवतायाजिनः तद्वर्त्मैवानुवर्तन्ते, तेषामेव कर्मणां सिद्धिमुत्पत्तिं काङ्क्षन्तः । तथा भगवत एव सर्वदेवताहविर्भोक्तृत्वादन्यदेवतोद्देशेन हविस्त्यजन्तोऽपि तद्वर्त्मैवानुवर्तन्त इति भावः ।

प्रमेयदीपिका (ज.टी.)– 'मम वर्त्म' इत्यस्य सङ्गत्यप्रतीतेस्तामाह– **कथमिति** ।। यः फलतारतम्यहेतुः अयं ज्ञानिभ्यस्त्रैविद्यानां सेवायां विशेषः कथं किम्प्रकार इत्यर्थः । कथमनेनैतच्छङ्कापरिहारः? इत्यतो व्याचष्टे– **अन्येति** । न केवलं ज्ञानिनः । किन्तु **अन्यदेवता यजन्तोऽपि,** त्रैविद्या इति यावत् । किं तत्सर्वेषां तद्वर्त्मानुवर्तनम्? इत्यत आह– **सर्वेति** ।। **भोक्तृत्वात्** हविरादीनाम् । एतद्द्वयमेव भगवद्वर्त्मानुवर्तनम् । तथा व्यवहारे निमित्तत्वात् पञ्चमी ।।

श्लोकः ११

**इदमुक्तं भवति । अहमेव सर्वयज्ञानां भोक्ता च प्रेरकश्च । तदेतज्ज्ञात्वा भागवता निष्कामा मामेव यजन्ते । त्रैविद्यास्त्वेतत्तत्वतोऽजानानाः कर्मणां सिद्धिं काङ्क्षन्तोऽन्य-देवता यजन्ते । एवं सेवाविशेषाद्युक्तं फलतारतम्यमिति ॥**

**भावबोधः (र.टि.)– ॥ एतद्वयमिति ॥** तत्प्रेरणयैव कर्मकरणं सर्वथा मद्भोक्तृव्ययज्ञादि-कर्तृत्वं चेति द्वयमित्यर्थः । ननु किं तद्भगवद्वर्त्मानुवर्तनं यत् श्लोकार्थत्वेन विवक्षितमित्याकाङ्क्षायाः सर्वकर्मकर्तृत्वं भोक्तृत्वं चेति प्रथमयैव निवृत्तेः सैव प्रयोक्तव्या । पञ्चमीप्रयोगस्तु व्यर्थ इत्यत आह– **तथा व्यवहारेति ॥** अनेन 'मम वर्त्माऽनुवर्तन्त' इति भाष्यम् इत्युच्यते इति शेषपूरणेनापि व्याख्यातं भवति ।

**वाक्यार्थप्रदीपः (पां.टि.)–** किं तद्भगवद्वर्त्मानुवर्तनमित्यकाङ्क्षायां सर्वकर्मकर्तृत्वं भोक्तृत्वं चेति प्रथमैव प्रयोक्तव्या । पञ्चमीप्रयोगस्तु किमर्थमित्यत आह– **तथा व्यवहारेति ॥**

**भावदीपः (रा.टि.)–** किं तत्सर्वेषां मम वर्त्मानुवर्तनम्? इति प्रश्ने 'सर्वकर्मकर्तृत्वम्' इत्यादि प्रथमान्तमेव वाच्यम् । न पञ्चम्यन्तमित्यतः सत्यमिति भावेनाऽह– **एतद्वयमेवेति ॥** तर्हि पञ्चम्युक्तिः कथम्? इत्यत आह– **तथेति ॥** मम वर्त्मगा एत इति व्यवहारे मत्स्वामिकयज्ञकर्तृत्व, मद्भोग्यहविराद्युपेतयज्ञकर्तृत्वयोर्निमित्तत्वात् पञ्चमीत्यर्थः ॥ 'काङ्क्षन्तः' इत्येतदर्थमाह– **त्रैविद्या-स्त्विति ॥**

**भावरत्नकोशः (सु.टि.)– ॥ गुणभावेन** अप्रधानभावेनेति भाष्यार्थः । **फलतारतम्यहेतुः** 'त्रैविद्यानां मोक्षाभावः, भागवतानां मोक्षोऽपि' इति तारतम्यहेतुः । 'ज्ञानिभ्यः' इति पञ्चमी । भागवता अप्यन्यदेवता भगवत्परिवारतया यजन्तीति तद्व्यावर्तनायोक्तम्– **त्रैविद्या इति याव-दिति ॥** 'भोक्तृत्वात्' इति भाष्यमनूद्य शेषमाह– **भोक्तृत्वादिति ॥** किं तत्सर्वेषां त्वद्वर्त्मानु-वर्तनमिति प्रश्नोत्तरत्वसिद्ध्यर्थमाह– **एतद्वयमेवेति ॥** मम सर्वकर्तृत्वं सर्वयज्ञसम्बन्धिहविरादि-भोक्तृत्वमित्येतद्वयमेव भगवद्वर्त्म । तदनुसन्धानं भगवद्वर्त्मानुवर्तनमित्यावृत्त्य टीकावाक्यं व्याख्येयम् । तेन भगवन्निष्ठयज्ञभोक्तृत्वादिधर्मद्वयस्य त्रैविद्यनिष्ठानुवर्तनरूपत्वं कथमिति चोद्यं परिहृतं भवति । एतदनुरोधेनैव किं त्वद्वर्त्म ? यत् त्वद्वर्त्मानुवर्तनं सर्वेषामिति प्रश्नवाक्यमपि व्याख्येयम् ॥

केचित्तु अनुवर्तनशब्दोऽनुवर्तनीयार्थः । 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युटि अनुवर्तन-शब्दनिष्पत्तेः । गमनिकागतोऽप्यनुवर्तनशब्द एवमेव व्याख्यातव्यः । न चोभयत्रानुवर्तनशब्दो व्यर्थ

इति वाच्यम् । प्रश्ने किं त्वद्धर्मं यत् सर्वेषामनुवर्तनीयमित्यसङ्गतिपरिहारार्थत्वात् । प्रत्युत्तरवाक्ये च 'सूर्य एकाकी चरति' इतिवत् प्रश्नानुवादार्थत्वादिति व्याचक्षते । ननु 'किं त्वद्धर्मं' इत्याकाङ्क्षायाः सर्वकर्मकर्तृत्वं सर्वयज्ञभोक्तृत्वं चेति प्रथमयैव निवृत्तेर्भाष्ये पञ्चमीप्रयोगो न युक्त इत्यत आह– **तथा व्यवहार इति** ।। एतद्द्वयमेव भगवद्धर्मेति व्यवहारे निमित्तत्वात् गुणात् 'विभाषागुणेऽस्त्रियाम्' इति पञ्चमीविभक्तिरित्यर्थः ।

'ननु फलतारतम्यहेतुः सेवाविशेषः किंप्रकारकः ' इति शङ्कायाः कथमनेन परिहार इत्यत आह– **इदमुक्तमिति** ।। **एतत्** सर्वयज्ञानां भोक्ता प्रेरकश्चेत्येतत् । 'कांक्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः' इत्येतदर्थतोऽनुवदति– **कर्मणामिति** ।।

**भावदीपिका (श्री.टि.)**– ।। **एतद्द्वयमिति** ।। मत्प्रेरणयैव कर्मकरणम्, सर्वथा मद्धोक्त-व्ययज्ञादिकर्तृत्वं चेति द्वयमित्यर्थः । ननु किं तद्भगवद्धर्मानुवर्तनं यत् श्लोकार्थत्वेन विवक्षितम्? इत्याकाङ्क्षायाः सर्वकर्मकर्तृत्वं भोक्तृत्वं चेति प्रथमयैव निवृत्तेः प्रथमाविभक्तिरेव प्रयोक्तव्या, पञ्चमी-प्रयोगस्तु व्यर्थ इत्यत आह– **तथा व्यवहार इति** ।। अन्यदेवताः यजतां त्रैविद्यानां मम वर्त्मानुवर्तनव्यवहारे मम सर्वकर्मकर्तृत्वभोक्तृत्वयोर्निमित्तत्वात् पञ्चम्युपपद्यत इत्यर्थः । तथाच मम सर्वकर्मकर्तृत्वाद् भोक्तृत्वाच्च मम वर्त्मानुवर्तन्त इत्युच्यत इति शेषपूरणेनापि भाष्यं व्याख्यातं भवतीति द्रष्टव्यम् ।

ननु त्रैविद्याश्चेत् तव वर्त्मानुवर्तन्ते तर्हि फलतारतम्यं न स्यादित्यत आह– **इदमुक्तं भवतीति** ।। 'सर्वकर्मकर्तृत्वाद्' इत्यस्याभिप्रायकथनम्– **प्रेरकश्चेति** ।। **सिद्धिम्** फलम् ।।

**भावप्रकाशः (कृ.टि.)**– ननूत्तरमूलं न हेतुवचनम्, क्षिप्रं हीति तस्य वक्ष्यमाणत्वात् । मम वर्त्मानुवर्तन्त इत्युक्ते मद्धोक्तव्ययज्ञादिकमनुतिष्ठन्तीत्यर्थे मम सर्वयज्ञादिभोक्तृत्वादि हेतुकरणे साध्याविशिष्ट्याच्चेत्यतोऽन्यथामूलमवतारयति– **किं तदिति** ।। **एतत् द्वयमिति** ।। मम सर्वकर्म-कर्तृत्वं भोक्तृत्वं चेत्यर्थः । न च भगवन्निष्ठधर्मद्वयस्य त्रैविद्यनिष्ठानुवर्तनत्वं कथमिति वाच्यम् । कृत्यल्युटो बहुलमित्यनुवर्तनशब्दस्य कर्मणि ल्युडन्तत्वेनानुवर्तनीयत्वलाभाददोषात् । एव-मवतारिकागतानुवर्तनशब्दोऽपि व्याख्येयः । नचोभयानुवर्तनशब्दवैय्यर्थ्यम् । प्रश्ने किं तत् त्वद्धर्मं यत्सर्वेषामनुवर्तनीयमिति असङ्गतिपरिहारार्थत्वात् । प्रत्युत्तरे सति एकाकी चरतीतिवत् प्रश्नांशानु-वादार्थत्वादिति ।।

श्लोकः ११

ननु सर्वानुवर्तनीयं भगवद्धर्म किमित्याकाङ्क्षायाः सर्वकर्मकर्तृत्वं भोक्तृत्वं चेति प्रथमयैव निवृत्तेः पञ्चमीप्रयोगोऽयुक्त इत्यत आह– **तथा व्यवहार इति** ॥ धर्मद्वयविशेष्यकभगवद्धर्मत्वप्रकारकव्यवहार इत्यर्थः । अयमभिसन्धिः। सर्वकर्तृत्वभोक्तृत्वाच्चेत्येवोक्तेऽपि कस्मान्निमित्तात् धर्मद्वयं भगवद्धर्मेत्युक्ते तथैव लोकवेदव्यवहारादिति गम्यते । (सास्नादिमान् गौरित्यादिवत् ।)कस्मात्त्वं नद्या इति प्रश्नोत्तरयोरागत इत्यादिवत् । गम्यमानाऽपि क्रिया कारकविभक्तौ निमित्तम् । तथैव 'अपादाने पञ्चमी' इति सूत्रे वृत्त्यादावुक्तत्वात् । तथा 'पुत्रात्प्रमोदो जायते' इत्यत्र यथा प्रमोदजनिं प्रति पुत्रस्य निमित्तत्वात् 'जनिकर्तुः प्रकृति'रिति सूत्रेणापादानसंज्ञायां पञ्चमी तथा भगवद्धर्मत्वव्यवहाररूपे गम्यमाने इति क्रियायां प्रति कर्तृत्वभोक्तृत्वयोर्निमित्तत्वात् पञ्चमी इति ॥ न च व्यवहारं प्रति न व्याहर्तव्यं निमित्तम्, किं तु तज्ज्ञानमेवेति वाच्यम् । पुत्रज्ञानस्य प्रमोदनिमित्तत्वेऽपि पुत्रस्य तदभावादिति साम्यात् । ज्ञानद्वारा वा ज्ञानगतस्य ज्ञेये आरोपाद्वा पुत्रस्यापि निमित्तत्वव्यवहार इति चेत् समं प्रकृतेऽपीति दिक् ॥ ननु फलतारतम्यहेतुः स वा विशेषः किं प्रकार इति शङ्कापरिहारः कथमनेनापीत्यत आह– **इदमुक्तं भवतीति** ॥

## भाष्यम्

**'येऽप्यन्यदेवताभक्ताः' (९.२३) इति वक्ष्यति । 'यो देवानां नामधा एक एव' (ऋ.सं.१०.८२.३) इति हि श्रुतिः । भगवानेव च तत्राभिधीयते । 'अजस्य नाभावध्येकमर्पितम्' (ऋ.सं.१०.८२.६ ) इत्यादिलिङ्गात् ॥११॥**

भावप्रदीपिका (प.टी.)– ननु वैष्णवयागभोक्तैव हरिः अन्यदैवत्ययागभोक्ताऽपीति कुतो भगवदभिप्रायः ? इत्यत आह– **येऽपीति** । नन्विन्द्रादिनामभिः प्रदत्ताहुतिभोक्ता हरिश्चेन्मन्त्रप्रामाण्यमित्यत आह– **य इति** । एतच्छ्रुत्युक्तोऽपि विष्णुः कुत इत्यत आह– **भगवानिति** ॥ ११ ॥

भावप्रकाशिका (न.टी.)– ननु देवतान्तरोद्दिष्टहविषां भगवानेव भोक्तेत्येतत् कथं भगवत्सम्मतं स्यात् ? इत्यत आह– **येऽपीति** ॥ नन्विन्द्रादिनामभिरुद्दिश्य त्यक्तानां भगवत्प्रोक्तौ कथं मन्त्रप्रामाण्यमित्यत आह– **यो देवानामिति** । स च सर्वदेवतानामवाच्यः कः? इत्याकाङ्क्षायां लिङ्गबलात् पद्मनाभ एवेत्याह– **भगवानिति** ॥ ११ ॥

श्लोकः ११

**प्रमेयदीपिका** (ज.टी.)– कुत इदं भगवतोऽभिप्रेतम्? इत्यत आह– **येऽपीति** ॥ अनेन श्लोकद्वयमुपात्तम् । तत्र च स्पष्टमेपोऽर्थः प्रतीयते ॥ नन्विन्द्रादिनामवद्भिर्मन्त्रैर्दत्तं हविरादिकं कथं भगवान् भुङ्क्ते? भगवतः सर्वनामवत्त्वेन मन्त्राणां तत्परत्वादिति भावेनाऽह– **य इति** ॥ ननु विश्वकर्मा एवमुच्यत इत्यत आह– **भगवानेवेति** ॥ तत्र च इति सम्बन्धः । अनेन भगवतः सर्वयज्ञादिभोक्तृत्वे बाधकं परिहृतम् ॥ ११ ॥

**भावदीपः** (रा.टि.)– ॥ **अनेनेति** ॥ 'सर्वकर्म' इत्यादिना 'इति वक्ष्यति' इत्यन्तेनेनेति वा 'इति वक्ष्यति' प्रतीकग्रहणेनेति वा अर्थः ॥ 'अहं हि सर्वयज्ञानां भोक्ता च' (९.२४) इति 'येऽप्यन्यदेवता' (९.२३) इति च श्लोकद्वयं नवमाध्यायस्थमुपात्तमित्यर्थः ॥ **इति सम्बन्ध इति** ॥ शब्दस्येति योज्यम् ॥ **अनेनेति** ॥ श्रुत्युदाहरणादिना 'नन्विन्द्रादिनामवद्भिः' इत्यादिना शङ्कितं बाधकं परिहृतमित्यर्थः ॥ ११ ॥

**भावरत्नकोशः** (सु.टि.)– ॥ **सिद्धिं** फलनिष्पत्तिम् । **इति** इदमुक्तमित्यन्वयः । **अभिप्रेतम्** 'इति विज्ञायते' इति शेषः । 'येऽपि' इति श्लोके त्रैविद्यास्त्वेतत् तत्त्वतो अजानाना इत्यादि-प्रमेयानुपलम्भादाह– **अनेन श्लोकद्वयमिति** । 'येऽप्यन्यदेवताभक्ता' इति प्रतीकोपादानेन ।

> 'येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ।
> तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥
> अहं हि सर्वज्ञानां भोक्ता च प्रभुरेव च ।
> न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥'

इति श्लोकद्वयमुपात्तं वेदितव्यम् । तत्र च भागवतानां त्रैविद्यानाम् 'अहमेव सर्वयज्ञानाम्' इत्यादिनोक्तः सेवाविशेषः स्पष्टं यथा भवति तथा तव मे प्रतीयत इत्यर्थः । **कथमिति** ॥ इन्द्रादिनाम्नां तत्तद्देवतास्वेव प्रसिद्धत्वादिति भावः । उत्तरमाह– **भगवतः सर्वनामवत्त्वेनेति** ॥ देवानां यानि वाचकानि इन्द्रादिनामानि तेषां धारकः सकलदेवनाम्नां परममुख्यवृत्त्या भगवानेव वाच्य इति श्रुत्यर्थः । तथा चेन्द्रादिनामघटितैर्मन्त्रैर्दत्तमपि हविर्भगवान् भुङ्क्ष इत्येतदुपपद्यत एवेति ।

श्लोकः ११

**एवमिति** ।। 'देवानां नामधा' इत्येवमित्यर्थः । विश्वकर्मसूक्तत्वाद्, विश्वकर्मश्रुतिबलाच्चेति भावः । चशब्दस्याभिधेयसमुच्चायकत्वे प्रस्तुतार्थालाभात् व्यत्यस्यान्वयं दर्शयति।। **तत्र चेति सम्बन्ध इति** ।। न केवलं विष्णुसूक्तादावित्यर्थः । विश्वकर्मश्रुतौ सत्यामपि कुतो भगवत्परत्व-मित्यत उक्तं भाष्ये **अजस्येति** ।। पद्मनाभत्वलिङ्गादयं विष्णुरेव । उत्सर्गतो लिङ्गाच्छ्रुतेः प्राबल्येऽपि निरवकाशलिङ्गेन सावकाशाया विश्वकर्मश्रुतेरन्तराकाशाधिकरणन्यायेन बाधसम्भवात् । सूक्तस्य ज्योतिरधिकरणन्यायेन विष्णुपरत्वसम्भवाच्चेति भावः । तथा च न्यायविवरणे 'श्रुति-सन्देहेऽनन्यथासिद्धलिङ्गेन निर्णयोपपत्तेः' इति । नाभ्यर्पितं पद्मादन्यत् किं न स्यात् ? पद्मनाभो वा हरेरन्यः किन्न स्याद् ? इति चेन्न । प्रसिद्धिवाधापत्तेः । 'अजस्य नाभाविति यस्य नाभेः' इति वचनविरोधापाताच्चेति । **अनेन** श्रुत्याद्यभिधानेन । **बाधकं** 'नन्विन्द्रादिनामवद्भिः' इत्यादिनाऽऽ-शङ्कितम् ।।

**गीताक्षरार्थस्तु-** त्रैविद्यानामपि मोक्षसद्भावात् को विशेषस्त्वामुपाश्रितानामित्यत उच्यते **ये यथेति** ।। ये भागवताः त्रैविद्या वा यथा येन प्रकारेण सर्वकर्मकर्तृत्वेन सर्वयज्ञभोक्तृत्वेन च विष्णुं सामान्यतः सर्वोत्तमं ज्ञात्वा देवताः पितॄंश्चेष्ट्वाऽन्ते विष्णौ समर्पणमित्यनेन वा प्रकारेण मां प्रपद्यन्ते, तान् तत्तत्फलदानेन भजामि सेवे अनुगृह्णामीति यावत् । नैतावता सर्वेषां फलसाम्यम् । भागवतानां मोक्षदानात् त्रैविद्यानां स्वर्गमात्रदानात् । एवं तर्हि भागवतेभ्यो मुक्तिं, त्रैविद्येभ्योऽल्पं सुखं दददि्वषमो भगवान् स्यादिति चेन्न । सेवानुसारेण फलदातृत्वात्, सेवायाश्च फलतारतम्यहेतु-विशेषशालित्वात् । ज्ञानिसेवापेक्षया त्रैविद्यसेवायां विशेषः किंप्रकारः यः फलतारतम्यस्य हेतुः ? इत्यत उच्यते **ममेति** ।। सर्वशः सर्वे भागवताः त्रैविद्याश्च मनुष्याः । मम वर्त्म सर्वकर्मकर्तृत्वं सर्वयज्ञभोक्तृत्वं च अनुवर्तन्ते अनुसरन्ति ।। ११ ।।

**भावदीपिका (श्री.टि.)– ।। श्लोकद्वयमिति ।।**

'येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ।।
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ।।'

इति श्लोकद्वयमुपात्तमित्यर्थः । तत्र श्लोकद्वये **एषोऽर्थः** अन्यदेवता यजन्तोऽपीत्यादिनोक्तः । उत्तरमाह– **भगवत इति** ॥ एवं सर्वनामवत्त्वेन । विश्वकर्मसूक्तत्वादस्येति भावः । भाष्ये **लिङ्गादिति** ॥ पद्मनाभत्वलिङ्गादित्यर्थः । **अनेन** भगवत इन्द्रादिसर्वदेवनामवत्त्वकथनेन । **वाधकम्** इन्द्रादिनामवद्भिर्मन्त्रैर्दत्तं हविरादिकं भगवान् कथं भुङ्क्ते इत्येवं रूपम् ॥ ११ ॥

**भावप्रकाशः** (कृ.टि.)– येऽपीति श्लोके त्रैविद्यास्त्वेतत्तत्वतोऽजानाना इत्यादि प्रमेयानुपलम्भादाह– **श्लोकद्वयमिति** ॥

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥'

इति श्लोकद्वयमित्यर्थः । **एषोऽर्थः** सेवाविशेषः । उत्तरमाह– **भगवत इति** ॥ **वाधकमिति** ॥ नन्विन्द्रादिनामवद्भिरित्यादिना शङ्कितमित्यर्थः ॥ ११ ॥

## काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
## क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥

## भाष्यम्

**कुतो मम वर्त्मानुवर्तन्ते– क्षिप्रं हि ॥ अत एव हि फलप्राप्तिः। 'तस्मात्ते धनसनयः' (छां.१.३.९) इति श्रुतिः ॥ १२ ॥**

भावप्रदीपिका (प.टी.)– ननु सर्वकर्तृत्वाद्भोक्तृत्वाच्च 'मम वर्त्मानुवर्तन्ते, इत्युक्तम् । तत्कुतो ज्ञायते ? इत्याशङ्कोत्तरत्वेनोत्तरश्लोकं व्याचष्टे– **कुत इति** । यतो भगवानेव भोक्ता, तत एव हि फलप्राप्तिः । नान्यथा सा स्यात् । अतः फलप्राप्तिदर्शनादहमेव भोक्तेति ज्ञायत इत्यर्थः । ननु राजादिभ्योऽपि सेवितेभ्यः फलं लभ्यते । अतः कथं भगवत एव फलदातृत्वमित्यत आह– **तस्मादिति** ॥ १२ ॥

श्लोकः १२

भावप्रकाशिका (न.टी.)– नन्वस्तु सर्वदेवतानामवाच्यत्वं विष्णोः, तथाऽपि भागवत-कर्तृकेष्वेव यागेषु सर्वदेवतानामभिः भगवानीड्यः स्यात् । त्रैविद्यकर्तृकेष्विन्द्रादय एव किं न स्युः ? इति भावेनाशङ्क्य, तदुत्तरत्वेनोत्तरमवतार्य व्याचष्टे– **कुत इति** ॥ नहि देवतादिवत् मनुष्यजनिश्चिरकालेन फलं साधयति । यदि कस्मिंश्चियागे न गृह्णीयाद्धविर्भगवान् तर्हि तस्य फलं न स्यात् । न हि भगवद्भजनं विना फलमिति भावः ॥

ननु वीणागानादिवत् यागादितुष्टा इन्द्रादय एव फलदाः स्युः, किं तत्र भगवता ? इत्यत आह– **तस्मादिति** । वीणायामपि राजायन्तःस्थितं हरिमेव गायन्ति । अत एव ततो धनं लभन्ते, नान्यथा । तद्वत् इन्द्रादिनामभिरिष्टाद् भगवत एव यथायोग्यं फलं लभन्ते, त्रैविद्या भागवताश्चेति भावः ॥ १२ ॥

प्रमेयदीपिका (ज.टी.)– साधकं तु प्रमाणं पृच्छति– **कुत इति** ॥ 'मम वर्त्मानुवर्तन्ते' (४.११) इति यत् सर्वयज्ञादिभोक्तृत्वं भगवत उक्तं तत् **कुतः** प्रमाणाज्ज्ञायत इत्यर्थः । सर्वकर्तृत्वं तु जीवाना-मस्वातन्त्र्यदर्शनात् सिद्धम् । 'इत्यत आह' इति शेषः । **हि** इत्यतः परमितिशब्दश्च । किमनेन प्रमाणमुक्तमित्यत आह– **अत एव हीति** ॥ कर्मजा सिद्धिः फलप्राप्तिस्तावत् क्षिप्रं प्रत्यक्षोपलभ्याऽस्ति । सा च **अत एव** कर्मणां भगवता भुक्तत्वादेव हि युज्यते । नान्यथे-त्यर्थः । इन्द्रादिभ्योऽपि फलप्राप्त्युपपत्तेरुपक्षीणाऽर्थापत्तिरित्यत आह– **अत एव हीति** ॥ भगवत एव । अत्र 'हि' इति सूचितं प्रमाणमाह– **तस्मादिति** ॥ **धनसनयः** धनलाभवन्तः ॥

भावदीपः (रा.टि.)– ॥ इति यदिति ॥ इत्यनेन यत्सर्वयज्ञादिभोक्तृत्वमुक्तमित्यर्थः ॥ १२ ॥

भावरत्नकोशः (सु.टि.)– इति अत्र वाक्ये यत् सर्वयज्ञादिभोक्तृत्वं 'मम वर्त्म' इत्य-नेनोक्तमित्यर्थः । भगवतः सर्वकर्मकर्तृत्वं सर्वयज्ञभोक्तृत्वं च मम वर्त्मेति विवक्षितम् । तत्र सर्वयज्ञभोक्तृत्वे प्रमाणप्रश्नवत् सर्वकर्मकर्तृत्वे कुतो न प्रमाणप्रश्न इत्यत आह– **सर्वकर्तृत्वं चेति** ॥ 'भगवतः' इति शेषः । कुत इत्यनन्तरं शेषमाह– **इत्यत इति** ॥ इतिशब्दश्च शेषः । 'फलप्राप्तिः' इति भाष्यं कस्यार्थ इत्यतः सिद्धिशब्दार्थ इति वक्तुमाह – **कर्मजेति** ॥ 'अत एव' इत्यनूद्यार्थमाह– **सा चात एवेति** ॥ **नान्यथेति** ॥ तथा चार्थापत्तिः प्रमाणमिति भावः । **उपक्षीणा**

अन्यथोपपन्ना । **भगवत एव** न त्विन्द्रादिभ्य इति पञ्चमी । अत्र भगवत एव फलप्राप्तिरित्यत्र । **हीति सूचितं** 'क्षिप्रं हि' इति गीतायां हिशब्देन सङ्क्षिप्योक्तम् । **धनेति** । धनस्य सनिर्येषामिति व्यधिकरणो बहुव्रीहिः । यद्वा 'षण सम्भक्तौ' इत्यस्य भावे रूपं 'सनः' इति । ततो मत्वर्थीय इकारस्तद्धितः । विचित्रा हि तद्धितगतिः धनशब्दश्च प्रत्यक्षोपलभ्यफलमात्रोपलक्षणार्थ इति भावः । तथा च प्राचीनटीका । 'वन्दिगानादितुष्टाद् राजादेर्यथा वन्दी धनं लभते तथा यागादि-तुष्टादिन्द्रादेरेव यजमानः फलं लभताम्, किं भगवता इत्याशङ्क्याह-तस्मादिति । वीणायामपि राजाद्यन्तःस्थं हरिमेव गायन्ति । अत एव ततो धनं लभन्ते । नान्यथा । तद्वत् इन्द्रादि-नामभिरिष्टाद्भगवत एव फलं लभन्ते' इति ॥

**गीताक्षरार्थस्तु** - तत्राप्यस्ति विशेष इत्युच्यते **काङ्क्षन्त इति** ॥ अहमेव सर्वयज्ञानां भोक्ता च प्रेरकश्च । तदेतज्ज्ञात्वा भागवता निष्कामा मामेव यजन्ते । त्रैविद्यास्त्वेतत् तत्त्वतोऽजानानाः कर्मणां सिद्धिं फलप्राप्तिं काङ्क्षन्तः अपेक्षमाणाः अन्यदेवता यजन्ते । अन्ते भगवदर्पणं च कुर्वन्ति । एवं सेवायां विशेषसद्भावाद् युक्तं फलतारतम्यमिति ।

इदमत्र विवेक्तव्यम् । भागवतानां भगवद्वर्त्मानुवर्तनं सर्वकर्मकर्तृत्व-प्रेरकत्व-सर्वयज्ञभोक्तृत्वा-द्यनुसन्धानपूर्वकं कर्माद्यनुष्ठानं, त्रैविद्यानां तु नोक्तानुसन्धानेन यजनं, किन्तु फलाकाङ्क्षावशाद् अन्यदेवतायजनम् अन्ते भगवदर्पणमात्रम् । इदमेव तेषां भगवद्वर्त्मानुवर्तनम् । अतो भागवतानां मोक्षः, इतरेषां स्वर्गाद्येवेति । तथा चोत्तरप्रस्थाने अन्यदेवतायाजिनामप्यन्ते भगवत्समर्पणेन वैष्णवमार्गानुवर्तनेनैव सम्यक् फलं भवति ।

'अन्यदेवतापूजाऽपि यस्मिन्नन्ते समर्पिता ।
स्वर्गादिफलहेतुः स्यान्नान्यथा तं हरिं भजेत् ॥' इति ।

ननु 'मम वर्त्म' इति भगवतः सर्वकर्मकर्तृत्वं सर्वयज्ञादिभोक्तृत्वं चोक्तम् । तत्र सर्वकर्मकर्तृत्वं जीवानामस्वातन्त्र्यदर्शनाद् भगवत एव सिद्धम् । सर्वयज्ञभोक्तृत्वं कुतः प्रमाणाज्ज्ञेयमित्यत उक्तम् – **क्षिप्रं हीति** ॥ कर्मजा सिद्धिः कर्मजफलप्राप्तिस्तावत् क्षिप्रं प्रत्यक्षोपलभ्याऽस्ति । सा च कर्मणां भगवता भुक्तत्वादेव हि युज्यते, नान्यथा । इन्द्रादिभ्योऽपि प्राप्यमाणफलसिद्धिरन्ततो भगवद-धीनैवेत्यर्थापत्तिरुक्तेऽर्थे प्रमाणमिति ॥ १२ ॥

श्लोकः १३

**भावदीपिका** (श्री.टि.)– ननु भगवतः सर्वकर्मकर्तृत्व-सर्वयज्ञभोक्तृत्वयोरुभयोः प्रकृतत्वात्, तत्र सर्वकर्तृत्वं भगवतः कुतः प्रमाणाज्ज्ञायत इत्यपृष्ट्वा, सर्वभोक्तृत्व एव प्रमाणप्रश्नः कुत? इत्यतो भगवतः सर्वकर्तृत्वं सिद्धमस्तीति तत्र न प्रमाणं पृच्छ्यत इत्याशयेन कथं तत्सिद्धमस्तीत्यत-स्तदुपपादयति– **सर्वकर्तृत्वमिति** ॥ सिद्धं 'भगवत' इति शेषः ॥ **नान्यथेत्यर्थ इति** ॥ तथाच भगवतः सर्वयज्ञादिभोक्तृत्वे फलप्राप्त्यन्यथाऽनुपपत्तिरेव प्रमाणं 'क्षिप्रं हि' इत्यनेनोक्तमित्याशयः । अर्थापत्तेरन्यथाऽप्युपपत्तिमाशङ्कते– **इन्द्रादिभ्योऽपीति** ॥ **उपक्षीणेति** ॥ अर्थापत्तिफलं सर्वयज्ञभोक्तृत्वम् इन्द्रादावुपक्षीणमिति भावः । **प्रमाणम्** छन्दोगोपनिपदम् । **तस्मादितीति** ॥ 'तद्य इमे वीणायां गायन्ति एतं ते गायन्ति, तस्मात्ते धनसनयः' इति श्रुतेरयमर्थः । ये इमे गायका वीणायां तद् राजादिकमुद्दिश्य गायन्ति ते एतं तदन्तर्गतं भगवन्तमुद्दिश्यैव गायन्ति । कुतः? यस्मात्ते धनसनयो धनलाभवन्तस्तावद्भवन्ति । 'षण लाभे' इति धातोः । 'फलप्रदो वासुदेवोऽ-खिलस्य' इति वचनात् । तथा च भगवतो यज्ञभोक्तृत्वाभावे भगवता फलप्राप्त्यनुपपत्तेरिति ॥१२॥

**भावप्रकाशः** (कृ.टि.)– सर्वयज्ञादिभोक्तृत्ववत्सर्वकर्तृत्वे कुतो न प्रमाणप्रश्न इत्यत आह– सर्वकर्तृत्वं त्विति ॥ उपक्षीणेति ॥ अन्यथोपपन्नेत्यर्थः ॥ १२ ॥

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥**

## भाष्यम्

**अहमेव हि कर्तेत्याह– चातुर्वर्ण्यमिति ॥ चतुर्वर्णसमुदायः । सात्त्विको ब्राह्मणः । सात्त्विकराजसः क्षत्रियः । राजसतामसो वैश्यः । तामसः शूद्र इति गुणविभागः ॥**

भावप्रदीपिका (प.टी.)– यत्पूर्वं सर्वकर्मकर्तृत्वं भगवतोऽभिप्रेतं तत्परतयोत्तरश्लोक-मवतार्य व्याचष्टे– **अहमेवेति** । 'गुणकर्मविभागशः' इत्युक्तौ गुणकर्मविभागौ दर्शयति– **सात्त्विक इति** ॥

भावप्रकाशिका (न.टी.)– न चाश्चर्यं भगवतः सर्वकर्तृत्वं सर्वयज्ञभोक्तृत्वम्, तत एव

हेतोः सर्वकर्मफलदत्वं च । यतः स एव सर्वकर्मिणां स्रष्टेति भावेनोत्तरश्लोकमवतार्य व्याचष्टे— **अहमेवेति** । समुदायसमुदायिनोरत्यन्तभेदाभावात् चतुर्वर्णसमुदायः 'चातुवर्ण्यम्' इति विवरणं युज्यते । न च समुदायस्यावस्तुत्वम्, पटस्याप्यवस्तुत्वापत्तेरिति भावः । तत्र तावत् सत्त्वादिगुणत्रयविभागेन चतुर्वर्णोत्पत्तिं दर्शयति— **सात्त्विक इत्यादिना** । निर्देशप्राथम्याद्रजोगुणादपि सत्त्वमधिकं क्षत्रिये । तत एव हेतोर्वैश्ये रजोऽधिकं तमसः । रजसस्तमोऽधिकमित्येव तामसः शूद्र उच्यते । न तु सत्त्वादपीति भावः ॥

प्रमेयदीपिका (ज.टी.)— 'चातुर्वर्ण्यम्' इत्यस्य सङ्गतिं सूचयंस्तात्पर्यमाह— **अहमेव हीति** ॥ यस्मादहमेव चातुर्वर्ण्यस्य कर्ता, त्रैविद्याश्च तदन्तर्भूतास्तस्मात् स्वपितरं मां परित्यज्याऽन्यदेवता यजन्तः कथं महाफलभाजो भवेयुः? इत्याहेत्यर्थः । 'विचित्रा हि तद्धितगतिः' इति वचनाद् अतिरिक्तार्थसम्भवे 'चतुर्वर्णादिभ्यः स्वार्थे उपसङ्ख्यानम्' (७.१.३ वार्तिकम्) इति नाऽदरणीयमिति भावेनाऽह — **चतुर्वर्णेति** ॥

वर्णाश्चत्वारः, गुणास्त्रयः । तत्कथं तेषु गुणविभागः ? इत्यत आह— **सात्विक इति**॥ राजसस्थसात्विकेष्वेवायं विभाग इति ज्ञातव्यम् । निर्देशप्राथम्यात् क्षत्रिये रजसः सत्वम् अधिकम् । तत एव वैश्ये तमसो रजः । तच्च समसत्वयुतम् । रजोऽपेक्षया तमोऽधिकं शूद्र इत्यसौ तामसः । सत्वं तु तमसोऽप्यधिकम् ॥

**भावबोधः (र.टि.)**— 'राजसास्तु नरास्तत्र विप्रा राजससात्विकाः इत्यादितात्पर्योदाहृतप्रमाणानुरोधाद् आह— **राजसस्येति** ॥ **निर्देशेति** ॥ 'सात्त्विकराजसाः' इति भाष्ये सत्त्वस्य प्रथमनिर्देशादित्यर्थः । **सत्त्वमधिकमिति** ॥ 'सात्त्विका स्वल्परजसः क्षत्रियाः' इति प्रमाणादिति भावः । **तत एवेति** ॥ 'राजसतामसाः' इति भाष्ये रजसः प्रथमं निर्देशादेवेत्यर्थः । **समसत्त्वयुतमिति** ॥ 'सत्त्वरजसो वैश्याः' इति वचनादिति भावः । 'अतिस्वल्पसत्त्वाधिक्येन तामसः' इति प्रमाणानुसारेण तामसः शूद्र इति भाष्यं व्याचष्टे— **रजोऽपेक्षयेति** ॥ मुक्तियोग्यमनुष्यवर्णविभागोऽयम् । तदुक्तम् । 'ये तु भागवता वर्णास्तेषां भेदोऽयमीरितः' इति । उपलक्षणं चैतत् ।

'त्रैविद्यमात्रा विष्णोर्ये सर्वाधिक्ये ससंशयाः ।
अन्याधिक्यं न मन्यन्ते श्रीशाद् राजसराजसा'

श्लोकः १३

इत्यादिप्रमाणानुसारेण राजसराजसादयोऽपि ग्राह्याः । अन्यथा 'यस्मादहमेव चातुर्वर्ण्यस्य कर्ता, त्रैविद्याश्च तदन्तर्भूता' इत्याद्यसङ्गतं स्यादिति मन्तव्यम् ॥

**भावदीपः (रा.टि.)–** ॥ **इति वचनादिति** ॥ भाष्यकारीयवचनादित्यर्थः ॥ **अतिरिक्तेति** ॥ स्वार्थादन्यसमूहार्थत्वसम्भव इत्यर्थः ॥ **इति नादरणीयमिति** ॥ पञ्चमाध्यायाद्यपादे 'गुणवचन-ब्राह्मणादिभ्यः' (पा.सू.५.१.१२४) इति सूत्रे वार्तिकोक्तं स्वार्थेऽप्यनुपसङ्ख्यानं नादरणीय-मित्यर्थः ॥ 'राजसानां मध्ये सात्विका एव भागवता विप्रादयः' इत्याद्यष्टादशाध्याय-तात्पर्यानुरोधेन वा 'राजसास्तु नृपास्तत्र विप्रा राजससात्विकाः' इत्यादि तात्पर्यानुरोधेन वाऽऽह- **राजसानां मध्य इति** ॥ **निर्देशेति** ॥ 'सात्विकराजसः' इति भाष्ये सात्विकपदस्य प्रथमं निर्देशादित्यर्थः । 'सञ्ज्ञाप्रमाणत्वात्' इतिवदयं निर्देशो ज्ञेयः ॥ 'सात्विकाः स्वल्परजसः क्षत्रियाः सत्वराजसाः' इत्यादिमानानुरोधादाह– **क्षत्रिय इत्यादि** ॥ **तत एव** इति भाष्ये रजःपदस्य निर्देशप्राथम्यादेवेत्यर्थः ॥ **रज इति** ॥ 'अधिकम्' इत्यनुषङ्गः । व्यक्तमेतत् सर्व-मन्तिमाध्यायतात्पर्ये ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु चतुर्वर्णसमूह इति समूहे चतुर्वर्णशब्दात् ष्यञ्व्याख्यान-मयुक्तम् । समूहार्थे तद्विधायकाभावात् । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति गुणवचनेभ्यो ब्राह्मणादिभ्यश्चादौ ष्यञ्विधानात् अस्य च तादृग्रूपत्वात् 'एतत्सूत्र एव चतुर्वर्णादीनां स्वार्थे ष्यञ् वाच्यः' इति वार्तिककारेण स्वार्थे ष्यञ्विधानात् समूहे तदङ्गीकारे सूत्रविरोधात् कृद्वचनविरोधाच्च-(मातृकालुप्ता)..इत्यतो न तावत् साधकाभावः । 'प्रत्यय' इत्यादाविव 'तद्धित' इति एकवचननिर्देशे कर्तव्ये तथा निर्देशमकृत्वा बहुवचननिर्देशसूचित 'विचित्रा हि तद्धितगति'रिति वचनादेव समूहार्थेऽपि ष्यञ्सम्भवात् । अत एव प्रकृत्यारब्धसमूहार्थपरतया मुख्यप्रत्ययत्वोपपत्तौ च स्वार्थे कप्रत्यत्वाभ्युपगमानौचित्येन स्वार्थे तद्विधायकवचनस्यासम्भवित्वात् न तद्विरोधोऽपीत्याह– **विचित्रा हि तद्धितगतिरिति वचनादित्यादि** ॥।

**भावरत्नकोशः (सु.टि.)–** ननु समुदायेऽभिधेये ष्यञोऽविधानात् कथं चतुर्वर्णसमुदाय इति भाषणमित्यत आह– **विचित्रेति** ॥ **अतिरिक्तेति** ॥ स्वार्थातिरिक्तेत्यर्थः । प्रत्ययानां प्रकृत्यर्थाति-रिक्तार्थ एवानुशासनं भूम्ना दृश्यते । अयं च ष्यञ्प्रत्ययः प्रातिपदिकार्थातिरिक्ते समुत्पादयितुं युक्तः । सम्भवात् । प्रातिपदिके एव तदुत्पादनं नातीव चतुरस्रमिति युक्तः समुदायार्थः प्रत्यय इति

भाष्यभाव इत्याशयः । प्राचीनटीकायां तु 'समुदायसमुदायिनोरत्यन्तभेदाभावात् 'चतुर्वर्णा एव चातुर्वर्ण्यम्' इति स्वार्थिकष्यञ्प्रत्यय एव 'चतुर्वर्णसमुदायश्चातुर्वर्ण्यम्' इति विवृत इत्युक्तम् । 'चत्वारश्च ते वर्णाश्च' इति भाष्ये विशेषणसमासोऽयं न द्विगुरिति न ङीप् ।

'राजसास्तु नरास्तत्र विप्रा राजससात्त्विकाः' इत्यष्टादशाध्यायतात्पर्यनिर्णयोदाहृत-प्रमाणं राजसानां मध्ये सात्त्विका एव भागवता विप्रादय इति तत्रत्यभगवत्पादीयवचनं चानुरुन्धान एतद्भाष्यनिष्कर्षमाह – **राजसस्थ सात्त्विकेष्वेवेति** ॥ जीवास्त्रिविधाः । सात्त्विका राजसा-स्तामसाश्चेति । तत्र राजसा अपि त्रिविधाः । राजससात्त्विका राजसराजसा राजसतामसाश्चेति । तत्रापि ये राजससात्त्विकास्तेष्वित्यर्थः । 'राजससात्त्विकेषु' इति वक्तव्येऽपि 'राजसस्थ' इति वचनं तद् राजसस्थसात्त्विकेष्वेव शुद्धसात्त्विका इत्युत्तरप्रस्थानमनुसन्धापयितुम् । एवकारेण राजसस्थसात्त्विकेभ्योऽन्यत्रैवं विभागाभावं सूचयति ।

॥ **निर्देशेति** ॥ 'सात्त्विकराजसः' इति भाष्ये सात्त्विकशब्दस्य प्रथमं निर्देशादित्यर्थः । **'रजसः' इति पञ्चमी** ॥ रजोऽपेक्षयेत्यर्थः । **तत एव** राजसतामस इति निर्देशप्राथम्यादेव । **रजः** अधिकम् । **तच्च** रजः **समसत्त्वयुतं** स्वसमसत्त्वगुणेन युक्तं वैश्य इति ज्ञातव्यमित्यर्थः । 'तामसः शूद्रः' इति भाष्यं 'रजसस्तमोऽधिकमित्येतावता तामसः शूद्र उच्यते, न तु सत्त्वादपीति' प्राचीन-टीकां हृदि कृत्वा विवृणोति– **रजोऽपेक्षयेति** ॥ **तमसोऽप्यधिकं** 'शूद्रे' इति वर्तते । एतदेव प्रमेयं सप्रपञ्चं 'राजसस्थसात्त्विकेष्वेव शुद्धसात्त्विकाः, किञ्चिद्रजोयुक्तसात्त्विकाः, समरजोयुक्त-सात्त्विकाः, सत्त्वात् किञ्चिदूनतमोयुक्तसात्त्विका इति वर्णभेदः । सत्त्वप्रधानत्वाद् एतानारभ्यो-त्तरोत्तरं सर्वेऽपि मोक्षयोग्या' इति तात्पर्यनिर्णयात् । राजससात्त्विकेषु 'विप्रा राजससात्त्विकाः' इत्यादेः 'राजससात्त्विकानारभ्य हिरण्यगर्भावसानाः सर्वेऽपि हि मोक्षयोग्याः । गुणान्तरापेक्षयैषु सत्त्वाधिक्यात् । मोक्षयोग्यता भागवतानामेव। अतो राजससात्त्विकादयः सर्वेऽपि भागवता एव' इत्यन्तात् तट्टीकाग्रन्थाच्चावसेयम् ।

अत्र भाष्यटीकयोरुक्तमुपलक्षणम् । ये नित्यत्रैविद्या राजसराजसास्तेऽपि ग्राह्याः । ते च–

'त्रैविद्यमात्रा विष्णोर्ये सर्वाधिक्ये ससंशयाः ।
अन्याधिक्यं न मन्यन्ते श्रीशाद्राजसराजसाः ॥

श्लोकः १३

सत्त्वाधिको मोक्षयोग्यो योग्योऽन्धतमसस्तथा ।
तम उत्तरो रजो भूयान् समो वा सृतिपात्रकः ॥' इति ।

तात्पर्यनिर्णये । राजससात्त्विकान् उक्त्वा राजसराजसादीनाह– **त्रैविद्येति** ॥ कालतो भागवतान् जायमानान् व्यवच्छिनत्ति– **त्रैविद्यमात्रा इति** ॥ **सर्वाधिक्ये** सर्वप्रकारेणाधिक्य इति गमयितव्यमिति । सत्त्वाधिको राजससात्त्विकादिः, तम उत्तरो नराधमादिः, रजोभूयान् त्रैविद्यः, सम एकप्रकारगुणत्रयोऽज्ञ इति च टीकाग्रन्थे चोक्तेः । एवमेतेषां ग्रहणेन 'यस्मादहमेव चातुर्वर्ण्यस्य कर्ता, त्रैविद्याश्च तदन्तर्भूताः' इति पूर्वटीकावाक्येन विरोधः परिहृतो भवति ।

केचित्तु राजससात्त्विकेष्विव राजसराजसेषु त्रैविद्येष्वपि योनिभेदकृत औपाधिको वर्णविभागोऽस्ति । भाष्योक्तश्च स्वाभाविकः । अयं त्वौपाधिकः । यथोक्तम् 'योनिभेदकृतो भेदो ज्ञेय औपाधिकस्त्वयम्' इति । योनिभेदकृतत्वं च ब्राह्मणयोनिजो ब्राह्मणः इत्यादिरूपेण द्रष्टव्यम् । 'राजसस्थसात्त्विकेष्वेव' इति टीकायामेवकारः स्वाभाविकतद्व्यवच्छेदार्थः । तथा च चातुर्वर्ण्यस्याहमेव कर्तेत्यत्र स्वाभाविकौपाधिकोभयविधमपि चातुर्वर्ण्यं ग्राह्यम् । तत्र च त्रैविद्यानामन्तर्भावात् 'त्रैविद्याश्च तदन्तर्भूताः' इति टीकावाक्येन न विरोधशङ्काऽवकाश इति आहुः । 'शमो दमः' इत्यादिना श्लोकत्रयेणाष्टादशाध्याये वक्ष्यत इति भाष्यार्थः ॥

**भावदीपिका (श्री.टि.)**– ननु 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति सूत्रे 'चतुर्वर्णादिभ्यः स्वार्थे उपसङ्ख्यानम्' इति वार्तिकेन चतुर्वर्णादिभ्यः स्वार्थे ष्यञ्प्रत्ययविधानात् 'चतुर्वर्णा एव चातुर्वर्ण्यम्' इति वक्तव्यम्, 'चतुर्वर्णसमुदाय' इति कथं ष्यञ्प्रत्ययः समुदायार्थ आनीयत इत्यत आह– **विचित्रा हीति** ॥ ष्यञ्प्रत्ययस्तु तद्धितप्रत्यय एवेति द्रष्टव्यम् ॥ **अतिरिक्तार्थेति** ॥ स्वार्थव्यतिरिक्तसमुदायरूपार्थेत्यर्थः । तथा च चतुर्वर्णशब्दात् समुदायार्थे ष्यञ्प्रत्यये ञित्त्वाद् आदिवृद्धौ 'चातुर्वर्ण्यम्' इति भवतीति द्रष्टव्यम् । **तेषु** चतुर्षु वर्णेषु । 'राजसास्तु नरास्तत्र विप्रा राजससात्त्विका' इत्यादितात्पर्योदाहृतप्रमाणानुरोधात् । तथा च राजसस्थसात्त्विकेष्वेव शुद्धसात्त्विकाः, किञ्चिद्रजोयुक्तसात्त्विकाः, समरजोयुक्तसात्त्विकाः, सत्त्वात् किञ्चिदूनतमोयुक्तसात्त्विका इति वर्णभेद इति गीतातात्पर्ये अष्टादशाध्यायगताचार्यवाक्यं मनसि कृत्वाऽह– **राजसस्थेति** ॥ भाष्ये 'सात्त्विको ब्राह्मण' इत्यत्र रजआद्यमिश्रशुद्धसात्त्विको ब्राह्मण इत्यवगन्तव्यम् ॥

श्लोकः १३

॥ **निर्देशेति** ॥ 'सात्त्विकराजसः' इति भाष्ये सत्त्वस्य प्रथमं निर्देशादित्यर्थः ॥ **सत्त्वमधिकमिति** ॥ 'सात्त्विकाः स्वल्परजसः' इति प्रमाणादिति भावः ॥ **तत एवेति** ॥ 'राजसतामसः'इति भाष्ये रजसः प्रथमं निर्देशादेवेत्यर्थः । **तच्चेति** ॥ तमसोऽधिकं रजश्चेत्यर्थः ॥ **समसत्त्वेति** ॥ 'समसत्त्वरजसो वैश्याः' इति वचनादिति भावः । 'अतिस्वल्पसत्त्वाधिक्येन तामसः' इति प्रमाणानुसारेण 'तामसः शूद्र' इति भाष्यं व्याचष्टे– **रजोऽपेक्षयेति** ॥ **अधिकमिति** ॥ किञ्चिदधिकमित्यर्थः । मुक्तियोग्यमनुष्यवर्णविभागोऽयमित्यवगन्तव्यम् । यथोक्तम् -'ये तु भागवता वर्णास्तेषां भेदोऽयमीरितः' इति । उपलक्षणं चैतत्–

त्रैविद्यमात्रा विष्णोर्ये सर्वाधिक्ये ससंशयाः ।
अन्याधिक्यं न मन्यन्ते श्रीशाद्राजसराजसाः ॥

इत्यादिप्रमाणानुसारेण राजसराजसादयोऽपि ग्राह्याः । अन्यथा 'यस्माच्चतुर्वर्णस्याहमेव कर्ता त्रैविद्याश्च तदन्तर्भूता' इत्याद्यसङ्गतं स्यादिति मन्तव्यम् ॥

**भावप्रकाशः (कृ.टि.)**– 'राजसास्तु नरास्तत्र विप्रा राजससात्विकाः' इत्यादिप्रमाणानुसारेणाह– **राजससात्त्विकेष्विति** ॥ जीवाः त्रिविधाः । सात्त्विकाः राजसाः तामसाश्च । राजसा अपि त्रिविधाः । सात्त्विकादिभेदात् । तत्र ये राजससात्त्विकाः तेष्वित्यर्थः एवकारेण राजससात्त्विकेभ्योऽन्यत्रोक्तविभागाभावं सूचयति । तच्च तात्पर्यनिर्णये स्पष्टम्– **समसत्त्वयुताविति** ॥ समसत्त्वरजसा वैश्या इत्युक्तेरिति भावः । मुक्तियोग्यमनुष्यवर्णविभागोऽयम् । तदुक्तम् 'ये तु भगवता वर्णास्तेषां भेदोऽयमीरितः' इति । उपलक्षणञ्चैतत् । ये नित्यत्रैविद्याः राजसराजसाः तेऽपि ग्राह्याः । तेन 'चातुर्वर्ण्यस्याहमेव कर्ता त्रैविद्याश्चतदन्तर्भूता' इति पूर्ववाक्याविरोध इति भावबोधकृतः ।

अन्ये तु राजससात्त्विकेष्विव राजसराजसेषु त्रैविद्येष्वपि वर्णविभागोऽस्ति । इयांस्तु विशेषः । भाष्योक्तः स्वाभाविकवर्णविभागः, अयं त्वौपाधिकवर्णविभागः । योनिभेदकृतत्वात् । यथोक्तम् 'योनिभेदकृतो भेदो ज्ञेय औपाधिकस्त्वयम्' इति । तथाच चातुर्वर्ण्यस्याहमेव कर्तेत्यत्र स्वाभाविकौपाधिकभेदेन द्विविधमपि चातुर्वर्ण्यं ग्राह्यम् । तत्र च त्रैविद्यानामन्तर्भावात् । त्रैविद्याश्च तदन्तर्भूता इति न विरोधः । योनिभेदकृतत्वं च ब्राह्मणयोनिजो ब्राह्मण इत्यादिरूपेण द्रष्टव्यमित्याहुः ॥

## भाष्यम्

**कर्मविभागस्तु 'शमो दमः' (१८.४२) इत्यादिना वक्ष्यते । क्रियायां वैलक्षण्यात् कर्ताऽप्यकर्ता । तथा हि श्रुतिः'विश्वकर्मा विमनाः'(ऋ.सं.१०.८२.२) इत्यादि । 'तनुर्विद्या क्रियाऽऽकृतिः' (भाग.६.४.४६) इति च । साधितं चैतत् पुरस्तात् ॥ १३ ॥**

भावप्रदीपिका (प.टी.)– 'कर्तारम्' इत्येतदविरोधेन व्याचष्टे– **क्रियायामिति** । कथं क्रियायां वैलक्षण्यमित्यतः तत्प्रकारद्वयेनाह– **तथा हीति** । ननु क्रियाया मायिकत्वात् कर्ताऽप्यकर्तेत्यर्थः किं न स्यात् ? इत्यत आह– **साधितं चेति** । एतत् क्रियादेरमायिकत्वम् ॥ १३ ॥

भावप्रकाशिका (न.टी.)– कर्मविभागस्योपरि भगवतैव वक्ष्यमाणत्वात् न सोऽस्माभिरत्र कथित इति भावेनाह **कर्मेति** । अत्र केचित् 'अकर्तारम्' इति पदभ्रान्ताः सर्ववेदाद्युक्तं भगवत्सर्वकर्तृत्वं मिथ्येति वर्णयन्ति । तत्पक्षे वेदादिविरोधं सूचयन्नेव तद्व्याचष्टे– **क्रियायामिति** । सर्वकर्तुर्भगवतः क्रियावैलक्षण्यं श्रुत्या दर्शयति– **तथा हीति** । मनसोऽभिनिवेशराहित्यं विमनस्त्वम् । विमनसोऽपि या क्रिया सेतरक्रियाविलक्षणेत्यर्थः । अनेन वेदविरोधः सूचितस्तत्पक्षे ।

जगत्कर्तुः क्रियावैलक्षण्यं प्रकारान्तरेण प्रदर्शयद्वाक्यमुदाहरति– **तनुरिति** । तदाकृतिरेव तत्क्रियेति देवदत्तादेरिव भिन्नक्रियाभावात् कर्ताऽप्यकर्तोच्यत इति भावः । अनेन पुराणविरोधः सूचितस्तत्पक्षे । भगवतः कर्तृत्वादिकर्मयाथार्थ्यस्य द्वितीयाध्याये साधितत्वान्नेह प्रपञ्च्यत इति भावेनाह– **साधितं चेति** ॥ १३ ॥

प्रमेयदीपिका (ज.टी.)– कर्मविभागः कीदृशः? इत्यत आह– **कर्मेति** ॥ यदि चातुर्वर्ण्यं त्वया सृष्टं तर्हि कर्तृत्वाज्जीववत् तवापि कर्मलेपः प्रसज्यत इत्यतः कर्मलेपाभावं वक्तुं हेतुस्तावदुच्यते– **तस्येति** ॥ तदेतद् व्याहतमित्यत आह– **क्रियायामिति** ॥ कथं वैलक्षण्यम्? इत्यतः श्रुत्यैव दर्शयति– **तथा हीति** ॥ विश्वकर्माऽपि विमनाः तत्राभिनिवेशरहित इत्यर्थः ॥

श्लोकः १३

**प्रकारान्तरेण वैलक्षण्यं पुराणेन दर्शयति– तनुरिति ॥ 'क्रियाया मिथ्यात्वात् कर्ताऽप्य-कर्ता' इति परव्याख्यां प्रत्याख्याति– साधितं चेति ॥ एतत् क्रियायाः सत्यत्वम्। पुरस्ताद् द्वितीये ( गी.भा.२.२४) ॥ १३ ॥**

**भावदीपः (रा.टि.)– ॥ कर्मेतीति ॥** ब्राह्मणादिवर्णचतुष्टयकर्मविभागस्त्वष्टादशेऽध्याये 'शमो दमः' इत्यादि श्लोकत्रयेण वक्ष्यतीत्यर्थः ॥ **तनुरितीति ॥** भाष्ये विद्याक्रिययोः तन्वा-कृतिपदाभ्यां भगवत्स्वरूपत्वोक्त्या च वैलक्षण्यं क्रियाया इत्यर्थः ॥ **द्वितीय इति ॥** 'स्थाणुत्वेऽ-प्यैक्षतेत्याद्यविरुद्धमीश्वरस्य' इत्यारभ्य 'स्वरूपत्वात्र मायामयमित्युक्तम्' इत्यन्तेनेति भावः ॥१३॥

**भावरत्नकोशः (सु.टि.)– ॥ वक्तुं** 'न माम्' इत्यनेन ॥ **तदेतत्** 'कर्तारम्', 'अकर्तारम्' इति पदद्वयम् । अभिनिवेशरहितः इत्यत्र 'येन तत्प्राप्तिपर्यन्तं मनसो विक्षेपः सोऽभिनिवेशः' इत्यभिनिवेशस्वरूपमग्रे वक्ष्यति । जीवस्य त्वस्त्यभिनिवेश इति न तद्दृष्टान्तेन भगवति कर्मलेपः शङ्क्यत इति भावः । **पुराणेन** भागवतवाक्येन । व्याख्यातमेतद्द्वितीये । अनेन वाक्येन विद्या-क्रिययोस्तन्वाकृतिपदाभ्यां भगवत्स्वरूपत्वावेदनेन वैलक्षण्यं भगवत्क्रियाया इति भावः । 'माया-संव्यवहारेण तस्य कर्तारमपि सन्तं मां परमार्थतो विद्ध्यकर्तारमिति सङ्करभाष्यमर्थतोऽनुवदति– **क्रियाया मिथ्यात्वादिति ॥ द्वितीय इति ॥** 'नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः' इति गीताव्याख्याऽवसरे 'स्वरूपत्वान्न मायामयम् । अतश्च न मायामयं सर्वमित्यादिना' इति शेषः ॥ १३ ॥

**गीताक्षरार्थस्तु** - 'ये यथा माम्' इति त्रैविद्यानां न महाफलं मोक्ष इत्युक्तम् । तत्कुतः ? यतोऽहं चातुर्वर्ण्यस्य कर्ता, त्रैविद्याश्च तदन्तर्भूताः । तस्मात् स्वपितरं मां परित्यज्यान्यदेवता यजन्तः कथं महाफलभाजो भवेयुः ? इति भावेनोच्यते **चातुर्वर्ण्यमिति ॥** चतुर्वर्णसमुदायः गुणकर्मविभागशः सत्त्वादिगुणविभागेन शमदमादिकर्मविभागेन च मया सृष्टम् । ब्राह्मणक्षत्रियादयो मया सृष्टाः । यदि चातुर्वर्ण्यं त्वया सृष्टं तर्हि कर्तृत्वाज्जीववत् तवापि कर्मलेपः प्रसज्येतेत्यतः कर्मलेपाभावं 'न मां कर्माणि' इत्यनेन वक्तुं हेतुस्तावदुच्यते **तस्येति ॥** तस्य चातुर्वर्ण्यस्य कर्तारमपि मां जीवविलक्षणकर्तृत्वाद् अकर्तारं विद्धि ॥ १३ ॥

**भावदीपिका (श्री.टि.)– ॥ विश्वकर्माऽपीति ॥** विश्वकर्ताऽपीत्यर्थः ॥ **अभिनिवेशरहित इति ॥** अतोऽकर्तेत्युच्यत इति भावः ॥ **तनुरिति ॥** अत्र भगवत्तनोर्ज्ञानात्मककर्तृत्वोपिताकार-

वत्त्वमुच्यते । जीवकर्तृत्वं चाहङ्कारात्मकम् । एवंच भगवान् कर्ताऽप्यकर्ता । ज्ञानात्मककर्तृत्ववत्त्वेन जीववत् आहङ्कारिककर्तृत्वाभावादिति वैलक्षण्यमुच्यत इति द्रष्टव्यम् । **क्रियायाः** कर्तृत्वस्य । क्रियाऽभिनिवेश एव हि कर्तृत्वमिति द्रष्टव्यम् ॥ १३ ॥

भावप्रकाशः (कृ.टि.)– ॥ **अभिनिवेशरहित इति** ॥ 'येन तत्प्राप्तिपर्यन्तं मनसो विक्षेपः सोऽभिनिवेशः' इत्यग्रे वक्ष्यते । **द्वितीय इति** ॥ 'अचलोयं सनातनः' इति गीताव्याख्यानवसरे 'अतश्च न मायामयं सर्व'मित्यनेनेति शेषः ॥ १३ ॥

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभिर्न स बद्ध्यते ॥ १४ ॥**

## भाष्यम्

**अत एव न मां कर्माणि लिम्पन्ति । इतश्च न लिम्पन्तीत्याह– न मे कर्मफले स्पृहा ॥ इच्छामात्रं त्वस्ति । न तु तत्राभिनिवेशः ॥**

भावप्रदीपिका (प.टी.)– ननु चातुर्वर्ण्यकर्ता चेद्भगवान्, तर्हि तस्य महत्कर्मलेपः स्यादित्यत आह– **अत एवेति** । मनोऽभिनिवेशाभावादेवेत्यर्थः । इतश्च न कर्मलेपो ममेत्यर्धं श्लोकमवतारयति– **इतश्चेति** । ननु कथं भगवतो न फलेच्छा ? 'स्रक्ष्ये हि चेतनगणान्' इति फलेच्छादर्शनादित्यत आह– **इच्छामात्रमिति** । ममेदं फलं स्यादित्याग्रहोऽभिनिवेशः ॥

भावप्रकाशिका (न.टी.)– ननु यदि परमार्थतः कर्ता भगवान् सर्वस्यापि चातुर्वर्ण्यस्य, तर्हि किञ्चित्कर्तृभ्यो जीवेभ्योऽतिशयेनैव लिप्येतैतैः कर्मभिः । अतः कथं तस्येशत्वमित्याशङ्क्य, परिहारत्वेनोत्तरं श्लोकं व्याचष्टे– **अत एवेति** । यत एवं सर्वकर्मणां तत्फलानां चानभिनिवेशादेव कर्ता हरिः, अतः सर्वेशत्वादेव न तं कर्माणि लिम्पन्ति । न तु कर्तृत्वाद्यपारमार्थिकत्वनिश्चयादित्यर्थः ॥

इतोऽपि न भगवतः कर्मलेपः तदपारमार्थिकत्वनिश्चयात् किन्त्वाप्तकामत्वेन निःस्पृहत्वादेवेत्याह– **इतश्चेति** । ननु भगवान् चातुर्वर्ण्यं सर्वं वा जगत् प्रविश्य विहर्तुं हि तत् ससर्ज । सा विहृतिर्जगत्सुखदुःखमध्यसम्प्राप्तयेऽस्तु नाम । तथाऽपि सा विहारेच्छा कर्म-

श्लोकः १४

फलेच्छैव । अतः कथं न तस्य कर्मफलस्पृहा ? इत्यत आह– **इच्छामात्रं त्विति** ॥ आप्तकामत्वाविरोधित्वान्नेच्छामात्रास्तित्वे कश्चिद्दोषः, अपि तु गुण एवेति भावः ।

**प्रमेयदीपिका** (ज.टी.)– अपव्याख्यानस्य दूषणान्तरं सूचयन् क्रियावैलक्षण्यकथनस्य का सङ्गतिः ? इत्यत उत्तरेण सङ्गतिमाह– **अत एवेति** ॥ एवशब्देनास्मद्व्याख्यान एवायं हेतुहेतुमद्भावो युज्यते, न परव्याख्यान इति सूचयति ॥

जीवानां कर्मलेपेऽभिनिवेशादिकं कारणम्, तदस्य नास्तीति । मिथ्यात्वं तु जीव-क्रियायामपि समानमिति तेषामपि लेपाभावे किमाश्रय आक्षेपः स्यात् ? ज्ञानेन विशेष इति चेन्न । तस्याश्रवणात् । लेपनिवारणं च व्यर्थम् । तस्यापि मिथ्यात्वेन ज्ञातव्यत्वात् । हेतुहेतुमतोरुक्तत्वात् न मे कर्म इति किमर्थम्? इत्यत आह – **इतश्चेति** ॥

नन्वात्मार्थं भगवतः फलस्पृहाभावेऽपि परार्थमस्त्येव । तत्कथमेवमुच्यते ? इत्यत आह– **इच्छेति** ॥ **तत्र कर्मफले** । येन तत्प्राप्तिपर्यन्तं मनसो विक्षेपः सोऽभिनिवेशः ॥

**भावदीपः** (रा.टि.)– ॥ **अत एवेतीति** ॥ 'लोकविलक्षणक्रियावत्वादेव' इत्यर्थस्य स्पष्टत्वाद् एवकारार्थमाह– **एवशब्देनेति** ॥ 'युज्यते' इत्याद्युक्तं व्यनक्ति– **जीवानामिति** ॥ **आक्षेप इति** ॥ चातुर्वर्ण्यं त्वया सृष्टं चेत् तर्हि कर्तृत्वात् जीववत् तवापि कर्मलेपः प्रसज्येत इत्यर्जुनकृताक्षेपः किमाश्रयः? किं दृष्टान्तमाश्रित्य प्रवर्तते? येन '**तस्य**' इत्त्याद्युत्तरार्धेन परिहारो घटतेत्यर्थः ॥ नन्वीश्वरस्य क्रियाणां मिथ्यात्वज्ञानादलेपः, जीवस्य तु तदभावाल्लेप इति शङ्कते– **ज्ञानेनेति** ॥ **लेप इति** ॥ जीवस्य मिथ्यात्वाज्ञानाल्लेपे सति निवारणं च व्यर्थम् । अलेपार्थं मिथ्यात्वज्ञानस्यैव सम्पाद्यत्वादित्यर्थः ॥ **हेतुहेतुमतोरिति** ॥ 'अकर्तारम्' इत्यनेनाभि-निवेशाभावरूपहेतोः 'न मां कर्माणि लिम्पन्ति' इत्यनेन साध्यस्य चोक्तत्वादित्यर्थः ॥

**भावरत्नकोशः** (सु.टि.)– ॥ **क्रियावैलक्षण्यकथनस्येति** ॥ तस्य कर्तारमपि मां क्रियायां वैलक्षण्यादकर्तारं विद्धीत्युक्तक्रियावैलक्षण्यकथनस्येत्यर्थः । 'अत एव' इति भाष्ये 'अतो लोक-विलक्षणक्रियात्वात्' इत्यस्यातिरोहितत्वादेवकारतात्पर्यमाह– **एवशब्देनेति** ॥ प्राचीनटीकायां तु 'यत एवं सर्वकर्मणां तत्फलानां चानभिनिवेशादेव कर्ता हरिः अतः सर्वेशत्वादेव न तं कर्माणि लिम्पन्ति। न तु कर्तृत्वाद्यपारमार्थिकत्वनिश्चयादित्यर्थः' इत्युक्तम् । **अस्मद्व्याख्याने** क्रियायां वैलक्षण्यात् कर्ताप्यकर्तेति व्याख्याने । अत्र हेतुहेतुमद्भावमुपपादयति– **जीवानामिति** ॥

श्लोकः १४

**'अभिनिवेशादिकम्'** इत्यत्र आदिशब्देन क्रियाया अस्वरूपत्वं ग्राह्यम् । भागवती तु क्रिया स्वरूपमेव, **'क्रियाऽऽकृतिः'** इत्युक्तेरिति ज्ञातव्यम् । इतिशब्दस्य 'इति सूचयति' इत्यन्वयः ॥

परव्याख्याने हेतुहेतुमद्भावयोगमुपपादयति– **मिथ्यात्वं त्विति** ॥ तथा च क्रियाया मिथ्यात्वाद् अकर्ता भगवानित्यनुमानस्य जीवे व्यभिचार इति भावः । साध्यस्यापि सत्त्वान्न व्यभिचार इत्याशङ्क्याह– **तेषामपीति** ॥ **आक्षेप इति** ॥ यदि चातुर्वर्ण्यं त्वया सृष्टं तर्हि कर्तृत्वाज्जीववत् तवापि कर्मलेपः प्रसज्येतेति अर्जुनस्य **आक्षेपः किमाश्रयः** कं दृष्टान्तमवलम्ब्य प्रवर्तेत । येन 'तस्य' इत्युत्तरार्धे परिहारो घटेतेति भावः । व्यावहारिकं लेपमाश्रित्य हेतुहेतुमद्भावायोग उक्तः । परमार्थतो लेपाभावेन परमते आक्षेपानुपपत्तिरियमुद्भावितेति न कश्चिद्दोषः ।

केचित्तु 'समानम्' इत्यत्रत्येतिशब्दस्य सूचयतीत्यन्वयः । एवं भाष्यगतैवशब्दसूचितं दूषणमभिधाय स्वयं दोषान्तरमाह– **तेषामपीति** ॥ 'मिथ्यात्वं तु' इति पूर्वोक्तमत्रापि हेतुत्वेन सम्बध्यते । चातुर्वर्ण्यकर्तृत्वात्तवापि लेपः स्यादित्याक्षेपो न युक्तः । क्रियाया मिथ्यात्वेन जीवानामपि लेपाभावे निराश्रयत्वादिति भावः' इति व्याचक्षते ।

ननु क्रियामिथ्यात्वे समानेऽपि तत्त्वेन ज्ञानाभावाज्जीवानां लेपः । ईश्वरस्य तु तद्भावादलेपः । तथा च जीवदृष्टान्तसमाश्रयणेन आक्षेपः सेत्स्यतीति शङ्कते– **ज्ञानेनेति** ॥ तर्हि तस्य कर्तारमपि मां क्रियामिथ्यात्वज्ञानवन्तं मां विद्धीति वक्तव्यम् । न चैवं गीतायां श्रूयत इत्याह – **तस्येति** ॥ प्रत्युत 'अकर्तारम्' इत्येव हि श्रूयत इति भावः । एवं 'तस्य कर्तारम्' इति गीतावाक्यमसमञ्जसं परपक्ष इत्यभिधाय 'न मां कर्माणि' इति वाक्यमसङ्गतमित्याह– **लेपनिवारणं चेति** ॥ तस्य लेपस्य । न केवलं क्रियाया इत्यपिशब्दः । **मिथ्यात्वेन** प्रकारेण **ज्ञातव्यत्वात्** ज्ञातव्यतयाऽभिधातव्यत्वात् ।

इदमुक्तं भवति । यथा 'विद्ध्यकर्तारम्' इत्यत्र क्रियामिथ्यात्वं मुमुक्षुं प्रति ज्ञातव्यतयाऽभिधीयत इति तवाभिमानः, तथा 'विद्ध्यलेपम्' इति लेपमिथ्यात्वमपि ज्ञातव्यतया वक्तव्यम् । मोक्षसाधनत्वाविशेषात् । 'न मां कर्माणि लिम्पन्ति' इति कर्मलेपाभावमात्रकथनमप्रयोजनम् । अन्यथा क्रियामिथ्यात्वस्याप्यवक्तव्यत्वापातादिति । **हेतुहेतुमतोरिति** ॥ 'तस्य कर्तारमपि मां विद्ध्यकर्तारम्' इत्यत्राभिनिवेशाभावरूपहेतोः, 'न मां कर्माणि लिम्पन्ति' इति हेतुमच्छद्मितसाध्यस्य चोक्तत्वादित्यर्थः । **'इतश्च'** इति भाष्यस्य आप्तकामत्वेन कर्मफलस्पृहाऽ-

भावाच्चेत्यर्थः । 'स्पृहा' इत्यनन्तरं 'इति' शब्दो भाष्येऽध्याहार्यः । **अस्त्येवेति** ॥ 'स्रक्ष्ये हि चेतनगणान् सुखदुःखमध्यसम्प्राप्तये तनुभृताम्' इति भारततात्पर्यनिर्णये तथोक्तेरिति भावः । आप्तकामत्वाविरोधीच्छामात्रसद्भावो न दोषाय, अपि तु गुणायैवेति भाष्यभावः स्फुटत्वान्नोक्तः । हेतुद्वयस्यैकरूपत्वाद्भाष्ये 'इतश्च' इति चशब्दायोग इत्यतोऽभिनिवेशशब्दार्थमाह– **येनेति** ॥ अत्र भगवत उक्तरूपाभिनिवेशाभावे ॥

**भावदीपिका (श्री.टि.)– ॥ अस्मद्व्याख्यान इति ॥** अभिनिवेशाद्यभावेनाकर्तृत्व-व्याख्यान एवेत्यर्थः । **हेतुहेतुमद्भावः** अकर्तृत्वकर्मलेपाभावयोर्हेतुसाध्यभाव इत्यर्थः । तदेव प्रदर्शयति– **जीवानामिति** ॥ 'अभिनिवेशादिकम्' इत्यत्राऽदिपदेन ज्ञानात्मककर्तृत्वाभावे-नाहङ्कारिकं कर्तृत्वं ग्राह्यम् ॥ **नास्तीति** ॥ ततश्चायमकर्ता, तथा च कर्मलेपशून्य इति भावः । ननु भगवतोऽभिनिवेशाभावेनाकर्तृत्वं कुतः? किन्तु क्रियाया मिथ्यात्वादेवाकर्तृत्वमस्तु । तथाच मिथ्याभूतकर्तृत्ववत्त्वेनैव कर्मालेपः साध्यताम्, इत्यत आह – **मिथ्यात्वं त्विति** ॥ **समानमिति** ॥ तथा च मिथ्याभूतकर्तृत्ववत्त्वं जीवेष्वस्तीति तेषामपि कर्मालेपः प्रसज्यत इत्यर्थः । अस्त्विति चेत् तत्राऽह– **तेषामपीति** ॥ **किमाश्रय इति** ॥ यदि चातुर्वर्ण्यं त्वया सृष्टं तर्हि कर्तृत्वाद् जीववत् तवापि कर्मलेपः प्रसज्येत, इत्येवं जीवदृष्टान्तमाश्रयीकृत्याऽक्षेपः कार्यः, स कर्तुं न शक्यते । जीवानामपि कर्मलेपाभावप्रसक्तौ दृष्टान्ताभावादिति भावः ।

ननु परमार्थतो लेपाभावस्य जीवेश्वरयोः साम्येऽपि ईश्वरस्य मिथ्यात्वज्ञानेन लेपप्रतीतिर्नास्ति, जीवस्य तु मिथ्यात्वज्ञानाभावेन लेपप्रतीतिर्भवति । अतो जीववत् कर्मलेपप्रतीतिः स्यादित्येवं जीवदृष्टान्ताश्रयेणाऽक्षेपो युज्यत इत्याशङ्कते– **ज्ञानेनेति** ॥ मिथ्यात्वज्ञानाभावभावाभ्यां लेपप्रतीत्यभावतत्प्रतीतिभावरूपो विशेषो युज्यत इत्यर्थः ॥ **तस्येति** ॥ एतादृशविशेषस्य प्रमाणेष्वश्रवणादित्यर्थः। **लेपेति** ॥ मिथ्याभूतकर्तृत्वेन 'न मां कर्माणि लिम्पन्ति' इति भगवता स्वस्य लेपनिवारणं क्रियमाणं व्यर्थमित्यर्थः । कुत इत्यत आह– **तस्यापीति** ॥ लेपाभावस्या-पीत्यर्थः । त्वन्मते लेपवत् लेपाभावस्यापि मिथ्यात्वेनावश्यं ज्ञातव्यत्वान्मिथ्याभूतलेपाभावज्ञानेन **'कर्मभिर्न स बध्यते' इति** श्रूयमाणं फलकथनं न युज्यत इत्यर्थः । तथा हि साङ्कर्षणं सूत्रम् । 'अचेतनायोग्यासत्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम्' इति ॥ **हेतुहेतुमतोः** ॥ अकर्तृत्वलेपा-भावयोः ।

श्लोकः १४

**भावप्रकाशः** (कृ.टि.)– स्वव्याख्याने हतुहेतुमद्भावमुपपादयति– **जीवानामिति** ॥ **अभिनिवेशादिकमिति** ॥ आदिपदेन क्रियायाः प्राकृततत्वं ग्राह्यम् । तनुर्विद्या इत्यनेन तद्विरोधिनः क्रियायाः स्वरूपत्वस्योक्तत्वादिति मन्तव्यम् । अपव्याख्याने हेतुहेतुमद्भावायोगमुपपादयति– **मिथ्यात्वं त्विति** ॥ तथा च जीवे व्यभिचार इति भावः । इतिशब्दस्य सूचयतीत्यनेनान्वयः । एवं भाष्यगतैवशब्दसूचितं दूषणमुक्त्वा दोषान्तरमप्याह– **तेषामपीति** ॥ मिथ्यात्वं त्विति पूर्वोक्तमत्रापि हेतुत्वेन सम्बध्यते ।

अयमर्थः । चातुर्वर्ण्यसर्गादिकर्मकर्तृत्वात् तवापि लेपः स्यादिति परोक्त 'तस्य कर्तार'मिति गीतानिवृत्त्याऽऽक्षेपो न युक्तः । क्रियामिथ्यात्वेन जीवानामपि लेपाभावादृष्टान्तालाभे निराश्रयत्वादिति । व्यावहारिकं लेपमाश्रित्य पूर्वं हेतुहेतुमद्भावायोग उक्तः । परमार्थतो लेपाभावेन परमते आक्षेपानुपपत्तिरियमुद्भावितेति न कश्चिद्दोषः । ननु क्रियामिथ्यात्वे समानेऽपि तज्ज्ञानाभावात् जीवानां लेपः तदभावाच्चेश्वरस्यालेपः । तथा च जीवदृष्टान्ताश्रयेणाक्षेपो भविष्यतीति शङ्कते– **ज्ञानेनेति** ॥ तर्हि कर्तृत्वमिथ्यात्वज्ञानवन्तमिति वक्तव्यम् । **नत्वकर्तारमिति** ॥ नचैवं श्रूयत इत्याह– **तस्येति** ॥ एवं परपक्षे 'तस्य कर्तार'मिति गीताया असङ्गतिमुक्त्वा 'न मां कर्माणी'ति गीताप्यसङ्गतेत्याह– **लेपनिवारणं चेति तस्यापीति** ॥ न केवलं क्रियायाः किन्तु लेपस्यापीत्यर्थः । अयमाशयः । यथा 'विद्ध्यकर्तार'मिति क्रियामिथ्यात्वं ज्ञातव्यतया विहितं मुमुक्षोरवश्यमपेक्षितत्वात् । अन्यथा 'इति मां योभिजानाती'ति ज्ञानानुवादेन फलकथनयोगाच्च । तथा 'विद्ध्यलेप'मिति लेपमिथ्यात्वमपि ज्ञातव्यतया वक्तव्यम् । अविशेषात् । 'न मां कर्मणि लिम्पन्ती'ति लेपमिथ्यात्वमात्रकथनं त्वसङ्गतम् । सन्नियोगशिष्टन्यायविरोधादिति ॥

## भाष्यम्

**तच्चोक्तम्– 'आकाङ्क्षन्नपि देवोऽसौ नेच्छते लोकवत्परः ।**
**न ह्याग्रहस्तस्य विष्णोर्ज्ञानं कामो हि तस्य तु ॥' इति ॥**

**भावप्रदीपिका** (प.टी.)– एतस्मिन्नेवार्थे प्रमाणमाह– **आकाङ्क्षन्निति** ॥

**भावप्रकाशिका** (न.टी.)– कुतोऽयं विशेषः ? इत्यत आह– **तच्चेति** । उत्तरार्धस्य यदपव्याख्यानम् 'एवं योऽन्योऽपि मामात्मत्वेनाभिजानाति तत्स्वाधीनदेहारम्भककर्माणि'

इति । तत्र 'आत्मत्वेन' इति पदाध्याहारस्यायोगात्, अनुपयोगाच्चेति स्पष्टत्वान्न तद्दूषण-मुद्भावितम् । यदलिप्तत्वज्ञान्यपि कर्मलेपात् मुच्यते, न तं कर्माणि लिम्पन्तीति किमु वर्णनीयमिति व्याख्यानमविस्पष्टत्वान्न कृतम् ॥

**प्रमेयदीपिका** (ज.टी.)– अत्र प्रमाणमाह– **तच्चेति** ॥ 'व्यत्ययो बहुलम्' (पा.सू. ३.१.८५) इति व्यत्ययः । **ज्ञानं** ज्ञानमिव । **इति माम्** इत्येवं ज्ञानिनो मुक्तिः फलमुच्यते । सा च वर्तमानप्रत्ययेन । प्राक् च भूतप्रत्ययेन 'मद्भावमागताः' (४.१०) इति ॥

**भावबोधः** (र.टि.)– ननु 'काङ्क्ष इच्छायाम्' इति धातोः नित्यात्मनेपदत्वात् आकाङ्क्षमाण इति तदादेशभूतशानचा भवितव्यम् । कथमाकाङ्क्षन्निति परस्मैपदादेशभूतशत्रन्तप्रयोग इत्यत आह– **व्यत्यय इति** ॥ परस्मैपदमित्यर्थः । **ज्ञानमिवेति** ॥ विष्णोर्ज्ञानं यथा मिथ्याप्रत्ययरूपं न भवति एवं कामोऽप्यभिनिवेशरूपो नेत्यर्थः ॥

**भावदीपः** (रा.टि.)– ननु 'इषु इच्छायाम्' इत्यस्य परस्मैपदत्वात् 'इच्छते' इति कथमित्यत आह– **व्यत्यय इति** ॥ यद्यपि तृतीयाद्यपादे शबादिविकरणोक्तिप्रस्तावे 'व्यत्ययो बहुलम्' (पा.सू.३.१.८५) इति सूत्रम् । तस्य च वृत्तौ 'यथायथं शबादिविकरणप्रत्ययाः विहिताः । तेषां छन्दसि विषये बहुलं व्यत्ययो भवति' इत्यर्थ उक्तः । तथाऽपि वृत्तावेव बहुलग्रहणं सर्वविधिव्यभिचारनियमार्थम् ॥

> सुप्–तिङ्–उपग्रह–लिङ्ग–नराणां काल–हल्–अच्–स्वर–कर्तृ–यङां च ।
> व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन ॥'

इत्यप्युक्तत्वादुपग्रहशब्दितपरस्मैपदस्य आत्मनेपदित्वेन व्यत्यय इत्यर्थः ॥

'काङ्क्षन्' इत्यत्र तु 'काङ्क्षि,माङ्क्षि,काङ्क्षायाम्' इति परस्मैपदेऽप्येवं पाठान्नानुपपत्तिशङ्केति तदर्थमियं समाधिरिति न मन्तव्यम् ॥ '**ज्ञानम्**' इत्यनुवादः, '**ज्ञानमिव**' इति व्याख्या । यथा ज्ञानं प्रमैकरूपं नतु भ्रमरूपम्, तथा कामोऽपीच्छारूपमेव नत्वभिनिवेशरूप-मित्यर्थः ॥ **फलमुच्यत इति** ॥ गीतायामिति योज्यम् ॥ '**आगताः**' इति भूतप्रत्ययेन मुक्तिः फलमुच्यत इति योजना ।

**वाक्यार्थप्रदीपः** (पां.टि.)– ननु 'इषु इच्छाया'मित्यस्य नित्यपरस्मैपदादिच्छतीति

श्लोकः १४

वक्तव्यम्। तत्कथमिच्छते इत्यात्मनेपदप्रयोग इत्यत आह– **व्यत्ययो बहुलमिति व्यत्यय इति** ॥ व्यत्ययो बहुलमित्यस्मिन् सूत्रे च्छन्दसि शानजपि इति पूर्वसूत्रात् च्छन्दस्यपीत्यस्यानुवृत्तौ सत्यां 'च्छन्दसि व्यत्ययो भवति। अपिशब्दात् यथा प्राप्तश्चेत्येतावन्मात्रेणेष्टसिद्ध्या बहुलग्रहणं व्यर्थम्' इत्याशङ्कायां बहुलग्रहणं सर्वविधिव्यभिचारार्थमिति वृत्तौ प्रकृताप्रकृतसम्बन्धिव्यत्ययलक्षण-व्यभिचारार्थत्वं च अर्थादानप्रवृत्तिनिमित्तकं बहुलग्रहणस्य प्रदर्श्य बहुलपदसङ्ग्राह्यप्रदर्शनार्थं–

सुप्-तिङ्-उपग्रह-लिङ्ग-नराणां काल-हल्-अच्-स्वर-कर्तृ-यङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन ॥'

इति श्लोक उदाहृतः। अत्र चोपग्रहशब्देन स्वार्थत्वपरार्थत्वव्यक्तत्वाव्यक्तत्वरूपक्रिया-साधनविशेष एव मुख्यया वृत्त्या प्रतिपाद्यते। आत्मनेपदात् भेदः कश्चिदर्थस्य गम्यते। अन्यतश्चापि लादेशात् मन्यन्ते तमुपग्रहमित्युक्तेः। तथाऽपि परार्थत्वादिव्यक्तिनिमित्तात्मनेपद-परस्मैपदे अपि उपग्रहशब्देन गृह्येते। इत्यभियुक्तव्याख्यानात् इच्छते इति आत्मनेपदित्वेन लोकसिद्धस्यापि वेदेऽन्यपदित्वमित्यर्थस्य सिद्धत्वात् 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति वाक्येन पुराणस्यापि वेदतुल्यत्वोक्तेः 'इच्छते' इत्यात्मनेपदस्योपपत्तिरिति भावः ॥

**भावरत्नकोशः (सु.टि.)**– ननु 'इच्छते' इति कथमात्मनेपदम्। 'इषु इच्छायाम्' इति धातोर्नित्यपरस्मैपदित्वादित्यत आह– **व्यत्यय इति** ॥ यद्यपीदं सूत्रं यथायथं विकरणप्रत्यया विहिताः तेषां छन्दसि विषये बहुलं व्यत्ययो भवति। व्यतिगमनं व्यत्ययः विषयान्तरे विधानम्। बहुलग्रहणं सर्वविधिव्यभिचारार्थमिति व्याख्यातमिति नात्मनेपदविधानरूपत्वमस्य। तथापि तत्रैव सूत्रे–

सुप्-तिङ्-उपग्रह-लिङ्ग-नराणां काल-हल्-अच्-स्वर-कर्तृ-यङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन ॥'

इति वार्तिकवचने उपग्रहशब्दितपरस्मैपदस्यात्मनेपदत्वेन व्यत्ययोऽत्र द्रष्टव्य इति भावेनेय-मुक्तिः। पुराणवचनस्यापि छन्दस्तुल्यतया छन्दस्त्वमभिमतमिति 'छन्दसि' इत्यनुवृत्तावपि न दोषः। **आग्रहः** उक्तरूपोऽभिनिवेश इति भाष्यार्थः ॥

ननु 'ज्ञानं कामः' इति ज्ञानकामयोस्तादात्म्यमुच्यमानम् अयुक्तमनुपयुक्तं चेत्यत आह– **ज्ञानं ज्ञानमिवेति** ॥ यथा विष्णोर्ज्ञानं न मिथ्याप्रत्ययरूपम्, तथा काम इच्छारूपोऽपि नाभि-

निवेशात्मक इत्यर्थः । 'परत्र परशब्दः प्रयुज्यमानोऽन्तरेणापि वर्तिं वत्यर्थं गमयति' इति शाब्दिकवचनात् ज्ञानतुल्यत्ववचनस्य च कामेऽनाग्रहरूपत्वप्रतिपत्त्यर्थत्वादिति भावः । **मुक्तिः फलमिति ॥** कर्मबन्धविमोचनस्यैव मुक्तिरूपफलत्वादिति भावः । **सा च** मुक्तिः । **वर्तमान-प्रत्ययेन** 'बाध्यते' इति लटा । **प्राक्** पूर्वश्लोके 'मद्भावमागताः' इति भूतार्थकनिष्ठाप्रत्ययेन च । 'उच्यते' इत्यस्ति ।

**भावदीपिका (श्री.टि.)–** ननु आङ्पूर्वकस्य 'काङ्क्ष इच्छायाम्' इति काङ्क्षधातो-र्नित्यात्मनेपदित्वाद् आत्मनेपदिनि 'लटः शतृशानचौ' इति लटः शानजादेशे शकारचकारयोर्लोपे 'काङ्क्ष आन' इति जाते 'आने मुक्' आने परे अदन्ताङ्गस्य मुगागमः स्यादिति कित्त्वाद् अन्ते मुगागमे जाते 'उक्' इत्यस्य लोपे 'आकाङ्क्षम् आन' इति जाते 'अट्कुप्वाङ्नुम्व्यवायेऽपि' अट्,कवर्ग,पवर्ग,आङ्,नुम् एतैर्व्यस्तैः समस्तैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णत्वं स्यादिति सूत्रेण प्रकृते मकाराख्यपवर्गेण व्यवधानात् कषयोगे क्ष इति जातत्वेन षकारस्य क्षकारप्रकृतित्वेन षकारात् परस्य नस्य णत्वे 'आकाङ्क्षमाण' इत्येव स्यात्, न तु 'आकाङ्क्षन्' इति । तथात्वे परस्मैपदिताप्राप्तेः । तथा हि । आङ्पूर्वकात् काङ्क्षधातोः परस्मैपदिनि लडादेशभूते शतृप्रत्यये शकार-ऋवर्णयोर्लोपे 'आकाङ्क्षत्' इति जाते 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुमि 'संयोगान्तस्य लोपः' इति तकारलोपे हि 'आकाङ्क्षन्' इति भवतीत्यत आह– **व्यत्यय इति ॥** 'व्यत्ययः' इति सूत्रेणाऽत्मनेपदित्वव्यत्ययेन परस्मैपदित्वं युक्तमित्यर्थः ।

ननु ज्ञानस्य कथं कामात्मकत्वम्? इत्यत आह– **ज्ञानमिवेति ॥** विष्णोर्ज्ञानं यथा मिथ्याप्रत्ययरूपं न भवति, तथा कामोऽप्यभिनिवेशरूपो नेत्यर्थः ॥ **सा चेति ॥** मुक्तिरित्यर्थः । अस्मिन् श्लोके 'न स बध्यते' इति वर्तमानार्थकलट्प्रत्ययेन मुक्तिः फलमित्युच्यते । **प्राक्** च 'वीतराग' इति श्लोके 'मद्भावमागताः' इति भूतार्थकक्तप्रत्ययेन मुक्तिः फलमित्युच्यते इति योज्यम् ।

**भावप्रकाशः (कृ.टि.)–** ननु इच्छत इत्यात्मनेपदमयुक्तम् । 'इषु इच्छाया'मित्यस्य नित्यपरस्मैपदित्वादित्यत आह – **व्यत्ययो बहुलमिति ॥** यद्यपि विकरणानां प्रक्रान्तत्वात् तेषामेव व्यत्ययोऽनेन सिद्ध्येत । नतु पदव्यत्ययः । तथाऽपि भाष्ये

सुप्-तिङ्–उपग्रह–लिङ्ग–नराणां काल–हल्–अच्–स्वर–कर्तृ–यङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन ॥'

इत्युक्तत्वेन बहुलग्रहणात् पदव्यत्ययः सिद्ध्यति । उपग्रहशब्दस्य परस्मैपदात्मनेपदवाचित्वात् । यद्यपि आकाङ्क्षन्नित्यादिपुराणवाक्यम् । तत्र च व्यत्ययो बहुलमिति कथं व्यत्ययः । च्छन्दसीत्यनुवृत्त्या तत्सूत्रस्थ च्छन्दोमात्रविषयत्वात् । तथाऽपि तत्र च्छन्दःशब्देन गौणच्छन्दसोऽपि ग्रहणात् पुराणस्य च च्छन्दस्तुल्यत्वात् तत्र व्यत्ययः सेत्स्यति । अत एव च्छन्दःप्रदेशेषु स्वरितत्वप्रतिज्ञानाद् गौणमुख्यन्यायो नास्तीति शाब्दिका इति दिक् ॥

ननु ज्ञानं काम इत्युक्तं ज्ञानकामयोस्तादात्म्यमयुक्तमित्यत आह– **ज्ञानमिवेति** ॥ यथा विष्णोर्ज्ञानं न मिथ्याप्रत्ययरूपं तथा कामोप्यभिनिवेशरूपो नेत्यर्थः ॥

## भाष्यम्

**नच केचिन्मुक्ता भवन्तीति क्रमेण सर्वमुक्तिः । तथा हि श्रुतिः 'ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाति विद्वान्' इति 'कथं वा इति, अनन्ता वा जीवा इत्यनन्तवत्' 'इति होवाच' इति (वत्सश्रुतिः)॥ १४ ॥**

भावप्रदीपिका (प.टी.)– ननु यदि भगवज्जन्मादिज्ञानान्मोक्षः, सन्ति च तथा मुक्ताः, तर्हि गतकालस्यानन्तत्वात् प्रतिकल्पमेकैकमुक्तावप्यशेषजीवसमाप्तिरित्याशङ्क्य श्रुत्या परिहरति– **नचेति** ॥ यदि तं ज्ञात्वा भूयो न मृत्युमिति पक्षः कथं तर्हीति दृश्यमानप्रकारेणानन्तानन्त्यायपीति प्रश्ने, **अनन्तवत्** इति परिहारः । यथा परमात्मनोऽनन्तरूपाणि तथा तत्प्रतिबिम्बजीवानामानन्त्यमित्यर्थः । अतीतवत्सरवासरादिवदानन्त्येऽपि विशेषोऽस्त्येव ॥ १४ ॥

भावप्रकाशिका (न.टी.)– वेदोऽपीमं प्रश्नं परिहरतीत्याह । 'तं परमात्मानम् एवं उक्तप्रकारेण मनसा ज्ञानेन हृदा प्रेम्णा च दृष्ट्वा पुनर्मृत्युं नोपयाति विद्वान्' इति वदन्ति वैदिकाः । 'तर्ह्यनन्ताः संसारिणः कथं दृश्यन्ते ? किन्त्वितःपूर्वमेव सर्वमुक्तिः स्यात्' इति प्रश्नाशयः । इतिशब्दः प्रश्नसमाप्तौ । **अनन्तवदिति होवाच** इति परिहारः । यथा हि **बिम्बभूतो** भगवान् अनन्तसङ्ख्यस्तद्वत् तत्प्रतिबिम्बभूतजीवोऽपीत्यर्थः । 'रूपं रूपं प्रतिरूपो बभूव' इत्यादिश्रुतेः । न चातीतकालानन्त्यात् जीवानन्त्येऽपि सर्वमुक्तिः स्यादिति वाच्यम् । जीवानामेकैकराशेरेव मिलितातीतानागतकालक्षणेभ्योऽप्यनन्तगुणितत्वोक्तेर्वत्सश्रुतौ ॥ १४ ॥

**प्रमेयदीपिका** (ज.टी.)– तत्रैकजीववादिनामाक्षेपमुद्भाव्य प्रतिषेधति– **नचेति** ॥।॥ केचिदिदानीं मुक्ता भवन्ति, केचिद् भूता इति पक्षेऽतीत एव काले क्रमेण सर्वमुक्तिस्स्यात् । तथा चेदानीं संसारा-नुपलम्भस्स्यादिति न शङ्कनीयम् । कस्मात् ? यतः श्रुतिरेवमाशङ्क्य पर्यहार्षीदित्याह– **तथा हीति** ॥ हृदा बुद्ध्या च । इत्येतत् **कथं वा** युज्यते? उक्ताऽ-क्षेपादिति शङ्कायाम् 'अनन्ताः जीवाः' इत्युत्तरम् ॥

ननु कालोऽत्यनन्तोऽत इत्यस्योत्तरम्– **अनन्तवदिति** । 'यथा भगवान् काल-क्षणेभ्योऽप्यतिशयेन अनन्तः,तथाऽनन्ताः । कुतः? 'इति होवाच इति' श्रुत्यन्तरमिति ॥१४॥

**भावदीपः** (रा.टि.)– भाष्ये केचिदित्युपलक्षणं मत्वाऽह– **केचिद्भूता इति** ॥ मुक्तभूता इत्यर्थः ॥ 'इति होवाच' इत्यत्र कर्त्राकाङ्क्षायामाह– **श्रुत्यन्तरमिति** ॥ १४ ॥

**भावरत्नकोशः** (सु.टि.)– ॥ **एकजीववादिनामाक्षेपमिति** ॥ ते ह्येवं मुक्तसंसारिव्यवस्था-माक्षिपन्ति । यदि बहवो जीवास्तेषु केचिन्मुच्यन्ते केचित् संसरन्तीत्येतदेव युक्तं स्यात्, न चैवम् । तथा सत्यैकैकमाषापचये माषराश्यपचयक्रमेण, एकैकस्य जीवस्यापवर्गे अनादौ काले सर्वेषां संसारिणां समाप्तिः स्यात् । ततश्च इदानीं संसारोपलम्भो न स्यात् । तस्मादेक एव जीवः । स चेदानीमपि संसरति, न तु कश्चिन्मुक्तो-ऽस्ति । 'शुको मुक्तः' इत्यादयस्त्वर्थवादाः प्ररोचनार्था इति 'इदानीं मुक्ता भवन्ति' इति कथम् ? क्तप्रत्ययस्य भूतार्थत्वेनानन्वयादिति चेन्न । भवन्तीति वर्तमानार्थप्रत्ययानुरोधेन निष्ठाप्रत्ययस्यापि वर्तमानार्थत्वात् । 'धातुसम्बन्धे प्रत्ययाः' इति सूत्रे अग्निष्टोमयाज्यस्य पुत्रो जनिता, कृतः कटः, श्वो भविता इत्युदाहृत्य 'अग्निष्टोमयाजी' इति भूतकालः, 'जनिता' इति भविष्यकालेनापि सम्बध्यते इति वृत्तिकृता 'अयथाकालाश्रयिप्रत्ययाः साधवो भवन्ति' इत्युक्तत्वात् 'केचिन्मुच्यन्ते' इति क्रमेण सर्वमुक्तेरिति भाषितुं शक्येऽपि यत् 'मुक्ताः' इति निष्ठाप्रत्ययान्तग्रहणं तत्तात्पर्यम् **केचिद्भूता इति** । **मुक्ताः** निष्पन्ना इत्यर्थः । **इति पक्ष इति** ॥ सत्यस्वाभाविकबहुजीववादमभ्युपगम्य केचिन्मुक्ताः केचिन्मुच्यन्त इति पक्ष इत्यर्थः । 'मुक्तिः' इत्यनन्तरं भाष्ये शेषमाह– **स्यात्, तथा चेत्यादि** ॥ अनेन एकजीववादिनामाक्षेपोऽपि किञ्चिद्विवृतो भवति । **पर्यहार्षीत्** परिहृतवती । 'मनसा हृदा च' इति पुनरुक्तम् । 'स्वान्तं हृन्मानसं मनः' इत्यभिधानादिति वा 'चन्द्रमा मनो भूत्वा हृदयं प्राविशत्' इति श्रुत्या हृदयस्य मनोधिष्ठानत्वावेदनेन 'हृदा ज्ञात्वा' इति कथं ज्ञानकरणत्वोक्तिरित्यतः– **हृदा बुद्ध्या चेति** ॥

श्लोकः १४

प्राचीनटीकायां तु 'मनसा ज्ञानेन ज्ञात्वा हृदा दृष्ट्वा अपरोक्षीकृत्य च' इत्युक्तम् । **मृत्युं** मृत्युशिरस्कं संसारम् इत्यनन्तरम् 'एतद्' इति, 'कथं वा' इत्यनन्तरं 'युज्यते' इति, 'उक्ता-क्षेपाद्' इत्यनन्तरं 'शङ्कायाः' इति 'अनन्ताः' इत्यनन्तरं 'जीवाः' इति च शेषोक्तिः । **अतः** अनन्ततयोक्तजीवेभ्यः । कालस्यानन्तत्वात् तत्र कदाचित् सर्वमुक्तावुक्तदोषः स्यादिति भावः। श्रुतिशेषमवतारयति– **कुत इति** ॥ 'उवाच' इत्यत्र कर्त्राकाङ्क्षां पूरयति– **श्रुत्यन्तरमिति** ॥ सप्रपञ्चमेवोपपादितं 'न संसारिणां समाप्तिरस्मत्पक्षे' इत्यादिविष्णुतत्त्वनिर्णयतट्टीकयोः ॥ १४ ॥

**गीताक्षरार्थस्तु**– ततः किमित्यत उक्तम्– **न मामिति** ॥ 'माम्' इति जीवविलक्षण-कर्तारमित्युक्त्या जीवानां कर्मलेपेऽभिनिवेशादिकं कारणम्, मम तु तन्नास्तीति न मम कर्म-लेपावकाश इत्युक्तं भवति । इतश्च न लिम्पन्ति– **यतो न मे कर्मफले स्पृहा** ॥ एवं ज्ञानिनो मुक्तिः फलमुच्यते **इतीति** ॥ न भगवतः कर्मलेपः, नापि फले स्पृहेत्येवंप्रकारेण मां योऽभिजानाति स कर्मभिर्न बध्यते स कर्मबन्धविनिर्मुक्तो भवतीति ॥ १४ ॥

**भावदीपिका (श्री.टि.)**– 'मनसा' इत्यनेन पौनरुक्त्यं वारयति– **बुद्ध्या चेति** ॥ **उक्ता-क्षेपादिति** ॥ 'अतीत एव काले सर्वमुक्तिः स्याद्' इत्येकजीववाद्याक्षेपादित्यर्थः ॥ **कालोऽ-त्यनन्तोऽत इति** ॥ **अतः** जीवानन्त्यादपि **कालोऽत्यनन्तः** अतिशयेनानन्तः । तथा च जीवानन्त्यापेक्षयाऽपि कालानन्त्यस्याऽधिक्याद्, अतीतकाल एव सर्वेषां मुक्तिः स्यादेवेति भावः। 'ननु कालोऽप्यनन्तोऽत' इत्यपि पाठः । **इत्यस्य** आक्षेपस्य । 'अनन्तवत्' इत्यत्रत्यानन्तशब्दार्थो भगवान् । स चानन्तशब्दात् तदानन्त्योपलक्षकः । तथा च 'अनन्तवत्' इत्यस्य 'भगव-दानन्त्यवत्' इत्यर्थ इत्यभिप्रेत्य विवृणोति– **यथेति** ॥ **तथाऽनन्ताः** 'जीवाः' इति शेषः । स्वोक्तार्थे **सम्मतित्वेन** श्रुतिः श्रुत्यन्तरमुदाहरति– **इति होवाचेति** ॥ कालक्षणानन्त्यादपि जीवानन्त्यमतिशायितम् इतीममर्थम्–

> अनागता अतीताश्च यावन्तः सहिताः क्षणाः ।
> अतीतानागताश्चैव यावन्तः परमाणवः ।
> ततोऽप्यनन्तगुणिता जीवानां राशयः पृथक् ॥

**इति** श्रुत्यन्तरं वत्सश्रुतिः **उवाच** इत्यर्थः । तथा च क्षणानन्त्यादपि जीवानन्त्यस्याधिकत्वाद् एकैकस्मिन् क्षणे एकैकस्यापवर्गेऽपि न जीवानां समाप्तिः, किमुत कल्पान्तरे केषाञ्चिदेव

मुक्ताविति भावः । आनन्त्ये तारतम्यं च कल्प, वर्ष, मास, दिन, घटिका, क्षणानामानन्त्येष्वनुभवसिद्धमिति नासम्भावनाशङ्केति द्रष्टव्यम् ॥ १४ ॥

**भावप्रकाशः (कृ.टि.)– ॥ इदानीं मुक्ता इति ॥** यद्यपि क्तप्रत्ययस्य भूतार्थत्वादिदानीं मुक्ता इति व्याहतम् । तथाऽपि भवन्तीति वर्तमानार्थप्रत्ययानुरोधेन निष्ठाप्रत्ययोऽपि वर्तमानार्थः । धातुसम्बन्धप्रत्ययोपि वर्तमानार्थः । धातुसम्बन्धे प्रत्ययाः' इत्युक्तेरिति भावेनैवमुक्तम् । **केचिद्भूता** इति ॥ अनेन केचिन्मुक्ता भवन्तीत्येकं वाक्यम्, केचिन्मुक्ता इत्यपरं वाक्यम् । तत्राद्यस्यार्थः– केचिदिदानीमित्युक्तः । द्वितीयस्यार्थः-केचिद्भूता इतीति वाक्यद्वयमेतदित्युक्तं भवति । ननु हृदेत्येतन्मनसेत्यनेन पुनरुक्तम् । 'स्वान्तं हृन्मानसं मनः' इत्यमरोक्तेरित्यतो हृदेत्येतदनूद्य व्याचष्टे– **बुद्ध्या चेति** ॥ यद्वा ननु 'चन्द्रमा मनो भूत्वा हृदयं प्राविशत्' इति श्रुतेः हृदयस्य मनोऽधिष्ठानत्वमेव, न तु मनःकारणत्वम् ।तत्कथं हृदा ज्ञात्वेत्युच्यते इत्यतो हृदेत्यनूद्य व्याचष्टे– **हृदा बुद्ध्येति ॥ कालोऽत्यनन्तोऽत इति ॥** अतः जीवेभ्यः कालोऽत्यनन्त इत्यर्थः । कालोऽप्यनन्तोऽत इति पाठे कालोऽप्यतो जीवेभ्योऽनन्त इति योजना ॥ १४ ॥

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात् त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥**

## भाष्यम्

**एवं ज्ञात्वा अपि कर्मकरण आचारोऽप्यस्तीत्याह – एवमिति ॥ पूर्वतरं कर्म पूर्वभावीत्यर्थः ॥ १५ ॥**

भावप्रदीपिका (प.टी.)– ननु यद्येवं ज्ञानादेव मोक्षः, तर्हि मुमुक्षुरहं किमिति कर्मकर्ता ? इति पूर्वोक्तं विस्मृत्य मा चोदयेत्यभिप्रायेणोत्तरश्लोकमवतार्य व्याचष्टे – **एवमिति** ॥ १५ ॥

भावप्रकाशिका (न.टी.)– ननु 'अजोऽपि' इत्युक्तलक्षणपरब्रह्मतत्त्वापरोक्षज्ञान्येवार्जुनो मुमुक्षुश्च, इन्द्रावतारत्वात् । 'नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः 'इत्यादिश्रुतेः । अतः कथं 'स एवायं मया तेऽद्य योगः प्रोक्तः' इति भगवताऽत्युत्तमकर्मयोग उपदिश्यते ? इत्याशङ्कां सूचयन् तत्परिहारत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे – **एवमिति** । भवतु मुमुक्षुरपरोक्षज्ञानी च ।

श्लोकः १५

तथाऽपि ज्ञानाङ्गत्वेन तत्पूर्वमवश्यम्भावि यत्कर्म, यज्ज्ञात्वाऽपि कुर्वेव । न तूष्णीं तिष्ट । फलेऽतिशायकत्वात् तस्य । न ह्यन्यथा पूर्वे मुमुक्षवो ज्ञात्वाऽपि कर्म कुर्वन्तीत्यर्थः ॥ १५ ॥

प्रमेयदीपिका (ज.टी.)– ननु 'एवं ज्ञात्वा' इति पुनरुक्तम् । कर्मकरण आचारस्य प्रागेवोक्तत्वादित्यत आह– **एवमिति** ॥ यदि ज्ञानी कर्मभिर्न बद्ध्यते तर्हि ममापि ज्ञानित्वेन कर्मबन्धाभावात् कथं कर्मविधानम्? इत्याशङ्क्य ज्ञानिनामप्यधिकमोक्षाकाङ्क्षया कर्मकरणे आचारोऽत्रोच्यते । प्राक् तु जनकादीनां विवस्वदादीनां च विद्यमानमपि ज्ञानित्वं भगवता न विवक्षितमिति भावः ।

अत एव भाष्यकारेण तत्र 'कर्म कृत्वैव' (गी.भा.३.२०) इत्याद्युक्तम् । न हि ज्ञानिनां कर्म ज्ञानद्वारा मुक्तिहेतुः । 'मुमुक्षुभिः' इति 'तत्साधुकारिणि'(पा.सू.३.२.१३)उप्रत्ययः । 'पूर्वैः कृतम्' इत्यनेनैव पूर्वतरत्वस्योक्तत्वात् पुनरुक्तिरित्यत आह — **पूर्वतरमिति** ॥ तैरपि ततोऽपि पूर्वभाविकृतमित्यर्थः । कर्मणः क्षणिकत्वात् कथं तदेव कर्तव्यमित्यतो वा इदमुक्तम् । पूर्वमिव भवतीति पूर्वभावि । अत एव कर्म इत्यनुवादः ॥ १५ ॥

भावबोधः (र.टि.)– ननु तर्हि गीतायाम् आनन्दाभिवृद्धीच्छुभिरिति वक्तव्यम् । मुमुक्षुभिरिति कथमुक्तमित्यत आह– **तत्साधुकारिणीति** ॥ यावत्स्वरूपानन्दाविर्भावे सत्येव मोक्षस्य साधुत्वं, नान्यथेति भावः ॥

भावदीपः (रा.टि.)– ॥ **कर्मकरणे** इति सप्तम्यन्तम् । उक्तत्वादिति ॥ 'इमं विवस्वते' (४.१) इत्यादिनेति भावः ॥ '**इति माम्**' इत्यादि पूर्वश्लोकोत्तरार्धानुवादः– **यदीत्यादि** ॥ अत एवेति ॥ ज्ञानित्वस्य विवक्षितत्वादेवेत्यर्थः । तस्य विवक्षायां तु कर्माकरणेऽपि 'अनियमः सर्वेषाम्' (ब्र.सू.३.३.३२) इति सूत्रोक्तदिशा मुक्तिसिद्धेः 'कर्म कृत्वैव' इति कर्मकरण-नियमोक्तिर्न स्यादिति भावः । 'कर्म कृत्वा' इत्युक्त्या कथं ज्ञानित्वाविवक्षालाभ इत्यत आह– नहीति ॥ 'येन **कर्म कृत्वैव** इति नियमोक्तिर्घटेत' इति वाक्यशेषः ॥ यद्वा ज्ञानिकृतमपि ज्ञानद्वाराऽस्तु मुक्तिहेतुः कुतोऽधिकमुक्तिहेतुत्वकल्पनेत्यत आह– **नहीति** ॥ हिशब्देनानन्द-वृद्धिहेतुत्वे प्रमाणप्रसिद्धं सूचयति ॥

नन्वेवं गीतायाम् 'आनन्दवृद्धिकामैः' इति वक्तव्यं न 'मुमुक्षुभिः' इत्यत आह– **तत्सा-धुकारिण्युप्रत्यय** इति ॥ तृतीयस्य द्वितीयपादे 'आक्वेः तच्छीलतद्धर्मतत्साधुकारिषु'

(पा.सू.३.२.१३) इत्यधिकारे 'सनाशंसभिक्ष उः' (पा.सू.३.२.६८) इति सूत्रेण सन्नन्तस्य साधुकारी इत्यर्थे 'उ' प्रत्ययोक्तिरत्र 'साधुमोक्षेच्छाकारिभिः' इत्यर्थे उप्रत्यय इत्यर्थः । साधुत्वञ्च सातिशयत्वमेवेति भावः ॥ **पूर्वमिवेति** ॥ तत्सजातीयमिति भावः ॥ **अत एवेति** ॥ क्षणिकत्वसूचनेन सजातीयग्रहणार्थत्वा-देवेत्यर्थः ॥ १५ ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ॥ **मुमुक्षुभिरिति तत्साधुकारिण्युप्रत्यय** इति ॥ 'सनाशंसभिक्ष उः' इत्यत्र 'आक्वेः तच्छीलतद्धर्मतत्साधुकारिषु' पूर्वसूत्रात् तच्छीलादिष्वित्यनुवर्तते । सन् इति च प्रत्ययो गृह्यते । न धातुः । तेन सन्नन्तेभ्यो धातुभ्यः अशंसतेः भिक्षेश्च उप्रत्यत्ययो भवति तच्छीलादिष्वर्थेषु इति सूत्रार्थः । अत्र तदिति धात्वर्थपरामर्शः । तत्साधुकारित्वं नाम धात्वर्थ-साधुकारित्वमिति व्याख्यानात् । प्रकृते च धात्वर्थस्य मोक्षस्य यावत्स्वरूपानुभवे सत्येव साधुत्वात्त् तत्साधुकारित्वार्थविवक्षायां सनन्तात् मुचेः उप्रत्यये 'सन्यङो'रिति द्वित्वे कुत्वे षत्वे कषयोगे क्ष इति क्षकारे मुमुक्षुरिति रूपसिद्धिरिति भावः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **प्रागेवेति** ॥ 'कर्मणैव हि संसिद्धिम्' इत्यस्य 'आचारोऽप्यस्ति' इत्यवतारितत्वात् निवृत्त-कर्मकरणेऽपि 'इमं विवस्वते योगम्' इत्यादिनाऽऽ-चारस्योक्तत्वादित्यर्थः । प्रागुक्ताचारवैलक्षण्यं दर्शयति– **प्राक्त्विति** ॥ **जनकादीनाम्** जनक-प्रियव्रतादीनाम् । **विवस्वदादीनां च विद्यमानमपीति** ॥ तथा चोक्तं 'प्रसिद्धं हि तेषां ज्ञानित्वं भारतादिषु' इति तृतीयभाष्य इत्यर्थः । गीताचार्येण न विवक्षितमित्यत्रोपष्टम्भकमाह– **अत एवेति** ॥ जनकविवस्वदादीनां ज्ञानित्वस्याविवक्षितत्वादेव, 'कर्म कृत्वैव ततो ज्ञानं प्राप्य' इति, 'पूर्वानुष्ठितश्चायं धर्मः' इति चोक्तमित्यर्थः । अनेनापि कथं ज्ञानित्वाविवक्षालाभ इत्यत आह– **न हीति** ॥ **ज्ञानिनां** निष्पन्नज्ञानानां ज्ञाननिष्पादनद्वारा कर्म मोक्षहेतुरित्यमञ्जुलमित्यर्थः ॥

ननु कथम् 'अधिकमोक्षाकाङ्क्षया' इत्युक्तम् । गीतायां 'मुमुक्षुभिः' इत्येव श्रवणेन तद्बोधक-पदाभावादित्यत आह– **मुमुक्षुभिरिति** ॥ **तत्साधुकारिणीति** ॥ 'आक्वेस्तच्छीलतद्धर्मतत्साधु-कारिषु' इत्यधिकारे 'सनाशंसभिक्ष उः' इति सूत्रेण सन्नन्तान्मुचेरुप्रत्ययो विहितः । स च साधुकारिणि कर्तरि भवति । यो धात्वर्थं साधु करोति स साधुकारी । मोक्षेच्छा चात्र धात्वर्थः । तस्याः साधुत्वं च मोक्षगतानन्दातिशयविषयकत्वातिरिक्तं नास्तीति उप्रत्ययेनैवाधिकमोक्षाकाङ्क्षा लभ्यत इति भावः । **ततोऽपि पूर्वभावि** इत्यनेन तरबर्थ उक्तः। **तदेव** पूर्वैः कृतमेव ।

श्लोकः १५

उक्तचोद्यापनोदाय भाष्ये व्युत्पत्तिं दर्शयति– **पूर्वमिवेति** ॥ **अत एव** पूर्वसादृश्यज्ञापनरूप-प्रयोजनवत्त्वादेव । अन्यथा 'कर्म' इति गीतानुवादो भाष्ये नातीव प्रयोजन-वानिति भावः ॥

**गीताक्षरार्थस्तु**- यदि ज्ञानी कर्मभिर्न बध्यते तर्हि ममापि ज्ञानित्वेन कर्मबन्धाभावात् कथं कर्मविधानमित्याशङ्क्य ज्ञानिनामप्यधिकमोक्षाकाङ्क्षया कर्मकरणे आचारोऽत्रोच्यते **एवमिति** ॥ एवं ज्ञात्वा पूर्वैः जनकविवस्वदादिभिः कर्म निवृत्तं कृतम् । मुमुक्षुभिः इति मोक्षेऽप्यानन्दातिशया-काङ्क्षिभिरित्यर्थः । तस्मात्त्वमपि पूर्वैः कृतं पूर्वतरं ततोऽपि पूर्वभावि कर्म कुरु । कर्मणः क्षणिकत्वात् कथं तदेव कर्तव्यमिति चेन्न । पूर्वानुष्ठितकर्मसदृशकर्मानुष्ठानविधाने तात्पर्याद् एवशब्दः, न तु फलाभिसन्धिमित्यर्थे । कुर्वे वा, न तु ज्ञानित्वान्ममेति नाकरणं शङ्कनीयमित्यर्थे वेति ॥ १५ ॥

**भावदीपिका (श्री.टि.)– ॥ प्रागेवेति** ॥ 'कर्मणैव हि संसिद्धिम्' 'इमं विवस्वते योगम्' इत्यत्रेत्यर्थः । ननु जनकादीनामपि ज्ञानितया तदाचारस्यापि ज्ञान्याचारत्वेन तस्य चोक्तत्वात् पौनरुक्त्यमेवेत्यत आह– **प्राक्त्विति** ॥ पूर्वाचारत्वेनैव तदाचारः प्रमाणत्वेनोक्त इति भावः ॥ **अत एवेति** ॥ जनकादिषु विद्यमानस्यापि ज्ञानित्वस्याविवक्षितत्वादेवेत्यर्थः । 'कर्म कृत्वा ज्ञानं प्राप्य' इति प्राग् व्याख्याततत्वेन जनकादिकर्मणो ज्ञानद्वारा मुक्तिहेतुत्वमुक्तम् । तच्च तेषां ज्ञानित्व-विवक्षायां न सम्भवतीति भावः। कुतो न सम्भवतीत्यत आह– **न हीति** ॥

नन्वेवं ज्ञान्याचारस्य प्रमाणत्वेनात्रोक्त्यभिप्राये तर्हि गीतायां 'आनन्दाभिवृद्धीच्छुभिः' इति वक्तव्यम्, 'मुमुक्षुभिः' इति कथमुक्तम्? प्रत्युत तथोक्त्या 'मोक्षेच्छुभिः पूर्वैः कर्म कृतम्' इत्यज्ञान्याचारस्यैव गीतायां प्रमाणत्वेनोक्तिप्रतीतेरित्यत आह– **मुमुक्षुभिरिति** ॥ मोक्षं साधु कर्तुमिच्छन्ति मुमुक्षन्तीति मुमुक्षवः तैः मुमुक्षुभिः ॥ **तत्साधुकारिणीति** ॥ 'आक्वेस्तच्छीलतद्धर्मत-त्साधुकारिषु' इति क्विपमभिव्याप्य ये प्रत्यया विहिताः 'सनाशंस' इत्यादिसूत्रेण उप्रत्ययाद्यास्ते तच्छीलाद्यर्थे स्युरित्युक्तत्वाद् अत्र 'सनाशंसभिक्ष उः' इति सूत्रेण उप्रत्ययः । सनुप्रत्ययान्ता-दाशंसेर्भिक्षेश्च उप्रत्ययो भवति तच्छीलादाविति तदर्थः । जिज्ञासुः, आशंसुः, भिक्षुरित्युदाहरणम् । कथमयं सन्नन्त इति चेदुच्यते । मुच्लृ मोक्षणेऽस्मादिच्छायां सनि 'हलन्त्यम्' इति नलोपे 'सन्यङोः' इति द्वित्वे 'पूर्वोऽभ्यासः' इति पूर्वस्याभ्याससञ्ज्ञायां हलादिशेषे 'मुमुच् स' इति जाते 'चोः कुः' इति चकारस्य कुत्वे 'आदेशप्रत्यययोः' इति सस्य षत्वे कषयोगे क्षेति जाते 'मुमुक्ष'

इति सन्नन्तशब्दोऽयम् । पश्चात्सन्नन्तात् मुमुक्षशब्दात् 'सनाशंसभिक्ष उः' इत्यनेन तत्साधुकारिण्यर्थे उप्रत्यये 'अतो लोपः' अकारस्य लोपः स्यादार्धधातुके पर इति आर्धधातुके उप्रत्यये परे क्षकारस्थस्य अकारस्य लोपे 'मुमुक्षु' इति प्रातिपदिके भिसि सस्य रुत्वे विसर्गे च 'मुमुक्षुभिः' इति भवति । तथा चापरोक्षज्ञानोत्तरं निवृत्तकर्मानुष्ठानेन भगवदिच्छारूपावरणापगमे हि यावत्स्वरूपानन्दभोगो भवतीत्येवं मोक्षं साधु कर्तुमिच्छुभिर्मुमुक्षुभिः पूर्वैः कर्म कृतम् । अतस्तवाप्यपरोक्षज्ञानित्वात् मोक्षस्य साधुकरणेच्छया कर्म कुर्वित्याशयात् ॥

**पूर्वतरत्वस्येति** ॥ अतीतत्वस्येत्यर्थः । कर्तॄणामतीतत्वोक्त्या तदीयकर्मणोऽप्यतीतत्व-मुपलब्धमेवेति भावः ॥ **तैरपीति** ॥ पूर्वैरपि । **पूर्वभावि** पूर्वपरम्पराप्राप्तमित्यर्थः । 'तदेव कृतम्' इत्यनन्तरम् 'इत्युच्यते' इति शेषः । कथमनेन शङ्कापरिहारः? इत्यतो मध्यमपदलोप-समासोऽयमित्यभिप्रेत्य व्याख्याति– **पूर्वमिवेति** ॥ **अत एवेति** ॥ कर्मणः क्षणिकत्वान्यथानुपपत्त्या तदेव कर्तव्यमिति विधानायोगादेव भगवता 'एवं ज्ञात्वा कृतं कर्म' इत्येवानुवादः कृतः, न पूर्वतरकर्मेति । तेन ज्ञायते पूर्वकृतकर्मसदृशकर्मकरणमेवात्राभिप्रेतमिति ॥ १५ ॥

**भावप्रकाशः (कृ.टि.)– ॥ इत्याद्युक्तमिति** ॥ पूर्वानुष्ठितश्चायं धर्म इति वाक्यसङ्ग्रहायादि-शब्दः । ननु ज्ञानिना-मप्यधिकमपरोक्षाकाङ्क्षया कर्मकरण इत्यनेन ज्ञानिकर्मणोऽधिकमोक्षहेतुत्वं सूचितम् । तत्कुतः ज्ञानद्वारा मोक्षार्थत्वमेव किं न स्यादित्यत आह– **न हीति** ॥ ज्ञानस्य सिद्धत्वेन तदुत्पादनद्वारा मोक्षहेतुत्वानुपपत्तेरिति भावः ॥

ननु गीतायामधिकमपरोक्षाकाङ्क्षाप्रतिपादकपदाश्रवणात् कथमधिकमपरोक्षाकाङ्क्षयेत्युक्तमित्यत आह– **तत्साधुकारिणीति** ॥ 'सनाशंसभिक्ष उः' इति सन्नन्तान्मुचेरुप्रत्ययः । स च तत्साधु-कारिणि कर्तरि भवति । 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' इत्यनेन क्विपमभिव्याप्य विहिताः प्रत्ययास्तच्छीलादिषु कर्तृषु भवन्तीत्युक्तत्वात्,उप्रत्ययस्य च तन्मध्यपतितत्वादिति भावः । नन्वेवमपि सन्नन्तधात्वर्थमोक्षेच्छयोः साधुत्वलाभेऽपि मोक्षस्याधिक्यालाभ इति वाच्यम् । मोक्षमात्रस्य ज्ञानादेव सिद्धतया ज्ञानोत्तरममुमुक्षाया विषयिभूतमोक्षाधिक्येनैव साधुत्वस्य वाच्यत्वात् । आनन्दातिशयविषयकत्वातिरिक्तस्येच्छासाधुत्वस्य दुर्निरूपत्वादिति । **अत एवेति** ॥ पूर्वसादृश्य-ज्ञापनाख्यप्रयोजनादेव कर्मेत्यनुवादः । अन्यथा तद्वैय्यर्थ्यादिति भावः । क्षणिकत्वात् कथं तदेव कर्तव्यमित्याक्षेपपरिहारार्थमेवेत्यप्याहुः ॥ १५ ॥

श्लोकः १६

**किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।**
**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥**

## भाष्यम्

**कर्म कुरु इत्युक्तम् । तस्य कर्मणो दुर्विज्ञेयत्वमाह सम्यग्वक्तुम्– किं कर्मेति ॥**

भावप्रदीपिका (प.टी.)– स्ववक्ष्यमाणे जिज्ञासोत्पत्त्यै तस्य दुर्ज्ञेयत्वमाहेत्युत्तरश्लोकमवतारयति– **कर्मेति** । 'अकर्म'पदेन विकर्मोपलक्षणम् । 'तत् ते(ऽ)कर्म' इत्यत्र 'कर्म' 'अकर्म' इति पदच्छेदः । तत्रापि 'अकर्म'पदं विकर्मोपलक्षकम् ॥ १६ ॥

भावप्रकाशिका (न.टी.)– कर्तव्यस्य दुर्विज्ञेयत्वोक्तौ सम्यगेव सतां तज्जिज्ञासा भवति । ततस्तदुक्तावतीव अनुभवमारोहतीति भावेनोत्तरश्लोकमवतारयति– **कर्मेति** । ते कर्माकर्मणी प्रवक्ष्यामीति ज्ञातव्यम् । उभयोरपि प्रकृतत्वादुभयथाऽपि पदसम्भवात् ॥१६॥

प्रमेयदीपिका (ज.टी.)– किं कर्म इत्यस्य सङ्गतिर्न प्रतीयते । अत आह– **कर्मेति** ॥ **तस्य** कर्तव्यतयोक्तस्य । किमर्थं सम्यग्वक्तुम् । एतदेव सम्यग्वचनं यज्जिज्ञासवे कथनम् । जिज्ञासा च दुर्विज्ञेयत्वोक्तौ भवतीति भावः । अत एव प्रकर्षेण वक्ष्यामीत्याह । ननूत्तरश्लोके विकर्मणोऽपि गृहीतत्वाद् इहाप्यकर्मशब्दस्तदुपलक्षणार्थ इति स्थिते कर्मादीनामिति वक्तव्यम् । कर्मण इति कथम् । अनुष्ठेयत्वात् । अकर्मादिकं हि हेयतया ज्ञेयम् । अत एव 'तत्ते कर्म प्रवक्ष्यामि' इत्याह । तत्राप्यकर्मादिरुपलक्षणात् ॥ १६ ॥

भावबोधः (र.टि.)– ननु 'कर्मणो ह्यपि' इत्यादिना विकर्माकर्मणोरपि वक्ष्यमाणत्वात् कथं तत्ते कर्मेति कर्ममात्रग्रहणमित्यत आह– **तत्राप्यकर्मादिरिति** ॥ अत एवेत्युपष्टम्भकं तदेव कर्मणः स्वपदेनोपादानमभिप्रेत्येति ज्ञातव्यम् ॥

भावदीपः (रा.टि.)– सम्यग्वचनत्वं वक्ष्यमाणस्य व्यनक्ति– **एतदेवेति** ॥ तच्छब्दार्थं व्यनक्ति– **यदिति** ॥ **इत्याहेति** ॥ कृष्ण इत्यर्थः ॥ **इति वक्तव्यमिति** ॥ 'भाष्ये' इति योज्यम् । समाधिमाह– **अनुष्ठेयत्वादिति** ॥ 'कर्मणः' इत्यनुषङ्गः ॥ **अत एवेति** ॥ अनुष्ठेयतया प्राधान्यादे-

वेत्यर्थः । हेयतया ज्ञातव्यस्यापि वक्तव्यतया अनुक्तिर्दोषायेत्यत आह– **तत्रापीति** ॥ 'कर्म प्रवक्ष्यामि' इत्यत्रेत्यर्थः । 'विकर्माकर्मणी प्रोक्तप्राये'(४.१८) इति वक्ष्यमाणत्वात् । यद्वा 'तस्य कर्मणः' इति भाष्येऽपीत्यर्थः ॥ १६ ॥

**भावरत्नकोशः (सु.टि.)–** 'सम्यग्' इति भाष्यमवतारयति– **किमर्थमिति** ॥ दुर्विज्ञेयत्वोक्त्या सम्यग्वचनं कथं सिद्ध्यतीत्यत उपपादयति– **एतदेवेति** ॥ **अत एव** सम्यग्वचनस्याभिप्रेतत्वादेव । **आह** गीताचार्यः । **तस्य कर्मणो दुर्विज्ञेयत्वमिति** भाष्ये ॥ शङ्कते– **ननूत्तरश्लोक इति** ॥ 'कर्मणो ह्यपि बोद्धव्यम्' इत्युपरितनश्लोक इत्यर्थः । **इहापि** 'किं कर्म किमकर्म' इति व्याचिख्यासितश्लोकेऽपि । **तदुपलक्षणार्थः** विकर्मोपलक्षणार्थः । **स्थिते** इत्यनन्तरं 'त्रयाणामपि अभिप्रेतत्वाद्' इति, **'कथम्'** इत्यनन्तरम् 'इति चेन्मैवम्' इति च संयोज्यम् । तर्ह्यकर्मादेः कर्मण इवानुष्ठेयत्वाभावात् तत्र वक्तव्यमेवापद्येत इत्यत आह– **अकर्मादिकं हीति** ॥ **अत एव** अनुष्ठेयत्वेन प्राधान्यादेव । ननु 'तत्ते कर्म' इत्यत्र कर्मपदस्य त्रितयपरत्वे सिद्धे हि स्वशब्देन कर्मग्रहणम् अनुष्ठेयत्वाभिप्रायेणेत्युपष्टम्भकं स्यात् । तदेव कुतः, कर्मपदस्य कर्ममात्रपरत्वसम्भवादित्यत आह– **तत्रापीति** ॥ 'तत्ते कर्म' इत्यत्रापि । **उपलक्षणात्** 'कर्मपदेन' इति शेषः । अन्यथाऽत्र 'अकर्म' इति, उत्तरत्र 'बोद्धव्यं च विकर्मण अकर्मणश्च' इत्यकर्म-विकर्मोक्त्ययोगः । उक्तयोरेकाप्रवचनायोगात्, अप्रतिज्ञातविकर्मोक्त्यसाङ्गत्याच्चेति भावः ॥ १६ ॥

**गीताक्षरार्थस्तु-** 'कुरु कर्मैव तस्मात्त्वम्' इति कर्तव्यतयोक्तकर्मणः स्वरूपं सम्यग्वक्तुं तस्य दुर्विज्ञेयत्वमुच्यते **किं कर्म किमकर्मेति** ॥ अकर्मशब्दो विकर्मणोऽप्युपलक्षणार्थः । अत्र कर्मादिविषये कवयो ज्ञानिनोऽपि मोहिताः । तत् तस्मात् कविमोहविषयत्वात् ते जिज्ञासवे कर्म प्रवक्ष्यामि प्रकर्षेण वक्ष्यामि व्याख्यास्यामि । अकर्मविकर्मणी अप्यत्र व्याख्यास्यमाने ग्राह्ये । तयोरपि हेयतया ज्ञेयत्वात् । कर्मणस्त्वनुष्ठेयत्वेन प्राधान्यात् स्वशब्देन ग्रहणम् । यज्ज्ञात्वा अशुभादनर्थात्मकात् संसारान्मोक्ष्यसे ॥ १६ ॥

**भावदीपिका (श्री.टि.)–** ननु 'सम्यग् वक्तुम्' इत्येतद्गीतायां नाभिप्रेतमिति चेत्, तत्राऽऽह– **अत एवेति** ॥ उक्तरीत्या सम्यग्वचनाभिप्रायत एवेत्यर्थः ॥ **वक्तव्यमिति** ॥ अवतारिकाभाष्ये इत्यर्थः ॥ **कर्मण इति कथमिति** ॥ 'कर्मण' इत्येकवचनं कथमित्यर्थः । उत्तरमाह–

अनुष्ठेयत्वादिति ॥ ततश्च प्राधान्यात्तदेव गृहीतमिति भावः ॥ ज्ञेयमिति ॥ नानुष्ठेयमिति भावः ॥ अत एवेति ॥ त्रयाणां प्रकृतत्वेऽपि तन्मध्ये कर्मणोऽनुष्ठेयत्वेन प्राधान्यादेवेत्यर्थः ॥ इत्याहेति ॥ कण्ठरवेण कर्मैव गृहीतमित्यर्थः । ननूत्तरत्राकर्मविकर्मणोरपि प्रतिपादनात् कर्मग्रहणमेवायुक्तमित्यत आह– तत्रापीति ॥ गीतायामपीत्यर्थः । 'अत एव' इत्युपष्टम्भकं तु कर्मणः स्वपदेनोपादानमभिप्रेत्येति द्रष्टव्यम् ॥ १६ ॥

भावप्रकाशः (कृ.टि.)– ॥ अत एव प्रकर्षेणेति ॥ सम्यग्वचनस्याभिप्रेतत्वादेवेत्यर्थः । अत एव तत्ते कर्मेति ॥ अनुष्ठेयत्वेन प्राधान्यादेव स्वपदेन कर्मग्रहणमित्यर्थः । ननु तत्ते कर्मेत्यत्र कर्मपदस्य त्रितयपरत्वे स्वशब्देन कर्मग्रहणमनुष्ठेयत्वाभिधायकमुपष्ठम्भकं स्यात् । तदेव कुतः? कर्मशब्दस्य कर्ममात्र-परत्वसम्भवादित्यत आह– तत्रापीति ॥ तत्ते कर्मेत्यत्रापि कर्मपदेनेति शेषः । अन्यथाऽग्रे कर्मविकर्मोक्त्ययोगात् । अप्रतिज्ञातत्वादिति भावः ॥ १६ ॥

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥**

## भाष्यम्

**न केवलं तज्ज्ञात्वा मोक्ष्यसे । ज्ञात्वैवेत्याशयवानाह– कर्मण इति ॥ तच्चोक्तम्–**

**'अज्ञात्वा भगवान् कस्य कर्माकर्म विकर्मकम् ।**
**दर्शनं याति हि मुने कुतो मुक्तिश्च तद्विना ॥' इति ।**

**अकर्म कर्माकरणम् । कर्माकर्मान्यत् विकर्म निषिद्धं कर्म । बन्धकत्वात् । ततो विविच्य कर्मादि बोद्धव्यम् इत्यादि । नच शापादिना । 'कवयोऽप्यत्र मोहिताः' (४.१६) । अशक्यं चैतज्ज्ञातुमित्याह– गहनेति ॥ १७ ॥**

भावप्रदीपिका (प.टी.)– ननु कथं भगवज्ज्ञानं विना कर्मादिज्ञानमात्रेण मोक्षः ? इत्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतारयति– **न केवलमिति** । न भगवज्ज्ञानं विना मोक्ष उच्यते । किन्तु मोक्षार्थं कर्मादिकमपि बोद्धव्यमित्युच्यत इत्यर्थः ॥

तर्हि किं ज्ञानसमुच्चयेन कर्मादिज्ञानमावश्यकं मोक्षायेति ? नेत्याह– **तच्चेति** ॥ कर्मस्वरूपस्य भगवतैव चिन्तितस्य मतत्वात् कर्मादिस्वरूपमाह– **अकर्मेति** ॥ कर्माकर्मान्यस्य विकर्मत्वं कथमित्यत आह– **निषिद्धमिति** ॥ ननु कर्माकर्मान्यत् काम्यमपि भवति । तत्कथं निषिद्धमित्यत आह– **बन्धकत्वादिति** ॥ श्लोकान्वयस्य दुर्घटत्वात् तं दर्शयति–**तत इति** । **ततः** विकर्मणः कर्माकर्म विविच्य बोद्धव्यमिति द्वितीयपादान्वयः । आदिपदात् कर्मणः सकाशाद्विविच्य विकर्माकर्म बोद्धव्यम् । अकर्मणः कर्म विकर्म चेति विविच्य बोद्धव्यमिति प्रथमतृतीयपादान्वयः सूचितः । ननु यदि कर्मादिस्वरूपे कवयो मोहिताः । तर्हि शापादिनैवेत्याशङ्कां परिहर्तुमुत्तरपादं व्याचक्षाणोऽवतारयति– **नचेति** ॥ १७ ॥

भावप्रकाशिका (न.टी.)– ननु कर्मादिज्ञानमपि कस्यचिन्मुक्तिसाधनं चेत्, 'नान्यः पन्था अयनाय' इत्यादिश्रुति-विरोध इत्याशङ्क्य, श्रुतिविरोधमुत्तरश्लोकव्याख्यया परिहरिष्यन् कर्मादिज्ञानं विना न कस्यापि मुक्तिरिति भावेन तावन्निरन्तरं श्लोकमवतार्य तत्र प्रमाणमाह– **न केवलमित्यादिना ॥**

अत्र केचित् विकर्माकर्मशब्दयोः प्रतिषिद्धमेवार्थमाहुः । तद्व्युदासाय तयोरर्थभेदमाह– **अकर्मेत्यादिना** । श्रुत्या विहिताकाम्यानुष्ठानं कर्म । 'कुरु कर्म' इत्यादिनाऽत्राकाम्यस्यैव प्रस्तुतत्वात् । कर्माकरणम् अकर्म । ताभ्यामन्यत् सर्वमपि विकर्म, बन्धकत्वात् । बन्धस्यानिष्टत्वात्, इष्टसाधनस्यैव विधेयत्वादिति भावः । अध्याहारादिक्लेशपरिहारार्थमन्वयं च सूचयति– **तत इति** । कर्माकर्मान्यद्विकर्मेति यदुक्तं ततो विकर्मणो विविच्य कर्माकर्म च बोद्धव्यम् । न चात्र 'कर्माकर्म च' इत्यध्याहारः । 'तत् ते (ऽ) कर्म' इति प्रकृतत्वादुभयोरपि । अनेन 'बोद्धव्यं च विकर्मणः' इत्यस्यार्थो दर्शितः । इतरयोरर्थप्रदर्शनाय आदिशब्दश्चरमः । तथाहि कर्मणो विविच्याकर्म विकर्म च बोद्धव्यम् । 'तत् तेऽकर्म' इत्यत्राकरणीयत्वेन विकर्मणोऽप्यकर्मशब्दोक्तत्वेन प्रस्तुतत्वान्न तस्याप्यध्याहारः । एवमकर्मणो विविच्य कर्म विकर्म बोद्धव्यमित्यर्थः । कवीनां मोहश्चेत्, शापादिरेव कारणमित्याशङ्कां परिहर्तुमन्त्यपादमवतारयति– **नचेति** ॥ १७ ॥

प्रमेयदीपिका (ज.टी.)– ननु 'यज्ज्ञात्वा मोक्ष्यसेऽशुभात्' (४.१६) इत्यनेनैव कर्मादिस्वरूपं मुमुक्षुणा ज्ञातव्यमिति लब्धम् । तत्किमर्थं 'कर्मणो हि' इत्याद्युच्यते? इत्यत आह– **न केवलमिति** ॥ **तत्** कर्मादिकम् । सिद्धे सत्यारम्भो नियमार्थ इति भावः ॥

श्लोकः १७

अत्रैव प्रमाणमाह— **तच्चेति** ॥ दर्शनापेक्षया समानकर्तृकत्वात् क्त्वानिर्देशः । कर्मशब्दार्थो भगवतैव वक्ष्यते । अकर्मविकर्मशब्दार्थावाह— **अकर्मेति** ॥ किं तद्विकर्म? इत्यत आह— **निषिद्धमिति** ॥ एवं चेत् कामाद्युपेतस्य कुत्रान्तर्भावः? इति चेद्, विकर्मणीति ब्रूमः । कथं तस्य निषिद्धत्वम्? इत्यत आह— **बन्धकत्वादिति** ॥ अस्त्वेवं शब्दार्थः । योजना तु कथम्? इत्यतो लाघवार्थं द्वितीयपादयोजनां तावदाह— **तत इति** ॥ **ततः** विकर्मणः । कर्मादि कर्माकर्म च । **इत्यादि** इत्यनेनाद्यतृतीयपादयोजनां सूचयति । 'कर्मणो विविच्य विकर्मादि बोद्धव्यम्, अकर्मणश्च विविच्य कर्मादि बोद्धव्यम्' इति ॥

ननु 'कवयोऽप्यत्र मोहिताः' इत्यनेन कर्मादिदुर्ज्ञेयत्वमुक्तम् । तत्पुनः किमर्थमुच्यते? इत्यत आह— **नचेति** ॥ **ज्ञातुं** 'स्वभावेन' इति शेषः । एतच्च श्रोतुरधिकादरजननार्थमिति ज्ञेयम् ॥ १७ ॥

भावबोधः (र.टि.)– ॥ **दर्शनापेक्षयेति** ॥ न तु यातीति भगवत्कर्तृकक्रियापेक्षया । दर्शनाज्ञानयोरुभयोरपि जीवकर्तृकत्वेन समानकर्तृकत्वमिति भावः । **कर्मशब्दार्थ इति** ॥ कर्मण्य-कर्मेत्यादिनेत्यर्थः । **लाघवार्थमिति** ॥ निषिद्धं कर्मेति तस्य प्रकृतत्वात् 'ततः' इति परामर्श-सौकर्येण लाघवार्थमित्यर्थः । **स्वभावेनेति** ॥ पूर्वं कवीनां मोहितत्वमात्रमुक्तम् । तच्च कर्मणः स्वभावतः सुज्ञेयत्वेऽपि शापादिना अन्यथासिद्धमिति शङ्कापरिहाराय 'गहना कर्मणो गतिः' इति स्वभावेनैव कर्मणो दुर्विज्ञेयत्वोक्तेः न पुनरुक्तिशङ्केति भावः ॥ १७ ॥

भावदीपः (रा.टि.)– ॥ **दर्शनापेक्षयेति** ॥'याति' इत्युक्तक्रियां प्रति हरेः कर्तृत्वेऽपि दर्शनस्य, 'अज्ञात्वा' इत्युक्ताज्ञानस्य च जीवैककर्तृकत्वात् 'समानकर्तृकयोः पूर्वकाले' (पा.सू. ३.४.२६) इत्युक्तत्वात् क्त्वाश्रुत्युपपत्तिरित्यर्थः । कामादिकमज्ञात्वा भगवन्तं कः पश्यतीति यावत् ॥ **वक्ष्यत इति** ॥ 'कर्मणि' इत्यादावित्यर्थः ॥ **लाघवार्थमिति** ॥ **ततः** इत्यनेन प्रागुक्त-विकर्मपरामर्शादिति भावः । **श्रोतुरधिकादरेति** ॥ शापादिना दुर्ज्ञेयत्वे शापादिहीनानां सुज्ञेयत्व-प्राप्त्या जिज्ञासा नोदीयात् । स्वभावत एव दुर्ज्ञेयत्वोक्तौ जिज्ञासोदयद्वारा श्रोतुरधिकादरो भवतीति 'गहना कर्मणो गतिः'इत्युक्तमित्यर्थः ॥ १७ ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ननु च 'समानकर्तृकयोः पूर्वकाले' इति समानकर्तृकत्व एव क्त्वाप्रत्ययविधानात् यातीति क्रियां प्रति भगवतः कर्तृत्वादज्ञानलक्षणक्रियां प्रति जीवस्य कर्तृत्वात्

समानकर्तृकत्वाभावात् कथमज्ञात्वेति क्त्वाप्रत्यय इत्यतो यातीति भगवत्कर्तृकक्रियापेक्षया समानकर्तृकत्वाभावेऽपि दर्शनज्ञानयोरुभयोरपि जीवकर्तृकत्वेन दर्शनापेक्षया समानकर्तृकत्वाद् युक्तः क्त्वाप्रत्यय इति भावेनाह– **दर्शनापेक्षयेति** ॥

**भावरत्नकोशः (सु.टि.)–** ॥ **कर्मादिस्वरूपं** कर्माकर्मविकर्मस्वरूपम् । कर्मणोऽनुष्ठेयतया ज्ञातव्यत्वम् । अकर्मविकर्मणोः हेयतया तत्त्वमिति विवेकः । 'तत्' इत्यनूद्यार्थमाह– **तत् कर्मादिकमिति** ॥ ननु 'याति' इत्युक्तक्रियायाः अज्ञानसमानकर्तृकत्वाभावात् कथम् 'अज्ञात्वा' इति क्त्वाप्रत्ययनिर्देशः? 'समानकर्तृकयोः पूर्वकाले क्त्वा' इति स्मरणादित्यत आह– **दर्शना-पेक्षयेति** ॥ अज्ञानदर्शनयोर्जीवरूपैककर्तृकत्वाद् युक्तः क्तवानिर्देश इत्यर्थः । भाष्ये 'विकर्मकम्' इति स्वार्थे कन्प्रत्ययः । दर्शनमेव किमर्थमापादनीयमित्यत उक्तं भाष्ये- **कुत इति** ॥ **तद्विना** दर्शनं विना मुक्तिः **कुतः** कस्मात्साधनाद्भवेदित्यर्थः । प्रथमप्राप्तकर्मशब्दार्थानुक्तौ बीजमाह– **कर्मशब्दार्थ इति** ॥ वक्ष्यत इत्यनन्तरम् 'इतिशब्दः' अध्याहार्यः । कर्मण्यकर्म यः पश्येदित्यत्र वक्ष्यत इति हेतोरित्यर्थः । भाष्ये नञ अभावे व्युत्पन्नत्वात् कर्माकरणमिति, विशब्दो विलक्षणार्थ इति भावेन कर्माकर्मान्यद्विकर्मेति चोक्तम् । **एवं चेत्** निषिद्धस्यैव ग्रहणं यदि तर्हि । **कामा-द्युपेतस्य** कामक्रोधसंवलितस्य ॥

**कथमिति** ॥ 'विकर्म निषिद्धम्' इत्युक्तत्वात् काम्यस्य श्येनादेश्च 'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'श्येनेनाभिचरन् यजेत' इत्यादिवेदविहितत्वाद् वेदविरुद्धस्यैव निषिद्धत्वादिति भावः । **बन्धकत्वादितीति** ॥ काम्यादेरपि बन्धकत्वाविशेषात् युक्तो निषिद्धान्तर्भाव इति गीता-भाष्ययोस्तदनुक्तिः नेति भावः । **शब्दार्थः** अकर्मादिशब्दार्थः । **लाघवार्थमिति** ॥ निषिद्धकर्मणः प्रकृतत्वात् 'ततः' इति तत्परामर्शसौकर्यलाघवार्थमित्यर्थः । 'सूचयति' इत्युक्तमेव दर्शयति– **कर्मणो विविच्येति** ॥ **विकर्मादि** विकर्म अकर्म च । **कर्मादि** कर्म विकर्म च । **उच्यते** 'गहना' इत्यनेन । उक्तपुनरुक्तिपरिहारायाह– **स्वभावेनेति** शेष इति ॥

'कवयोऽप्यत्र' इति दुर्विज्ञेयत्वे उक्ते तस्य शापप्रतिषिद्धाचरणादिनाऽन्यथासिद्धिशङ्कायाम् इह स्वभावेनैव दुर्विज्ञेयत्वमस्येति वक्तुं 'गहना' इत्युक्तमिति न पुनरुक्तिरिति भावः । 'अशक्यं च' इति भाष्ये चशब्द एवार्थः । एतच्च स्वभावेनैव दुर्विज्ञेयत्ववचनं च । **अधिकेति** ॥ दुर्विज्ञेयत्वं शापादिना चेद्भवति तर्ह्यप्राप्तशापानां सुज्ञेयत्वं स्यादिति न तत्र तादृशो जिज्ञासाऽऽदरः स्यात्,

यादृशः स्वभावेनैव दुर्विज्ञेयत्वोक्तौ भवतीति तदर्थमेव 'गहना कर्मणो गतिः' इत्यवोचदित्यर्थः ॥ १७ ॥

**गीताक्षरार्थस्तु** - कर्मादिस्वरूपं ज्ञात्वैव मुच्यते नान्यथेत्यतः तत्स्वरूपज्ञानमावश्यकमिति भावेनोच्यते **कर्मणो हीति** ॥ कर्मणः 'विविच्य' इति शेषः । बोद्धव्यं विकर्माकर्म च बोद्धव्यम्, विकर्मणश्च निषिद्धत्वात् । विविच्य कर्माकर्म च बोद्धव्यम् । अकर्मणश्च कर्माभावाद् विविच्य कर्म विकर्म च बोद्धव्यम् । कुत एवं विविच्य ज्ञातव्यमिति विधीयत इत्यत उक्तम्– **गहनेति** ॥ कर्मणः कर्मादेः गतिः स्थितिरिति यावत् । गहना दुर्विज्ञेया । 'कवयोऽप्यत्र मोहिताः' इति दुर्विज्ञेयत्वोक्तावपि पुनरत्र तद्वचनं शापादिप्रबलकारणोपनिपातनिबन्धनं न दुर्विज्ञेयत्वं, किन्नाम स्वभावेनैवेति दर्शयितुम् । एतच्च श्रोतुरधिकादरजननार्थमिति ज्ञेयम् ॥ १७ ॥

**भावदीपिका (श्री.टि.)**– ॥ **सिद्धे सतीति** ॥ 'यज्ज्ञात्वा' इत्यनेनैव कर्मादिस्वरूपस्य मुमुक्षुणा ज्ञातव्यत्वे सिद्धे सतीत्यर्थः । **आरम्भः** 'कर्मणो हि' इति पुनरारम्भः । नियम एव प्रदर्शितो भाष्ये– **ज्ञात्वैवेति** ॥ ननु यातीत्युक्तक्रियायां भगवतः कर्तृत्वात् 'अज्ञात्वा' इत्यत्र जीवस्य कर्तृत्वेन समानकर्तृकत्वाभावात् कथम् 'अज्ञात्वा' इति क्त्वाप्रत्ययः? इत्यत आह– **दर्शनेति** ॥ दर्शनं यातीत्यस्य जीवकर्तृकदर्शनविषयो भवतीत्यर्थः । तथा चाज्ञानदर्शनयोरुभयोरपि जीवकर्तृकत्वेन समानकर्तृकत्वाद्युक्तः क्त्वाप्रत्यय इत्यर्थः । ननु भाष्येऽकर्मविकर्मशब्दार्थ एवोच्यते, न कर्मशब्दार्थ, तत्र निमित्तमाह– **कर्मशब्दार्थ इति** ॥ **वक्ष्यत इति** ॥ 'कर्मण्यकर्म' इत्यादिनेति शेषः ॥ **कामाद्युपेतस्येति** ॥ काम्यकर्मण इत्यर्थः ॥ **लाघवार्थमिति** ॥ 'निषिद्धं कर्म' इति भाष्ये तस्य प्रकृतत्वात् 'ततः' इति परामर्शसौकर्येण लाघवार्थमित्यर्थः । सूचनाप्रकारमेव दर्शयति– **कर्मण इति** ॥ **तत्** दुर्ज्ञेयत्वम् ॥ **स्वभावेनेति** ॥ पूर्वकवीनां मोहितत्वमात्रमुक्तम् । तच्च कर्मणः स्वभावतः सुज्ञेयत्वेऽपि शापादिनाऽन्यथासिद्धमिति शङ्कापरिहाराय 'गहना कर्मणो गतिः' इति स्वभावेनैव कर्मणो दुर्ज्ञेयत्वोक्तेर्न पुनरुक्तिशङ्केति भावः । **एतत्** स्वभावतो ज्ञातुमशक्यत्वकथनम् ॥ १७ ॥

**भावप्रकाशः (कृ.टि.)**– ननु यातीत्युक्तक्रियया ज्ञानस्य समानकर्तृकत्वाभावात् कथं क्त्वानिर्देश इत्यत आह– **दर्शनापेक्षयेति** ॥ उभयोर्जीवकर्तृकत्वादिति भावः । ननु प्रथमप्राप्तकर्मशब्दार्थानुक्तिः कुत इत्यत आह– **कर्मशब्दार्थ इति** ॥ कर्मण्यकर्मेत्यनेनेति शेषः ।

लाघवार्थमिति ॥ निषिद्धकर्मणः प्रकृतत्वात्तत इति परामर्शसांकर्यलाघवार्थमित्यर्थः । एवमपि कथं पुनरुक्तिपरिहार इत्यत आह– **स्वभावेनेति** ॥ **शेष** इति ॥ प्राग्दुर्विज्ञेयत्वमात्रोक्तस्तस्य शापादिनाऽन्यथासिद्धिशङ्कायामिह स्वभावेनैव दुर्विज्ञेयत्वमुच्यत इति न पुनरुक्तिरिति भावः ॥ १७ ॥

## कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
## स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥

## भाष्यम्

**कर्मादि स्वरूपमाह– कर्मणीति ॥ कर्मणि क्रियमाणे सति । अकर्म यः पश्येत् । विष्णोरेव कर्म, नाहं चित्प्रतिबिम्बः किञ्चित् करोमीति । अकर्मणि सुप्त्यादौ अकरणावस्थायाम् ॥**

भावप्रदीपिका (प.टी.)– यत्कर्मादिकं वक्ष्य इत्युक्तं तदाहेत्युत्तरश्लोकमवतारयति– **कर्मादीति** । कर्मणि क्रियमाणे इत्येतदेव विवृणोति– **विष्णोरेवेति** ॥

भावप्रकाशिका (न.टी.)– यस्य कर्मादेः सम्यग्वचनाय दुर्विज्ञेयत्वमुक्त्वाऽतिविज्ञेयत्वमुक्तम्, तत्सम्यग्-वचनपरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे– **कर्मादीति** । विहिते कर्मणि क्रियमाणेऽपि, अकर्म यः पश्येत्, 'स्वस्य' इति शेषः । तथाहि तद्विवृणोति– **विष्णोरेवेति** । न मे विष्णुवत् स्वतन्त्रं कर्म, प्रतिबिम्बत्वात् । अतः परिशेषात् बिम्बचेष्टैव मच्चेष्टेति भावः । न केवलं मम चेष्टैव विष्ण्वधीनेति जानन् बुद्धिमान्, किन्तु सर्वं तेनैव क्रियत इति जानन्नेवेति भावेनोत्तरपादं व्याचष्टे– **अकर्मणीति** । कथमकर्मशब्दोक्तः सुप्त्यादिरित्यत उच्यते अकरणावस्थायामिति । आदिशब्देन स्वप्नप्रलयौ ॥

प्रमेयदीपिका (ज.टी.)– कर्म प्रवक्ष्यामि (४.१६) इति प्रतिज्ञातं कर्मादिप्रपञ्चनं च क्वापि नोपलभ्यते। कर्मणि इति श्लोकस्य यत्किञ्चिद्दर्शनस्तुतिरूपत्वादित्यत आह– **कर्मादीति** ॥ यद्यप्ययं श्लोकोऽन्यथा प्रतीयते । तथाऽप्यविहितस्य स्तुत्ययोगाद् वाक्यभेदेन कर्मादिकं प्रतिपाद्य तत्स्तुतिः क्रियत इति भावः । कथमनेन तत्स्वरूपमुच्यते? इत्यतो व्याचष्टे– **कर्मणीति** ॥ वर्णाश्रमोचिते । **अकर्म** कर्माभावं स्वस्य । तद्विवृणोति– **विष्णोरेवेति** ॥ **चित्प्रतिबिम्बः** इत्यनेन तदधीनः करोमीत्यपि सूचयति ॥

श्लोकः १८

**भावबोधः (र.टि.)– ॥ वाक्यभेदेनेति ॥** यच्छब्दद्वयपरित्यागेन 'कर्मण्यकर्म पश्येद्', 'अकर्मणि च कर्म पश्येद्' इति विधायकमेकं वाक्यम् । पश्चाद्यच्छब्दद्वययोगेनेदमेवानुवादरूपपरं वाक्यमिति वाक्यभेदेनेत्यर्थः ।

**भावदीपः (रा.टि.)– ॥ वाक्यभेदेनेति ॥** यच्छब्दत्यागेन 'कर्मण्यकर्म यः पश्येत्, अकर्मणि च कर्म पश्येत्' इति कर्म-स्वरूपप्रतिपादकमेकं वाक्यम् । यच्छब्दद्वययोगेनानुवादक-तयाऽपरं वाक्यमिति वाक्यभेदेनेत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)– ॥ प्रपञ्चनं** विस्तारेण स्वरूपनिरूपणम् । 'प्रवचनम्' इति क्वचित्पाठः । **यत्किञ्चिद्दर्शनेति ॥** 'कर्मण्यकर्म यः पश्येदकर्मणि च कर्म पश्येद्' इति यत् कर्माकर्मदर्शनं प्रतीयते तत्स्तुतेरेवात्र 'स बुद्धिमान्' इत्यादिनाऽभिधानादित्यर्थः । **अन्यथा** यत्किञ्चिद्दर्शनस्तुतिरूपत्वेन । **वाक्यभेदेनेति ॥** यच्छब्दद्वयपरित्यागेन 'कर्मण्यकर्म पश्येद्', 'अकर्मणि च कर्म पश्येद्' इति कर्मस्वरूपादिदर्शनविधिपरमेकं वाक्यम् । ततो 'यो यश्चैवं पश्येत्' इत्यनुवादेन 'स बुद्धिमान्' इत्यादिरूपस्तुतिपरम्, अपरं वाक्यमित्येवं वाक्यभेदेनेत्यर्थः । **तत्स्वरूपं** कर्मादिस्वरूपम् । 'क्रियते' इति कर्मव्यापारमात्रमिति सङ्करः । तदसदिति भावेन कर्म विशिनष्टि– **वर्णाश्रमोचित इति ॥** व्यापारमात्रज्ञानस्य स्तवनायोगादिति भावः । 'अकर्म कर्माकरणम्' इति भाष्यरीत्या वक्तव्येऽपि 'कर्माभावम्' इति वचनं 'कर्माकरणम्' इति भाष्येऽपि कर्मशब्देन कर्मकरणं, नञाऽभावश्च गृह्यते । तथा च तत्रापि कर्माभाव एव ज्ञातव्य इति विभावयितुम् । भगवतस्तदयोगादाह– **स्वस्येति ॥** 'पश्येत्' इत्याख्यातोपात्तः कर्तैवात्र स्वशब्दार्थः । **तद्विवृणोतीति ॥** 'तर्हि मिथ्यादृष्टित्वं स्यादित्यतः' इति शेषः । जीवे कर्तर्यनुभूयमाने कथं नाहं करोमीति दर्शनमित्यतो भाष्ये हेत्वर्थगर्भं विशेषणम्– **चित्प्रतिबिम्ब इति ॥** न हि प्रतिबिम्बस्य क्रियेति भावः । एतद्विशेषणोपादानस्य प्रयोजनान्तरं च दर्शयति– **चित्प्रतिबिम्ब इत्यनेनेति ॥** 'तदधीनः' इत्यनेन कर्तृत्वानुभवः समर्थितो भवति । 'करोमि' इति भाष्यस्थेतिशब्दस्य 'यः पश्येत्सः' इति वक्ष्यमाणेनान्वयः ॥

**भावप्रकाशः (कृ.टि.)– ॥ वाक्यभेदेनेति ॥** यच्छब्दद्वयपरित्यागेन 'कर्मण्यकर्म पश्येद्', 'अकर्मणि च कर्म पश्येत्' इति विधिः । ततो य एवं पश्येदित्यनुवादेन स बुद्धिमानित्यादि-स्तुतिरित्येवं वाक्यभेदेनेत्यर्थः ॥

श्लोकः १८

# भाष्यम्

**परमेश्वरस्य कर्म यः पश्यति 'अयमेव परमेश्वरः सर्वदा सर्वसृष्ट्यादिकं करोति' इति सः बुद्धिमान् ज्ञानी । स एव च युक्तः योगयुक्तः । सर्वाकरणात् स एव च कृत्स्नकर्मकृत् । कृत्स्नफलवत्त्वात् ॥ १८ ॥**

भावप्रदीपिका (प.टी.)– 'अकर्मणि' इत्येतद्द्वितीयपादार्थं विवृणोति– **अयमेवेति** । सर्वकर्मकर्तृत्वं फलद्वारैव न साक्षात्, सर्वकर्मकरणाभावाज्ज्ञानिन इत्याह– **सर्वेति** । एतेन स्वातन्त्र्यं विहाय क्रियमाणं कर्मेत्युक्तं भवति । तत एव कर्मादि पूर्वोक्तरीत्यैव ज्ञातव्यम् ॥ १८ ॥

भावप्रकाशिका (न.टी.)– तदेतद्विवृणोति– **अयमेवेति । सर्वदा इति** । सुप्तिसन्ध्यप्रलयादौ सुप्तोत्थापनस्वप्रजाग्रत्वप्रपञ्चादिकमयमेव करोतीत्यर्थः । अत एव तादृशबुद्ध्याऽनुष्ठितकर्मस्वरूपे उक्ते सति अकर्मविकर्मणोः स्वरूपं ज्ञातुं शक्यम् । 'अकर्म कर्माकरणम् । कर्माकर्मान्यद् विकर्म' इत्युक्तत्वात् ॥ १८ ॥

प्रमेयदीपिका (ज.टी.)– सुप्त्यादिकं कथमकर्म? इत्यत उक्तम्– **अकरणेति** । जीवापेक्षयेदम् । एतदपि विवृणोति – **अयमेवेति** ॥ **सर्वदा** जीवव्यापाराभावे भावे च। **सर्वस्य** महदादेः स्वाप्रगजादेश्च । अनेन भगवतः परानपेक्षया कर्तृत्वम्, स्वस्य तदधीनं कर्तृत्वं च ज्ञात्वा वर्णाश्रमविहितानुष्ठानं कर्मेत्युक्तं भवति । अनेनैवोक्तलक्षणे विकर्माकर्मणी प्रोक्तप्राये । यः पश्येत् स बुद्धिमानिति कोऽर्थभेदः? कथञ्च स्तुतिः? इत्यत आह– **स इति** ॥ ज्ञानिशब्दो हि पामरविलक्षणे प्रसिद्धः। मतुवादीनां प्रशंसार्थत्वात् स युक्तः इत्येतत् स्तुतिर्यथा स्यात्तथा व्याचष्टे– **स एव चेति** ॥ कृत्स्नकर्मकृत् इत्येतन्मुख्ये वाधकं प्रदर्शयन् गौणं व्याख्याति– **सर्वेति** ॥ सर्वस्य अश्वमेधादेः । कृत्स्नकर्मणां फलस्य ज्ञानस्य मोक्षस्य च प्राप्तप्रायत्वादित्यर्थः ॥ १८ ॥

भाववोधः (र.टि.)– ॥ **प्रोक्तप्राय इति** ॥ ईश्वरस्वातन्त्र्यादिकमज्ञात्वा स्वविहितानुष्ठानमकर्म विपरीतं ज्ञात्वा विहितकर्मानुष्ठानं विकर्मेत्युक्तप्राय इत्यर्थः । उक्तप्रायत्वज्ञापनार्थमेव 'उक्तलक्षण' इत्युक्तम् । अनेन अकर्म कर्माकरणं कर्माकर्मान्यद्विकर्मेति भाष्योक्तं लक्षणम् अर्थाद्गीतासूचितमित्युक्तं भवति । **मतुवादीनामिति** ॥ भाष्ये 'ज्ञानी' इतीनिः प्रयोगादादिशब्दः ॥

श्लोकः १८

**भावदीपः (रा.टि.)**– ॥ **तदधीनमिति** ॥ कर्तृत्वमित्यनुषङ्गः ॥ **अनेनैवेति** ॥ 'कर्मणि' इत्यादिना कर्मस्वरूपकथनेनैव ॥ **उक्तलक्षणे** अकर्मकरणे कर्माकरणम् कर्म, अन्यद्विकर्म निषिद्धं कर्मेति प्राग् भाष्योक्तलक्षणे विकर्माकर्मणी **प्रोक्तप्राय** इत्यर्थः ॥ **प्रशंसार्थत्वादिति** ॥ 'भूमनिन्दाप्रशंसासु ...भवन्ति मतुवादयः' इत्युक्तेरिति भावः ॥ **मुख्य इति** ॥ मुख्यार्थे ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ॥ **मतुवादीनामिति** ॥ 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुवादयः' इति भावः । भाष्ये 'ज्ञानी' इतीनेः प्रयोगात् तदभिप्रायेण मतुबादीनामित्युक्तमिति बोध्यम् ॥

**भावरत्नकोशः (सु.टि.)**– सुप्त्यादावपीश्वरेण कर्मकरणात् कथमकरणावस्था सेत्यत आह– **जीवापेक्षयेति** ॥ जीवकर्तृककरणाभावापेक्षयेदं भाष्यं योज्यमित्यर्थः । **जीवेति** ॥ जीवव्यापाराभावकाले भावकाले चेत्यर्थः । काले 'दा' स्मरणात् । 'सर्वसृष्ट्यादि' इत्यत्र सर्वशब्दार्थमाह– **सर्वस्येति** ॥ महदादेः स्वाप्नगजादेश्चेति वदन् सुप्तिशब्देन भाष्ये स्वप्नः, आदिशब्देन सृष्टिश्च ग्राह्येत्यभिसन्धत्ते । प्राचीनटीकायां तु आदिशब्देन स्वप्नप्रलयौ ग्राह्यावित्युक्तम् ।

'कर्मादिस्वरूपमाह' इत्यवतारिकाभाष्यं घटयितुमाह– **अनेनेति** ॥ 'कर्मण्यकर्म' इत्यर्धेन स्वस्य कर्तुः जीवस्य तदधीनं भगवदधीनं च कर्तृत्वम् । ननु कर्मस्वरूपमात्रोक्तिर्लब्धा, नैतावतैवालम् । तत्ते कर्म प्रवक्ष्यामि' इत्यत्र विकर्माकर्मणोरपि प्रवचनीयत्वेन विवक्षितत्वात्, कर्मादिस्वरूपमिति भाष्ये आदिपदप्रयोगाच्च तत्स्वरूपस्यापि प्रवक्तव्यत्वादित्यत आह– **अनेनैवेति** ॥ कर्मस्वरूपकथनेनैवेत्यर्थः । उक्तलक्षणे कर्माकर्मान्यद्विकर्म, कर्माकरणमकर्मेति भाष्योक्तलक्षणे । 'बोद्धव्यं च विकर्मणः, अकर्मणश्च बोद्धव्यम्' इति गीतामनुरुध्योक्तम्– **विकर्माकर्मणीति** ॥

भाष्ये तु विकर्मस्वरूपज्ञानस्य अकर्मज्ञानाधीनत्वाद् आदावकर्म लक्षितमित्यवधेयम् । आहत्य प्रोक्तत्वात् 'प्रोक्तप्राये' इत्युक्तम् । 'व्याख्याततुल्ये' इत्यर्थः । **कोऽर्थभेद इति** । दर्शनस्यापि बुद्धित्वादिति भावः । कोऽर्थभेद इति शङ्कां परिहरति– **ज्ञानिशब्दो हीति** ॥ कथं च स्तुतिः?इति चोद्यं परिहर्तुमुक्तम्– **मतुवादीनामिति** ॥ गीतायां मतुप्प्रत्ययस्य भाष्ये इनिप्रत्ययस्य च 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः' इति वैयाकरणवचनेन प्रशंसार्थत्वादित्यर्थः । 'मतुबादीनाम्' इत्यादिशब्देन लच्-इलच्-आदीनां मत्वर्थीयप्रत्ययानां ग्रहणम् । 'कर्मकृदित्येतत्' इत्यनन्तरं 'स्तुतित्वसिद्धये' इति योज्यम् । **मुख्ये**

सर्वकर्मकर्तृत्वरूपमुख्यार्थे । **कृत्स्नफलवत्त्वात्** इत्यत्र 'कृत्स्न' इत्यनन्तरं 'कर्म' इति योज्यमिति भावेन तत्फलं तन्महाफलं च वदन् मतुपस्तात्पर्यमाह– **कृत्स्नकर्मणामित्यादि** ॥ १८ ॥

**गीताक्षरार्थस्तु**– एवं सर्वथा ज्ञातव्यं 'तत्ते कर्म प्रवक्ष्यामि' इति प्रतिज्ञातं कर्मादिस्वरूपं प्रपञ्च्यते **कर्मणीति** ॥ वर्णाश्रमोचिते कर्मणि क्रियमाणे सत्यपि स्वस्य अकर्म कर्माभावं पश्येत् । भगवानेव स्वतन्त्रः कर्ता, अहं तु तद्दत्तकर्तृशक्तिः सन् करोमीति जानीयात् । अकर्मणि न विद्यते जीवकर्तृकं कर्म यस्मिन् आदिसृष्टिकाले सन्ध्ये च तदकर्म, तस्मिन् कर्म भगवतः पश्येत्, भगवानेवादिसृष्टौ महदादि, सन्ध्ये स्वाप्नं गजादिकं करोतीति जानीयादित्यर्थः । अनेन भगवतः परानपेक्षया कर्तृत्वं, स्वस्य तदधीनं च तज्ज्ञात्वा वर्णाश्रमविहितानुष्ठानं कर्मेति कर्मस्वरूपं व्याख्यातं भवति ॥

एवं कर्मस्वरूपप्रवचनेनैव भाष्योक्तलक्षणे विकर्माकर्मणीति प्रोक्तप्राये । 'कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः' इत्युक्तरूपकर्मादिस्वरूपज्ञानिनम् अनूद्य तस्य स्तवनं क्रियते स बुद्धि-मानित्यादिवाक्यत्रयेण । स बुद्धिमान् ज्ञानी । प्रशंसायां मतुप् । स एव युक्तः योगः चित्तनिरोधः । 'योगश्चित्तनिरोधः' इति द्वितीये भाषणात्, युक्तः । स एव च कृत्स्नकर्मणां फलस्य ज्ञानस्य मोक्षस्य प्राप्तप्रायत्वाद्गौण्या वृत्त्या कृत्स्नकर्मकृदिति ॥ १८ ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **सुप्त्यादिकमिति** ॥ सृष्टिसङ्ग्रहाय'आदि' इत्युक्तम् । ननु सुप्त्यादावीश्वरेण कर्मकरणात् कथमकरणावस्थेत्यत आह– **जीवापेक्षयेति** ॥ जीवकर्तृकरणा-भावापेक्षयेत्यर्थः । **उक्तलक्षण इति** ॥ अकर्मकर्माकरणमित्यादिनोक्तलक्षणे इत्यर्थः । अनेन तल्लक्षणं गीतासूचितमित्युक्तं भवति । **मतुवादीनामिति** ॥ भाष्ये 'ज्ञानी' इतीनेः प्रयोगादादि-शब्दः ॥ १८ ॥

**यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥**

## भाष्यम्

**एतदेव प्रपञ्चयति यस्य इत्यादिना श्लोकपञ्चकेन । उक्तप्रकारेण ज्ञानाग्निदग्धकर्माणम् ॥ १९ ॥**

श्लोकः १९

भावप्रदीपिका (प.टी.)– ननु कथं स्वातन्त्र्यमात्रं विना कृतं कर्म भवति, रागस्याप्यकर्तव्यत्वात् ? इत्यत आह– **एतदेवेति** ॥ नैतावदेव कर्म । उत्तरश्लोकैरपि रागाद्यभावसहितत्वेन कर्मैवोच्यत इत्यर्थः । किं तज्ज्ञानम् । कथं च तेन दग्धकर्मा भवति ? इत्यत आह– **उक्तेति** ॥ १९ ॥

भावप्रकाशिका (न.टी.)– ननु, 'स्वातन्त्र्यं मन्यमानस्य रागाद्धर्मं च कुर्वतः । तन्निमित्तस्तु दोपः स्यात्' इत्यादौ स्वातन्त्र्याद्यभिमानिकृतकर्मण इव फलकामादिकृत-कर्मणोऽपि दोपहेतुत्वोक्तेः कथमेतत् कर्मस्वरूपम्?इत्याशङ्क्य, उत्तरश्लोकैरपि कर्मस्वरूपस्यैव विस्तार्यमाणत्वान्न विरोध इति भावेनाह– एतदेवेति । यस्योक्तप्रकारेण भगवतः स्वतन्त्र-सर्वकर्मकर्तृत्वादिज्ञानात्, आत्मनश्च तत्प्रतिबिम्बभूतस्य केवलं तदायत्तचेष्टादिज्ञानात्, सर्वे समारम्भा अहं करिष्यामीति सङ्कल्पवर्जिताः, मत्कर्मणः फलं स्यादिति कामवर्जिताश्च, तं तेनैव ज्ञानेनैव दग्धकर्माणं बुधाः पण्डितं प्राहुरित्यभिप्रेत्याह– **उक्तेति** ॥ १९ ॥

प्रमेयदीपिका (ज.टी.)– ननु प्रतिज्ञातमुक्तम् । तत् किमुत्तरैः श्लोकैः? इत्यत आह– **एतदेवेति** ॥ कर्मस्वरूपमेव । अनेनात्रापि वाक्यभेदेन कामादिवर्जनं विधाय स्तुतिः क्रियत इति सूचितम् । 'मिथ्यात्वज्ञानेन कर्मणामुपमर्दो ज्ञानाग्निदग्धकर्मत्वम्' इति व्याख्यानमसदिति भावेन आह– **उक्तेति** ॥ परमेश्वरस्यैव कर्तृत्वं ज्ञात्वा स्वस्य स्वातन्त्र्येण कर्माभावज्ञानमेव ज्ञानाग्निदग्धकर्मत्वमित्यर्थः ॥ १९ ॥

भावबोधः (र.टि.)– ॥ **कामादिवर्जनं विधायेति** ॥ अनेन यच्छब्दपरित्यागेन भवेयुरिति पदाध्याहारेण विधिवाक्यं ज्ञातव्यमित्युक्तं भवति ॥ १९ ॥

भावदीपः (रा.टि.)– ॥ **अत्रापि वाक्यभेदेनेति** ॥ 'यस्य' इत्यस्य त्यागेन 'सर्वे समारम्भाः कामसङ्कल्पवर्जिताः कार्याः' इत्येकं वाक्यम्, 'यस्य सर्वे समारम्भाः कामसङ्कल्प-वर्जिताः तमेवमाहुः' इत्यपरं वाक्यमिति वाक्यभेदेनेत्यर्थः ॥ १९ ॥

**भावरत्नकोशः (सु.टि.)– ॥ प्रतिज्ञातं** कर्मस्वरूपम् । 'कर्मणि' इत्यत्र कर्मादिस्वरूपज्ञानं विधाय 'स बुद्धिमान्' इति तस्य स्तुतिः कृता । अस्य च तद्विवरणपरत्वे विधिरूपत्वं स्तुतिरूपत्वं चोपलभ्येत । न चैवम् । तस्य 'तं पण्डितमाहुः' इत्यनुवादमात्रोपलम्भादित्यत आह–

श्लोकः १९

**अनेनात्रापीति** ॥ 'एतदेव' इति भाष्येण 'यस्य सर्वे' इति श्लोकेऽपि यच्छब्दपरित्यागेन 'कार्या' इति पदाध्याहारेण च विधिवाक्यमेकम् । ततो 'यस्य तम्' इति वाक्यान्तरम् । तेन च स्तुतिः क्रियत इति ज्ञातव्यमित्येवं वाक्यभेदेनोभयमप्यत्राभिप्रेतमिति सूचितमिति युक्तं तत्प्रपञ्चनरूपत्वमिति भावः । 'कर्मादावकर्मादिदर्शनं ज्ञानम्' इति सङ्करभाष्यमर्थतोऽनुवदति– **मिथ्यात्वज्ञानेन** इति ॥ उक्तमेव प्रकारं दर्शयति– **परमेश्वरस्यैवेति** ॥ 'स्वातन्त्र्येण' इत्यत्राप्यनुकर्षः । 'एव' इति पर-व्याख्यानमयुक्तम्, कर्मणां मिथ्यात्वे 'कुरु कर्मैव तस्मात्त्वम्' इत्यादौ तद्विधानानुपपत्तेः । सर्वप्रमाणविरोधाच्चेति भावः । न चैवमस्यैव सङ्कल्पत्यागरूपत्वात् 'सङ्कल्पवर्जिताः' इत्यत्रोक्त-मेवेदमपीति पुनरुक्तिरिति वाच्यम् । सङ्कल्पत्यागस्य स्वातन्त्र्येण कर्तृत्वभ्रमाभावरूपत्वात्, स्वातन्त्र्येण कर्माभावज्ञानस्य च तत्र स्वामित्वाभावज्ञानरूपत्वात्, तयोश्च महावैलक्षण्यादिति द्रष्टव्यम् । तथा च प्राचीनटीका । 'अहं करोमि' इति भावना सङ्कल्प इति ॥ १९ ॥

**गीताक्षरार्थस्तु-** 'कर्मण्यकर्म यः पश्येत्' इत्यत्रोक्तं कर्मस्वरूपमेव प्रपञ्च्यते यस्येत्यादि-श्लोकपञ्चकेन । समारभ्यन्त इति समारम्भाः कर्माणि कामसङ्कल्पवर्जिताः कामः फलेच्छा । 'अहं करिष्यामि' इति भावना सङ्कल्पः, ताभ्यां वर्जिताः । 'कार्याः' इति शेषः । ततः यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः तं परमेश्वरस्यैव कर्तृत्वं ज्ञात्वा स्वस्य स्वातन्त्र्येण कर्माभावं जानन्तं ज्ञानाग्निदग्धकर्माणम् उक्तलक्षणज्ञानमेवाग्निः, तेन दग्धानि कर्माणि मोक्षविरोधीनि यस्य तम्, अत एव पण्डितम् आहुः तत्त्वज्ञा इति योज्यम् ॥ १९ ॥

**भावदीपिका (श्री.टि.)– ॥ प्रतिज्ञातमिति** ॥ 'तत्ते कर्म प्रवक्ष्यामि' इति प्रतिज्ञातं कर्मेत्यर्थः ॥ **कामादिवर्जनं विधायेति** ॥ यच्छब्दपरित्यागेन 'भवेयुः' इति पदाध्याहारेण विधिवाक्यमेकम् । पश्चाद्यच्छब्दादियोगेन च समग्रस्तुतिवाक्यमपरं द्रष्टव्यमित्यर्थः । उपमर्दः परित्यागः ॥ १९ ॥

**भावप्रकाशः (कृ.टि.)– ॥ कामादिवर्जनं विधायेति** ॥ अनेन यच्छब्दं परित्यज्य भवेयु-रिति चाध्याहृत्य विधिवाक्यं ज्ञातव्यमित्युक्तं भवति । **स्वातन्त्रेण कर्मभावज्ञानमेवेति** ॥ न चास्यैव सङ्कल्पत्यागरूपत्वात् 'सङ्कल्पवर्जिताः' इत्यनेन पुनरुक्तिरिति वाच्यम् । सङ्कल्पत्यागस्य स्वातन्त्र्येण कर्तृत्वभ्रमाभावरूपत्वात् । स्वातन्त्र्येण कर्माभावज्ञानस्य तु 'इदमन्यगृहं मम तु

स्वातन्त्र्येण गृहं नास्ति' इतिवत् तत्तद्वस्तुस्वामित्वाभावज्ञानरूपत्वात्, तयोश्च महावैलक्षण्यादिति ॥ १९ ॥

**त्यक्त्वा कर्मफलाऽसङ्गं नित्यतृप्तो(ऽ)निराश्रयः ।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः ॥ २० ॥**

## भाष्यम्

**नच कामसङ्कल्पाभावेनालम् । आसङ्गं स्नेहं च त्यक्त्वा । ज्ञानस्वरूपम् आह पुनः– नित्यतृप्त इति । नित्यतृप्तनिराश्रयेश्वरसरूपोऽस्मीति तथाविधः ॥**

भावप्रदीपिका (प.टी.)– 'ममेदं फलं स्यात्, अहं कर्ता' इति कामसङ्कल्पौ विहाय, कृतं कर्मेत्युक्तम् । अथाप्यस्तीत्याह – **नचेति** ॥ ननु किमिति कामसङ्कल्पसंश्रयास्तज्ज्ञा इत्यत आह– **ज्ञानेति** । नित्यतृप्तनिराश्रयेश्वरसरूपत्वेन स्वस्यापि तादृशत्वाद्ध्यर्थौ कामा-सङ्गौ प्रतिविम्वत्वेना-कर्तृत्वानुसङ्कल्पोऽपि कार्य इत्यर्थः ॥ २० ॥

भावप्रकाशिका (न.टी.)– स्वारोपिताहङ्कारनिमित्तफलकामत्यागात्, स्वस्येश्वरा-धीनत्वादियाथार्थ्यज्ञानाच्च न कर्माणि वध्नन्तीत्युक्तम् । तत्र तावत् त्यागे विशेषमाह– **नचेति** ॥ फलकामाभावेऽपि यदि फले स्नेहः स्यात्, तथाऽपि वध्नन्ति कर्माणीति सोऽपि त्याज्य इत्यर्थः । ज्ञानेऽपि विशेषमाह– **ज्ञानस्वरूपमिति** । न केवलं चित्प्रतिविम्वत्वात् चित्त्वमात्रमस्य । किन्तु नित्यतृप्तनिराश्रयेश्वरप्रतिविम्वत्वात् स्वयं च नित्यतृप्तः । अत एव निराश्रयश्च अतृप्तो ह्यन्यान् आश्रयति । 'युक्ताश्च विम्वधर्माः प्रतिबिम्बे' इत्युक्तत्वात् । संसारे तु तृप्त्यादेरभिभूतत्वात् अन्यकामादिरपि भवति ॥ २० ॥

प्रमेयदीपिका (ज.टी.)– 'यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः' (४.१९) इत्यनेन यदुक्तं तदेव 'त्यक्त्वा कर्मफलाऽसङ्गम्' इत्यनेनोच्यते । सङ्कल्पो हि कर्मासङ्गः । कामश्च फलाऽसङ्ग इत्यतः सङ्गतिपूर्वमन्यथा व्याचष्टे– **नचेति** ॥ नैतावता कर्मस्वरूपं सम्पूर्णमित्यर्थः । 'किं तर्हि' इत्यध्याहारः ॥

श्लोकः २०

**'ननु नित्यतृप्तो निराश्रयः' इति साध्योऽर्थः । स कथं साधने निवेश्यते? इत्यत आह– ज्ञानेति ।। 'कर्मण्यकर्म '(४.१८) इत्यपेक्षया पुनरिति । मिथ्याज्ञानमेतदित्यतोऽभिप्रायमाह– नित्येति ।। इति हेतोरहमपि तथाविधः । किन्तु? अविद्यया तथा न प्रतीयत इति जानन्नित्यर्थः ।। २० ।।**

**भावदीपः (रा.टि.)– ।। इत्यपेक्षया पुनरिति ।।** 'सर्वदा हरिरेव कर्ता अहं तु तदधीनकर्ता' इति 'कर्मणि' इति श्लोके यज्ज्ञानस्वरूपमुक्तं तदपेक्षया अन्यथापि ज्ञानस्वरूपमुच्यत इति पुनरित्युक्तमित्यर्थः ।। **मिथ्याज्ञानमेतदिति ।।** नित्यतृप्तत्वादिज्ञानमित्यर्थः । भाष्यस्थेतिशब्दानुवादेनार्थमाह– **इति हेतोः ।। तथाविधः ।।** नित्यतृप्तत्वादिधर्मोपेत इत्यर्थः । तर्हीदानीं कुतः स धर्मो नोपलभ्यत इति भावेन 'किन्तु' इति प्रश्ने उत्तरम्– **अविद्यया इत्यादि** ।। २० ।।

**भावरत्नकोशः (सु.टि.)–** कर्म च फलं च कर्मफले, तयोरासङ्गः कर्मफलासङ्ग इत्यभिप्रेत्य पुनरुक्तिमुपपादयति – **सङ्कल्पो हीति ।। कर्मासङ्गः** 'कर्माहं करोमि' इत्यध्यवसायः । **फलासङ्गः** 'कर्मफलं मम स्याद्' इत्यभिलाषः । 'कामसङ्कल्पाभावेन' इति पूर्वश्लोकार्थानुवादादाह– **सङ्गतिपूर्वमिति ।।** 'अलम्' इत्यस्यार्थः– **'सम्पूर्णम्' इति ।। किं तर्हीति ।।** 'अलमित्यनन्तरम्' इति शेषः । 'आसङ्गम्' इत्यनूद्य 'स्नेहम्' इति व्याख्यानं भाष्ये । तत्र स्नेहः आसक्तिः प्रीतिः । स च कामादन्य एव । 'सङ्गात् सञ्जायते कामः' इति भगवतैव तयोः कार्यकारणभावस्योक्तत्वात् । तथा च पूर्वोक्तमेवात्रोच्यत इति न चोद्यावकाश इति भाष्यभावः स्फुटत्वान्नोक्तः । अत एव अन्यथा व्याचष्ट इत्येवोक्तम् ।

प्राचीनटीकायामपि **'फलकामाभावेऽपि यदि फले स्नेहः स्यात्, तथापि बध्नन्त्येव कर्माणीति सोऽपि त्याज्यः'** इति कामस्नेहौ पृथगभिहितौ । **साध्य** इति कर्मज्ञानफलरूपोऽर्थः । **साधने** कामादित्यागरूपसाधनवर्गे । **स कथं निवेश्यते** सहोच्यत इत्यर्थः । **इत्यपेक्षया पुनरितीति ।।** विष्णोरेव कर्म, नाहं चित्प्रतिबिम्बः किञ्चित्करोमीति पश्येदिति 'कर्मण्यकर्म' इत्यत्र यज्ज्ञानस्वरूपमुक्तं तदपेक्षया 'नित्यतृप्तनिराश्रयेश्वरसरूप' इतीत्थंभावान्तराभिधानाय पुनर्ज्ञानस्वरूपमुच्यत इति भावेन भाष्ये पुनरुक्तमित्यर्थः । **मिथ्येति ।।** संसारे तृप्त्यादिकमेव नास्ति । नित्यतृप्त्यादिस्तु सुतरामिति तद्बोधो मिथ्याज्ञानमेवेत्यर्थः । भाष्यस्थेतिशब्दम् अनूद्य तदर्थमाह – **इति हेतोरिति ।।**

श्लोकः २१

**तथाविधः** नित्यतृप्त्यादिधर्मोपेतः । 'युक्ताश्च बिम्बधर्माः प्रतिबिम्बे' इत्युक्तत्वादिति भावः । तर्हीदानीं स धर्मः कुतो नोपलभ्यते ? इति पृच्छति– **किन्त्विति** ॥ उत्तरमाह– **अविद्ययेति** ॥२०॥

**गीताक्षरार्थस्तु**– कामसङ्कल्पहीनतामात्रेण न कर्मस्वरूपं परिपूर्णम्, किं तर्हि? कर्मफलस्नेहत्यागेनापि भाव्यमित्युच्यते त्यक्त्वेति । कर्मफले आसङ्गं स्नेहं च त्यक्त्वा नित्यतृप्तो निराश्रयः नित्यतृप्तनिराश्रयेश्वरस(स्व)रूपोऽस्मीति जानन् तथोच्यते । स कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति इत्यस्य कर्म कुर्वन् नाप्नोति किल्बिषमिति भगवानेव तात्पर्यं वक्ष्यति ॥ २० ॥

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।**
**शारीरं केवलं कर्म कुर्वन्नाऽप्नोति किल्बिषम् ॥ २१ ॥**

## भाष्यम्

**कामादित्यागोपायमाह– निराशीरिति ॥ यतचित्तात्मा भूत्वा निराशीरित्यर्थः । आत्मा मनः । परिग्रहत्यागोऽनभिमानम् ॥**

भावप्रदीपिका (प.टी.)– ननु त्याज्यमेव कामादि, तथाऽपि केनोपायेन त्यज्यते ? इत्याशङ्क्य, उत्तरश्लोकमवतार्य व्याचष्टे – **कामादीति** ॥ 'आत्म'शब्देन मन एव, न सेन्द्रियो देह इत्याह – **आत्मेति** ॥ नन्वयं कामत्यागोपाय एवोच्यते न सङ्कल्पत्यागोपाय इत्यत आह– **परिग्रहेति** ॥ तथाऽपि (विषय)स्मरणकारणचित्तनिग्रहे कामो नोदेति । सङ्कल्पात्मकमनोजये(नियमने-पां) सङ्कल्पत्यागो भवतीत्यर्थः ॥

भावप्रकाशिका (न.टी.)– तत्त्यागोपायपरतयैतत् तृतीयं श्लोकमवतारयति– **कामादीति** ॥ निराशीस्त्वं त्यक्तकामता । तत्र यतचित्तात्मत्वं साधनमिति भावेन योजयति– **यतेति** ॥ नात्रात्मशब्देन सेन्द्रियो देह उच्यते । मनोनिरोधेनैव तन्निरोधसिद्धेः । अतो मन एवेति भावेनाह आत्मेति । ननु परिग्रहत्यागस्य कामादित्यागोपायत्वे परिग्रहिणां कामाद्युपहतिः स्यादित्यत आह– **परीति** ॥ तथा हि मोक्षधर्मे जनकवाक्यम्–

'ससुखं वत जीवामि यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन ॥' इति ।

श्लोकः २१

**प्रमेयदीपिका (ज.टी.)**– कामादिवर्जितत्वमेव निराशीः इत्यनेनोच्यत इत्यत आह– **कामादीति** ॥ आदिपदेन सङ्कल्पादिपरिग्रहः । कथम्? इत्यतो योजयति– **यतेति** ॥ निराशीः 'त्यक्तसर्वपरिग्रहश्च भवति' इति शेषः । 'सेन्द्रियं शरीरमात्मा' इत्यसत् । अन्तःकरणवृत्ति-नियमेनैव तन्नियमसिद्धेरिति भावेनाऽऽह– **आत्मेति** ॥ ननु परिग्रहो देहादिः । तत्त्यागः कथं साधकस्य? इत्यत आह– **परिग्रहेति** ॥ अनभिमानम् इति स्थितिः इत्यादिक्रियाविशेषणम् । अर्थाभावे अव्ययीभावो वाऽयम् । अभिमानाभाव इत्यर्थः ॥

**भावबोधः (र.टि.)**– ॥ **स्थितिरित्यादि क्रियाविशेषणमिति** ॥ आदिपदेन चक्षुषा दर्शनं श्रोत्रेण श्रवणमित्यादि समस्तेन्द्रियव्यापारस्य ग्रहणम् । एवंरूपक्रियाविशेषणमित्यर्थः । ततश्चा-नभिमानं यथा भवति, तथा शरीरे स्थितिः, चक्षुषा दर्शनमित्यादिरेव परिग्रहत्यागशब्दार्थ इति भाष्यार्थ इति भावः । **अव्ययीभावो वाऽयमिति** ॥ तथा च 'अनभिमानम्' इति नपुंसको-पपत्तिरिति भावः ॥

**भावदीपः (रा.टि.)**– ॥ **सङ्कल्पादिपरिग्रहः** ॥ सङ्कल्पफलस्नेहयोर्ग्रहणमित्यर्थः ॥ **कथ-मिति** ॥ त्यागोपायोक्तिः कथमित्यर्थः ॥ नपुंसकत्वनिर्वाहायाऽऽह – **स्थितिरित्यादीति** ॥ भाष्ये 'स्थितिः दर्शनं स्पर्शनं श्रवणमाघ्राणम्' इत्यादिक्रियाध्याहारः । अनभिमानं यथा भवति तथा देहादौ स्थितिः चक्षुरादिना रूपादिदर्शनादिकमित्यर्थः ॥ द्वितीयाध्यायान्त्यपादे 'स नपुंसकम्' (पा.सू.२.४.१७) इत्यधिकारे 'अव्ययीभावश्च' (पा.सू.२.४.१८) इति सूत्रे 'पथश्च सङ्ख्या-व्ययादेः क्रियाविशेषणानां द्वितीयैकवचनं नपुंसकम्' इति वार्तिके क्रियाविशेषणस्य नपुंसकत्वैक-वद्भावयोरुक्तेरत्र नपुंसकत्वं साध्विति क्रियानध्याहारेणैव समाधिमाह – **अर्थाभाव इति** ॥ 'अव्ययं विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभाव' (पा.सू.२.१.६) इत्यादिसूत्रे 'अर्थाभावे यदव्ययं तत्सुबन्तेन समस्यत सोऽव्ययीभावः' इत्युक्तेः 'विवादाभावोऽविवादम्' इत्यादाविवाभिमानाभावोऽनभिमान-मित्यर्थः ॥

**भावप्रदीपिका (प.टी.)**– ननु परिग्रहत्यागोऽनभिमान इति वक्तव्यम् । 'अनभिमानम्' इति कथम्? इत्यत आह– अनभिमानमितीति स्थितिः इत्यादिक्रियाध्याहारभिया पक्षान्तर-माह– **अर्थाभाव इति** ॥ **अव्ययीभावो वायमिति** ॥ तथाच नायम् 'न अभिमानो अनभि-मान' इति तत्पुरुषः । येन नपुंसकत्वानुपपत्तिः स्यात् । किं नाम 'मक्षिकाणामभावो

श्लोकः २१

निर्मक्षिकम्' इत्यादाविव 'अव्ययं विभक्तिसमीपवृद्ध्यर्थाभाव' इत्यादिना 'अभिमानाभावोऽनभिमानम्' इति 'अर्थाभावोऽव्ययीभावसमास एव । तस्य च 'अव्ययीभावश्च' इति सूत्रेण नपुसंकत्वानुशासनादनभिमानम्' इति यथास्थितमेवोपपन्नमिति भावः ॥

**भावरत्नकोशः (सु.टि.)**– 'कामना आशासनम्' इत्यनर्थान्तरत्वादाह– **कामेति** ॥ 'सङ्कल्पादि' इत्यादिपदेन स्नेहः ग्राह्यः ॥ **कथमिति** ॥ 'निराशीः' इत्यादेः कामा-दित्या-गोपायत्वोक्तित्वं कथमित्यर्थः । 'निराशीः' इत्यनूद्यानन्तरं शेषमाह– **त्यक्तेति** ॥ 'आत्मा बाह्यः कार्यकारणसङ्घातः' इति सङ्करभाष्यमर्थतोऽनुवदति– **सेन्द्रियमिति** ॥ परेणापि 'चित्तम् अन्तःकरणम्' इति भाषणादुक्तम्– **अन्तःकरणेति** ॥ **तन्नियमसिद्धेः** शरीरनियमसिद्धेः ॥

नन्वत्र पक्षे 'चित्तं च आत्मा मनश्च तौ । यतौ चित्तात्मानौ येन स यतचित्तात्मा' इति हि व्युत्पत्तिरभिमता । तथाच पुनरुक्तिः स्यात् । चित्तमनःशब्दयोः पर्यायस्मरणादिति चेन्न । विषयस्मरणकारणचित्तनियमने कामो नोदेति । सङ्कल्पात्मकमनोनियमने सङ्कल्पत्यागो भवति' इति भावप्रदीपिकायां स्फुटमर्थभेदाभिधानात् । 'चित्तं तु चेतो हृदयम्' इत्यभिधानं तु तत्र विशेषाविवक्षया प्रवृत्तमिति ॥ नन्वभिमानशब्दस्तावत्पुंलिङ्गः । अभिपूर्वात् 'मन ज्ञाने' इत्यतो घञि निष्पन्नत्वात् । तथाऽमरः 'गर्वोऽभिमानोऽहङ्कारः' इति । अभिमानशब्दस्य नञ्समासे नञ्तत्पुरुषस्यापि पुंस्त्वमेव । 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इत्यनुशासनात् । तत्कथम् 'अनभिमानम्' इति क्लीवत्वमित्यत आह– **अनभिमानमितीति** ॥ क्रियाविशेषणस्य च 'क्रियाविशेषणानां च' इति वार्तिके नपुंसकत्वानुशासनाद् युक्तं भाष्यमिति भावः । क्रियैव नात्र श्रूयते, यद्विशेषणत्वेन क्लीबत्वम् इत्यत उक्तम्– **स्थितिरित्यादीति** ॥ आदिपदेन चक्षुषा दर्शनम्, श्रोत्रेण श्रवण-मित्यादिरूपेण समस्तेन्द्रियव्यापारभूतदृष्टश्रुत्यादिग्रहणम् । 'अध्याहृत' इत्युपस्कर्तव्यम् ।

नन्वेवं सति 'नास्त्यभिमानो यस्मिन् कर्मणि तद्यथा तथा' इति बहुव्रीहिरङ्गीकृतः स्यात् । अन्यथा क्रियाविशेषणत्वानिर्वाहात् । तथा च वर्तिपदार्थप्रधानसमासपरित्यागेन अन्यपदार्थ-प्रधानसमासाभ्युपगमो दोषः । 'स्थितिः' इत्यादि अश्रुतक्रियाकल्पनम् । 'परिग्रहत्यागोऽनभि-मानम्' इति श्रुतसामानाधिकरण्यभङ्गश्चेत्यनुशयादाह– **अर्थाभाव इति** ॥ 'अव्ययं विभक्तिसमीप-समृद्धिव्यृद्धिअर्थाभाव' इत्यादिसूत्रेण अर्थाभावे वर्तमानस्य नञाख्याव्ययस्य अभिमानपदेन अव्ययीभावसमासे 'कृत्तद्धितसमासाश्च' इति समासत्वेन प्रातिपदिकत्वात् सुबुत्पत्तौ तस्य

श्लोकः २१

'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति लुक्प्रतिषेधेन अमादेशे 'अव्ययीभावश्च' इति नपुंसकत्वे च 'अनभिमानम्' इति रूपे अभिमानाभाव इत्यर्थः सम्पद्यते । देहादिरूपपरिग्रहे सत्यपि तदभिमानाभाव एव परिग्रहत्याग इति विवक्षित इति न कोऽपि दोष इति भावः । तथा च प्राचीनटीका । 'तथा हि मोक्षधर्मे जनकवाक्यम्

ससुखं बत जीवामि यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे किञ्चन दह्यते' ।। इति ।

**भावदीपिका (श्री.टि.)**– ।। 'सङ्कल्पादि' इत्यत्राऽदिपदेन कर्मफलासङ्गपरिग्रहः ।। **कथमिति** ।। कामादित्यागोपायः कथमनेनोक्त इत्यर्थः । फलं कदा भविष्यतीति कालप्रतीक्षा आशेत्युच्यत इति आहुः । 'निराशी' इत्यनन्तरं शेषं पूरयति– **त्यक्तेति** ।। **अन्तःकरणवृत्तीति** ।। मनोवृत्तीत्यर्थः । **तन्नियमनेति** ।। सेन्द्रियशरीरनियमनेत्यर्थः ।। 'यथा ह वै पञ्चधा व्यपदिश्यते मनोबुद्धिरहङ्कारश्चित्तं चेतना' इति श्रुतेश्चित्तं मनःप्रभेद इति ज्ञातव्यम् ।।

'अनभिमानम्' इति नपुंसकोपपत्त्यर्थमाह– **इति स्थितिरिति** ।। 'शरीरे' इति शेषः । तथा चानभिमानं यथा स्यात्तथा शरीरे स्थितिरेव परिग्रहत्याग इति स्थितिरूपक्रियाविशेषणम् । 'तथा' इत्यादिपदाद् अनभिमानं यथा स्यात्तथा चक्षुषा दर्शनम्, श्रोत्रेण श्रवणमित्यादिसमस्तेन्द्रिय-व्यापारग्रहणेन दर्शनादिक्रियाविशेषणत्वेन नपुंसकत्वोपपत्तिरिति भावः । नपुंसकत्वोपपत्तये समाधानान्तरमाह– **अर्थाभाव इति** ।। 'अव्ययं विभक्तिसमीपसमृद्धिवृद्धिअर्थाभाव' इत्यादिसूत्रेण 'अनभिमानम्' इत्यर्थाभावेऽव्ययीभावसमासोऽयमित्यर्थः । तर्हि कथमर्थः सम्पन्न इत्यत आह– **अभिमानाभाव इति** ।। मक्षिकाणामभावो निर्मक्षिकमितिवद् अभिमानाभावोऽनभिमानमित्यर्थः। अभावेऽव्ययीभावसमासत्वे 'अव्ययीभावश्च' 'अव्ययीभावो नपुंसकं स्यात्' इति सूत्रेणाव्ययी-भावस्य नपुंसकत्वविधानात् 'अनभिमानम्' इति नपुंसकोपपत्तिरिति भावः ।।

**भावप्रकाशः (कृ.टि.)**– ।। **कामवर्जितत्वमेवेति** ।। इदमुपलक्षणम् । 'त्यक्तसर्वपरिग्रहः' इत्यनेन सङ्कल्पवर्जितत्वं कर्मफलासङ्गत्यागश्चोच्यत इत्यपि ग्राह्यम् । 'त्यक्तसर्वपरिग्रह' इत्यस्य 'अनभिमानम्' इति व्याख्यानात् । अभिमानश्चानेकविधो 'मात्रास्पर्शा' इत्येतट्टीकायामुक्तः । तत्र यदा कर्मस्वातन्त्र्यभ्रमरूपकर्तृत्वाभिमानत्यागोऽनभिमानपदेन विवक्षितस्तदा सङ्कल्पवर्जितत्वस्य

शोभनाध्यासनिमित्तकस्नेहरूपाभिमानविवक्षायां च कर्मफलासङ्गत्यागस्य च लाभादिति भावः । ममतातिशयहेतुकाविवेकरूपदेहाद्यभिमानत्यागोऽपि तत्पदेन लक्ष्यत इत्यन्यदेतत् । **सङ्कल्पादीति** ॥ आदिपदेन कर्मफलस्नेहो विवक्षितः । फलेच्छाकामः कर्मसु स्वातन्त्र्यभ्रमः सङ्कल्पः 'नैव किञ्चित् करोमि' इत्येतट्टीकायां कर्तृत्वाभिमानत्यागस्य सङ्कल्पत्यागत्वोक्त्योक्तविधकर्तृत्वाभिमानः सङ्कल्प इति सूचनात् । दुष्फलस्नेहश्चान्तःकरणवृत्तिविशेषो विजातीय एवेति ज्ञेयम् ।

ननु 'अनभिमानम्' इति क्लीबत्वं कथम् । अभिमानशब्दस्य पुंस्त्वेन तद्धटितनञ्तत्पुरुषस्यापि तत्त्वावश्यम्भावात् । 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इत्युक्तेरित्यत आह– **अनभिमानमितीति** ॥ तथा च क्रियाविशेषणत्वात् क्लीबत्वम् । 'क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वं च वाच्यम्' इत्युक्तेरिति भावः । क्रियाया अश्रवणात् कथं तद्विशेषणत्वम्? इत्यत उक्तम्– **स्थितिरित्यादीति** ॥ आदिपदेन 'चक्षुषा दर्शनम्' इत्यादिरूपेण समस्तेन्द्रियव्यापारग्रहणम् । तथा च स्थित्यादि-क्रियाध्याहारादुक्तं युक्तमिति भावः ॥

नन्वेवं सति 'अनभिमानम्' इति बहुव्रीहिरित्यापन्नम् । अन्यथा क्रियाविशेषणत्वायोगात् । तथा च वर्तिपदार्थप्रधानसमासत्यागेनान्यपदार्थप्रधानसमासाङ्गीकारदोषः । 'स्थितिः' इत्यश्रुतपल्पनं परिग्रहत्यागः, 'अनभिमानम्' इति श्रुतसामानाधिकरण्यभङ्गश्चेत्यस्वरसादाह– **अर्थाभाव इति** ॥ 'अव्ययं विभक्ति' इत्यादिसूत्रेणार्थाभावे वर्तमानस्य नञाख्याव्ययस्याभिमानपदेनाव्ययीभाव इत्यर्थः । ततश्चानभिमानशब्दस्य 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकत्वात् सुबुत्पत्तौ तस्य 'नाव्ययीभावाद् अतोऽम्त्वपञ्चम्याः' इति लुक्प्रतिषेधेनामादेशे 'अनभिमानम्' इत्युपपन्नमिति भावः ॥

## भाष्यम्

**'नैव किञ्चित् करोति' (४.२०) इत्यस्याभिप्रायमाह– नाऽप्नोति किल्बिष-मिति ॥ २१ ॥**

भावप्रदीपिका (प.टी.)– ननु प्रवृत्तोऽपि न करोतीति विरुद्धमित्याशङ्कोत्तरत्वेनोत्तर-पदमवतारयति– **नैवेति** ॥ २१ ॥

**भावप्रकाशिका (न.टी.)– ननूक्तोपायेन यस्त्यक्तकामादिः स कर्मणि अभितः सर्वतः सर्वस्मिन् विहिते कर्मणि प्रवृत्तोऽपि नैव किञ्चित् करोतीत्यतिविरुद्धमित्याशङ्कापरिहारत्वेन**

श्लोकः २१

श्लोकशेषं व्याचष्टे – **नैवेति** ॥ द्विविधं हि कर्मफलम् । फलकामकर्माहङ्कारादिनिमित्तदोषात्मकं 'सर्वारम्भा हि दोषेण' इत्यादावुदितम्, सुकर्मजनितगुणात्मकं च (इति)। एवंसति यः सर्वमपि विहितं कर्म केवलं शारीरमेव करोति सेन्द्रियशरीरमात्रनिर्वर्त्यं न तु 'अहं करिष्ये', 'अत एव (न) तत्फलं मे स्यात्', 'तदपि प्रियं मम' इति मनसि निरूढम् (भावयति), सः फलकामकर्माहङ्कारादिनिमित्तकिल्बिषं नाप्नोति । किन्तु सुकर्मजनितगुणमेवेति 'नैव किञ्चित्करोति' इत्यस्यार्थ इति, नैव किञ्चित्करोतीत्यस्याभिप्रायमाह– **नाप्नोति किल्बिषमिति** ॥ २१ ॥

**प्रमेयदीपिका** (ज.टी.)– पूर्वश्लोके 'कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः' इति कर्मणां मिथ्यात्वज्ञानात्' इति व्याख्यानमसत् । अत्र श्लोकेऽन्यथा तदभिप्रायस्य वर्णितत्वादिति भावेनाऽह– **नैवेति** ॥ गौण्या वृत्त्येदमभिप्रायकथनमित्यवधेयम् ॥ २१ ॥

**भावबोधः** (र.टि.)– ॥ गौण्या वृत्त्येति ॥ कर्माकर्तरि किल्बिषाप्राप्तिलक्षणो यो गुणोऽभिमानत्यागेन कर्मकर्तर्यपि तादृशगुणयोगात् कर्मणि प्रवृत्तोऽपि नैव करोतीत्युच्यत इत्यर्थः ॥

**भावदीपः** (रा.टि.)– ॥ गौण्या वृत्त्येति ॥ कर्माकरणस्येव कर्मकरणस्यापि फला-निष्पादकत्वगुणयोगाद् गौण्या वृत्त्या 'नैव किञ्चित् करोति' इत्यस्य न किञ्चित् किल्बिषरूपं तत्फलमाप्नोतीत्येवमभिप्रायकथनं कृष्णस्येत्यर्थः ॥ २१ ॥

**भावरत्नकोशः** (सु.टि.)– 'निष्क्रियात्मदर्शनसम्पन्नत्वान्नैव किञ्चित्करोति सः' इति सङ्कर-भाष्यं तात्पर्यतोऽनुवदति– **कर्मणां मिथ्यात्वज्ञानादिति** ॥ ननु 'नैव किञ्चित्करोति' (४.२०) इत्यस्य 'कुर्वन् नाप्नोति किल्बिषम्' इत्येतत् कथं तात्पर्यकथनरूपम् ? 'नैव' इति कर्ममात्रकरण-प्रतिषेधेन 'कुर्वन् नाप्नोति' इति किल्बिषप्राप्तिप्रतिषेधेन च तयोर्भिन्नार्थत्वप्रतीतेरित्यत आह– **गौण्या वृत्त्येति** ॥ 'नैव किञ्चित् करोति' इत्यत्र सर्वथा कर्ममात्रमकुर्वतो विकर्माकरणेन यथा किल्बिषाप्राप्तिः, तथा शारीरं केवलं कर्म कुर्वतो नैव किल्बिषप्राप्तिरिति किल्बिषाप्राप्तिलक्षण-गुणयोगाद् गौणीवृत्तिरिष्टा । तथा च 'नैव किञ्चित्करोति' इत्यस्य 'नैव किल्बिषमाप्नोति' इति तात्पर्यकथनं युक्तमित्यर्थः ॥

श्लोकः २२

प्राचीनटीकायां तु 'ननूक्तोपायेन यस्त्यक्तकामादिः स कर्मणि अभितः सर्वतः सर्वस्मिन् विहिते प्रवृत्तोऽपि नैव किञ्चित्करोतीत्यतिविरुद्धम् इत्याशङ्कापरिहारत्वेन श्लोकशेषं व्याचष्टे – **नैवेति** ॥ द्विविधं कर्मफलम् । फलकामकर्माहङ्कारादिनिमित्तदोषात्मकम् 'सर्वारम्भा हि दोषेण' इत्यादावुदितं, सुकर्मजनितगुणात्मकं चेति । एवं सति यः सर्वमपि विहितं केवलं शारीरम् एव करोति सेन्द्रियशरीरमात्रनिर्वर्त्यं 'न त्वहं करिष्ये', 'अत एव न तत्फलं मम स्यात्', 'तदपि प्रियं मम' इति मनसि निरूढं भावयति, स फलकामकर्माहङ्कारादिनिमित्तकिल्बिषं नाप्नोति । किन्तु सुकर्मजनितगुणमेवेति 'नैव किञ्चित्करोति' इत्यस्यार्थ इति, नैव किञ्चित्करोतीत्यस्याभिप्रायमाह– **'नाप्नोति किल्बिषमिति'** इति भाष्यं व्याख्यातम् ॥ २१ ॥

**गीताक्षरार्थस्तु** - कामसङ्कल्पस्नेहत्यागोपाय उच्यते– **निराशीरिति** । यतौ नियतौ चित्तात्मानौ चित्तमनसी येन स तथाविधो भूत्वा निराशीः निर्गता आशिषो यस्मात् स तथा, त्यक्ताः सर्वे परिग्रहाः देहेन्द्रियादिरूपा येन स तथा त्यक्तदेहाद्यभिमान इत्यर्थः । स च 'भवति' इति शेषः । सः केवलं शारीरमेव कर्म कुर्वन् । कोऽर्थः ? सेन्द्रियशरीरमात्रनिर्वर्त्यम्, 'न त्वहं करिष्ये', 'अत एव न मम तत्फलं स्यात्', 'तदपि प्रियं मम' इति मनसि भावयित्वा कर्म कुर्वन्नपि किल्बिषं कामकर्माहङ्कारादिनिमित्तपापं नाप्नोति । अनेन 'कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति इत्येतदतिविरुद्धम्' इत्यपि चोद्यं परिहृतम् । कर्मफलसङ्गाभावात् तन्निबन्धनदोषराहित्यमेव सेन्द्रियशरीरनिर्वर्त्यकर्मकारिणोऽप्यकर्तृत्वमेवेति तात्पर्यात् ॥ २१ ॥

**भावदीपिका (श्री.टि.)– ॥ गौण्या वृत्त्येति ॥** कर्माकर्तरि किल्बिषाप्राप्तिरूपो यो गुणस्तादृशस्याभिमानत्यागेन कर्मकर्तर्यपि साम्यात् 'कर्मणि प्रवृत्तोऽपि नैव किञ्चित्करोति' इति गौण्या वृत्त्योच्यत इत्यर्थः ॥ २१ ॥

**भावप्रकाशः (कृ.टि.)–** ननु 'नैव किञ्चित् करोती'त्यनेन कर्माकरणमुक्तम् । 'नाप्नोती'-त्यनेन किल्बिषाप्राप्तिः । तत्कथं तदभिप्रायकथनमेतदित्यत आह– **गौण्येति** ॥ अभिमानत्यागेन कर्मकर्तरि कर्माकर्तृनिष्ठकिल्बिषाप्राप्तिरूपगुणयोगादिति भावः ॥ २१-२२ ॥

**यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।**
**समः सिद्धावसिद्धौ च कृत्वाऽपि न निबद्ध्यते ॥ २२ ॥**

# भाष्यम्

**यतचित्तात्मनो लक्षणमाह– यदृच्छालाभेति ॥ कथं द्वन्द्वातीतत्वम्? इत्याह– समस्सिद्धाविति ॥ २२ ॥**

भावप्रदीपिका (प.टी.)– यतचित्तात्मैव कीदृशः येन कामादिक्षयः ? इत्याशङ्क्य, उत्तरं श्लोकमवतारयति– **यतेति** ॥ कामाद्यभावे कथं चित्त्वम् ? अतो द्वन्द्वत्यागो युक्त इत्याशङ्क्य, तृतीयपादमवतारयति– **कथमिति** ॥ न साक्षाद्द्वन्द्वत्यागः, किन्तु सिद्ध्यसिद्ध्योर्दुःखदोषाभाव एवेत्यर्थः ॥ २२ ॥

भावप्रकाशिका (न.टी.)– ननूत्तरश्लोके 'कर्मण्यकर्म' इति श्लोकार्थलेशस्याप्यप्रतीतेः कथं तत्प्रपञ्चात्मकत्वमित्यत आह– **यतेति** ॥ 'कर्मण्यकर्म' इति श्लोकोक्तो यः कर्माहङ्कारादिः, तदुपायभूतयतचित्तात्मक-त्वलक्षणोक्तेस्तत्प्रपञ्चात्मकत्वमिति भावः ॥

ननु कामक्रोधादिराहित्यं द्वन्द्वातीतत्वम् । तत्र कामाभावे घटादिवज्जडत्वापत्तेः न कस्यापि कामत्यागः । क्रोधोऽपि न सर्वात्मना त्यक्तुं शक्यः । कामादेव क्रोधदर्शनात् । 'कामं दहन्ति कृतिनो ननु रोषदृष्ट्या' इति वचनादिति भावेनाशङ्कते– **कथमिति** ॥ तामाशङ्कां 'द्वन्द्वातीत' पदं व्याचक्षाणो भगवानेव परिहरतीति भावेन तृतीयं पादमवतारयति– **आहेति** ॥ यथा यदृच्छया यत्किञ्चिदाहारादिसिद्धौ नाधिकं वाञ्छति, नाल्पदातारं कुप्यति । तथा कदाचिदाहारादेरसिद्धावपि नान्यतो वाञ्छति, अदातारं च न कुप्यतीत्येतदेव च द्वन्द्वातीतत्वम् । न तु सर्वथा कामक्रोधादिराहित्यमिति भावः ॥ २२ ॥

प्रमेयदीपिका (ज.टी.)– कामादिवर्जने यदृच्छालाभसन्तुष्टत्वादिकमर्थात् सिद्धम् । तत् किमर्थमुच्यत इत्यत आह– **यतेति** ॥ द्वन्द्वातीतः इत्युक्तमेव 'समस्सिद्धावसिद्धौ च' इत्यनेनोच्यत इत्यत आह– **कथमिति** ॥ किंप्रकारकमित्यर्थः । **इति** 'जिज्ञासायाम्' इति शेषः । व्याख्यानव्याख्येयत्वे न पुनरुक्तिदोष इत्यर्थः ॥ २२ ॥

भावदीपः (रा.टि.)– ॥ न पुनरुक्तीति पदविभागः ॥ २२ ॥

भावरत्नकोशः (सु.टि.)– ॥ 'कामादिवर्जने' इत्यत्रादिपदेन सङ्कल्पफलस्नेहौ ग्राह्यौ ।

श्लोकः २३

**यतेतीति** ॥ यतचित्तात्मा भूत्वा निराशीस्त्यक्तसर्वपरिग्रहश्च भवतीत्युक्तम्। तत्र चित्तात्म-नियमनस्यान्तरत्वेन तत्त्वं केन लक्षणेन ज्ञातव्यमिति जिज्ञासायां यदृच्छालाभसन्तुष्टः' इत्यादिना तस्य लक्षणमत्रोच्यत इत्यर्थवदेव तद्वचनमिति भावः ॥ उच्यते इत्यनन्तरम् 'इति पुनरुक्तिः' इति शेषः । अनेन पुनरुक्तिदोषः कथं परिहृत इत्यत आह– **व्याख्यानेति** ॥ 'द्वन्द्वातीतः' इति व्याख्येयम्, 'समः सिद्धावसिद्धौ च' इति व्याख्यानमित्यभ्युपगमे पुनरुक्तिदोषो नेत्यर्थ इति भावः ।

प्राचीनटीकायां तु 'कामक्रोधादिराहित्यं द्वन्द्वातीतत्वम् । तत्र कामाभावे घटादिवज्जडतापत्तेर्न कस्यापि कामत्यागः । क्रोधोऽपि न सर्वात्मना त्यक्तुं शक्यः । कामादेव क्रोधदर्शनात् । 'कामं दहन्ति कृतिनो ननु रोषदृष्ट्या' इति वचनादिति भावेन शङ्कते– **कथमिति** ॥ इमामाशङ्कां द्वन्द्वातीतपदं व्याचक्षाणो भगवानेव परिहरतीति भावेन तृतीयपादमवतारयति– **आहेति** ॥ यथा यदृच्छया यत्किञ्चिदाहारादिसिद्धौ नाधिकं वाञ्छति नाल्पदातारं कुप्यति, तथा कदाचिदाहारादेर-सिद्धावपि नान्यद्वाञ्छति अदातारं च न कुप्यतीत्येतदेव द्वन्द्वातीतत्वम्, न तु सर्वथा कामक्रोधादिराहित्यमिति भाव इति 'कथम्' इत्यादिभाष्यं व्याख्यातम् ॥ २२ ॥

**गीताक्षरार्थस्तु** - यतचित्तात्मनो लक्षणमुच्यते– **यदृच्छेति** ॥ भगवदिच्छाप्राप्तेन लाभेन तुष्टिमान् तृप्तिमान् सुखदुःखशीतोष्णादिद्वन्द्वान्यतीतः विमत्सरः स्वानधीनत्वनिमित्तचित्ततोदहीनः । किंप्रकारं द्वन्द्वातीतत्वमिति जिज्ञासायां व्याख्यायते– **सम इति** ॥ विषयसिद्ध्यसिद्ध्यो-रुत्सेकानुत्सेकहीनत्वमेव तदिति । एवंविधः कर्म कृत्वाऽपि न निबध्यते कर्मपाशेन ॥ २२ ॥

**भावप्रकाशः** (कृ.टि.)– ॥ **कामादिवर्जनमिति** ॥ फलस्नेहवर्जनमादिपदार्थः । अत एव फलस्नेहरहितस्येति भाष्ये कामवर्जितस्येत्यपि गतसङ्गपदेन ग्राह्यम् । अन्यथैतद्वाक्यास्वारस्यात् ॥

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायाऽचरतःकर्म समग्रं प्रविलीयते ॥ २३ ॥**

## भाष्यम्

**उपसंहरति– गतसङ्गस्येति ॥ गतसङ्गस्य फलस्नेहरहितस्य । मुक्तस्य शरीराद्यनभिमानिनः । ज्ञानावस्थितचेतसः परमेश्वरज्ञानिनः ॥**

श्लोकः २३

भावप्रदीपिका (प.टी.)– नोत्तरश्लोकस्य गतार्थतादोष इत्याह– **उपसंहरतीति** । श्लोकं व्याचष्टे– **गतेति** ॥ २३ ॥

भावप्रकाशिका (न.टी.)– न चोत्तरश्लोकस्य 'यस्य' इत्यादिना गतार्थता । उक्तार्थ-सङ्ग्रहात्मकत्वेनोपसंहाररूप-त्वात् । 'अतः'शब्दाद्यभावेऽप्युपसंहारपरोऽयं श्लोक इति भावेनाह– **उपेति** ॥ 'यज्ञाय' भगवते कुर्वतः 'कर्म' सह पूर्वोत्तराघाभ्यां प्रलीयते । यदनादिकर्म यावन्मोक्षं तत्सर्वं न बध्नातीत्यर्थः ॥

'एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।
त एवात्मविनाशाय कल्प्यन्ते कल्पिताः परे ॥' इत्यादेः, इति भाष्यशेषः ॥२३॥

प्रमेयदीपिका (ज.टी.)– यदुक्तं कामादिवर्जनं तदेव गतसङ्गस्य इत्यनेनोच्यते । 'त्यक्तसर्वपरिग्रहः' (४.२१) इत्येतत् 'मुक्तस्य' इत्यनेन, 'कर्मणि' (४.२०) इति 'नित्यतृप्तः' (४.२०) इति च 'ज्ञानावस्थितचेतसः' इत्यनेन । अतः पुनरुक्तिरित्यत आह– **उपसंहरतीति** ॥ विक्षिप्तं पिण्डीकरोतीत्यर्थः । 'गतसङ्गस्य' इति विषयसापेक्षम् । अतस्त-त्प्रदर्शनेन व्याख्याति– **गतेति**॥ 'मुक्तस्य' इत्येतत् साधके घटयति– **मुक्तस्येति** ॥ अनेन 'अभिमानान्मुक्तस्य' इति वा 'मुक्तसदृशस्य' इति वा व्याख्यातं भवति । ज्ञानस्य विषय-सापेक्षत्वात्तं प्रदर्शयन् व्याचष्टे – **ज्ञानेति** ॥ आत्मज्ञानस्याप्युपलक्षणमेतत् ॥ २३ ॥

भावदीपः (रा.टि.)– ॥ **साधक इति** ॥ साधनानुष्ठातरीत्यर्थः ॥ आत्मज्ञानस्यापीति ॥ भगवतः तत्प्रतिबिम्बत्वादिना तत्स्वरूपज्ञानिन इत्यर्थः ॥ २३ ॥

भावरत्नकोशः (सु.टि.)– ॥ **यदुक्तमिति** ॥ 'यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः' इत्यत्र, इति शेषः । 'मुक्तस्येत्यनेन' इत्यत्र 'ज्ञानावस्थितचेतसः इत्यनेन च' इत्यत्र च 'उच्यते' इत्यनुवर्तते । 'नित्यतृप्तः' इत्यस्य नित्यतृप्तेश्वरसरूपोऽस्मीति जानन्निति व्याख्यानात् पुनरुक्तिरिति द्रष्टव्यम् ॥

ननु ज्ञानावस्थितचेतस्त्वस्य 'ब्रह्मार्पणम्' इत्यनेन स्पष्टीकरणात् कथमनेनोपसंहार इत्युच्यत इत्यत आह– **विक्षिप्तमिति** ॥ इति अनेनोक्तं कामादिविषयसापेक्षमिति । किंविषयः कामः ? किंविषयकश्च स्नेह इति तयोर्विषयनिरूप्यत्वादिति भावः । भाष्ये स्नेहशब्देन कामोऽपि ग्राह्यः ।

श्लोकः २३
'यदुक्तं कामादिवर्जनम्' इति टीकायां सङ्गपदार्थत्वेन कामस्यापि ग्रहणादित्यवधेयम् । 'गत-सङ्गस्य' इत्यादौ मोक्षस्य साधको विशेष्यते । मुक्तपदं तु सिद्धवाचीति साधकविशेषणं कथं स्यादिति शङ्कां परिहर्तुमाह– **मुक्तस्येत्येतदिति** ॥ 'स्वातन्त्र्याभिमानान्मुक्तस्य' इति तात्पर्यं हृदि कृत्वाऽऽह– **अनेनाभिमानादिति** ॥

भाष्ये 'मुक्तस्य शरीराद्यभिमानाद्' इति वक्तुं शक्येऽपि 'शरीराद्यनभिमानिनः' इति षष्ठीश्रवणस्वारस्यानुरोधादाह– **मुक्तसदृशस्येति वेति** ॥ मुक्तो हि शरीराद्यभिमानशून्यः । साधकोऽपि तथाभावान्मुक्तपदेन ग्राह्य इति भावेन भाष्ये षष्ठीति भावः । **ज्ञानस्येति** ॥ **ज्ञानेऽव-स्थितम्** अभिनिविष्टं चेतो यस्य स तथा, तस्येत्यत्र ज्ञानस्येत्यर्थः । 'परमेश्वरज्ञानिनः' इति तु फलितप्रदर्शनम् । परमेश्वरस्य सर्वकर्मकर्तृत्वस्वातन्त्र्यज्ञानिन इति तदर्थ इति भावः । ननु नित्य-तृप्तनिराश्रयेश्वरसरूपोऽस्मीति जानन् तथाविध इति जीवज्ञानस्याप्युक्तत्वात् कथं परमेश्वर-ज्ञानमात्रग्रहणमित्यत आह– **आत्मज्ञानस्यापीति** ॥ उक्तरूपजीवज्ञानस्यापीत्यर्थः ॥ २३ ॥

**गीताक्षरार्थस्तु** - विक्षिप्तं क्रोडीक्रियते– **गतसङ्गस्येति** ॥ फलसङ्गादिरहितस्य मुक्तस्य अभिमानान्मुक्तस्य, शरीराद्यनभिमानसाम्यान्मुक्तसदृशस्य वा ज्ञानावस्थितचेतसः भगवद्विषय-ज्ञानाभिनिविष्टचित्तस्य नित्यतृप्तनिराश्रयेश्वरसरूपोऽस्मीति भगवत्प्रतिबिम्बत्वावबोधनिष्ठमानसस्येति वा यज्ञाय भगवते तत्प्रीत्यर्थम् आचरतः कुर्वतः कर्म सह पूर्वोत्तराभ्यां यदनादि यच्च यावन्मोक्षं तत् समग्रं सर्वं प्रविलीयते प्रलीनं भवति । न बन्धकं भवतीत्यर्थः । तदुक्तम्

> 'एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।
> त एवात्मविमोक्षाय कल्प्यन्ते कल्पिताः परे ॥' इति ।

इत्युत्तरार्धः प्राचीनटीकायां व्याख्यातः । अत्र च 'यदुक्तं कामादिवर्जनम्' तदेव 'गतसङ्गस्य' इत्यनेन, 'त्यक्तसर्वपरिग्रहः' इत्येतद् 'मुक्तः' इत्यनेन, 'कर्मण्यकर्म' इति 'नित्यतृप्तः' इति च 'ज्ञानावस्थितचेतसः' इत्यनेन चोच्यते इति विक्षिप्तक्रोडीकरणं द्रष्टव्यमिति ॥ २३ ॥

**भावदीपिका (श्री.टि.)**– ॥ **अतस्तत्प्रदर्शनेनेति** ॥ कस्मिन् विषये गतसङ्ग इति विषया-पेक्षायां तत्प्रदर्शनेनेत्यर्थः ॥ **मुक्तसदृशस्येति** ॥ शरीरानभिमानस्योभयत्रापि साम्यादिति भावः ॥ **आत्मज्ञानस्यापीति** ॥ नित्यतृप्तादिरूपेश्वरप्रतिबिम्बत्वादिना जीवज्ञानस्येत्यर्थः ॥ २३ ॥

श्लोकः २४

**भावप्रकाशः (कृ.टि.)**– ननु ज्ञानावस्थितचेतस्त्वस्य ब्रह्मार्पणमित्यनेन प्रपञ्चनात् कथमुपसंहरतीत्युक्तमित्यत आह– **विक्षिप्तमिति** ॥ **विषयसापेक्षमिति** ॥ सङ्गपदोक्तकामस्नेहयो-र्विषयनिरूपणात् इत्यर्थः । अभिमानपदाध्याहारे धर्मिकल्पनप्रसङ्गादाह– **मुक्तसदृशस्येति** ॥ अनेन गौणीरूपधर्ममात्रकल्पनमित्युक्तं भवति । ननु नित्यतृप्त इत्यादिना जीवज्ञानस्याप्युक्तत्वात् कथं परमेश्वरज्ञानमात्रग्रहणमित्यत आह– **आत्मज्ञानस्यापीति** ॥ जीवज्ञानस्यापीत्यर्थः ॥ २३ ॥

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्म कर्म समाधिना ॥ २४ ॥**

## भाष्यम्

**ज्ञानावस्थितचेतस्त्वं स्पष्टयति – ब्रह्मार्पणमिति ॥ सर्वमेतद् ब्रह्म इत्युच्यते । तदधीनसत्ताप्रतीतित्वात् । नतु तत्स्वरूपत्वात् ।**

भावप्रदीपिका (प.टी.)– यत्सामान्यतो भगवतो सर्वकर्तृत्वाख्यज्ञानमुक्तं तत्प्रपञ्चकत्वेनोत्तरश्लोकमवतारयति– **ज्ञानेति** ॥ ननु कथं सर्वब्रह्मैक्यमुच्यते ? इत्यत आह– **सर्वमिति** ॥

भावप्रकाशिका (न.टी.)– न हि महीं प्राप्य भगवच्चरणारविन्दस्नेहं विनाऽल्पफलस्वर्गादिस्नेहं त्यजति । तथा शरीरतत्क्रियादेर्भगवदधीनत्वज्ञानं विना अहंममताभिमानहानिस्तत्रेति गतसङ्गस्य मुक्तस्य यत् परमेश्वरज्ञानित्वमर्थात् प्रतीयते तदतिस्फुटं करोतीत्याह– **ज्ञानेति** ॥

प्रमेयदीपिका (ज.टी.)– ननु कर्मस्वरूपं प्रतिज्ञाय सङ्क्षेपविस्तराभ्यां प्रतिपाद्योपसंहृतम् । किमिदं ब्रह्मार्पणम् इत्यनेनोच्यते? इत्यत आह– **ज्ञानावस्थितेति** ॥ एतेन 'इति यो जानाति' इत्यध्याहारोऽत्र सूचितो भवति ॥ 'अत्रार्पणादेर्ब्रह्मस्वरूपत्वमुच्यते' इत्यन्यथाप्रतीतिनिरासायाह– **सर्वमिति** ॥

भावबोधः (र.टि.)– ॥ **यो जानातीति** ॥ अर्पणादिकं ब्रह्माधीनमिति यो जानाति, तेनैव ब्रह्म गन्तव्यम् इति सम्बन्धः । अन्यथा तेनेति तच्छब्दोऽसङ्गतः स्यादिति भावः ॥

भावदीपः (रा.टि.)– **प्रतिज्ञायेति** ॥ 'किं कर्म ' (४.१६) इति श्लोके कर्म प्रवक्ष्यामि

इति प्रतिज्ञाय कर्मण्यकर्म' (४.१८) इति श्लोके सङ्क्षेपेण 'यस्य' इत्यादिश्लोकचतुष्टयं विस्तरेण प्रतिपाद्य, पञ्चमे 'गतसङ्गस्य' (४.२३) इत्यत्रोपसंहृतमित्यर्थः ॥ इत्यध्याहारोऽत्रेति ॥ अत्र 'श्लोके' इति भावः ॥

**भावरत्नकोशः** (सु.टि.)– ॥ **प्रतिज्ञाय** 'कर्म प्रवक्ष्यामि' इत्यनेन । **सङ्क्षेपविस्तराभ्यां** 'कर्मण्यकर्म' इति सङ्क्षेपः । 'यस्य सर्वे समारम्भाः' इति पञ्चश्लोक्या विस्तार इति विवेकः । **उपसंहृतं** 'गतसङ्गस्य' इत्यनेन । **एतेनेति** ॥ 'ज्ञानावस्थितचेतस्त्वम्' इति गमनिकाभाष्येण ॥ तच्छब्दश्रवणात् 'यच्छब्दः', ज्ञानपदोपादानाद् 'जानाति' इति शब्दश्चात्र श्लोकेऽध्याहर्तव्य इति सूचयतीत्यर्थः । इति यो जानाति तेन ब्रह्म गन्तव्यमिति सम्बन्ध इति भावः ॥ **अर्पणादेरिति** ॥ अर्प्यते समर्प्यते अनेनेति अर्पणं जुह्वादि । आदिशब्देन हविरादि ग्राह्यम्, तस्येत्यर्थः ॥

**भावदीपिका** (श्री.टि.)– ॥ **सङ्क्षेपविस्तराभ्यामिति** ॥ 'कर्मण्यकर्म' (४.१८) इति सङ्क्षेपतः । 'यस्य' (४.१९) इत्यादिश्लोकैः विस्तरतः । **उपसंहृतम्** 'गतसङ्गस्य' इत्यनेनेत्यर्थः । **एतेनेति** ॥ ज्ञानावस्थितचेतस्त्वस्पष्टनरूपत्वकथनेनेत्यर्थः ॥ **यो जानातीति** ॥ तथा चार्पणादिकं ब्रह्माधीनमिति यो जानाति तेनैव ब्रह्म गन्तव्यमिति योजना सूचिता भवति । अन्यथा 'तेन' इति तच्छब्दोऽसङ्गतः स्यादिति भावः ॥

**भावप्रकाशः** (कृ.टि.)– ॥ उपसंहृतमिति ॥ पिण्डकृत्योक्तमित्यर्थः । यो जनानीति ॥ अर्पणादिकं ब्रह्माधीनमिति यो जानाति तेनैव ब्रह्म गन्तव्यमिति सम्बन्धः । अन्यथा तेनेति तच्छब्दासङ्गतिरिति भावः ॥

## भाष्यम्

**उक्तं हि 'त्वदधीनं यतस्सर्वमतस्सर्वो भवानिति । वदन्ति मुनयस्सर्वे नतु सर्वस्वरूपतः' इति पाद्मे । 'सर्वं तत्प्रज्ञानेत्रम्'** (ऐत.२.५.३) **इति च । 'एतं ह्येव बह्वृचाः'** (ऐत.आ.२.८.३.७) **इत्यादि च । समाधिना सह ब्रह्मैव कर्म**

**॥ २४ ॥**

श्लोकः २४

भावप्रदीपिका (प.टी.)– साक्षादैक्यं कुतो न स्यात् ? इत्यत आह– **उक्तं हीति** ॥ ब्रह्मणः कर्म समाधी यस्य तेनेति भ्रमो मा भूदित्याह– **समाधिनेति** ॥ २४ ॥

भावप्रकाशिका (न.टी.)– तदधीनत्वमेव कर्मादिर्ब्रह्मत्वं वेदेतिहासाद्युक्तम् । न तद्विवर्तत्वेन तत्प्रमाणत्वेन वा । नापि तद्व्यतिरेकेणाभावः । तथैव पुराणे व्याख्यातत्वादित्याह– **सर्वमिति** ॥ सर्वस्य ब्रह्मनेतृकत्वब्रह्माधारत्वश्रुतेश्च न ब्रह्मत्वमितिहासाद्यर्थ इत्याह– **सर्वं तदिति** ॥ 'एतं ह्येव वह्वृचा' इत्यारभ्य कथ्यमानशंसनादौ कर्मणि, द्यावापृथिव्यादौ सर्वस्मिन्नियामकत्वादिरूपेणान्तर्गतस्य भगवत एव परब्रह्मत्वावधारणाच, न कर्मादिर्ब्रह्मत्वं वेदाद्यर्थ इति भावेनाह– **एतमिति** ॥ 'ब्रह्माख्ये कर्मणि समाधिर्यस्य' इत्यन्ये । तत्पक्षे समाधेः ब्रह्माधीनत्वं नोक्तं स्यादिति तद्व्युदासार्थमाह– **समाधिनेति** ॥ २४ ॥

प्रमेयदीपिका (ज.टी.)– कुतः? इत्यत उक्तम्– **उक्तं हीति** ॥ सर्वस्य भगवदधीनत्वे प्रमाणमाह– **सर्वमिति** ॥ प्रज्ञा=ब्रह्म नेत्रं=नेतृ यस्य तत्तथोक्तम् । 'एतं हि' इत्यनेन सर्वान्तर्यामित्वमुच्यते । 'ब्रह्मकर्मा ब्रह्मविषयः समाधिर्यस्यासौ तथोक्तः' इति व्याख्यानं प्रक्रमविरुद्धमिति भावेन अन्यथा व्याख्याति– **समाधिनेति** ॥ समाधिरपि ब्रह्मेत्यर्थः ॥२४॥

भावबोधः (र.टि.)– ॥ **प्रक्रमविरुद्धमिति** ॥ त्वया ब्रह्मार्पणमिति प्रक्रमस्य ब्रह्माभेदप्रतिपादनपरत्वेन व्याख्यानात् समाधेर्ब्रह्मविषयकत्वे समाधिब्रह्मणोर्भेदप्रतीत्या प्रक्रमविरोधः स्यादित्यर्थः ।

भावदीपः (रा.टि.)– कर्मशब्दः कर्मकारकपरः सन् विषयपर्यायः, बहुव्रीहिश्च समास इति भावेनोक्तं– **ब्रह्मकर्मा ब्रह्मविषय इति** ॥ **प्रक्रमेति** ॥ 'ब्रह्मार्पणम्' इत्यादिनाऽर्पणादेः ब्रह्मभेदेनोपक्रमादिहाभेदानुक्तावुपक्रमविरोध इत्यर्थः ॥ २४ ॥

भावरत्नकोशः (सु.टि.)– तदधीने सत्ताप्रतीती यस्य तस्य भावस्तत्त्वं तस्मात् । न तु तत्स्वरूपत्वात् परिणामत्वात् तद्विवर्तत्वाद्वेति भाष्ये तच्छब्देन ब्रह्म गृह्यत इति स्फुटत्वान्नोक्तम्– कुत इति ॥ ब्रह्मस्वरूपमिति धीः कुतोऽन्यथाप्रतीतिरित्यर्थः । **सर्वस्य भगवदधीनत्व इति** ॥ यद्यपि स्मृतौ 'त्वदधीनम्' इत्युक्तम् । तथापि तत्र हेतुत्वेनोक्तत्वात् तदसिद्धिशङ्कायामिदं प्रमाणं प्रवर्तत इति भावः । **नेत्रं नेत्रिति** ॥ नयतेः कर्तरि ष्ट्रन् प्रत्यय इति भावः । **सर्वान्तर्यामित्वमिति** ॥ 'एतमस्यामेतं दिव्येतम्' इत्यारभ्य 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' इत्यन्तेन द्यावापृथिव्यादिष्व-

श्लोकः २४

वस्थितेर्नियमनार्थत्वात् सर्वान्तर्यामित्वं भगवत उच्यते । ब्रह्मशब्दश्रवणात् । तथा च सूत्रं 'सर्वत्र प्रसिद्धोपदेशात्' इतीति भावः ॥

यद्यप्येतदधिकरणसुधायामन्तर्याम्यधिकरणे पृथिव्यादिषु स्थितेर्वक्ष्यमाणत्वात् नेदमारम्भणीय-मित्याशङ्क्य, अत्र शक्तिप्रेरकत्वेन, तत्र तत्सत्तादिप्रदत्वेन तत्तदन्तर्गतत्वमुच्यत इत्यन्तर्यामित्वं तदधिकरणप्रमेयमित्युक्तम् । तथाप्यत्रान्तर्यामित्वं शक्तिप्रेरकत्वमेव विवक्षितमिति न दोषः ॥

'ब्रह्मैव कर्म यस्यासौ ब्रह्मकर्मा' इति विग्रहमभिप्रेत्य तदर्थमाह– **ब्रह्मकर्मा ब्रह्मविषय इति ॥ प्रक्रमेति** ॥ 'ब्रह्मार्पणम्' इत्यादावर्पणं ब्रह्म हविर्ब्रह्मेत्यभेदपरत्वेन व्याख्यानात् ब्रह्मकर्म-समाधिनेत्यत्र समाधेर्ब्रह्मकर्मकत्वेन व्याख्यानमभेदोक्तिप्रक्रमविरुद्धं परपक्ष इत्यर्थः । **कर्म** अग्नि-होत्रादि । **समाधिना ब्रह्मणि** मनःप्रणिधानेन ॥ 'सह ब्रह्मैव' इति भाष्ये समाधिना सहेत्यस्य भावमाह– **समाधिरपीति ॥ ब्रह्मैव** ब्रह्माधीन एव । तथा च तात्पर्यं 'समाधिना सह समाधिरपि तदधीन इत्यर्थः' इति ॥ २४ ॥

**गीताक्षरार्थस्तु**– ज्ञानावस्थितचेतस्त्वं स्पष्ट्यते– **ब्रह्मेति** ॥ अर्पणं समर्पणक्रिया । करणे ल्युट् । जुह्वादि वा । ब्रह्म भगवदधीनम् । हविः ब्रह्म तदधीनम् । ब्रह्माग्नौ ब्रह्माधीनाग्नौ, ब्रह्मणा ब्रह्माधीनेन कर्त्रा, हुतं समाधिना सह कर्म अग्निहोत्रादि च, ब्रह्मैव तदधीनमेव । 'इति यो जानाति' इति शेषः । अनेन ज्ञानावस्थितचेतस्त्वं स्पष्टीकृतं भवति । आपादनीयमेवंविधं ज्ञानमिति तत्र तात्पर्यद्योतनाय ब्रह्मैव तेन ज्ञानिना गन्तव्यम् आप्यम् इति फलमुच्यत इति ॥२४॥

**भावदीपिका (श्री.टि.)**– ॥ **नेतृ** नियामकम् । 'णीञ्= प्रापणे' अस्माद् 'दाप्, नी, शस, य, युज, स्तु, तुद, सि, सिच, मिह, पत, दश, नहः करणे' इति सूत्रेण करणे ष्ट्रन्प्रत्यये, प्रत्ययादेः षस्य लोपे गुणे च सति 'नेत्रम्' इति रूपं द्रष्टव्यम् ॥ **प्रक्रमविरुद्धमिति** ॥ 'ब्रह्मार्पणम्' इति प्रक्रमस्य ब्रह्माभेदप्रतिपादनपरत्वेन त्वया व्याख्यातत्वात् समाधेर्ब्रह्मविषयकत्व-व्याख्याने ब्रह्मसमाध्योर्भेदप्राप्त्या प्रक्रमविरोधः स्यादित्यर्थः । समाधिना सह कर्मापि ब्रह्मैवेत्युक्त्या कर्मवत् समाधेरपि ब्रह्मत्वं लब्धमित्याह – **समाधिरपीति** ॥ २४ ॥

**भावप्रकाशः (कृ.टि.)**– नन्वेतं हीत्येतत् कथं भगवदधीनत्वे मानम् । अत्र सर्वगतत्व-प्रतीतेरित्यत आह– **सर्वान्तर्यामित्वमिति ॥ प्रक्रमविरुद्धमिति** ॥ त्वया ब्रह्मार्पणमिति प्रक्रमस्य ब्रह्माभेदप्रतिपादकतया व्याख्याततत्वेन समाधेः ब्रह्मविषयत्वोक्तौ समाधिब्रह्मणोः भेदप्राप्त्या प्रक्रमविरोध इत्यर्थः ॥ २४ ॥

श्लोकः २५

## दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
## ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥

## भाष्यम्

**यज्ञभेदानाह – दैवम् इत्यादिना ॥ दैवं भगवन्तम् । स एव तेषां यज्ञः । भगवदुपासनं यज्ञम् इति क्रियाविशेषणम् ॥**

भावप्रदीपिका (प.टी.)– कर्मणः सत्कर्मप्रकारमुक्त्वा तत्स्वरूपप्रदर्शनपरतयोत्तर-प्रघट्टकमवतारयति – **यज्ञेति** ॥ अत्र 'यज्ञ'शब्देन त्रिविधमपि कर्म । 'तपोयज्ञाः' इत्यादि-नेतरयोर्यज्ञान्तर्भावात् । देव्या विशेषोऽयं यज्ञ इति भ्रान्तिर्मा भूदित्याह – **दैवमिति** ॥ ननु यदि भगवन्तमुपासत इत्यर्थः, तर्हि यज्ञो नोक्तः स्यादित्यत आह – **स एवेति** । स एव इति कः ? इत्यत आह– **भगवदिति** । तर्ह्यत्र 'यज्ञ'शब्दान्वयः कथमित्यत आह– **यज्ञमिति** ॥

भावप्रकाशिका (न.टी.)– 'कुरु कर्म' इत्युक्त्वा, तस्य कर्मणः स्वरूपमभिहितं 'कर्मणि' इत्यादिना । तदपि यज्ञदानाद्यात्मकम् । तत्रायज्ञस्यायं परं च लोकः सुखवासो न भवतीति ज्ञापयितुं, सर्वाश्रमियोग्यान् यज्ञविशेषानाहेत्यभिप्रायेणोत्तरं प्रघट्टकमवतारयति– **यज्ञभेदानिति** ॥ 'दैव' शब्दस्येष्टवाचित्वात् 'देवा इज्यन्ते यस्मिन् यज्ञे स दैवयज्ञः' इत्यन्यैर्व्याख्यातत्वाच, पक्षद्वयप्रतीतावत्र भगवद्विवक्षितं दैवशब्दार्थं तावदाह– **दैवमिति** ॥ ननु यदि दैवशब्दोक्तं भगवन्तमुपासत इति वाक्यार्थः, न तु दैवाख्यं यज्ञं कुर्वत इति, तर्हि कथं यज्ञभेदा उच्यन्तेऽस्मिन् प्रघट्टके ? इत्यत आह– **स एवेति** ॥ ननु 'सः' इत्यनेन भगवत्तदुपासनयोर्मध्ये किं परामृश्यते ? इत्यत आह– **भगवदुपासनमिति** ॥ नन्वस्मिन् पक्षे कथं यज्ञशब्दान्वयः ? इत्यत आह– **यज्ञमिति** ॥ उपासनं यथा यज्ञो भवति तथोपासत इत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– उत्तरप्रकरणप्रतिपाद्यं बुद्ध्यारोहार्थमाह– **यज्ञेति** ॥ सामान्यतः कर्मस्वरूपमुक्तम् । तच्च यज्ञादिभेदभिन्नम् । तत्र 'नायं लोकोऽस्ति' (४.३१) इति वक्ष्यति । तदनुपपन्नम् । 'यत्याद्याश्रमविलोपप्रसङ्गाद् इत्याशङ्कानिरासार्थम्' इति शेषः । तत्र 'दैवं देवविषयम्' इति व्याख्यानमसत् । 'द्रव्ययज्ञाः' (४.२८) इत्यस्य पुनरुक्तत्वादिति

श्लोकः २५

भावेनाऽह– **दैवमिति** ॥ एवंतर्हि 'केचित् भगवन्तमुपासते' इत्युक्तं स्यात् । तथाच नेयं प्रतिज्ञातोक्तिरित्यत आह– **स एवेति** ॥ स इति परामृष्टं दर्शयति– **भगवदिति** ॥ भगवदुपासनस्य यज्ञत्वमिह कथं लभ्यते? इत्यत आह– **यज्ञमिति** ॥ 'भगवत्' इत्यादिकं क्रियाविशेषणत्वप्रदर्शनार्थमेकमेव वाक्यम् ॥ साधनं परित्यज्य धात्वर्थमात्रस्य विशेषणं (हि) क्रियाविशेषणम् ॥

**भावबोधः (र.टि.)**– ॥ **द्रव्ययज्ञा इत्यस्येति** ॥ दैवं देवविषयं, यज्ञमुपासते कुर्वन्तीति व्याख्याने एतस्याऽपि द्रव्ययज्ञोक्तित्वपर्यवसानादिति भावः । **क्रियाविशेषणत्वप्रदर्शनार्थमिति** ॥ यज्ञमित्यस्य भगवदुपासनाख्यक्रियाया विशेषणार्थमित्यर्थः । एकवाक्यत्वाभावे यज्ञमित्येतत् कस्याः क्रियाया विशेषणमिति न ज्ञायते इति भावः ॥ ननु तर्हि भाष्ये यज्ञमिति, पर्युपासते इति क्रियाविशेषणमिति वक्तव्यम् । तत्कथं भगवदुपासनमित्युक्तमित्यत आह – **साधनं च परित्यज्येति** ॥ आख्यातार्थकर्त्रादिसाधनं परित्यज्येत्यर्थः । अनेन यज्ञमिति, भगवदुपासनमिति क्रियाविशेषणमितीतिशब्दावर्तनेन भाष्ययोजना सूचिता ॥

**भावदीपः (रा.टि.)**– ॥ **कर्मस्वरूपमुक्तमिति** ॥ भगवदधीनकर्तृत्वानुसन्धानपूर्वं तत्प्रीत्युद्देशेन वर्णाश्रमविहितानुष्ठानं कर्मेति सामान्यतः कर्मस्वरूपं 'कर्मणि' इत्यादिनोक्तमित्यर्थः ॥ **वक्ष्यतीति** ॥ 'अत्रैवाध्याये' इति योज्यम् ॥ **इत्यस्य पुनरुक्तत्वादिति** ॥ द्रव्ययज्ञस्यापि देवतोद्देशेन द्रव्यत्यागरूपतया देवताविषयत्वादिति भावः ॥ **क्रियाविशेषणत्वेति** ॥ भगवदुपासनारूपक्रियां प्रति 'यज्ञम्' इत्यस्य विशेषणत्वप्रदर्शनार्थम् । अत एव 'यज्ञम्' इति नपुंसकम् । नन्वेवं 'भगवन्तमुपासते यज्ञं यथा तथा' इति वक्तव्ये **भगवदुपासनम्** इति कथमनुवादः ? इत्यत आह– **साधनमिति** ॥ लिङादिप्रत्ययोत्पत्तौ यत्साधनं कर्तृकर्मादि तत्त्यागेनेत्यर्थः । अत एवमनुवादः क्रियत इति भावः ॥

**भावरत्नकोशः (सु.टि.)**– यज्ञभेदवचनस्य का सङ्गतिरिति शङ्कां परिहर्तुं भाष्ये शेषमाह– **सामान्यत इत्यादि** ॥ सङ्क्षेपविस्तराभ्यां कर्मत्वेन रूपेण कर्मस्वरूपं 'कर्मण्यकर्म' इत्यदिनोक्तमित्यर्थः । **तत्र** यज्ञादिषु यज्ञविषये । **यत्याद्याश्रमेति** ॥ तत्र यतीनां निष्क्रियत्वात्, वनस्थानां प्रायेण तत्समानधर्मत्वादिति भावः । **देवविषयं** देवोद्देश्यकम् । **पुनरुक्तत्वादिति** ॥ देवतोद्देशेन द्रव्यपरित्यागस्यैव द्रव्ययज्ञशब्दार्थत्वेन पुनरुक्तिप्रसङ्गादित्यर्थः । देवशब्दात् प्रज्ञादिलक्षणे स्वार्थेऽणि दैवशब्दः देवार्थः । देवश्च–

श्लोकः २५

'द्योतनाद्विजयात्कान्त्याः स्तुत्या व्यवहृतेरपि । गत्या रत्या च देवाख्यम्'

इति ऋग्भाष्यरीत्या भगवानेवेति 'दैवं भगवन्तम्' इत्युक्तं भाष्ये । 'अपरे' इत्यस्यार्थानुवादः केचिदिति । इह 'दैवमेवापरे यज्ञम्' इत्यत्र । **क्रियाविशेषणत्वेति** ॥ 'भगवदुपासनं यज्ञम्' इति भगवदुपासनरूपक्रियाविशेषणत्वं 'यज्ञम्' इत्यस्य प्रदर्शयितुं एकमेव वाक्यं भाष्ये द्रष्टव्यम् । एकवाक्यत्वाभावे कस्याः क्रियायाः इदं विशेषणमिति मन्दाः व्याकुलाः स्युरिति भावः । एकवाक्यत्वे क्रियाविशेषणत्वं प्रदर्शितं भवतीत्युपपादयति– **साधनमिति** ॥ तिङाद्युत्पत्तौ **यत् साधनं** कर्तृकर्मादि तत् परित्यज्य यद् धात्वर्थमात्रस्य विशेषणं विज्ञायते तद्धि क्रियाविशेषण-मित्यर्थः । अत एव नपुंसकत्वमपीति भावः । तिङाद्युत्पत्तौ कर्त्रादेः साधनत्वं च 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति शास्त्रसिद्धमिति द्रष्टव्यम् ॥

**भावदीपिका (श्री.टि.)– ॥ वक्ष्यतीति** ॥ 'नायं लोकोऽस्त्ययज्ञस्य' इति यज्ञशून्यस्य निन्दया यज्ञस्याऽवश्यकत्वं वक्ष्यतीत्यर्थः ॥ **विलोपप्रसङ्गादिति** ॥ तत्र यज्ञाभावादिति भावः ॥ **द्रव्ययज्ञा इत्यस्येति** ॥ 'दैवं देवविषयं हविस्त्यागादिरूपं यज्ञमुपासते कुर्वन्ति' इति व्याख्याने 'द्रव्ययज्ञा' इत्युक्तद्रव्ययज्ञस्यापि देवविषयकत्वेन पुनरुक्तताप्रसङ्गादित्यर्थः ॥ **प्रतिज्ञातोक्तिः** यज्ञभेदोक्तिः । यज्ञोक्तिरित्यपि पाठः । **क्रियाविशेषणत्वप्रदर्शनार्थमिति** ॥ 'यज्ञम्' इत्यस्य भगवदुपासनाख्यक्रियां प्रति विशेषणत्वप्रदर्शनार्थमित्यर्थः । एकवाक्यत्वाभावे 'यज्ञम्' इत्येतत् कस्याः क्रियायाः विशेषणमिति न ज्ञायत इति भावः । ननु तिङादिप्रत्ययार्थभूतकर्त्रादि-साधनविशिष्टप्रातिपदिकस्यैव क्रियात्वं दृष्टम् । प्रकृते च 'उपासते' इत्यस्यैव क्रियात्वेन 'यज्ञम्' इत्यस्य तद्विशेषणत्वे उपासनाकर्तुर्यज्ञत्वं स्यादित्यत आह– **साधनं परित्यज्येति** ॥

तिङाद्याख्यातार्थभूतकर्त्रादिकारकं परित्यज्येत्यर्थः ॥ **धात्वर्थेति** ॥ प्रकृते च धात्वर्थ उपासनम् । एवं च 'यज्ञम्' इति 'भगवदुपासनम्' इति 'क्रियाविशेषणम्' इति शब्दावर्तनेन भाष्ययोजना सूचिता भवति । ततश्च दैवं भगवन्तमुपासते, तदुपासनं यज्ञो यथा स्यात्तथा कुर्वन्तीति गीता योज्या । क्रियाविशेषणत्वाद् 'यज्ञम्' इति नपुंसकनिर्देश इति द्रष्टव्यम् ॥

**भावप्रकाशः (कृ.टि.)– ॥ द्रव्ययज्ञा इत्यस्येति** ॥ दैवं देवविषयं यज्ञं उपासते कुर्वन्तीति व्याख्यानेऽस्यापि द्रव्ययज्ञोक्तित्वपर्यवसानादिति भावः । **क्रियाविशेषणत्वेति** ॥ यज्ञमित्यस्य भगवदुपासनाख्यक्रियाविशेषणत्वप्रदर्शनार्थमित्यर्थः । एकवाक्यत्वाभावे यज्ञमित्येतत् कस्याः

क्रियाया विशेषणमित्यनवगमादिति भावः । नन्वेवं तर्हि भाष्ये यज्ञमिति पर्युपासत इत्युक्त-क्रियाविशेषणमिति वाच्यम् । तत्कथं भगवदुपासनमित्युक्तमित्यत आह– **साधनं परित्यज्येति** ॥ आख्यातार्थकर्त्रादिकारकं परित्यज्येत्यर्थः । अनेन यज्ञमिति भगवदुपासनमिति क्रियाविशेषण-मित्येवमितिशब्दावृत्त्या भाष्ययोजना सूचिता ॥

## भाष्यम्

**नान्यत्तेषामस्ति यतीनां केषाञ्चित् ॥**

भावप्रदीपिका (प.टी.)– 'एव'कारार्थमाह– **नान्यदिति** ॥

भावप्रकाशिका (न.टी.)– 'एव'कारार्थमाह– **नान्यदिति । षष्ठे चैतद्विस्तारयिष्यति । 'दैव'शब्दस्य यज्ञविशेषत्व एवकारो व्यर्थः स्यात् । पितृयज्ञादेरपि तैरेव क्रियमाणत्वात् ।**

प्रमेयदीपिका (ज.टी.)– अवधारणार्थं दर्शयति– **नान्यदिति** ॥ **अन्यत्** भगव-दुपासनात् । **अनेन 'एवशब्दो भिन्नक्रमः'** इत्युक्तं भवति ॥ **दैवमेवोपासते नान्यदिति तु प्रकृतासङ्गतम् । केषाञ्चित्** परमहंसानाम् । अन्येषां बाह्यकर्मणोऽपि भावात् । यद्वा 'केषाञ्चित्' इत्यस्यैव व्याख्यानं– **यतीनामिति** ॥

**भावबोधः** (र.टि.)– ॥ **भिन्नक्रम इति** ॥ पर्युपासत एवेति भिन्नक्रम इत्यर्थः । ननु सति यतीनामवान्तरवैचित्र्ये यतीनां मध्ये केषाञ्चिदिति वक्तव्यम् । तदेव कथमित्यत आह– **केषाञ्चित् परमहंसानामिति ॥ अन्येषामिति ॥** हंसादीनामित्यर्थः ॥

भावदीपः (रा.टि.)– ॥ **अवधारणेति** ॥ 'दैवमेव' इत्येवकारार्थमित्यर्थः ॥ **भिन्नक्रम इति** ॥ 'उपासते' इत्यत्रोपासनारूपधात्वर्थेनान्वयः । 'भगवदुपासनमेव यज्ञतया कुर्वन्ति नान्यत्' इति भिन्नक्रम इत्यर्थः ॥ **अन्येषामिति** ॥ 'यतिभ्यः' इति योज्यम् । 'यतीनाम्' इत्यतः 'केषाञ्चित्' इत्येतद् भिन्नार्थतया व्याख्याय सामानाधिकरण्येन व्याचष्टे– **यद्वेति** ॥ २५ ॥

**भावरत्नकोशः** (सु.टि.)– ॥ **अवधारणार्थं** 'दैवमेव' इति गीतागतावधारणार्थकैव-कारान्वयो भाष्ये 'स एव' इति दर्शितः, तदर्थमाहेत्यर्थः । तत्फलं दर्शयति– **अनेनेति** ॥ **भिन्नक्रमः** 'पर्युपासत एव' इत्यत्र बुद्ध्या विविक्तेन धात्वर्थेन सम्बन्धः । भगवदुपासनमेव यज्ञतया

कुर्वन्ति नान्यदिति फलितमिति भावः । यथाश्रुतान्वये बाधकाभावान्नैतावान् आयास आश्रयणीय इत्यतोऽत्र बाधकमाह– **दैवमेवेति** ।। यतिशब्देनान्यार्थाप्रतीतेः 'केषाश्चित्' इति विशेषणं व्यर्थमित्यत आह– **परमहंसानामिति** ।। कुटीचक-बहूदक-हंस-परमहंसभेदेन यतीनां चातुर्विध्याद् बहूदकादिव्यावृत्तयतिग्रहणाय विशेषणमिति भावः । तद्व्यावृत्तिः किन्निबन्धनेत्यत आह– **अन्येषामिति** ।। हंसादीनां त्रयाणाम् । **बाह्यकर्मण इति** ।। तथा च तात्पर्यनिर्णये–

> तत्रस्थाः शुद्धसत्त्वास्तु परहंसाः प्रकीर्तिताः ।
> हंसो बहूदः कुटिको वनस्थो नैष्ठिको गृही ।
> क्रमाद्रजोऽधिका बाह्यकर्मैषामधिकं यतः ।। इति ।

तत्र न्यायदीपिकायाम् 'परमहंसाः शिखायज्ञोपवीतहीनाः एकदण्डिनः । यज्ञोपवीतवानेकदण्डः शिखारहितो हंसः । त्रिदण्डी शिखायज्ञोपवीतवान् ग्रामैकरात्रिर्बहूदः । त्रिदण्डी शिखा-यज्ञोपवीतवान् यावज्जीवं पुत्रदत्तान्नः कुटिजः' इत्युक्त्वा 'हंसादिषु कर्मबाहुल्यक्रमोऽन्यतो द्रष्टव्यः' इत्युक्तम् । तद्विवरणं कृतं **विजयीन्द्रतीर्थश्रीमच्चरणैः तत्त्वमाणिक्यपेटिकायां** यतिलिङ्गसमर्थनवाद इति सर्वं क्रमेण बाह्यजलाञ्जलिप्रदानादिकर्मबाहुल्यादिकं ततोऽवसेयम् ।।

'यतीनां केषाञ्चित्' इत्यत्र व्याख्यानव्याख्येयत्वाभ्युपगमेन पक्षान्तरमाह– **यद्वेति** ।। 'नान्यत्' इति भाष्ये नपुंसकत्वं तु सामान्यत्वात् ।।

केचित्तु 'स एव तेषां यज्ञः' इत्यस्य पर्युपासीना एव यज्ञवन्त इत्यर्थपर्यवसानेन अन्येषां परमहंसेतरेषां यज्ञो नास्तीत्यर्थस्य सिद्धेः, तदर्थतया 'केषाञ्चित्' इति विशेषणं नातीव प्रयोजनमावहतीत्यनुशयेनाह– **यद्वेति** ।। 'अपरे' इति गीतोक्तविशेषणं 'केषाञ्चित्' इति तात्पर्यतो व्याख्यातम् । के त इत्याकाङ्क्षापूरकस्य 'योगिनः' इत्यस्य तु 'यतीनाम्' इति तात्पर्यमित्यस्त्येव प्रयोजनमिति भाव इति व्याचक्षते ।।

**भावदीपिका (श्री.टि.)– ।। भिन्नक्रम इति** ।। दैवमुपासते यत् स एव तेषां यज्ञ इति भिन्नक्रम इत्यर्थः । अत एव भाष्ये 'स एव तेषां यज्ञ' इत्युक्तम् ।। **दैवमेवेति** ।। यथास्थान एव यद्येवशब्दस्तर्हि दैवमेवोपासत इत्येव प्राप्त्या प्रकृतयज्ञभेदकथनोपयुक्तत्वाभावेनासङ्गतत्वप्रसङ्गादिति भावः ।

श्लोकः २५

ननु यतीनां मध्येऽवान्तरवैचित्र्यसत्त्वे हि यतीनां मध्ये केषाञ्चिदिति वक्तव्यम्, तदेव कथम्? इत्याशङ्कायाम् अस्त्यवान्तरवैचित्र्यम् इत्याशयेन 'केषाञ्चिद्' इत्यस्यार्थमाह– **केषाञ्चित् परमहंसानामिति ॥** यतीनां कुटिजबहूदहंसपरमहंसभेदेन चतुर्विधत्वात् तन्मध्ये परमहंसानां भगवदुपासनव्यतिरिक्तं बाह्यं यज्ञादिकं नास्त्येव । यथोक्तं गीतातात्पर्ये

'तत्रापि शुद्धसत्त्वास्तु परहंसाः प्रकीर्तिताः ।
धर्माः परमहंसानां ब्राह्मा एव शमादिका ॥' इति ।

ननु 'केषाञ्चिद्' इत्येतत्परमहंसानामिति कुतो व्याख्येयम्? कुटिजादीनामित्यपि व्याख्याने बाधकाभावादित्यत आह– **अन्येषामिति ॥** कुटिजबहूदहंसानामित्यर्थः । यथोक्तं तत्रैव

'हंसो बहूदः कुटि(ट)जो वनस्थो नैष्ठिको गृही ।
क्रमाद्रजोधिका बाह्यं कर्मैषामधिकं यत ॥' इति ।

त्रिदण्डी, शिखायज्ञोपवीतवान्, यावज्जीवं पुत्रदत्तान्नादः कुटिजः । त्रिदण्डी, शिखा-यज्ञोपवीतवान्, ग्रामैकरात्रिर्बहूदः । यज्ञोपवीतवान्, एकदण्डी, शिखारहित हंसः । शिखा-यज्ञोपवीतहीन, एकदण्डी परमहंस इति तात्पर्यटीकानुसारेण ध्येयम् । यतिशब्दस्य सामान्य-वाचित्वमङ्गीकृत्य 'केषाञ्चिद्' इत्येतत् परमहंसपरत्वेन पूर्वं व्याख्यातम् । इदानीं सामान्यशब्दस्य विशेषपरत्वमङ्गीकृत्य यतिशब्दः परमहंसपर इत्याशयेनाऽह – **यद्वेति ॥**

**भावप्रकाशः (कृ.टि.)– ॥ भिन्नक्रम इति ॥** पर्युपासत एवेत्यत्र बुद्ध्याविविक्तेन धात्वर्थेन सम्बन्ध इत्यर्थः । पर्युपासत एवेति भिन्न क्रम इति वा ननु यतिशब्देनान्यप्रतीतेरभावात् केषाञ्चिदिति व्यर्थमित्यत आह– **परमहंसानामिति ॥** हंसादिव्यावर्तकं तदिति भावः । **अन्येषामिति ॥** हंसादीनामित्यर्थः । **बाह्यकर्मणः** उदकाञ्जलिप्रदानादिरूपस्य ॥ ननु पार्थ एव धनुर्धर इत्यस्मात् पार्थान्यो धनुर्धरो नेतिवत् स एव तेषां यज्ञ इत्यनेनापि भगवदुपासनान्यो यज्ञो नास्तीति प्रतीयते । ततश्च हंसादीनामप्यन्ययज्ञाभावात् केषांचिदिति व्यर्थमित्यत आह– **यद्वेति ॥** न चेदमेवास्तु व्याख्यानम् । नान्यदिति नपुंसकान्यशब्दस्वारस्याय तद्व्याख्यानप्रवृत्तेः । अस्मिंश्च व्याख्याने सामान्ये नपुंसकत्वोपपत्तेरिति ।

## भाष्यम्

**यज्ञं भगवन्तम् । 'यज्ञेन यज्ञम्'** (ऋ.१.१६४.५० ) **। 'यज्ञो विष्णु देवता' इत्यादि श्रुतिः (भ्यः) । यज्ञेन प्रसिद्धेनैव । यज्ञं प्रति जुह्वति इति सर्वत्र समं 'तं यज्ञम्'** (ऋ.१०.९०.७) **इत्यादौ । उक्तं च–**

**'विष्णुं रुद्रेण पशुना ब्रह्मा ज्येष्टेन सूनुना ।**

**अयजन्मानसे यज्ञे पितरं प्रपितामहः ॥' इति ॥ २५ ॥**

भावप्रदीपिका (प.टी.)– मखे प्रसिद्धोऽपि 'यज्ञ'शब्दो द्वितीयान्तो भगवत्परः प्रयोग-बलात्, तृतीयान्तश्च मख एवेत्याह– **यज्ञमिति** ॥ द्वितीयान्त 'यज्ञ'शब्दस्य क्वान्वयः ? इत्यत आह– **यज्ञमिति** । सर्वत्रेत्युत्तरहोमेषु । तत्र दृष्टान्तमाह– **तमिति** ॥ 'यथा' इति शेषः । तथाऽपि यज्ञं भगवन्तमित्यर्थः कुतः ? इत्यत आह– **उक्तं चेति** ॥ २५-२६ ॥

भावप्रकाशिका (न.टी.)– यज्ञस्याध्वरे प्रसिद्धत्वेऽप्युत्तरार्धगतप्रथमयज्ञशब्दो भगवद्विषय एवेत्येतत् सप्रमाणक-माह– **यज्ञमिति** ॥ द्वितीयस्त्वध्वर एवेत्याह– **यज्ञेनेति** ॥ 'दध्ना जुहोति' इत्यादिवत् 'यज्ञेन जुहोति' इति दधिप्रक्षेपेण होमोत्पत्तिवद्यज्ञार्पणेन होमोत्पत्ते-रित्यर्थः। एतेनैतदपि प्रत्युक्तम् । यदाहुरन्ये 'यज्ञाख्यं स्वात्मानं यज्ञाख्येन स्वात्मनैव ब्रह्माख्याग्नौ प्रक्षिपन् सोऽयं ज्ञानयज्ञः' इति । तत्पक्षे जीवब्रह्मणोराधाराधेयादेर्मिथ्यात्वेनैव न ज्ञानयज्ञः स्यात् । न च तयोरेकत्वचिन्तनं होमः । अश्रुतकल्पनप्रसङ्गात् । होमबुद्ध्यनु-त्पत्तेश्चेत्येषा दिक् ॥

ननु प्रथमयज्ञशब्दस्य हरिविषयत्वे कथमत्रान्वयः ? इत्याशङ्क्य, 'तं यज्ञम्' इत्यादाविव 'यज्ञं प्रति जुह्वति' इति स्थानचतुष्टयेऽप्यन्वयसम्भवादिति भावेनाह– **यज्ञं प्रतीति** ॥ तं पुरुषं पशुं, यज्ञं भगवन्तं प्रति बर्हिषि यज्ञे प्रौक्षन् इत्यर्थः । 'तं यज्ञम्' इत्यस्योक्तार्थत्वे प्रमाणमाह– **उक्तं चेति** ॥ २५,२६ ॥

प्रमेयदीपिका (ज.टी.)– 'ब्रह्माग्नौ' इत्यस्य 'आत्मानमात्मनैव मनसा वा ब्रह्मणैकी-भावयन्ति' इति व्याख्यानमसदिति भावेन 'यज्ञम्' इत्येतद् व्याचष्टे– **यज्ञमिति** ॥ भगवतो

श्लोकः २५

यज्ञशब्दार्थत्वं कुतः इत्यत आह– **यज्ञेनेति** ॥ यज्ञेन इत्यस्यार्थमाह– **यज्ञेनेति** ॥ एवशब्देनापव्याख्यानं निराकरोति । एवं चेद्, 'यज्ञम्' इत्यस्य कथमन्वय इत्यत आह– **यज्ञमिति** ॥ एतद्व्याख्यानमन्यत्रातिदिशति – **इति सर्वत्रेति** ॥ अतिप्रसङ्गनिवारणाय 'सर्वत्र' इत्युक्तं विवृणोति– **तमिति** ॥ एवं तर्हि 'अग्रतो जातं तं पुरुषं यज्ञं भगवन्तं प्रति बर्हिषि प्रौक्षन्' इत्यर्थः **स्यात्** । स च निर्मूल इत्यत आह– **उक्तं चेति** ॥ २५ ॥

**भावरत्नकोशः (सु.टि.)**– 'ब्रह्म च तदग्निश्च ब्रह्माग्निः । होमाधिकरणत्वविवक्षायां ब्रह्माग्नौ यज्ञम् आत्मानं परमार्थतः परमेव ब्रह्म सन्तं यज्ञेन आत्मना बुद्ध्याद्युपाधिसंयुक्तत्वरूपोक्तलक्षणेन' इत्यादिसङ्करभाष्यमर्थतोऽनुवदति– **ब्रह्माग्निवित्यस्येत्यादि** ॥ **इत्यस्य** ब्रह्माग्नावित्यर्थस्य परव्याख्यानस्यासत्त्वं भाष्यारूढमित्याह– **एवशब्देनेति** ॥ विष्णुयज्ञयोः यज्ञशब्दार्थत्वे श्रुतिप्रसिद्धलक्षणप्रमाणवत् सोपाधिकात्ममनसोः तदर्थत्वे प्रमाणाभावाद्, जीवब्रह्मैक्यस्य सर्वप्रमाणविरुद्धत्वाच्चेति निराकरोतीति भावः । **यज्ञमित्यस्येति** ॥ द्वितीयान्तयज्ञशब्दस्य भगवदर्थत्वे तस्य कथमन्वयः ? इत्यर्थः । **एतद्व्याख्यानं** प्रतिशब्दसंयोजनेन व्याख्यानम् ॥ **अतिप्रसङ्गेति** ॥ 'सर्वत्र' इत्युक्तौ 'अग्नेयं यज्ञमध्वरम्' इत्यादावपि तथात्वापत्तेरतिप्रसङ्गः । तन्निवारणार्थमुक्तं विवृणोतीत्यर्थः । 'तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः' इति अर्धर्चस्यार्थं वदन्नेवोत्तरभाष्यमवतारयति – **एवं तर्हीति** ॥ **अग्रतो** जातं ज्येष्ठपुत्रं रुद्रम् । 'विष्णुं रुद्रेण' इति स्मृतौ 'ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः स्मृतः' इति वचनाद् रुद्रो ब्रह्मणः प्रथमकल्पे ज्येष्ठः पुत्र इति ज्ञातव्यम् । तेन 'अथर्वाय ज्येष्ठपुत्राय प्राह' इति श्रुतिविसंवादशङ्काऽनवकाशः । 'मनोर्वैवस्वतस्यादावथर्वा ब्रह्मणोऽजनि । सनकाद्यास्तु वाराहे' इत्याथर्वणभाष्ये व्यवस्थापनात्

॥ २५–२६ ॥

**दैवमेवेत्यष्टश्लोक्या अक्षरार्थस्तु** सामान्यतः कर्मस्वरूपमुक्तम् । तच्च यज्ञादिभेदभिन्नम् । तत्र 'नायं लोकोऽस्त्ययज्ञस्य' (४.३१) इति वक्ष्यति । तदनुपपन्नम् । यत्याद्याश्रमविलोपशङ्काप्रसङ्गाद् इत्याशङ्कानिरासाय यज्ञभेदा उच्यन्ते– **दैवमेवेत्यादिना** ॥ अपरे केचिद् योगिनो यतयः दैवं विष्णुं यज्ञं यथा भवति तथा पर्युपासते । भगवदुपासनमेव यतीनां यज्ञो नान्य इति न यत्याश्रमविलोपप्रसङ्ग इति भावः । अपरे अन्ये ब्रह्माख्याग्नौ प्रसिद्धेनाग्निहोत्रादिरूपेण यज्ञं भगवन्तं प्रति जुह्वति । अग्निहोत्रादिकं भगवत्प्रीत्युद्देशेनानुष्ठाय तत्र समर्पयन्तीति यावत् ॥ २५ ॥

**भावदीपिका (श्री.टि.)– ॥ आत्मानमात्मनैवेत्यादि ॥** तथा च यज्ञम् आत्मानं यज्ञेनैव आत्मनैव मनसा वा ब्रह्माग्नावुपजुह्वति ब्रह्मणैकीभावयन्तीत्यर्थो द्रष्टव्यः ॥ **अपव्याख्यानमिति ॥** 'यज्ञेन' इत्यस्याऽत्मना मनसा चेत्यपव्याख्यानमित्यर्थः । तथा च 'यज्ञं भगवन्तम्' इति व्याख्यानेन 'यज्ञम् आत्मानम्' इत्यपव्याख्यानमपि निरस्तं वेदितव्यम् । **एतद्व्याख्यानमिति ॥** यज्ञशब्दव्याख्यानमित्यर्थः । **अतिप्रसङ्गः** यज्ञशब्दाभाववत्यपि स्थले एवं व्याख्यानरूपः। 'तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः' इति श्रुत्यर्थं वदन्नेवोत्तरवाक्यमवतारयति– **एवं तर्हीति ॥ बर्हिषि** यज्ञे । **प्रौक्षन्** हिंसनार्थं प्रोक्षणादिकं कृतवन्तः ॥ २५ ॥

**भावप्रकाशः (कृ.टि.)– ॥ ब्रह्माग्नावित्यस्येति ॥** अत्र परभाष्यम् 'ब्रह्मशब्देन निर्विशेषं ब्रह्मोच्यते । ब्रह्म चासावग्निश्चेति होमाधिकरणत्वविवक्षया ब्रह्म अग्निः, तस्मिन् ब्रह्माग्नौ अपरे ब्रह्मविदः यज्ञमात्मानं सोपाधिकमात्मानं यज्ञेनैवात्मनैव सोपाधिकेन मनसा वा उपजुह्वति प्रक्षिपन्ति' इति । तस्येदं तात्पर्यम्– **ब्रह्मणैकीभावयन्तीति ॥ एवशब्देनेति ॥** अनेनैवशब्दो न पूर्वान्वयी । किन्तु एवमेव व्याख्येयमिति पृथगन्वेतीत्युक्तं भवति । तेन यथाश्रुतान्वये तृतीयान्त-यज्ञशब्दापव्याख्याननिरासकत्वेऽपि कथमपव्याख्यानमात्रनिरासकत्वमित्यपास्तम् । **निराकरोतीति ॥** विष्णुयज्ञयोः यज्ञशब्दार्थत्वे प्रमाणवत् सोपाधिकात्ममनसोस्तदर्थत्वे प्रमाणाभावात् जीवब्रह्मैक्यस्य सर्वप्रमाणविरुद्धत्वाच्चेति भावः ॥

ननु यज्ञेनेत्यस्य प्रसिद्धयज्ञार्थत्वे द्रव्ययज्ञा इत्यस्य पुनरुक्तत्वप्रसङ्ग इति चेन्न । तपआदेः परमेश्वरार्पणबुद्ध्या तत्र होमवत्प्रसिद्धयज्ञानुष्ठानानन्तरं अयं यज्ञो हविः तद्ब्रह्माग्नौ जुहोमि तत्पूजार्थमिति मानसहोमस्यात्र विवक्षितत्वात् । अत एव यज्ञेनेति तृतीयोपपत्तिरिति बोध्यम् । **अतिप्रसङ्गेति ॥** यज्ञेन यज्ञमित्यादावेवं व्याख्याननिरासायेत्यर्थः । **अग्रतो जातमिति ॥** ज्येष्ठपुत्रं रुद्रमित्यर्थः ॥ २५ ॥

## श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
## शब्दादीन् विषयानन्ये इन्द्रियाग्निषु जुह्वति ॥ २६ ॥

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** अन्ये योगिनः श्रोत्रादीनि ज्ञानेन्द्रियाणि संयमाग्निषु प्रतीन्द्रियं संयमो भिद्यत इति बहुवचनम् । संयमा एवाग्नयः, तेषु जुह्वति । प्रत्याहारेण

श्लोकः २७,२८

भगवत्पूजात्वेनैवेन्द्रियसंयमनं कुर्वन्ति । अन्ये योगिनः शब्दादीन् शब्दस्पर्शरूपरसगन्धान् श्रोत्रादीन्द्रियाख्याग्निषु जुह्वति । भगवत्पूजात्वेन विषयान् इन्द्रियैर्भुञ्जत इत्यर्थः ॥ २६ ॥

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥**

## भाष्यम्

**आत्मसंयमाख्योपायाग्नौ ॥ २७ ॥**

भावप्रदीपिका (प.टी.)– 'आत्मसंयम....' इत्यप्रतीतिं निराचष्टे– **आत्मेति** ॥२७॥

भावप्रकाशिका (न.टी.)– ॥ **आत्मा** अन्तःकरणम् । तस्य संयमे सतीन्द्रियादिसंयमो भवतीति तस्योपायतेति भावः ॥ २७ ॥

प्रमेयदीपिका (ज.टी.)– 'आत्मसंयम' इत्येतद् दुर्गमार्थत्वाद् व्याख्याति – **आत्मेति** ॥ **आत्मनः** मनसः । आत्मसंयमाख्यो य उपायः स एवाग्निः ॥ २७ ॥

भावरत्नकोशः (सु.टि.)– आत्मनः संयमः आत्मसंयमः, स चासौ योग इति विग्रहमभिप्रेत्यात्मशब्दार्थमाह– आत्मनो मनस इति ॥ य उपाय इति ॥ गीतागतयोगशब्दार्थो य उपाय इतीति भावः । विवृतं च प्राचीनटीकायाम् - आत्मनः अन्तःकरणस्य संयमे सति इन्न्द्रियादिसंयमो भवतीति तस्योपायतेति ॥

**अक्षरार्थस्तु** अपरे योगिनः सर्वाणीन्द्रियकर्माणि वाक्-पाणि-पाद-पायु-उपस्थ-शब्दित-कर्मेन्द्रियव्यापारान् प्राणकर्माणि प्राणापानादिव्यापारांश्च आत्मसंयमयोगाग्नौ आत्मनो मनसः संयमो निग्रहशब्दितो योग उपायः स एव अग्निः तस्मिन् ज्ञानदीपिते जुह्वति । भगवदधीनताज्ञानपूर्वकं स्वातन्त्र्याभिमानत्यागेन मनो निगृह्य कर्मेन्द्रियव्यापारान् भगवत्पूजात्वेन नियच्छन्तीत्यर्थः ॥२७॥

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥**

श्लोकः २८

## भाष्यम्

**द्रव्यं जुह्वतीति द्रव्ययज्ञाः । तपः परमेश्वरार्पणबुद्ध्या तत्र जुह्वतीति तपोयज्ञाः इत्यादि । इदं तपो हविस्तद्ब्रह्माग्नौ जुहोमि तत्पूजार्थमिति होमः । तदर्पण एव च होमबुद्धिः ॥ २८ ॥**

भावप्रदीपिका (प.टी.)– यथैतेषु यज्ञशब्दप्रत्ययौ स्यातां, तथा द्रव्ययज्ञादीन् प्रदर्शयति । होमप्रकारमाह– **इदमिति** ॥ ननु तपश्चरणायेव तपोयज्ञादि, नेश्वरार्पणमित्यत आह– **तदिति** ॥ ननु तपश्चरणायेव तपोयज्ञादि, नेश्वरार्पणमित्यत आह– **तदिति** ॥ न चरणमात्रेण होमबुद्धिर्भवतीत्यर्थः ॥ २८ ॥

भावप्रकाशिका (न.टी.)– यथैतेषु यज्ञशब्दप्रत्ययौ स्याताम्, तथैतान् द्रव्ययज्ञादीन् निरूपयति– **द्रव्यमित्यादिना** । **द्रव्यं** सोमादि । न तापसा एव तपोयज्ञाः । किन्तु वक्ष्यमाणप्रकारेण तद्भगवत्यर्पिता एवेति भावेनाह– **तप इति** ॥ आदिशब्देन योगं परमेश्वरार्पणबुध्या परमेश्वरे जुह्वतीति योगयज्ञा इत्यादि । एतदेव विवृणोति– **इदमित्यादिना** ॥ तस्य तपसो ब्रह्मण्यर्पणे सत्येव होमबुद्धिः, ननु तपश्चरणमात्रे सतीत्यर्थः ॥ २८ ॥

प्रमेयदीपिका (ज.टी.)– ननु द्रव्यं यज्ञो न भवति । तत्कथं बहुव्रीहिः? तत्पुरुषत्वे च कथं पुरुषसामानाधिकरण्यम्? इत्यत आह– **द्रव्यमिति** ॥ अनेन नायं यज्ञशब्दो भावार्थः । किन्तु कर्त्रर्थः । तथाच द्रव्यस्य यज्ञाः याजका इत्यर्थ इत्युक्तं भवति । एतदाशङ्कापरिहारायेव तपोयज्ञाः इत्येतदप्येवमेव व्याचष्टे– **तप इति** ॥ **तत्र** परमेश्वरे । योगयज्ञाः इत्यादिकमप्येवमेव व्याख्येयमिति दर्शयति– **इत्यादीति** ॥ तपसो होमः कथम्? इत्यत आह– **इदमिति** ॥ तपश्चरणमेव तपोयज्ञः किं न स्यात् ? इत्यत आह– **तदर्पण एवेति** ॥ अनेनैव प्रकारेण यज्ञत्वसम्पादनम् । नान्यथेत्यर्थः ॥ २८ ॥

भावदीपः (रा.टि.)– ॥ **तत्पुरुषत्व इति** ॥ द्रव्याणां यज्ञ इत्येवं तत्पुरुषत्व इत्यर्थः ॥ **एतदाशङ्कापरिहारायेति** ॥ तपो यज्ञो येषाम् इति बहुव्रीहित्वे तत्पुरुषत्वे च प्रागुक्तदोष इति शङ्कापरिहारायेत्यर्थः ॥ **एवमेवेति** ॥ यज्ञशब्दस्य कर्त्रर्थताभिप्रायेणेत्यर्थः ॥ २८ ॥

श्लोकः २८

**भावरत्नकोशः (सु.टि.)**– ॥ द्रव्यं सोमपशुपुरोडाशादि ॥ **बहुव्रीहिः** 'द्रव्यं यज्ञो येषाम्' इति बहुव्रीहिः । **तत्पुरुषत्वे** 'द्रव्याणां यज्ञः' इति षष्ठीतत्पुरुषत्वे । **पुरुषसामानाधिकरण्यमिति** ॥ विशेष्यसमर्पकयतिपदोक्तपुरुषसामानाधिकरण्यमित्यर्थः । **अनेन** 'जुह्वति' इति कर्त्रर्थकाख्यात-प्रयोगेण । **कर्त्रर्थ इति** ॥ यद्यपि 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इति यजतेर्नङ्प्रत्ययो विहितः । स च 'भावे', 'अकर्तरि च कारके' इत्यधिकाराद् भावे कर्तृवर्जितेऽन्यस्मिन् कारके च भवन् न कर्तरि । तथाऽपि 'कृत्यल्युटो बहुलम्' इत्यतो बहुलग्रहणाद् अन्यत्रापि कृतः प्राप्तिम् अत्यन्तं व्यभिचरन्तीति वृत्तिकारवचनात् कर्तर्यपि नङ्प्रत्ययो नायुक्त इति भावेनेयमुक्तिरिति द्रष्टव्यम् । **इत्युक्तं भवतीति** ॥ तथा चोक्तरीत्या तत्पुरुषत्वेऽपि पुरुषसामानाधिकरण्यमुपपन्नमिति भावः ॥

नन्वेवं चेद् द्रव्यं यजन्तीति द्रव्ययज्ञाः, तपो यजन्तीति तपोयज्ञा इत्यादि भाषितव्यम् । न पुनः 'जुह्वति' इति चेन्न । देवतां यजतीत्यत्र देवताया उद्देश्यत्वावगमाद् अत्रापि द्रव्यस्योद्देश्य-त्वस्य शङ्का स्यात् । तच्चात्र न विज्ञातव्यम्, यजनसाधनत्वमात्रं ज्ञातव्यम् । तच्च जुह्वतीत्युक्तौ लभ्यते । अतो द्रव्यं जुह्वतीत्युक्तौ न तच्छङ्का गीयते चात्र प्रकरणे 'जुह्वति' इति पदाभ्यासः । तस्य च ददतीत्यर्थः प्रतीयते इत्यभिप्रायेण तथा भाषणात् । 'जुह्वति' इत्यस्यैव 'यजन्ति' इत्यर्थ-कत्वाच्च । अत एव 'इदं तपो हविः एतद्ब्रह्माग्नौ जुहोमि । तत्पूजार्थमिति होमः' इति होमस्य यज्ञत्वं वक्ष्यतीति ॥

**एतदाशङ्केति** ॥ 'तपो यज्ञो न भवति । तत्कथं बहुव्रीहिः ? तत्पुरुषत्वे च कथं पुरुष-सामान्याधिकरण्यम् ?' इत्याशङ्केत्यर्थः । **एवमेवेति** ॥ तपसो याजकास्तपोयज्ञा इतिवत् योगं परमेश्वरार्पणबुद्ध्या परमेश्वरे जुह्वतीति **योगयज्ञाः** । स्वाध्यायं भगवत्पूजात्वेनाधीयानाः **स्वाध्याय-यज्ञाः** । भगवत्पूजात्वेन श्रवणादि कृत्वा तत्रार्पयन्तः **ज्ञानयज्ञा** इत्येवमेवार्थः ॥

**तपसो होमः कथमिति** ॥ 'तपो जुह्वति' इति तपसो होम उक्तः । स कथम् ? अद्रव्य-रूपत्वेन तेन तन्निवर्तनायोगादिति शङ्कितुर्हृदयम् । तस्य तपसो ब्रह्मण्यर्पणे सत्येव होमबुद्धिः, न तु तपश्चरणमात्रे सतीत्यर्थ इति तदर्पण एव च होमबुद्धिरिति भाष्यं व्याख्यातं प्राचीनटीकायामिति तत्तात्पर्यमाह– **अनेनैव इति** ॥ होमबुद्धिविषयत्वेनैवेत्यर्थः । **अन्यथा** तपश्चरणत्वेन ॥ २८ ॥

**अक्षरार्थस्तु** अपरे द्रव्ययज्ञाः द्रव्यस्य याजकाः । तपः परमेश्वरार्पणबुद्ध्या तत्र जुह्वतीति तपोयज्ञाः । योगं ध्यानं परमेश्वरार्पणबुद्ध्या तत्र जुह्वतीति योगयज्ञाः । स्वाध्यायं विष्णुपूजात्वेना-

धीयते इति स्वाध्याययज्ञाः । भगवत्पूजात्वेन श्रवणाद्यनुष्ठाय ज्ञानमापादयन्तीति ज्ञानयज्ञाः । संशितव्रताः सुतीक्ष्णव्रताः यतयो यतनशीलाः केचन सन्ति ॥ २८ ॥

भावदीपिका (श्री.टि.)– ॥ **बहुव्रीहिरिति** ॥ द्रव्यं यज्ञो येषां ते द्रव्ययज्ञा इति बहुव्रीहिरित्यर्थः ॥ **तत्पुरुषत्व इति** ॥ द्रव्यस्येत्यादिषष्ठ्यादितत्पुरुषत्व इत्यर्थः ॥ **पुरुषेति** ॥ अपर इत्युक्तेत्यर्थः ॥ **भावार्थ इति** ॥ यजनरूपधात्वर्थप्रतिपादक इत्यर्थः ॥ **कर्त्रर्थ इति** ॥ यजतीति यज्ञ इत्यर्थः । कर्त्रर्थमेव दर्शयति – **याजका इति** ॥ होमकर्तार इत्यर्थः ॥ **एतदाशङ्केति** ॥ ननु तपो यज्ञो न भवति, तत्कथं बहुव्रीहिः? तत्पुरुषत्वे च कथं पुरुषसामानाधिकरण्यम्? इति शङ्कापरिहारायैवेत्यर्थः । **एवमेवेति** ॥ यज्ञशब्दस्य कर्त्रर्थत्वमभिप्रेत्येत्यर्थः । तपसो यज्ञा याजका इत्येवमेवेत्यर्थः । **अनेनैव प्रकारेणेति** ॥ 'इदं तपो हविः' इत्युक्तप्रकारेण तदर्पणे कृते सत्येव यज्ञत्वं सम्पद्यत इति भावः ॥ २८ ॥

भावप्रकाशः (कृ.टि.)– ॥ **पुरुषसामानाधिकरण्यमिति** ॥'यतयः' इत्युक्तयतिरूपपुरुषसामानाधिकरण्यमित्यर्थः ॥ **कर्त्रर्थ इति** ॥ यद्यपि यज-याज-यत-विच्छ-प्रच्छरक्षो नङ् इति यजेर्नङ्विहितः । स च भावे । अकर्तरि च कारक इत्यधिकाराद् भावादावेव, न कर्तरि । तथाऽपि 'कृत्यल्युटो बहुलम्' इत्यत्र अबहुलमिति योगविभागेन कृन्मात्रस्यार्थ-व्यभिचारोक्तेः कर्तर्यपि नङ्प्रत्ययो युक्त इत्यभिप्रेत्यैवमुक्तम् । **एतदाशङ्केति** ॥ तपो यज्ञो न भवति तत्कथं बहुव्रीहिः । तत्पुरुषत्वे च कथं पुरुषसामानाधिकरण्यमित्याशङ्केत्यर्थः ॥ २८ ॥

**अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।**
**प्राणापानागती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥**

## भाष्यम्

**अपरे प्राणायामपरायणाः प्राणमपाने जुह्वति, अपानं च प्राणे । कुम्भकस्था एव भवन्तीत्यर्थः ॥ २९ ॥**

भावप्रदीपिका (प.टी.)– 'अपरे' इत्युक्तं यज्ञं दर्शयति– **अपर इति** ॥ २९ ॥

भावप्रकाशिका (न.टी.)– 'अपाने' इत्यादिश्लोकस्य पूरणरेचककुम्भकपरत्वेन यदप-

श्लोकः २९

व्याख्यानं तन्निराकुर्वन् यथार्थमाह– **अपर इति** ॥ येऽपरे प्राणायामपरायणाः ते प्राणापानगती रुद्ध्वा, रेचनपूरणे हित्वा, प्राणापानावितरेतरयोः जुह्वति । अस्यायं फलितार्थः 'कुम्भकस्थाः' इत्युत्तरार्धोक्तम् ॥ २९ ॥

**प्रमेयदीपिका** (ज.टी.)– 'अपाने जुह्वति' इत्येतत् पूरकरेचककुम्भकपरतया केचिद् व्याचक्षते । तदसत् । अध्याहारादिप्रसङ्गात् । पूरकरेचकयोः कुम्भकार्थत्वेन, पृथक् प्राणायामत्वाभावाच्चेति भावेन कुम्भकमात्रपरतया योजयति– **अपर इति** ॥ परायणाः इत्यतः परं प्राणापानगती रुद्ध्वा इति द्रष्टव्यम् । अभिप्रायमाह– **कुम्भकस्था एवेति** ॥ एवशब्देनापव्याख्यानं व्यावर्तयति ॥

**भावबोधः** (र.टि.)– ॥ **अध्याहारादिप्रसङ्ग इति** ॥ अपरे अपाने जुह्वति प्राणं, प्राणे अपानं जुह्वति प्राणापानगती रुद्ध्वा, प्राणायामपरायणाः भवन्तीति योजनायां भवन्तीत्यस्याध्याहारः । आदिपदेन जुह्वतीत्यस्यावृत्तिर्वाक्यभेदश्चेत्यर्थः ॥

**भावदीपः** (रा.टि.)– ॥ **अध्याहारादीति** ॥ अपरे पूरकाः 'अपाने प्राणं जुह्वति', अपरे रेचकाः 'प्राणेऽपानं जुह्वति', अपरे कुम्भकस्थाः प्राणापानगतीः रुद्ध्वा प्राणायामपरायणाः भवन्तीत्यध्याहारवृत्त्योः वाक्यभेदस्य च प्रसङ्गादित्यर्थः ॥ २९ ॥

**भावरत्नकोशः** (सु.टि.)– 'अपाने अपानवृत्तौ प्राणं प्राणवृत्तिं जुह्वति प्रक्षिपन्ति । पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । प्राणेऽपानं तथाऽपरे जुह्वति रेचकाख्यं प्राणायामं कुर्वन्ति । प्राणापानगती रुद्ध्वा । मुखनासिकाभ्यां वायोर्निर्गमनं प्राणस्य गतिः । तद्विपर्ययेणाधो गमनमपानस्य गतिः । एवंविधे प्राणापानगती निरुध्य प्राणायामपरायणाः प्राणायामतत्परा भवन्ति कुम्भकाख्यं प्राणायामं कुर्वन्तीत्यर्थः' इति सङ्करभाष्यमर्थतोऽनुवदति– **अपाने जुह्वतीत्येतदिति** ॥ 'पद्यम्' इति योज्यम् । **अध्याहारादीति** ॥ 'प्राणायामपरायणाः' इत्यत्र वाक्यपरिसमाप्तये 'भवन्ति' इति पदाध्याहारः । आदिपदेन केचित्पूरकस्थाः, केचिद्रेचकस्थाः, केचित्तु कुम्भकस्था इति वाक्यभेदो गृह्यते ॥

स्वव्याख्याने एकवाक्यतां घटयितुमाह – **इत्यतःपरमिति** ॥ 'प्राणापानगती रुद्ध्वा रेचनपूरणं हि प्राणापानौ इतरेतरयोर्जुह्वति' इति व्याख्यातं प्राचीनटीकायाम् । **अभिप्रायमिति** ॥ अपरे

श्लोकः २९

प्राणायामपरायणाः प्राणापानगती रुद्ध्वा प्राणम् अपाने जुह्वति, अपानं च प्राण इत्यस्याभिप्रायमित्यर्थः । परपक्षे स्वोक्तदूषणं भाष्यारूढमित्याह– **एवशब्देनेति** ॥

**अक्षरार्थस्तु** अपरे प्राणायामपरायणाः प्राणायामतत्पराः प्राणापानगती रुद्ध्वा रेचनपूरणे हित्वा प्राणम् अपाने जुह्वति, अपानं च प्राणे, प्राणापाने इतरेतरयोर्जुह्वति कुम्भकस्था एव भवन्तीति तात्पर्यार्थः ॥ २९ ॥

**भावदीपिका (श्री.टि.)– ॥ केचिद् व्याचक्षत इति ॥** यथोक्तं तदीयभाष्ये 'अपाने अधोवृत्तौ प्राणम् ऊर्ध्ववृत्तिं पूरकेण जुह्वति= पूरकस्थले प्राणम् अपानेनैकीकुर्वन्ति, तथा प्राणे ऊर्ध्ववृत्तौ अपानम् अधोवृत्तिं रेचकेन जुह्वति= रेचकस्थलेऽपानं प्राणेनैकीकुर्वन्ति । तथा कुम्भकेन प्राणापानयोरूर्ध्वाधोगती रुन्ध्यात् । एवं प्राणापानगती रुद्ध्वा कुम्भकं सम्पाद्य कुम्भकरेचकपूरकैस्त्रिभिः प्राणायामैः प्राणायामपरायणा भवन्तीत्यर्थ इति ॥

**अध्याहारादीति ॥** 'पूरकेण' 'रेचकेन' 'कुम्भकेन' 'रुन्ध्याद्' 'भवन्ति' इत्यध्याहारः स्पष्टः । आदिपदेन 'जुह्वति' इत्यस्यैकीकरणार्थकत्वम् अशाब्दत्वम् । अपानप्राणशब्दयोर्वृत्तौ लक्षणा च स्यादिति ग्राह्यम् ॥ **कुम्भकार्थत्वेनेति** ॥ त्रयाणामपि प्राणायामत्वं हि पराभिप्रेतम् । तदयुक्तम् । रेचकपूरकयोः कुम्भकार्थत्वेन पृथक् प्राणायामार्थत्वाभावात् । प्राणापानयोरुभयोरपि निरोधनं हि प्राणायामः । स च कुम्भक एव । यथोक्तं तन्त्रसारे

'प्राणापानौ रेचयित्वा पूरयित्वा च कुम्भके । स्थितिः प्राणायाम उक्तः ॥' इति ।

॥ **परायणा इत्यतः परमिति** ॥ तथा च अपरे प्राणायामपरायणाः प्राणापानगती रुद्ध्वा प्राणमपाने जुह्वति, अपानं च प्राण इति योज्यम् ॥ **अभिप्रायमिति** ॥ प्राणमपाने जुह्वति, अपानं च प्राणे इत्यनयोः रेचकपूरकस्वरूपनिरूपणपरत्वप्रतीतिनिरासायाभिप्रायमाहेत्यर्थः । तथा चैवं समग्रश्लोकेन कुम्भकमात्रविवरणेन कुम्भकस्थितिरूपप्राणायामो विवृत इति ध्येयम् ॥ **एवशब्देनेति** ॥ तथा च कुम्भकस्था भवन्तीत्येवार्थ इत्येवशब्दान्वयो द्रष्टव्यः ॥ २९ ॥

**भावप्रकाशः (कृ.टि.)– ॥ केचिद्व्याचक्षत इति ॥** अपाने अपानवृत्तौ प्राणं प्राणवृत्तिं जुह्वति प्रतिक्षिपन्ति । पूरकप्राणायामं कुर्वन्तीत्यर्थः । तथाऽपरे प्राणेऽपानं जुह्वति रेचकप्राणायामं कुर्वन्ति । मुखनासिकाभ्यां वायोः निर्गमनं प्राणगतिः तद्विपर्ययेणाधोगमनमपानगतिः । एवंविधे

श्लोकः ३०
प्राणापानगती रुध्वा निरुध्य प्राणायामपरायणाः प्राणायामतत्परा भवन्ति । कुम्भकाख्यप्राणायामं कुर्वन्तीत्येवं केचिद्व्याचक्षत इत्यर्थः । **अध्याहारादीति** ॥ भवन्तीत्यध्याहारः । आदिपदेन वाक्यभेदो ग्राह्यः ॥ २९ ॥

**अपरे नियताऽहाराः प्राणान् प्राणेषु जुह्वति ।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥**

## भाष्यम्

**नियताऽहारत्वेनैव प्राणशोषात् प्राणान् प्राणेषु जुह्वति । 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यादि श्रुत्युक्तप्रकारेण वा । अन्यदपि ग्रन्थान्तरे सिद्धम् । 'यदस्याल्पाशनं तेन प्राणाः प्राणेषु वै हुताः' इति ॥ ३० ॥**

भावप्रदीपिका (प.टी.)– 'अपरे नियाताहाराः' इत्युक्त...योयं यद्वेधि...सप्रमाणकं दर्शयति– **नियतेति** ॥ ३० ॥

भावप्रकाशिका (न.टी.)– तत्रैव तद्धोमं घटयति – **नियताहारत्वेनेति** ॥ यथास्थिता-नामपीन्द्रियाणां नियताहारत्वे सत्यग्नौ हुताहुतिवच्छोपदर्शनात् तेष्वेव तेषां होम इति भावः । यद्वा, मनआदिषु वागादिहोम उत्तरार्धोक्त इत्याह– **यच्छेदिति** ॥ नन्वविरोधात् श्रुतत्वाच्च, एवमेव व्याख्यानं किं न स्यात् ? इत्यत आह– **अन्यदिति** ॥ ३० ॥

प्रमेयदीपिका (ज.टी.)– 'अपरे नियत' इत्यत्र प्राणानां प्राणेषु कीदृशो होमः? नियताऽहारत्वस्य कथमत्रोपयोगः? इत्यत आह– **नियतेति** ॥ **प्राणशोषात्** इन्द्रियवृत्तीनां वृत्तिमस्त्विन्द्रियेषु सङ्कोचात्। जुह्वति 'इत्युच्यते' इति शेषः । एवशब्देन 'श्रोत्रादीनि' (४.२६) इत्यतो भेदं दर्शयति तत्र 'प्रत्याहारेण' अत्र 'नियताहारत्वेनैव' इति । प्राणान् इत्यादिकं प्रकारान्तरेण व्याख्याति– **यच्छेदिति** ॥ **वाक्** वाचम् । **मनसी** मनसि । **यच्छेत्** तन्नियतां ध्यायेत् । अवराणामिन्द्रियदेवतानामुत्तमेन्द्रियदेवतानियतत्वचिन्तनं प्रकारार्थः । **वा** 'प्राणानां प्राणेषु होमः' इति शेषः । अस्मिन् पक्षे 'नियताहाराः' इति पृथग् यज्ञो ज्ञातव्यः । इदमेवास्तु व्याख्यानम् । श्रौतत्वात् । किं पूर्वेण? इत्यत आह– **अन्यदपीति** ॥ ३० ॥

**भावदीपः (रा.टि.)– ॥ 'श्रोत्रादीनि' इत्यत इति ॥** पूर्वोक्तश्लोकादित्यर्थः ॥ भाष्यस्थवा-पदमनूद्य तदनन्तरं शेषमाह– **वा प्राणानामित्यादि** ॥ ३० ॥

**भावरत्नकोशः (सु.टि.)– ॥ कीदृश इति ॥** तप आदेर्भगवत्यर्पणस्य होमत्वमिव इह प्राणेषु प्राणार्पणायोगात् किंप्रकारोऽसौ ? इति प्रश्नाभिप्रायः । **नियताहारत्वस्येति** ॥ यद्यपि 'नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः । तथापि 'द्वौ भागौ पूरयेदन्नैः तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेद्' इति स्मृत्यभिमतं यन्नियताहारत्वं तस्येत्यर्थः । एतादृशेन नियताहारत्वेन कथं प्राणशोष इत्यतः शोषशब्दार्थं विवक्षितमाह– **प्राणशोषादिति** ॥ अनेन कीदृशो होम इत्येतत्समाहितम् । 'जुह्वति' इति भाष्यमनूद्य शेषमाह– **जुह्वतीति ॥ प्रत्याहारेण** प्राणानां प्राणेषु होम उक्तः । **नियताहारत्वेनैव** होम उच्यते । इत्यादिकं 'प्राणान् प्राणेषु जुह्वति' इत्येतत् । वाक्शब्दाद्द्वितीयायाः प्रथमा । द्वितीयाया अलुग्वा । मनश्शब्दात्सप्तम्या दीर्घत्वं च छान्दसमित्यभिप्रेत्य व्याचष्टे – **वाक् वाचमिति** ॥ अन्यथा 'वाङ्मनसे' इति निर्देशः स्यात् । 'तद्यच्छेत्' इत्याद्ययोगश्चेति भावः ॥

'यम उपरमे' इत्यतो लिङि 'यच्छेत्' इति रूपमिति तदनूद्य प्रकृतिप्रत्यययोरर्थमाह – **तन्नियतां ध्यायेदिति** ॥ मनोनियतां चिन्तयेदित्यर्थः । तथा च तत्त्वप्रदीपिका 'वाचं मनसि यच्छेदित्यर्थः' इति । **प्रकारार्थः** भाष्योक्तप्रकारपदार्थः । तथा च काठकं भाष्यम् 'तस्माद्वागात्मिका देवीरुमाद्यास्तु शिवादिषु' इत्यादि । भाष्यगतं वाशब्दमनूद्य ततः शेषमाह – **वेति** ॥ **अस्मिन् पक्षे** 'मनआदिषु वागादीनां होमः' इति पक्षे । **पृथग्यज्ञः** आहारनियमोऽपि भगवत्यर्पितश्चेत् तपोयज्ञ इवायमपि पृथग्यज्ञो ज्ञातव्य इत्यर्थः । **श्रौतत्वात्** 'यच्छेद्वाङ्मनसी' इति श्रुतिसिद्धत्वात् । **पूर्वेण** नियताहारत्वेनैवेत्यादिरूपेण । **अन्यदपि** पूर्वमपि, अल्पाशनं शास्त्र-नियताहार इति भाष्यार्थः ॥ ३०॥

**अक्षरार्थस्तु** अपरे नियताहाराः सन्तः प्राणान् श्रोत्रादीन्द्रियवृत्तीः प्राणेषु वृत्तिमत्स्विन्द्रियेषु जुह्वति सङ्कोचयन्ति । आहारनियमापादितेन्द्रियशक्तिह्रासः केषाञ्चिद् यज्ञ इति भावः । यद्वा प्राणान् वागादीन्द्रियदेवताः प्राणेषु मनोऽभिमान्याद्युत्तमदेवतासु जुह्वति । अवराणाम् इन्द्रिय-देवतानाम् उत्तमेन्द्रियदेवतानियतत्वेन चिन्तनं होम इत्यर्थः । अस्मिन् पक्षे 'नियताहाराः' इति

पृथग्यज्ञो ज्ञातव्यः । उक्तार्थे रुचिजननाय स्तवनं क्रियते । यज्ञविदो यज्ञविशेषज्ञाः यज्ञक्षपित-कल्मषाः यज्ञानुष्ठानविनाशितपापाः सर्वेऽपीति ॥ ३० ॥

**भावदीपिका (श्री.टि.)– ॥ वृत्तिमत्स्विन्द्रियेषु सङ्कोचादिति ॥** सर्वथेन्द्रियवृत्तीनां सङ्कोचे शरीरधारणासम्भवात् 'वृत्तिमत्सु' इत्युक्तम् । स्वल्पवृत्तिमत्स्वित्यर्थः । इन्द्रियैर्बहुतरा विषयवृत्तीः परित्यज्य देहधारणोपयुक्ता एवेन्द्रियवृत्तीः कुर्वन्तीत्येतदेव इन्द्रियवृत्तीनाम् इन्द्रियेषु सङ्कोच इति भाव इत्याहुः ॥

ननु 'अपरे नियताहाराः प्राणान्' इत्यनेनोक्तपक्षस्य 'श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति' इत्यनेनैवोक्तत्वात् पुनरुक्तिरित्यत आह– **एवशब्देनेति** ॥ तं प्रकारमेव विवृणोति– **तत्र प्रत्याहारेणेति** ॥ पूर्वं श्रोत्रादीन्द्रियाणां नियमने विषयेभ्यः प्रत्याहारः कारणमुक्तम् । अत्र नियताहारत्वं कारणमुच्यत इत्यर्थः । 'वा' इत्यनूद्य तदनन्तरं शेषं पूरयति– **वा प्राणानामिति** ॥ नन्ववराणामुत्तमाधीनत्वचिन्तनमेव प्राणानां प्राणेषु होमः । अयमेको यज्ञ इत्यस्मिन् पक्षे नियताहारत्वस्योपयोगाभावाद्वैयर्थ्यम् इत्यत आह– **अस्मिन् पक्ष इति** ॥ आहारनियमनमेवैको यज्ञ इति भावः । **पूर्वेणेति** ॥ 'नियताहारत्वेनैव प्राणशोषाद्' इति पूर्वेणेत्यर्थः ॥ ३०–३१ ॥ ।

**भावप्रकाशः (कृ.टि.)– ॥ नियताहारत्वस्येति ॥** द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेदित्युक्तनियताहारत्वस्येत्यर्थः । ननु मारुतवन्निराहारत्वस्य शोषकत्वानुपलम्भात् । कथं प्राणशोष इत्यत आह– **इन्द्रियवृत्तीनामिति** ॥ **प्रकारार्थः** प्रकार-शब्दार्थः ॥ वाशब्दात् परमध्याहार्यं दर्शयति– **वा प्राणानामित्यादिना** ॥ ३० ॥

## यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
## नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥

भावरत्नकोशः (सु.टि.)– **अक्षरार्थस्तु** उक्तयज्ञकरणे महाफलं तदभावे अनर्थश्चोच्यते – **यज्ञशिष्टेति** ॥ यज्ञेषु देवतायै दत्तं यद्धविः तच्छेषोऽत्रामृतम्, तद्भुजः यथोक्तान् यज्ञान् अनुतिष्ठन्त इति यावत् । सनातनं वेदप्रतिपाद्यं चिरन्तनं वा ब्रह्म यान्ति प्राप्नुवन्ति । अयज्ञस्य यथोक्तानां यज्ञानामेकोऽपि यज्ञो यस्य नास्ति सोऽयम् अयज्ञः, तस्य अयं लोकः अल्पसुखो मानुषो लोकः नास्ति । कुतः अन्यः स्वर्गादिः विशिष्टसाधनसाध्यः ? हे कुरुसत्तम इत्यर्जुनसम्बोधनम् ॥ ३१ ॥

श्लोकः ३२

**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥**

## भाष्यम्

**ब्रह्मणः परमात्मनः मुखे । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' (९.२४) इति वक्ष्यति । मानसिकवाचिककायिककर्मजा एव हि ते सर्वे । एवं ज्ञात्वा तानि कर्माणि कृत्वा विमोक्ष्यसे ॥**

भावप्रदीपिका (प.टी.)– 'ब्रह्मणो वेदस्य' इत्यपव्याख्यानमेवेति भावेनाह– **ब्रह्मण इति** ॥ विष्णोः सर्वयज्ञभोक्तृत्वस्य भगवदनभिमतत्वात् कथमर्थः ? इत्यत आह– **अहं हीति**। नन्वेवं नानाविधयज्ञसद्भावे कर्मात्मकयोगं विहायैव यागान्तरे नियोजयेत्याशङ्कोत्तरत्वेन 'कर्मजान्' इति श्लोकं व्याचष्टे– **मानसेति** ॥ ३२ ॥

भावप्रकाशिका (न.टी.)– 'नन्वहं मुमुक्षुरन्यदैवत्यज्योतिष्टोमादियज्ञं कथं करिष्यामि ?' इति भ्रान्त्या स्वविहितो यज्ञो न त्याज्य इति सूचनाय यदुक्तं भगवता परब्रह्मण एव सर्वयज्ञभोक्तृत्वम् 'एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे' इति । तदन्यैराच्छादितं 'ब्रह्मणो वेदस्य वेदसिद्धा एव च ते यज्ञाः' इति । अतः पुनर्भगवद्भावप्रकाशाय ब्रह्मशब्दार्थमाह– **ब्रह्मण इति** ॥ कथमयं भावो भगवतः ? इत्यत आह – **अहं हीति** । ननु भवतु सर्वो यज्ञो विष्णुदैवत्यः । तथाऽपि 'सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः' इति सर्वकर्मणां दोषावृतत्वोक्तेर्न कर्मात्मकं युद्धाश्वमेधादियज्ञं करोमि, किन्त्वकर्मात्मकं ज्ञानादियज्ञमित्याशङ्कापरिहारत्वेनोत्तरार्धं व्याचष्टे– **मानसेति** ॥

प्रमेयदीपिका (ज.टी.)– 'ब्रह्मणो मुखे वितताः' इत्यस्य 'वेदे प्रतिपादिताः' इति व्याख्यानमसत् । मुखशब्दवैयर्थ्यादित्यभिप्रायेणाह– **ब्रह्मण इति** ॥ परमात्मनः सर्वयज्ञभोक्तृत्वं कुतो भगवत्-सम्मतमित्यत आह– **अहं हीति** ॥ उपासनादीनां कर्मजत्वाभावात् 'कर्मजान् विद्धि तान् सर्वान्' इत्ययुक्तम्? इत्यत आह– **मानसिकेति** ॥ अत्र विमोक्ष्यसे इति सन्नन्तान्मुचः कर्मकर्तरि च लट् । तस्य प्रकृतोपयुक्ततया अर्थमाह– **एवमिति** ॥ एवं ज्ञात्वा यदि सर्वेऽपि यज्ञाः कर्मजा इति जानासि तर्हि तानि युद्धादीनि स्वविहितानि कर्माणि

श्लोकः ३२

**कृत्वैव विमोक्ष्यसे संसारादात्मानं मोक्तुमिच्छसि । सर्वेषां कर्मजत्वज्ञाने तवैव मोक्षार्थं युद्धादिकं कर्तव्यमितीच्छा भविष्यतीत्यर्थः ॥**

**भावबोधः (र.टि.)– ॥ कर्मकर्तरीति ॥** मोक्षकर्मीभूतस्यैवात्मनः कर्तृत्वमिति भावः । कर्मवत्कर्मणा तुल्यक्रिय इति कर्तृभूतस्यापि कर्मणः कर्मवद्भावात् सार्वधातुके यगिति यक् ॥

**वाक्यार्थप्रदीपः (पां.टि.)– ॥ सन्नन्तान्मुचः कर्मकर्तरि लडिति ॥** 'मुच्लृ मोक्षणे' इत्यस्मात् धातोः कर्मणः समानकर्तृकात् 'इच्छायां वा' इति इच्छायां सनि 'सन्यङोः' इति द्वित्वे 'मुचोऽकर्मकस्य गुणो वा' इति गुणे अत्र 'लोपोऽभ्यासस्य' इत्यभ्यास लोपे चोः कुः' इति कुत्वे 'इण्कोः' इति षत्वे 'कषयोगे क्षः' इति क्षत्वे 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां 'कर्मवत् कर्मणा तुल्यक्रियः' इति कर्मवद्भावे यदा कर्तृत्वं कर्मत्वेन विवक्ष्यते तदा सकर्मणामप्यकर्मकत्वात् 'लःकर्मणि च भावे चाकर्मकेभ्यः' इति कर्तरि लकारे 'सार्वधातुके यक्' इति सूत्रे यग्विधानेन कर्मकर्तर्युपसङ्ख्यानमिति यक्प्राप्तौ कर्मवद्भावातिदेशेन कर्तृत्वस्यानिवृत्तेः 'कर्तरि शप्' इति शपि च प्राप्ते 'विप्रतिषेधे परम्' इति परत्वात् शप्यप्राप्ते 'कर्मकर्तरि यग् वाच्या' इत्युक्तेः यकि, 'यस्येति च' इति सनोऽकारलोपे च सति 'थासः से' इति से भावे 'मोक्ष्यसे' इति रूपसिद्धिरिति भावः ॥

**भावदीपः (रा.टि.)– ॥ इति व्याख्यानमसदिति ॥** कुतः? इत्यतो ब्रह्मशब्दस्य वेदार्थकत्वे 'ब्रह्मणि वेदेऽपि वितताः' इत्येतावता पूर्तेरिति भावेन हेतुमाह – **मुखेति ॥ सन्नन्तान्मुच इति ॥** यद्यपि 'मुच्लृ मोक्षणे' इत्यतः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (पा.सू.३.१.७) इति सन्प्रत्यये 'सन्यङोः' इति द्विवचने 'हलन्ताच्च' इति सनः कित्वेन गुणाभावे च मुमुक्षेति भाव्यम् । तथाऽपि गुणाभ्यासलोपौ छान्दसावित्युपेत्य सन्नन्तात् मोक्ष-शब्दात् 'वर्तमाने लट्' (पा.सू.३.२.१२३) इति लटि, तस्य सिवादेशे 'कर्मवत् कर्मणा तुल्यक्रियः' (पा.सू.३.१.८७) इति तृतीयाध्यायाद्यपादीयसूत्रेण 'कर्तरि शप्' (पा.सू.३.१.६८) इत्यतः प्रथमान्तं कर्तृपदमनुवर्त्य 'कर्मणा तुल्यक्रियः कर्मकारकक्रियया तुल्यक्रियः कर्ता कर्मवद्भवति । कर्मकारकनिमित्तं यथा आत्मनेपदे चिण्वद्भद्भावादिकार्याणि लभते' इत्युक्तेः यकि सति, 'अतो लोपः'(पा.सू.६.४.४८)इति अकारलोपे 'स्वयमेव विभिद्यते काष्ठम्' इत्यादाविव 'मोक्ष्यसे' इति रूपसिद्धेः 'कर्मकर्तरि च लट्' इत्युक्तम् ॥

श्लोकः ३२

**भावरत्नकोशः (सु.टि.)**– 'ब्रह्मणो वेदस्य मुखे द्वारे, वेदद्वारेणावगम्यमाना ब्रह्मणो मुखे वितता उच्यन्ते' इति सङ्करभाष्यमर्थतोऽनुवदति– **ब्रह्मण इति** ॥ **मुखशब्देति** ॥ उक्तार्थत्वे 'ब्रह्मणा वितताः' इत्येव विन्यासापत्तेरिति भावः । 'भगवदुपासनं यज्ञः' इत्युक्तत्वादुक्तम्– **उपासनेति** ॥ आदिपदेन तपोज्ञानादीनां ग्रहणम् । **अत्र श्लोके । सन्नन्तान्मुच इति** ॥ 'धातोः कर्मणः समानकर्तृत्वादिच्छायां वा' इति 'मुच्लृ मोक्षणे' इति धातोरिच्छार्थे सनि 'मुचोऽकर्मकस्य गुणो वा' इति सन्नन्तस्य पक्षे गुणः । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । ततः सन्नन्तधात्वर्थकर्मणः कर्तृत्वविवक्षायां 'कर्मवत् कर्मणा तुल्यक्रियः' इति तस्य कर्मवद्भावेन कर्मार्थकलट्प्रत्यययोगात्मनेपदादिकार्यम् । सति चैवं 'विमोक्ष्यसे' इति रूपमिति भावः ।

**भावदीपिका (श्री.टि.)**– ॥ **अहं हीतीति** ॥ तथा च 'अहं हि' इति सर्वयज्ञभोक्तृत्वस्योच्यमानत्वेन भोक्तृत्वस्य च मुखाभावेऽसम्भवान्मुख इत्युक्तमिति भावः ॥ **उपासनादीनामिति** ॥ 'दैवमेवापरे यज्ञम्' इत्युक्तोपासनादिरूपयज्ञानामित्यर्थः ॥ **अत्र विमोक्ष्यस इति सन्नन्तान्मुचः कर्मकर्तरि लडिति** ॥ अत्र 'विमोक्ष्यसे' इत्यस्य 'आत्मानं मोक्तुमिच्छसि' इत्यर्थस्याभिप्रेतत्वेन मोक्षकर्तृभूतस्यैवाऽत्मनः कर्तृत्वं विवक्षितम्, 'कर्मवत्कर्मणा तुल्य' इति कर्तुः कर्मवद्भाव उच्यते, वत्सः स्वयमेवेति प्रयोगात् इत्यवधेयम् ।

ततश्चायं साधनप्रकारः । विपूर्वकात् 'मुच्लृ मोक्षणे' इत्यस्माद् 'इच्छायां सन्' इति सन्प्रत्यये नकारलोपे धातोरभ्यासे 'मुमुच्' इति जाते 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपे मुच् इति जाते 'मुचोऽकर्मकस्य गुणो वा' अकर्मकस्य मुचो गुणो वा स्यात् , सकारादौ प्रत्यये परे इति सूत्रेण उकारस्य ओकारो गुणः । अत्र कर्मणः कर्तृत्वस्याभिप्रेतत्वेन स्वतन्त्रस्य कर्तृभिन्नस्य कर्मणोऽभावादकर्मकत्वम् । एवं च 'मोच् स' इति जाते 'चोः कुः' इति चकारस्य कुत्वे 'मोक् स' इति जाते सकारस्य षत्वे कषयोर्योगे क्षेति जाते 'विमोक्ष' इति सन्नन्तः शब्दः । पश्चात् 'सार्वधातुके यक्' इति यक्प्रत्यये ककारलोपे 'अतो लोपः' इत्यनेन क्षकारस्थस्य अकारस्य लोपे 'विमोक्ष् य' 'विमोक्ष्य' इति जाते पश्चाल्लट् । तस्य चाऽत्मनेपदिनि मध्यमपुरुषे थास् इत्यादेशे 'थासः से' इति थासः सेभावे 'विमोक्ष्यसे' इति लडात्मनेपदिनि मध्यमपुरुषैकवचने रूपं 'भवसे' इतिवद्भवतीति द्रष्टव्यम् ॥

श्लोकः ३२

भावप्रकाशः (कृ.टि.)– ॥ सन्नन्तान्मुचेरिति ॥ मुचेः सनि द्वित्वे 'मुचोऽकर्मकस्य गुणो वा' इति गुणे अत्र लोपः अभ्यासस्य इत्यभ्यासलोपे च मोक्षेति भवति । ततः सन्नन्तधात्वर्थकर्मणः कर्तृत्वविवक्षायां 'कर्मवत् कर्मणा तुल्यक्रियः' इति कर्मवद्भावेन कर्मार्थलट्प्रत्ययवत् यगात्मनेपदयोः सतोः मोक्ष्यत इति भवतीति भावः ॥

## भाष्यम्

**युद्धं परित्यज्य यन्मोक्षार्थं करिष्यसि तदपि कर्म । अतो विहितं न त्याज्यमिति भावः ॥ ३२ ॥**

भावप्रकाशिका (न.टी.)– नन्वत्र तानि कर्माणि कृत्वा इत्ययमंशः कथमागच्छति ? इत्यत आह – **युद्धमिति** ॥ ३२ ॥

प्रमेयदीपिका (ज.टी.)– तत्कथम्? इत्यत आह – **युद्धमिति** ॥ यद्येवमनेके यज्ञाः तर्हि किं कर्मात्मकेन युद्धेन? उपासनादिनैवाहं कृती स्यामित्यर्जुनस्य हार्दं ज्ञात्वा भगवतेदमुक्तम् । तस्यायं भावः । मोक्षार्थं यत् उपासनादिकं युद्धं परित्यज्य करिष्यसि तदपि कर्म । तथाच त्वया विहितातिक्रम एव कृतः स्यात् । नतु कर्मत्यागः । अत एवं जानतस्तव विहितं युद्धादिकं न त्याज्यमिति बुद्धिर्भविष्यतीत्यर्थः ॥

विमोक्ष्यसे इति लडन्तत्वपक्षेऽयमर्थः । किं सर्वयज्ञानां कर्मजत्वज्ञानमात्रेण मोक्षः ? तथाच कुरु कर्मैव (४.१५) इति विधानं व्यर्थमित्यत आह – **एवमिति** ॥ कर्मजान् विद्धि इत्यनेन कथमर्जुनाशङ्कायाः परिहारः ? इत्यत आह – **युद्धमिति** ॥ ३२ ॥

भावबोधः (र.टि.)– ॥ लृडन्तत्वपक्षे इति ॥ 'स्यतासी लृलुटोः' इति स्यः ॥

भावदीपः (रा.टि.)– 'एवं ज्ञात्वा' इत्यनुवादः । तस्य तात्पर्यार्थोक्तिः – यदीत्यादि ॥ आशङ्काया इति ॥ किं 'सर्वयज्ञानाम्' इत्यत्र नाहं युद्धं करिष्यामि इत्यभिमानपूर्वोक्ताशङ्काया इत्यर्थः ॥ ३२ ॥

वाक्यार्थप्रदीपः (पां.टि.)– ननु 'कृगश्रिञ्भूषार्थेभ्यः सनन्ताच्च यक्चिणौ न' इति यक्-निषेधात् न सनन्तात् कर्मकर्तरि यगुक्तिर्युक्तेत्यपरितोषादाह– **विमोक्ष्यस इति लृडन्तत्वपक्षे**

श्लोकः ३२

**अयमर्थ इत्यादिना ॥** 'स्यातासी लृलुटोः' इति स्यप्रत्यये उक्तरीत्या षत्वादौ 'विमोक्ष्यसे' इति रूपसिद्धिरिति भावः ॥

**॥ इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वचक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यचरणानां निजशिष्यकेशवेन विरचिते व्याकरणसृष्टप्रमेयदीपिका वाक्यार्थदीपे चतुर्थोऽध्यायः ॥**

**भावरत्नकोशः (सु.टि.)–** 'एवं ज्ञात्वा' इति भाष्यपदमनूद्य तस्य प्रकृतोपयोग्यर्थवर्णन-परत्वमुपपादयति– **एवं ज्ञात्वा यदीति ॥ इदमुक्तम्** 'कर्मजान् विद्धि तान् सर्वान्', 'एवं ज्ञात्वा विमोक्ष्यसे' इतीदमुक्तम् । **तस्यायं भाव इति ॥** 'एवं ज्ञात्वा' इत्यादि 'भावः' इत्यन्तं भाष्यं भावकथनरूपमित्यर्थः । तद्विशदयति– **मोक्षार्थमित्यादि ॥ लडन्तत्वपक्ष इति ॥** मुचेर्भविष्यदर्थे लटि, स्वरितेत्त्वेन आत्मनेपदे, थासः सेभावे, 'स्यतासी' इति स्यत्वे, पुगन्तलक्षणे गुणे, 'चोः कुः' इति कुत्वे, षत्वे च 'विमोक्ष्यसे' इति लडन्तत्वपक्ष इत्यर्थः । वाढमिति गूढाभिसन्धौ दोषमाह– तथा चेति ॥ तथा सतीत्यर्थः । व्यर्थम् 'आपद्येत' इति शेषः । अर्जुनशङ्कायाः 'यद्येवमनेके यज्ञास्तर्हि' इति अर्जुनकृतशङ्कायाः ॥ ३२ ॥

**अक्षरार्थस्तु** उक्तयज्ञभेदा उपसंह्रियन्ते– **एवं बहुविधा इति ॥** एवं 'दैवमेव' इत्याद्युक्तदिशा बहुप्रकारा यज्ञा ब्रह्मणः परमात्मनो मुखे विततः । बहुविधानामपि यज्ञानां भगवानेव भोक्तेति यावत् । 'अहं हि सर्वयज्ञानां भोक्ता' इति हि वक्ष्यति । इदं च 'श्रोत्रादीनि' इत्यादि-ष्विज्यानुक्तेरिति कोऽन्य इति शङ्कां निवर्तयितुमुक्तम् । उक्तं च प्रस्थानान्तरे 'सर्वयज्ञैः परं ब्रह्म याज्यं विष्ण्वाख्यमव्ययम्' इति ॥

यद्येवमनेके यज्ञाः तर्हि ज्ञानादिनैवालम्, किं कर्मात्मकयज्ञेनेत्यत उक्तम्– **कर्मजानिति ॥** उपासनादीनां कर्मजत्वाभावात् कथं 'कर्मजान् विद्धि तान् सर्वान्' इत्युच्यत इति चेन्न । मानसवाचिककायिककर्मजत्वादुपासनादिसर्वयज्ञानामित्यर्थात् । यद्येवमनेके यज्ञास्तर्हि किं कर्मात्मकेन युद्धेन । उपासनादिनैवाहं कृती स्याम् इत्यर्जुनस्य हार्दं ज्ञात्वा हि भगवतोक्तं– **कर्मजान् तान् सर्वान् एवं ज्ञात्वा विमोक्ष्यस इति ॥** तस्यायं भावः । मोक्षार्थं यदुपासनादिकं युद्धं परित्यज्य करिष्यसि तदेतदपि कर्म । तथा च त्वया विहितातिक्रम एव कृतः स्यात्, न तु कर्मत्यागः । अत एवं जानतस्तव युद्धादिकं स्वविहितं न त्याज्यमिति बुद्धिर्भविष्यति । तथा च

श्लोकः ३२

विमोक्ष्यसे संसारादात्मानं मोक्तुमिच्छसि । सर्वेषां कर्मजत्वज्ञाने तत्रैव मोक्षार्थं युद्धादिकं कर्तव्यमितीच्छा भविष्यतीति । 'विमोक्ष्यसे' इति सन्नन्तान्मुचेः कर्मकर्तरि लडन्तत्वमाश्रित्यायमर्थ उक्तः । लृडन्तत्वपक्षे त्वयमर्थः । किं सर्वयज्ञानां कर्मजत्वज्ञानमात्रेण मोक्षः ? तर्हि 'कुरु कर्मैव' इति विधानं व्यर्थमापद्येत, इत्यत उक्तम् – **एवमिति** ॥ एवं ज्ञात्वा युद्धादिस्वविहितकर्माणि कृत्वा **विमोक्ष्यसे** मुक्तो भविष्यसीति ॥ ३२ ॥

**भावदीपिका (श्री.टि.)**– ॥ **तत्कथमिति** ॥ सर्वेषां यज्ञानां कर्मजत्वज्ञानेन मोक्षार्थं युद्धादिकं कर्तव्यमितीच्छा कथं भविष्यति? व्यधिकरणत्वादित्यर्थः । **कृती** अलंबुद्धिमान् । **इदमुक्तम्** 'कर्मजान् विद्धि' इत्येतदुक्तम् ॥ **कर्मेति** ॥ मानसिककर्मत्वादित्याशयः ॥ **तथा चेति** ॥ युद्धपरित्याग इत्यर्थः ॥ **न त्विति** ॥ युद्धस्यापि विहितकर्मत्वादिति भावः ॥ **एवं जानत इति** ॥ युद्धादीनामपि कर्मत्वेन तत्त्यागे विहितातिक्रम एव कृतो भवति, न कर्मत्याग इत्येवं जानत इत्यर्थः ॥ **लृडन्तत्वपक्ष इति** ॥ तथा च 'विमोक्ष्यसे' इत्यस्य 'मुक्तो भविष्यसि' इत्यर्थः ॥

साधनप्रकारस्त्वित्थम् । विपूर्वकात् 'मुच्' इत्यस्मात् लृडन्तत्वेन 'स्यतासी लृलुटोः' इत्यनेन स्यप्रत्यये 'मुचोऽकर्मकस्य गुणो वा' इति गुणे चकारस्य कुत्वे सस्य षत्वे कषयोर्योगे क्षेति जाते विमोक्ष् य 'विमोक्ष्य' इति निष्पत्त्यनन्तरं लृट्प्रत्यये आत्मनेपदिनि मध्यमपुरुषे लृटः थासादेशे, थासः सेभावे 'विमोक्ष्यसे' इति लृडात्मनेपदिनि मध्यमपुरुषैकवचने रूपं 'भविष्यसे' इतिवद्भवतीति द्रष्टव्यम् । ओमिति चेत्, तत्राऽह– **तथा चेति** ॥ कर्मजत्वज्ञानमात्रसम्पादनेनैवाहं कृती स्याम्, किं कर्मकरणेन? अतः कर्मविधानं व्यर्थमित्यर्थः ॥

**एवमितीति** ॥ तथा च न ज्ञानमात्रेण मोक्षः, किं त्वेवं ज्ञात्वा तानि कर्माणि कृत्वैव विमोक्ष्यसे मुक्तो भविष्यसीति भाष्यार्थः ॥ **अर्जुनशङ्कया इति** ॥ यद्येवमनेकयज्ञास्तर्हि किं कर्मात्मकेन युद्धेन? उपासनेनैवाहं कृती स्यामित्यर्जुनस्य हार्दशङ्कया इत्यर्थः । युद्धमिति भाष्यस्याभिप्रायस्तु पूर्वोक्त एव द्रष्टव्यः । 'विमोक्ष्यसे' इत्यस्य 'आत्मानं स्वयमेव मोक्तुम् इच्छसि', 'मुक्तो भविष्यसि' इत्यर्थद्वयमभिप्रेत्य पक्षद्वयोक्तिरिति ध्येयम् ॥ ३२ ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **तस्यायं भाव इति** ॥ कर्मजान् इति गीतावाक्यस्य भाष्यकारैरुच्यमानो भाव इत्यर्थः । **इत्यर्थ इति** ॥ इतिभाष्यवाक्यार्थ इत्यर्थः । **लृडन्तत्वपक्ष इति** ॥

मुचेर्लृटि स्वरितेत्त्वादात्मनेपदे थासि थासः से भावे स्यप्रत्यये उदात्तत्वादि उभावे पुगन्तगुणे 'चोः कुः' इति कुत्वे षत्वे च मोक्ष्यस इति रूपसिद्धिः । **अर्जुनशङ्काया इति** ॥ यद्येवमनेक यज्ञा इत्यादिशङ्काया इत्यर्थः ॥ ३२ ॥

**श्रेयान् द्रव्यमयाद्यज्ञाद् ज्ञानयज्ञः परन्तप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥**

## भाष्यम्

**अखिलम् उपासनाद्यङ्गयुक्तम् । ज्ञानफलमेवेत्यर्थः ॥ ३३ ॥**

भावप्रदीपिका (प.टी.)– 'सर्व'शब्दागतार्थतया 'अखिल'शब्दार्थमाह – **अखिलमिति** ॥ ३३ ॥

भावप्रकाशिका (न.टी.)– सर्वपदागतार्थत्वेनाखिलपदार्थमाह– **अखिलमिति** ॥ 'तां ध्यात्वा वषट्करिष्यन्' इत्यादिवचनादस्ति कर्माङ्गमप्युपासनम् । तदादिभिरङ्गैर्युक्तमखिल-मित्यर्थः । 'ज्ञाने परिसमाप्यते' इत्यस्यार्थमाह– **ज्ञानफलमेवेति** ॥ ज्ञानं फलं यस्य तत् ज्ञानफलम् । द्रव्ययज्ञादि सर्वं कर्म स्वस्वाङ्गजातयुक्तं यदि ज्ञानं जनयति तर्ह्येव तत्(परि)पूर्णं नान्यथेत्यर्थः ॥ ३३ ॥

प्रमेयदीपिका (ज.टी.)– 'सर्वं कर्म' इत्युक्तत्वात् 'अखिलम्' इति पुनरुक्तिरित्यत आह– **अखिलमिति** ॥ कर्मसमृद्ध्यर्थान्युपासनानि वेद एवोच्यन्ते । खिलं सशेषं न भवतीत्यखिलमित्यर्थः । 'ज्ञाने परिसमाप्यते' इत्यस्य 'ज्ञाने जाते न कर्म कार्यम्' इत्यन्यथा-प्रतीतिनिरासाय तात्पर्यमाह– **ज्ञानेति** ॥ परिसमाप्तिः सम्पूर्णता सफलता । सा च ज्ञाने सतीति सन्निधानाज्ज्ञानलक्षणेनैव फलेनेति भावः ॥ ३३ ॥

भावबोधः (र.टि.)– उपासनायाः कर्मसाध्यत्वात् कथं कर्माङ्गत्वमित्यत आह– **कर्मसमृद्ध्यर्थानीति** ॥ ३३ ॥

॥ इति रघूत्तमयतिकृते श्रीमद्गीताभाष्यटीकाभावबोधे चतुर्थोऽध्यायः ॥

श्लोकः ३३

**भावदीपः (रा.टि.)**– कर्मसाध्यत्वादुपसनाया कथं कर्माङ्गत्वम्? इत्यत आह– **कर्म-समृद्धीति ॥ 'उद्गीथमुपासीत'** इत्यादिना वेद एवोच्यन्त इत्यर्थः ॥ ३३ ॥

**भावरत्नकोशः (सु.टि.)**– ननूपासनायाः कर्मसाध्यत्वात् कथं कर्म प्रत्यङ्गत्वमुच्यत इत्यत आह– **कर्मसमृद्ध्यर्थानीति** ॥ कर्मणां सम्पूर्णफलावाप्त्यर्थान्यपि कानिचिदुपासनानि वेद एव उच्यन्त इति तेषां कर्माङ्गत्वमुपपद्यत इति भाष्ये तथोक्तमिति भावः । तथा च प्राचीनटीकायां ' ध्यात्वा वषट्करिष्यन्' इत्यादिवचनादस्ति कर्माङ्गमुपासनमिति । 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युपासनाविधिप्रकरणे 'एष एव समृद्धिर्यदनुज्ञा समर्धयिता ह वै कामानां भवति' इत्युद्गीथो-पासनादीनां कर्मसमृद्ध्यर्थत्वस्य छान्दोग्येऽवगमात् कर्मसमृद्ध्यर्थान्युपासनादीनीत्युक्तमित्यपि आहुः । अपौनरुक्त्याय भाष्यार्थमाह– **खिलमिति ॥ सशेषम्** अननुष्ठिताङ्गम् । **तात्पर्यं** 'ज्ञानं परिसमाप्यते' इति पादस्येति पूर्वेणान्वयः । 'परिसमाप्यते' इत्यत्र प्रकृत्यर्थः– **परिसमाप्तिरिति** ॥ 'समाप्तविद्यान् धनुषि श्रेष्ठान् यान् सप्त मन्यसे' इतिवत् समाप्तिशब्दोऽत्र पूर्तिवाचीति प्रस्थानान्तरं हृदि कृत्वाऽऽह– **सम्पूर्णतेति** ॥ सम्पूर्णता साङ्गता चेद् 'अखिलम्' इत्यनेन गतार्थतेत्यतो विवक्षितमर्थमाह– **सफलतेति** ॥ ज्ञानस्य फलत्वस्फोरणाय 'सति' इत्युक्तम् । ज्ञानलक्षणेनैव फलेन सा सफलतेति सम्बन्धः । 'ज्ञानं फलं यस्य तज्ज्ञानफलम् । द्रव्ययज्ञादि सर्वं कर्म स्वस्वाङ्गजातयुक्तं यदि ज्ञानं जनयति तर्ह्येव तत्परिपूर्णं नान्यथेत्यर्थः' इति प्राचीनटीकायाम् । भाष्यार्थस्य स्फुटत्वादत्र भावमात्रमुक्तम् ॥ ३३ ॥

**श्रेयानित्यादि त्रिश्लोक्या अयमक्षरार्थः**– उक्तेषु यज्ञेषु को यज्ञः श्रेष्ठ इति जिज्ञासायां ज्ञानयज्ञः इति स्तुत्योच्यते– **श्रेयानिति** ॥ **द्रव्यमयादिति** ॥ उक्तसर्वयज्ञोपलक्षणम् । द्रव्यसाधनसाध्याद् उक्तयज्ञसमुदायादिति यावत् । ज्ञानयज्ञः भगवज्ज्ञानसम्पादनरूपो यज्ञः । श्रेयान् प्रशस्ततरः । हे परन्तप इति सम्बोधनम् । श्रेयस्त्वहेतुरुच्यते सर्वमिति । अखिलं 'समुद्रं मनसा ध्यायीत', 'वायुं मनसा ध्यायेत्' इत्यादि कर्मसमृद्ध्यर्थकोपासनाद्यङ्गयुक्तं सर्वं कर्म ज्ञाने समुत्पन्ने परिसमाप्यते सम्पूर्यते । ज्ञानलक्षणेनैव फलेन फलवद्भवतीत्यर्थः ॥ ३३ ॥

**भावदीपिका (श्री.टि.)**– ननूपासनायाः कर्मसाध्यत्वात् कथं कर्माङ्गत्वम्? इत्यत आह– **कर्मसमृद्ध्यर्थानीति** ॥ **उपासनानि** उद्गीथाद्युपासनानि ॥ **वेद एवेति** ॥ 'समर्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते' (छा. १.१.४) इति छान्दोग्योपनिषदि कथितत्वादिति भावः ॥ **सशेषमिति** ॥ अङ्गानुक्तौ सशेषतैवेति भावः ॥ ३३ ॥

**भावप्रकाशः** (कृ.टि.)– ननूपासनायाः कर्मसाध्यत्वात् कथं कर्माङ्गत्वमित्यत आह– **कर्मसमृद्ध्यर्थानीति** ॥ उद्गीथाद्युपासनानीत्यर्थः ॥ 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति उपासनाविधिप्रकरणे एष एव समृद्धिर्यदनुज्ञा समर्धयिता ह वै कामानां भवति य एवं विद्वानक्षर-मुद्गीथमुपास्त' इति श्रवणादिति भावः ॥ कथमनेनाङ्गयुक्तत्वलाभ इत्यत आह– **खिलमिति** ॥ 'खिलं भवेदप्रभूत' इति विश्वोक्तेः खिलत्वमप्राचुर्यकर्मणांऽप्राचुर्यश्च कर्मानुष्ठानाय अङ्गाननुष्ठान-मेवेति भावेन सदोषमित्युक्तम् ॥ ३३ ॥

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥**

## भाष्यम्

**इदानीमपि ज्ञान्येव । तथाऽप्यभिभवान्मोहः । मा तूक्ता ॥ ३४ ॥**

भावप्रदीपिका (प.टी.)– 'उपदेक्ष्यन्ति' इत्यनेनार्जुनोऽज्ञानीति न शङ्क्यमित्यत आह– **इदानीमिति** ॥ तर्हि 'न पुनर्मोहं यास्यसि' इति कथं मोहः ? इत्यत आह– **तथाऽपीति** ॥ अर्जुनस्य ज्ञानित्वे सिद्धे भवेन्मोहस्याभिभवनिमित्तत्वकल्पनम् । तदेव कुतः ? इत्यत आह– **मा त्विति** ॥ ३४ ॥

भावप्रकाशिका (न.टी.)– न च 'तद्विद्धि' इत्यादिनाऽर्जुनस्याज्ञानिता शङ्कनीयेत्याह – **इदानीमिति** ॥ तत्र प्रमाणं द्वितीयाध्याय उक्तमित्याह – **मा त्विति** ॥ ३४ ॥

प्रमेयदीपिका (ज.टी.)– तद्विद्धि' इत्युक्तत्वादिदानीमर्जुनो न ज्ञानी इति प्रतीतिं निवारयति– **इदानीमपीति**॥ 'तद्विद्धि' इत्यधिकज्ञानार्थमुक्तमिति भावः ॥ ज्ञानी चेत्तर्हि 'यज्ज्ञात्वा' (४.३५) इति तस्य मोहः कथमुच्यत इत्यत आह– **तथाऽपीति** ॥ **अभि-भवात् ज्ञानस्य** । अर्जुनस्य ज्ञानित्वे सिद्धे भवेदेतत् । तत्रैव किं प्रमाणमित्यत आह– **मा त्विति** ॥ ३४ ॥

भावदीपः (रा.टि.)– ॥ **मा त्वितीति** ॥ अर्जुनस्य ज्ञानित्वे प्रमाणं तु द्वितीये (२.४५) 'नरांश इन्द्रश्च' इत्यादिनोक्तमिति भाष्यार्थः ॥ ३४ ॥

श्लोकः ३५

**भावरत्नकोशः** (सु.टि.)– ॥ **इत्युक्तत्वादिति** ॥ लोटोक्तत्वात्, लोटश्च वर्तमानार्थत्वाभावादिति भावः । **मा त्वितीति** ॥ प्रमाणं तूक्तम् । 'नरांश इन्द्रश्च पार्थार्ष्टिषेण' इत्यादिज्ञानिगणनाच्चेति द्वितीयाध्याय इति शेष इति भाष्यार्थो द्रष्टव्य इति हृदयम् ॥ ३४ ॥

अयमक्षरार्थः– ज्ञानस्य कर्मणोऽधिकत्वमुक्त्वा तदापादानं विधीयते– **तदिति** ॥ ज्ञानिनः परोक्षतत्त्वनिश्चयवन्तः । तत्त्वदर्शिनः अपरोक्षज्ञानिनः प्रणिपातेन दण्डप्रणामेन सेवया शुश्रूषया परिप्रश्नेन च प्रसन्नाः ते तुभ्यं ज्ञानं ज्ञानजनकं शास्त्रम् उपदेक्ष्यन्ति, ततो वेदितव्यं विद्धि जानीहि । अर्जुनस्येदानीं ज्ञानित्वेऽपि 'विद्धि' इत्यधिकज्ञानित्वमुक्तम् ॥

ननु पार्थं प्रति ज्ञानोपदेशायैव कृष्णस्य प्रवृत्तत्वात् 'न त्वेवाहम्' इति ज्ञानस्योपदिष्टत्वाच्च कथम् 'उपदेक्ष्यन्ति ते ज्ञानम्' इत्युच्यत इति चेत्– उच्यते । 'उपदेक्ष्यन्ति' इति निश्चितत्वाभिप्रायेण परोक्ष्यतयोपदेक्ष्यामीत्युच्यमानत्वात् न ज्ञानोपदेशार्थं प्रवृत्तत्वविरोधः । नच ज्ञानस्योपदिष्टत्वविरोधः । सङ्क्षेपेणोपदिष्टत्वेऽपि 'ज्ञानं तेऽहम्' (७.२) इत्यादिना पुनरुपदेक्ष्यमाणत्वात् न किञ्चिदप्यनुपपन्नमित्युत्तरप्रस्थाने स्फुटमिति ॥ ३४ ॥

**भावदीपिका** (श्री.टि.)– ॥ **तस्य मोह इति** ॥ 'यज्ज्ञात्वा न पुनर्मोहमेवम्' इतीदानीमिव उत्तरत्र 'न यास्यसि' इत्युक्त्या मोह उच्यत इत्यर्थः ॥ **मा त्वितीति** ॥ 'स हि ज्ञानी नरांश इन्द्रश्च । पार्थार्ष्टिषेणेत्यादिज्ञानिगणनाच्च' इत्यादिना द्वितीयाध्याये प्रमाणमुक्तमस्तीत्यर्थः ॥३४॥

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥**

## भाष्यम्

**येन ज्ञानेन मयि आत्मभूते सर्वभूतानि अथो तस्मादेव मोहनाशात् पश्यसि ॥ ३५ ॥**

भावप्रदीपिका (प.टी.)– येन मोहेन मयि त्वयि च भूतानि पश्यसीत्यथशब्दो मन्त्रभ्रान्तिं पराकर्तुं 'येन भूतानि' इति श्लोकशेषं व्याचष्टे– **येनेति** ॥ ३५ ॥

भावप्रकाशिका (न.टी.)– 'यत्' इत्यादिश्लोकोत्तरार्धं व्याचष्टे– **येनेति** ॥

आत्मनीत्युक्ते त्वयीति शङ्का स्यात् । तद्व्यावृत्त्यर्थं– **'मयि'** इति ॥ न च त्वदादिवदहं परिच्छिन्न इत्येतदर्थम् **'आत्मनि'** इति । एतदेवाह– **मय्यात्मभूत इति** ॥ ३५ ॥

**प्रमेयदीपिका (ज.टी.)**– 'येन भूतानि' इत्यस्य 'येन मोहेन सर्वाणि भूतान्यात्मनि स्वस्मिन्नथो मयि च द्रक्ष्यसि' इत्यन्यथप्रतीतिनिरासार्थमाह – **येनेति** ॥ **आत्मभूते** सर्वान्तर्यामिणि । 'द्रक्ष्यसि' इत्येतत् 'पश्यसि' इति व्याख्यातमिदानीमपि ज्ञान्येवेति ज्ञापयितुम् ॥ ३५ ॥

**भावरत्नकोशः (सु.टि.)**– 'यज्ज्ञात्वा न पुनर्मोहम्' इति प्रकृतो मोहो यच्छब्देन विशेष्यत इति भावेन उक्तम्– **येन मोहेनेति** ॥ 'अथो अपि' इति सङ्करेण भाषणादाह– **अथो मयि चेति** ॥ 'आत्मनि' इत्युक्ते 'त्वयि' इति शङ्का स्यात् । तद्व्यावृत्त्यर्थम्– **मयीति** ॥ नच त्वदादिरिवाहं परिच्छिन्न इति ज्ञापयितुम् 'आत्मनि' इत्युक्तमित्यभिप्रेत्याह 'मय्यात्मभूत इति' इति भाष्यावतारस्य प्राचीनटीकात अवगमात् तदर्थमाह– **आत्मभूते सर्वान्तर्यामिणीति** ॥ ननु 'द्रक्ष्यसि' इत्यत्र व्यत्ययमाश्रित्य भविष्यदर्थकलृटः 'पश्यसि' इति वर्तमानार्थकलटा व्याख्यानं किमर्थमित्यत आह– **द्रक्ष्यसीत्येतदिति** ॥ **इति ज्ञापयितुमिति** ॥ व्याख्यानमिति सम्बन्धः ॥ ३५ ॥

**अयमक्षरार्थः**– ज्ञानं स्तूयते– **यदिति** ॥ यत् मया वक्ष्यमाणं ज्ञात्वा पुनः आद्याध्यायोक्तदिशा बन्धुविषयमोहं न यास्यसि । हे पाण्डव येन ज्ञानेन अथो मोहनाशाद्धेतोः आत्मनि सर्वान्तर्यामिणि मयि सर्वभूतानि अविशेषेण कात्स्न्र्येन द्रक्ष्यसि मदाधारतया सर्वाणि भूतानि तिष्ठन्तीति दर्शनवान् भविष्यसि । 'पश्यसि' इति भाष्यस्य तात्पर्यमुक्तं टीकायाम् । तद्विद्धीत्यन्वय इति ॥ ३५ ॥

**भावदीपिका (श्री.टि.)**– ननु गीतायां 'द्रक्ष्यसि' इति भविष्यदर्थकलृट्प्रत्ययान्तस्य 'पश्यसि' इति वर्तमानार्थकलट्-प्रत्ययान्तपदेन व्याख्यानं कुतः कृतम्? इत्यत आह – **द्रक्ष्यसीत्येतदिति** ॥ ३५ ॥

**भावप्रकाशः (कृ.टि.)**– ननु व्यत्ययमाश्रित्य द्रक्ष्यसीति भविष्यदर्थलृटः पश्यसीति वर्तमानार्थलटा व्याख्यानं किमर्थमित्यत आह – **इदानीमपीति** ॥ ३५ ॥

श्लोकः ३६-३८

**अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।**
**सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ ३६ ॥**

भावरत्नकोशः (सु.टि.)– अपि चेदसीति श्लोकत्रय्या अक्षरार्थस्तु– 'येन' इति करणतया निर्दिष्टं ज्ञानं श्लोकत्रयेण स्तूयते । पापेभ्यः पापकृद्भ्यः । अतिशयेन पापकृत् पापकृत्तमोऽसि चेदपि सर्वं वृजिनं पापार्णवं ज्ञानाख्यप्लवेनैव, न त्वितरेण कर्मादिसाधनेन सम्यक् तरिष्यसि ॥ ३६ ॥

**यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥ ३७ ॥**

भावरत्नकोशः (सु.टि.)– अक्षरार्थस्तु ज्ञानस्य पापनाशकत्वं दृष्टान्तेन प्रत्याय्यते– यथेति ॥ एधांसि काष्ठानि समिद्धः अतिदीप्तः अग्निः यथा भस्मसात्कुरुते भस्मीभूतानि कुरुते, तथा ज्ञानाग्निः ज्ञानाख्याग्निः सर्वकर्माणि पापानि भस्मसात्कुरुते निर्मूलयति । तथा च सूत्रम् 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' इति ॥ ३७ ॥

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत्स्वयं योगसंसिद्धः कालेनाऽत्मनि विन्दति ॥ ३८ ॥**

## भाष्यम्

**करणभूतं ज्ञानं स्तौति पुनः श्लोकत्रयेण ॥ ३६ ॥**

भावप्रदीपिका (प.टी.)– 'येन' इत्यनेन ज्ञानग्रहणे तदुत्तरश्लोकस्वारस्यं स्यात्, नान्यथेति भावेनाह– **करणेति** ॥ ३६-३८ ॥

भावप्रकाशिका (न.टी.)– 'अपि चेदसि' इत्यादेरर्थमाह– **करणभूतमिति** ॥ 'श्रेयान्' इत्यादिश्लोकत्रयेणापि ज्ञानमेव स्तुतमिति सूचयति पुनः शब्देन । स्तुतिप्रकारभेदात् त्रिक-विभागः ॥ ३६-३८ ॥

प्रमेयदीपिका (ज.टी.)– 'येन' (४.३५) इति ज्ञानस्यैव निर्देश इति स्थापयन् 'अपि

चेत्' इत्यादेः प्रतिपाद्यमाह– **करणेति** ॥ **'येन'** इति करणतया निर्दिष्टमित्यर्थः ॥ **'श्रेयान्'** (४.३३) इत्याद्यपेक्षया पुनरिति ॥ ३६-३८ ॥

**भावदीपः** (रा.टि.)– ॥ **इत्याद्यपेक्षयेति** ॥ 'श्रेयान् द्रव्यमयात्' इत्यादिना ज्ञानस्य स्तुतत्वात् 'अपि चेदसि' इत्यादि श्लोकेऽत्र पुनस्तवनं क्रियत इति तदपेक्षया पुनःशब्द इत्यर्थः ॥ ३६-३८ ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **इति स्थापयन्निति** ॥ उत्तरत्रिश्लोक्यामपि ज्ञानपदश्रवणादिति भावः । **येनेति** ॥ **करणतयेति** ॥ कर्तृकरणयोस्तृतीयास्मरणात् 'येन' इति तृतीयया करणतया निर्दिष्टं ज्ञानं स्तौतीति भाष्यार्थ इत्यर्थः । **श्रेयानित्याद्यपेक्षयेति** ॥ 'श्रेयान् द्रव्यमयाद्' इत्यादिना ज्ञानस्तवनस्यैव अर्थतो लब्धत्वात् 'यत्' इति साक्षात्स्तवनाच्च । 'अपि चेदसि' इति श्लोकत्रये स्तवनमेव पुनः क्रियत इति तदपेक्षया पुनःशब्दः इत्यर्थः ॥ ३६-३८ ॥

**अक्षरार्थस्तु**– इह पापनिवर्तकेषु ज्ञानेन सदृशं पवित्रं पावनं शोधकं न हि विद्यते । तद् ज्ञानं स्वयं योगसंसिद्धः योगविषये सम्यक् सिद्धिमान् संसिद्धज्ञानोपायः सन् कालेन बहूनां जन्मनामन्ते ज्ञानवान् 'निःशेषगतदोषाणां बहुभिर्जन्मभिः पुनः । स्यादापरोक्ष्यं हि हरेः' इत्युक्तदिशा सुबहुना । आत्मनि भगवद्विषये स्वस्मिन्वा विन्दति लभत इति ॥ ३८ ॥

**भावदीपिका (श्री.टि.)**– ॥ **ज्ञानस्यैवेति** ॥ न तु त्वदुक्तरीत्या मोहस्येत्यर्थः ॥ **श्रेयानिति** ॥ 'श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परन्तप' इति ज्ञानयज्ञस्य पूर्वं स्तुतत्वादिति भावः ॥ ३६-३८ ॥

भावप्रकाशः (कृ.टि.)– ॥ श्रेयानित्यादिति ॥ श्रेयान् द्रव्यमयाद्यज्ञादित्यादीत्यर्थः ॥३६॥

**श्रद्धावान् लभते ज्ञानं मत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥**

**भावरत्नकोशः (सु.टि.)**– **श्रद्धावानित्यादि श्लोकचतुष्टयस्याक्षरार्थस्तु**– ज्ञानं स्तुत्वा तस्यान्तरङ्गसाधनं फलं चोच्यते– **श्रद्धावानिति** ॥ अत्रोक्तमस्ति । अनेन मम प्रयोजनमस्तीत्यास्तिक्यबुद्धिमान् तत्परः ज्ञानलब्ध्युपायासक्तः संयतेन्द्रियः संयतानि विषयेभ्यः सम्यङ्-

श्लोकः ४०-४२
निवर्तितानीन्द्रियाणि यस्य स तथा । स च ज्ञानं लभते । एवम्भूतं ज्ञानं लब्ध्वा परां शान्तिम् अखिलक्लेशनिवृत्तिविशिष्टपरमानन्दलक्षणमोक्षं अचिरेणाधिगच्छति असति प्रारब्धे, सति तु तस्मिन् तद्भोगसमनन्तरमेवेति शास्त्रान्तरसिद्धम् ॥ ३९ ॥

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥**

भावरत्नकोशः (सु.टि.)– ज्ञानाभावे विपरीतज्ञानादौ च सति अनिष्टमुच्यते– **अज्ञश्चेति** ॥ अज्ञो ज्ञानहीनो विपरीतज्ञानश्च अश्रद्धधानः आस्तिक्यबुद्धिशून्यः । संशयात्मा तत्त्वविषये संशययुक्तमानसः । विनश्यति नरकं प्रतिपद्यते । विपरीतज्ञानी चेत्, तमः प्राप्नोतीति स्वरूपनाश एव व्याख्येयः । अज्ञाश्रद्धधानयोर्नरकप्राप्तिरेव । संशयात्मनस्तु अयं लोकः मानुषो लोकः न परः स्वर्गादिर्वा नास्ति, किं बहुना सुखमेव नास्ति ॥ ४० ॥

**योगसन्न्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४१ ॥**

भावरत्नकोशः (सु.टि.)– ज्ञानसाधनानुवादपूर्वं ज्ञानफलमुच्यते– **योगेति** ॥ योगेन भगवानेव सर्वाणि कर्माणि करोतीति तत्पूजैवेति तस्मिन् संन्यस्तानि कर्माणि येन तं तथा ज्ञानेन तत्त्वावधारणेन संच्छिन्नः संशयः तत्त्वविषयकः येन तथा, आत्मवन्तं स्वामितया परमात्मवन्तं परमात्मभक्तम् । अनेन 'आत्मा जीवश्चेत् स्वसम्बन्धोक्तिरयुक्ता अनुपयुक्ता च । परमात्मा चेत् सर्वेषामपि तद्वत्त्वसाम्यात् को विशेषो ज्ञानिनः?' इति शङ्का निरस्ता । एवंविधं हे धनञ्जय कर्माणि न निबध्नन्ति ॥ ४१ ॥

**तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥**

॥ ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिपत्सु योगशास्त्रे
श्रीकृष्णार्जुनसंवादे ज्ञानयोगो नाम चतुर्थोऽध्यायः ॥

## भाष्यम्

**तत्साधनं विरोधिफलं च तदुक्तैरुक्त्वोपसंहरति ॥ ४२ ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये चतुर्थोऽध्यायः ॥

भावप्रदीपिका (प.टी.)– उत्तरश्लोकचतुष्टयमवतारयति– **तदिति** । 'श्रद्धावान्' इत्यादि ज्ञानसाधनं शान्तिमृच्छति । 'योगसन्न्यस्त' इति ज्ञानफले । 'अज्ञश्च' इत्यादिज्ञानविरोधि 'विनश्यति' इत्यादि तत्फलम् । 'तस्मात्' इत्युपसंहारः ॥ ३९-४२ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां श्रीपद्मनाभतीर्थभट्टारकविरचितयां श्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां चतुर्थोऽध्यायः ॥

भावप्रकाशिका (न.टी.)– उत्तरश्लोकत्रयस्यैकार्थमाह– **तत्साधनमिति** ॥ ज्ञानसाधनं, ज्ञानविरोधि, ज्ञानतद्विरोधिनोः फलं च । तत्र विरोधिफलं विनाशादि । ज्ञानफलं बन्ध-परिहारोऽप्रतिहतविष्णुनिष्ठबुद्धेः सुखरूपिणी ॥ ३९-४२ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां चतुर्थोऽध्यायः ॥

प्रमेयदीपिका (ज.टी.)– उत्तरस्य श्लोकस्य सङ्कीर्णार्थत्वादेकोक्त्यैव तात्पर्यमुक्त्वा तस्मात् इति चतुर्थस्य प्रतिपाद्यमाह– **तदिति** ॥ तस्य ज्ञानस्य साधनम् अन्तरङ्गं श्रद्धादिकम् । विरोधि अज्ञानादिकम् । ज्ञानस्य फलं परशान्त्यादिकम् । विरोधिनः फलं विनाशादिकमिति ॥ ३९-४२ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकायां श्रीजयमुनिविरचितायां प्रमेयदीपिकायां चतुर्थोऽध्यायः ॥ ४ ॥

भावदीपः (रा.टि.)– फलपदं तत्पदपरामृष्टज्ञानेन विरोधिपदोक्ताज्ञानेन चान्वेतीति भावेनाऽह– **ज्ञानस्य फलमित्यादि** ॥ ४२ ॥

॥ इति श्रीमद्गीताभाष्यटीकाभावदीपे राघवेन्द्रयतिकृते चतुर्थोऽध्यायः ॥

श्लोकः ४२

**भावरत्नकोशः (सु.टि.)– ॥ सङ्कीर्णार्थत्वादिति ॥** ज्ञानसाधनतत्फलयोः, अज्ञानतत्फलयोश्च संवलनेनोक्तत्वादित्यर्थः । **प्रतिपाद्यम्** उपसंहारत्वरूपम् । 'ज्ञानसाधनं ज्ञानविरोधि ज्ञानतद्विरोधिनोः फलम्' इति प्राचीनटीकां मनसि निधायाह– **तस्येत्यादि ॥** प्रणिपातादेः ज्ञानसाधनस्याभिहितत्वात् किमत्राभिधातव्यमित्यत उक्तम्– **अन्तरङ्गमिति ॥** अत्यावश्यकमित्यर्थः । 'श्रद्धादिकम्' इत्यत्रादिशब्देन ज्ञानासक्तीन्द्रियसंयमग्रहणम् । **अज्ञानादिकमिति ॥** 'अज्ञश्च' इत्यत्रोक्तम् अज्ञान-अश्रद्धा-संशयरूपं ज्ञानविरोधि विवक्षितमित्यर्थः । 'परशान्त्यादिकम्' इत्यत्र आदिपदेन कर्मबन्धपरिहारो ग्राह्यः । 'विरोधिफलम्' इत्यैकपद्याश्रयणेनाह– **विरोधिनः फलं विनाशादिकमिति ॥ ज्ञानविरोधिनः** अज्ञानादेः । **विनाशादिकं** विनाशो नरकप्राप्तिः । आदिपदेन मानुषलोकस्वर्गलोकसुखाभावग्रहः ॥ ३९-४२ ॥

एवमुपपादितं कर्मणः कर्तव्यत्वमुपसंह्रियते– **तस्मादिति ॥** ज्ञानोपायानुष्ठानाननुष्ठानयोरर्थानर्थवत्त्वाद् अज्ञानेन अधिष्ठानयाथात्म्याज्ञानेन सम्भूतम् उत्पन्नं हृत्स्थं हृदयगतम् आत्मनः संशयं ज्ञानासिना ज्ञानाख्यखड्गेन छित्त्वा परिहृत्य योगं ज्ञानोपायं कर्म आतिष्ठ कुरु । हे भारत उत्तिष्ठ । क्षत्रियस्य तव ज्ञानोपायभूतं कर्म युद्धमेवेति तत्रोद्युक्तो भव । स्वकर्मणा भगवन्तमभ्यर्च्य तं परितोषय इति ॥ ४२ ॥

श्रीमद्गीताभाष्यटीकाचतुर्थाध्यायसेवया ।
गुणिनः परितुष्यन्तु गुणग्रहणभूषणाः ॥

**॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सूरीन्द्रतीर्थपूज्यपादशिष्येण सुमतीन्द्रयतिना विरचितायां प्रमेयदीपिकाव्याख्यायां भावरत्नसमाख्यायां चतुर्थोऽध्यायः ॥**

**भावदीपिका (श्री.टि.)– ॥ उत्तरस्येति ॥** 'श्रद्धावान्' इत्यादिश्लोकत्रयस्येत्यर्थः । **सङ्कीर्णार्थत्वादिति ॥** साधनफलयोर्मिश्रतया गीतायामुक्तत्वाद् एकोक्त्यैव तात्पर्यं स्वयमपि सङ्कीर्णतया वक्तीत्याशयः । श्रद्धादिकं 'श्रद्धावान्' इत्यादिनोच्यत इति ध्येयम् । 'विरोधि', 'फलं च' इति भिन्नपदमित्यभिप्रेत्य व्याचष्टे – **विरोधीति ॥ अज्ञानादिकमिति ॥** अत्राऽऽदिपदेन श्रद्धासंशयसङ्ग्रहः । 'अज्ञश्च' इत्यादिनोच्यत इति ज्ञातव्यम् ॥ **परशान्त्यादिकमिति ॥** आदिपदेन 'योगसंन्यस्तकर्माणम्' इत्यादिनोक्तं कर्मबन्धसङ्ग्रहः । 'ज्ञानं लब्ध्वा' इत्यनेनोच्यत इति द्रष्टव्यम् । 'विरोधिफलम्' इति समस्तं पदमित्यभिप्रेत्यापि व्याचष्टे – **विरोधिन इति ॥** अज्ञानस्य

संशयस्य चेत्यर्थः । **विनाशादिकम्** 'अज्ञश्च' इत्यर्धेन विनाशः । आदिपदेन 'नायं लोकोऽस्ति' इति लोकाभावश्चोच्यत इति द्रष्टव्यम् ॥ ३९–४२ ॥

इति यदुवरगीताभाष्यटीकासुयुक्ताशयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराद्धात्र चीर्णा समगमदयमध्यायोऽन्तमस्यां चतुर्थः ॥

**॥ इति श्रीयदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां श्रीमद्भगवद्गीताभाष्यटीकाविवृतौ भावदीपिका (श्री.टि.) ख्यायां चतुर्थोऽध्यायः ॥**

**भावप्रकाशः (कृ.टि.)–** ज्ञानसाधनकर्मणोभिहितत्वात् पुनरुक्तिरित्यत आह– **अन्तरङ्ग-मिति** ॥ ज्ञानोत्पत्तावत्यावश्यकत्वमित्यर्थः ॥ **परशान्त्यादिकमिति** ॥ आदिपदेन कर्मबन्धा-भावसङ्ग्रहः ॥ ४२ ॥

**॥ इति श्रीमत्तिरुमलाचार्यसुतकृष्णविरचितायां प्रमेयदीपिकाभावप्रकाशे चतुर्थोऽध्यायः ॥**

श्लोकः १

## ।। पञ्चमोऽध्यायः ।।

## अर्जुन उवाच—

**सन्न्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ।। १ ।।**

## भाष्यम्

**तृतीयाध्यायोक्तमेव कर्मयोगं प्रपञ्चयत्यनेनाध्यायेन । 'यदृच्छालाभसन्तुष्टः' (४.२२) इत्यादिना सन्न्यासम् । 'कुरु कर्मैव' (४.१५) इत्यादिना कर्मयोगं च ।।**

भावप्रदीपिका (प.टी.)— एतदध्यायप्रतिपाद्यार्थं दर्शयति— **तृतीयेति** ।। संन्यासं कर्मयोगं च शंससीति कुत्रोक्तमनुवदति ? इत्यत आह— **यदृच्छेति** ।। ज्ञानेन तल्लयविवरणात्मकत्वस्याध्यायस्य चतुर्थत्वं स्यात् । न तदानन्तर्यमिति निरस्तम् । योगसंन्यासकारयितृत्वात् तयोः ।।

भावप्रकाशिका (न.टी.)— नन्वाद्यं षट्कं प्राधान्येन साधनपरम् । मोक्षसाधनं ज्ञानम्, तत्साधनं च कर्म सम्यगेवोक्तमतीताध्यायैः । अतः किं पञ्चमेन ? इत्याकाङ्क्षायामाह— **तृतीयेति** ।। ननु तृतीयसङ्गतस्याध्यायस्य चतुर्थानन्तर्ये को हेतुः ? इत्याकाङ्क्षां परिहरन्नेवाद्यं श्लोकं व्याख्यातुमुपक्रमते— **यदृच्छेति** ।। 'यदृच्छालाभ..' इत्यादिचतुर्थाध्यायोक्तकर्मसंन्यासकर्मयोगविषयाकाङ्क्षोत्तरत्वेन तृतीयाध्यायोक्तप्रपञ्चात्मकत्वादस्य चतुर्थाध्यायानन्तर्यमिति भावः ।

प्रमेयदीपिका (ज.टी.)— पूर्वसङ्गतत्वेनैतदध्यायप्रतिपाद्यमर्थमाह— **तृतीयेति** ।। 'कर्मयोगो नाम कर्माणि कृत्वा तेषां ब्रह्मात्मकत्वज्ञानम्' इति कश्चित् । तद्व्यावर्तयितुमेवशब्दः । फलकामनादित्यागेनेश्वरार्पणबुद्ध्या वर्णाश्रमविहितकर्मानुष्ठानमेव कर्मयोगोऽत्र प्रपञ्च्यते । तस्यैव पूर्वमुक्तत्वात् । नान्यः । तस्याप्रकृतत्वात् । द्व्यंशश्चायं कर्मयोगः । कामादिवर्जनम्, ईश्वरार्पणबुद्ध्या कर्मानुष्ठानं चेति । तत्राद्यं सन्न्यासशब्दोक्तम् । द्वितीयमुपचारेण कर्मयोगशब्दोक्तम् । तदभिप्रायेण योगसन्न्यासयोर्लक्षणं स्पष्टयति' इत्यन्यत्रोक्तमिति ।।

**'सन्न्यासम्'** इत्यादिना कुत्रोक्तमर्जुनोऽनुवदति? इत्यत आह– **यदृच्छेति** ॥ **'कर्मयोगम्'** इति वदता **'कर्मणाम्'** इत्येतद्योगशब्देन सम्बद्ध्यत इत्युक्तं भवति । तथाच **'कर्मणां सन्न्यासं त्यागम्'** इति व्याख्यानमसदिति सूचितम् ॥ शंससि इत्यन्वयः ॥

**चतुर्थाध्यायोक्तस्यार्थस्य एतदध्यायोत्थानवीजत्वात् तृतीयाध्यायप्रपञ्चनात्मकस्याप्यस्य चतुर्थानन्तर्यं युक्तमित्यप्यनेन ज्ञापितम् ॥**

**भावबोधः (र.टि.)–** ॥ उपचारेणेति ॥ कर्मयोगशब्दमुख्यार्थभूतविशिष्टगतस्य ज्ञानसाधनत्वादिगुणस्यैकदेशेऽपि विद्यमानत्वादुपचारेणेत्यर्थः ॥

**भावदीपः (रा.टि.)–** ॥ **पूर्वमुक्तत्वादिति** ॥ 'कर्मण्यकर्म यः पश्येत्' इत्यादिनोक्तत्वादित्यर्थः । यद्वा 'यज्ञार्थात् कर्मणोऽन्यत्र' इत्यादिनोक्तत्वादित्यर्थः ॥ गीतातात्पर्यविरोधं निराह– **व्यंशश्चायमित्यादिना** ॥ **उपचारेणेति** ॥ फलकामत्याग इत्यस्यैव मुख्यतः कर्मयोगशब्दार्थत्वादिति भावः ॥ भाष्ये काङ्क्षितं पूरयति– **शंससीत्यन्वय इति** ॥

**भावरत्नकोशः (सु.टि.)–** एवशब्देन कस्यचिद्व्याख्याननिरासमुपपादयति– **फलकामनादित्यागेनेति** ॥ **पूर्वमुक्तत्वादिति** ॥ 'यज्ञार्थात्कर्मणोऽन्यत्र' इति 'कर्मण्यकर्म यः पश्येद्' इति वा पूर्वमुक्तत्वादित्यर्थः । **नान्यः** 'ब्रह्मात्मकत्वज्ञानं कर्मयोगः' इति परोक्तो न ग्राह्य इत्यर्थः । ननु पूर्वोक्तकर्मयोगप्रपञ्चनपरत्वोक्तौ 'योगसंन्यासयोः लक्षणं स्पष्टयति' इति गीतातात्पर्यविरोधः इत्याशङ्कां परिहर्तुमाह– **द्व्यंशश्चायमिति** ॥ एतेन 'संन्यासस्यापि प्रपञ्चनात् कर्मयोगमेव प्रपञ्चयतीति कथं भाषणम्' इत्यपि निरस्तम् । **उपचारेणेति** ॥ फलकामनादिवर्जनविशिष्टस्यैव कर्मयोगशब्दमुख्यार्थत्वेऽपि, अत्र ज्ञानसाधनादिमुख्यनिष्ठगुणयोगाद् गौण्या वृत्त्येत्यर्थः । 'योग' इत्यादितात्पर्यवाक्यार्थस्तु– पूर्वं समुच्चितः कर्मयोगो निरूपितः । स च योगसंन्यासभेदेन द्विविधः । द्विविधयोश्च स्वरूपं सङ्क्षेपेण 'कुरु कर्माणि सङ्गं त्यक्त्वा' इत्यादावुक्तम् । तदेवानेनाध्यायेन स्पष्टयतीति न्यायदीपिकातोऽवसेयः । **इत्यादिना** 'संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि' इत्यनेन । 'इत्यादिना' इत्यत्र 'वाक्येन' इति योज्यम् । संन्यासं कर्मयोगमिति भाष्यार्थः ।

'कर्मणां संन्यासमवोचत्' इति सङ्करेण भाषणादाह– **इति व्याख्यानमिति** ॥ 'ज्ञेयस्स नित्यसंन्यासी' इति संन्यासशब्दस्य भगवतैवान्यथा व्याख्यानादिति दूषणहेतोर्वक्ष्यमाणत्वादिति

श्लोकः १

भावः । कर्मणः क्रियासापेक्षत्वादाह– **शंससीत्यन्वय इति** ॥ भाष्यगतसंन्यासयोगपदयोः द्वितीयान्तयोः गीतागतशंससिपदेनान्वय इत्यर्थः । ननु तृतीयाध्यायोक्तार्थप्रपञ्चनपरत्वेऽस्य तृतीयानन्तर्यमिति शङ्काऽपि, चतुर्थाध्यायगतस्य 'यदृच्छालाभ'इत्यादिवाक्यस्य ग्रहणेन परिहृतेत्याह– **चतुर्थाध्यायेति** ॥ उक्तवाक्यस्य पुरोवादस्याभावे 'संन्यासम्' इत्यादितदनुवादेन प्रश्नायोगेन नैतदध्यायोत्थानमिति, तस्याप्युपजीव्यत्वादिति भावः ॥

**भावदीपिका (श्री.टि.)–** प्रणम्य यादवाचार्यगुरूणां पदपङ्कजे ।
पञ्चमाध्यायटीकायाः क्रियते भावदीपिका ॥

॥ **तस्याप्रकृतत्वादिति** ॥ कृतानां कर्मणां ब्रह्मात्मकत्वज्ञानरूपस्य कर्मयोगस्याप्रकृतत्वादित्यर्थः । नन्वेवम् एतदध्यायस्य तृतीयाध्यायोक्तकर्मयोगप्रपञ्चनात्मकत्वे 'योगसंन्यासयोर्लक्षणं स्पष्टयत्यनेनाध्यायेन' इति एतदध्यायप्रतिपादनपरेण गीतातात्पर्येण विरोधः स्यात्? इत्यतस्तं परिहर्तुमाह– **द्व्यंशश्चेति** ॥ **उपचारेणेति** ॥ विशिष्टे शक्तस्य कर्मयोगशब्दस्यैकदेशे उपचारः । कर्मयोगशब्दमुख्यार्थभूतविशिष्टगतस्य ज्ञानसाधनत्वादिगुणस्यैकदेशेऽपि सत्त्वादिति भावः ॥ **तदभिप्रायेणेति** ॥ द्व्यंशाभिप्रायेण तत्र प्रतिपाद्यमुक्तम् । अत्र तु विशिष्टाभिप्रायेण इत्यदोष इत्याशयः ।

भाष्ये 'संन्यासम्' 'कर्मयोगम्' इति द्वितीयाया अनन्वयमाशङ्क्य, गीतागतेन 'शंससि' इति पदेनान्वय इत्याह– **शंससीति** ॥ नन्वेतदध्यायस्य तृतीयाध्यायोक्तार्थप्रपञ्चनात्मकत्वे तदानन्तर्यमेव स्यात्, चतुर्थाध्यायानन्तर्यं कुत इत्यत आह– **चतुर्थाध्यायोक्तस्येति** ॥ तृतीयाध्याये कर्मयोगे निरूपिते, 'यदृच्छालाभसन्तुष्ट' इत्यादिना चतुर्थे संन्यासे च निरूपिते सति, 'यच्छ्रेय एतयोरेकम्' इत्यर्जुनशङ्कोत्थानसम्भवेन चतुर्थाध्यायोक्तस्यैतदध्यायोत्थानबीजत्वादित्यर्थः । **अनेनेति** ॥ 'यदृच्छालाभसन्तुष्ट इत्यादिना संन्यासम्' इति वचनेनेत्यर्थः । **वर्णविशेषः** श्यामवर्णः ॥

**भावप्रकाशः (कृ.टि.)–** ज्ञानसाधनकर्मणोऽभिहितत्वात् पुनरुक्तिरित्यत आह– **अन्तरङ्गमिति** ॥ ज्ञानोत्पत्तावत्यावश्यकमित्यर्थः । नन्वेवं सति योगसन्न्यासयोः लक्षणं स्पष्टयतीति तात्पर्यनिर्णयविरोध इत्याशङ्क्य परिहर्तुमाह– **व्यंशश्चेति** ॥ एतेन सन्न्यासस्यापि प्रपञ्चनात् कर्मयोगं प्रपञ्चयतीत्ययुक्तमित्यप्यपास्तम् । **उपचारेणेति** ॥ एकदेशेऽपि कर्मयोगशब्दवाच्यविशिष्टनिष्ठ-

ज्ञानसाधनत्वादिति गुणयोगाद्गौण्या वृत्त्येत्यर्थः । **शंससीत्यन्वय इति ॥** भाष्यस्थसन्न्यासकर्मयोग-पदयोः गीतास्थशंससिपदेनान्वय इत्यर्थः ॥

ननु तृतीयप्रपञ्चनात्मकस्यास्य तदानन्तर्यं युक्तम् । तत्कथं चतुर्थानन्तर्यमित्यत आह– **चतुर्थाध्यायेति ॥ उत्थानवीजत्वादिति ॥** 'यदृच्छालाभसन्तुष्टः, कुरु कर्मैव' इत्यादि चतुर्थाध्यायवाक्यानां पुरोवादत्वेन 'सन्न्यास'मित्याद्यनुवादकारणत्वादिति भावः ॥।

## भाष्यम्

**नियमनादिना सकललोककर्षणात् कृष्णः । तच्चोक्तम्**

> **'यतः कर्षसि देवेश नियम्य सकलं जगत् ।**
> **अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः' इति महाकौर्मे ।**

भावप्रदीपिका (प.टी.)– श्रेयो जानात्येव भगवानित्यभिप्रायेण प्रयुक्त'कृष्ण' शब्दार्थ-माह– **नियमनादिनेति** ॥

**भावप्रकाशिका (न.टी.)– न केवलं संन्यासं कर्मयोगं च शंससि, किन्तु कारयस्यपीति भावेन कृष्णेति सम्बोधितो भगवानर्जुनेनेत्यभिप्रायेण 'कृष्ण'शब्दार्थं सप्रमाणकमाह– नियमनादिनेति** ॥

प्रमेयदीपिका (ज.टी.)– कृष्णशब्दो वर्णविशेषमात्रवचन इति प्रतीतिनिरासायाह– **नियमनादिनेति ॥**

भावरत्नकोशः (सु.टि.)– ॥ **वर्णविशेषमात्रवचन इति** ॥ 'कृषेर्वर्णे' इति नक्प्रत्ययान्तात् 'कृष्णो वर्णोऽस्यास्ति' इति मतुपि, तस्य 'गुणवचनेभ्यो मतुपो लुग् वक्तव्यः' इति लुकि कृष्ण-शब्दो वर्णविशेषवद्वचन एव भवति । अपि तु 'नियमनादिना लोकान् कर्षतीति कृष्णः' इत्यपि व्युत्पत्तिर्ग्राह्येति भावः । नच वक्तव्यं गुणादौ वर्णेऽभिधेये एव नक्प्रत्ययः कृषेर्विहितः, न पुनरन्यत्र वाच्य इति । 'विष्णुर्नारायणः कृष्णः' इत्यत्र 'कर्षत्यरीनिति कृष्णः, बाहुलकाद्वर्णं विनाऽपि 'कृषेर्नक्' इति वैयाकरणैरेव व्याख्यानात् । अस्ति चात्र पौराणिकी निरुक्तिरिति । भाष्ये **नियमनं** स्वस्वव्यापारेषु प्रेरणम् । आदिशब्देन यथासम्भवं सत्ताप्रतीत्यादि ग्राह्यम् । न केवलं संन्यासं

श्लोकः १
कर्मयोगं च शंससि, किन्तु कारयस्यपीति भावेन 'कृष्ण' इति सम्बोधितो भगवानर्जुनेनेति कृष्णशब्देन सम्बोधनेऽभिप्राय उक्तः ॥

भावप्रकाशः (कृ.टि.)– भाष्ये **कर्षणात् कृष्ण इति** ॥ कर्षतीति कृष्णः । 'कृषेर्वर्णे' इत्युक्तत्वेऽपि बाहुलकाद्वर्णं विनाऽपि नक्प्रत्यय इति भावः ॥

## भाष्यम्

**सन्न्यासशब्दार्थं भगवानेव वक्ष्यति । अयं प्रश्नाशयः । यदि सन्न्यासः श्रेयोऽधिकः स्यात् तर्हि सन्न्यासस्येषद्विरोधि युद्धमिति ॥ १ ॥**

भावप्रदीपिका (प.टी.)– 'संन्यास' शब्देन यत्याश्रमः इत्यपव्याख्यां दूषयितुमाह– **संन्यासेति** ॥ ननु यदि 'संन्यास' शब्देन द्वन्द्वत्यागोऽर्जुनाभिमतः, तर्हि योगसंन्यासयोरैकाधिकरण्याविरोधात् कथं विरोधाभिप्रायेण प्रश्नः ? इत्यत आह– **अयमिति** ॥ १ ॥

भावप्रकाशिका (न.टी.)– द्वन्द्वत्याग एवात्र संन्यासः, न माय्युक्तप्रकारेण निष्क्रियपरमात्माऽहमिति ज्ञानेन शास्त्रीयसर्वकर्मप्रहाणमिति भावेनाह– **संन्यासशब्दार्थमिति** ॥ ननु यदि द्वन्द्वत्याग एवात्र संन्यासः, तर्हि संन्यासकर्मयोगयोरेकेनापि कर्तुं शक्यत्वात् तयोरन्यतरं मे ब्रूहीति प्रश्नोऽनुपपन्न इत्यत आह – **अयमिति** ॥ यदि कर्मयोगोऽधिकः स्यात् तर्ह्येव युद्धं विधीयेत, यदि तु संन्यासः न तर्हि तद्विधानं घटते । युद्धस्य कामक्रोधात्मकत्वात्, तत्त्यागात्मकत्वाच्च संन्यासस्येति भावः । अमुख्याधिकारिषु युद्धकरणे कामक्रोधहानयोर्विरोधित्वेऽपि मुख्याधिकारिष्वविरोधात् ईषद्विरोधि इति ॥ १ ॥

प्रमेयदीपिका (ज.टी.)– 'नित्यनैमित्तिककाम्यनिषिद्धरूपसर्वकर्मपरित्यागः सन्न्यासशब्दार्थः' इति व्याख्यानं दूषयति– **सन्न्यासेति** ॥ 'ज्ञेयः स नित्यसन्न्यासी' (५.३) इति सन्न्यासशब्दस्य भगवतैवान्यथाव्याख्यातत्वात् तद्विरुद्धं परव्याख्यानमित्यर्थः । यदि सर्वकर्मपरित्यागो नैव सन्न्यासशब्दार्थः,किन्तु द्वेषादिवर्जनमेव; तर्हि तस्य योगेन विरोधाभावात् सन्न्यासयोगयोर्विरोधाभिप्रायेण श्रेयःप्रश्नोऽनुपपन्नः स्यादित्यत आह– **अयमिति** ॥

**अत्र 'श्रेयः' इति यथास्थितं गीतापदमनूद्य सन्न्यासपदानुगुण्येन अधिकः इति व्याख्यातम् । नन्वेतत् 'घोरे' (३.१) इति चोदितम्; 'श्रेयान्'(३.३५) इति परिहृतं च । सत्यम् । अत एवात्र ईषत् इत्युक्तम् इति । अतस्तत् त्यक्त्वा सन्न्यास एव कर्तव्ये किं वैगुण्यमङ्गीकृत्यापि युद्धं विधीयते' इत्याशयशेषः ॥ १ ॥**

भाववोधः (र.टि.)– ॥ **वैगुण्यमिति** ॥ कामादिवर्जनस्य कर्मयोगाङ्गत्वाद्युद्धे च तदसम्भवाद् वैगुण्यमित्यर्थः ॥

**भावदीपः (रा.टि.)– ॥ अन्यथाव्याख्यातत्वादिति** ॥ 'अनुपदमेवाग्रे' इति योज्यम् ॥ **नन्वेतदिति** ॥ द्वेषादिवर्जनरूपसन्न्यासो युद्धादिकर्मतोऽधिक इति द्वेषादियुतयुद्धं न कार्यमित्येतत् 'घोरे कर्मणि किम् माम्' इति तृतीये चोदितं, 'श्रेयान् स्वधर्मो विगुणः' इत्यादिना परिहृतं चेत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)**– प्राचीनटीकायाम् 'संन्यासम् कर्मणां परित्यागम्' इति सङ्करेण भाषणादाह– **नित्येति ॥ अन्यथा** कामादिवर्जनरूपत्वेन । **तस्य** द्वेषादिवर्जनस्य । गीतायां श्रुतस्य श्रेयःपदस्य क्लीवत्वात् तदनुरोधेन 'अधिकम्' इति वक्तव्ये कथं पुंलिङ्गप्रयोगः ? इत्यतस्तं घटयति– **अत्र श्रेय इतीति ॥ व्याख्यातं** गीतापदम् । अथापि प्रश्नानुपपत्तिः ? इत्याशङ्क्य समाधत्ते– **नन्वेतदिति** ॥ 'द्वेषादिवर्जनरूपसंन्यासो युद्धादिकर्मतोऽधिक इति द्वेषादियुतं युद्धादिकं न कार्यम्' इत्येतत् 'तत्किं कर्मणि घोरे मां नियोजयसि' इति शङ्कितम् । 'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्' इत्यादिना परिहृतं चेत्यर्थः । **अत एव** एवमपि प्रश्नस्य घटनीयत्वादेव । प्राचीनटीकायां तु 'अमुख्याधिकारिषु युद्धकरणे कामक्रोधादिप्रसक्त्या विरोधित्वेऽपि मुख्याधिकारिष्वविरोधाद् ईषदित्युक्तम्' इत्युक्तम् । **वैगुण्यमिति** ॥ सर्वथा कामादिवर्जनस्य कर्मयोगाङ्गत्वाद्, युद्धे च तदसम्भवाद् अङ्गहैन्यमित्यर्थः ॥ १ ॥

**गीताश्लोकाक्षरार्थस्तु** 'फलकामनादित्यागेनेश्वरार्पणबुद्ध्या स्ववर्णाश्रमविहितकर्मानुष्ठानमेव कर्मयोगः' इत्युक्तं तृतीये । तदेवात्र प्रपञ्च्यत इति तावदध्यायप्रतिपाद्योऽर्थः । द्व्यंशश्चायमुक्तः कर्मयोगः कामादिवर्जनम्, ईश्वरार्पणबुद्ध्या कर्मानुष्ठानं चेति । तत्र 'यदृच्छालाभसन्तुष्टः' इत्यादिनोक्तं संन्यासम् 'कुरु कर्मैव तस्मात्त्वम्' इत्यादिनोक्तं योगं चानूद्य प्रशस्यतरबुभुत्सया अर्जुनेन प्रश्नः कृत इत्युच्यते अर्जुन उवाच– **संन्यासमिति** ॥ चतुर्थाध्यायोक्तार्थस्यै-तदध्यायोत्थानबीजत्वात् तृतीयाध्यायोक्तार्थप्रपञ्चनात्मकस्याप्यस्य चतुर्थाध्यायानन्तर्यं युक्तम् ।

श्लोकः १

संन्यासं 'यदृच्छालाभसन्तुष्टः' इत्युक्तं कामादिवर्जनम्, पुनः कर्मणां योगं स्ववर्णाश्रमविहितानां तेषामनुष्ठानं च 'कुरु कर्मैव तस्मात्त्वम्' इति शंससि । न केवलं संन्यासं कर्मयोगं च शंससि, किन्तु कारयस्यपीति भावेन 'कृष्ण' इति सम्बोधितो भगवानर्जुनेन । नियमनादिना सकललोककर्षणान्निमित्तात् कृष्णशब्दार्थगुणविशिष्ट एतयोः उक्तरूपयोः संन्यासकर्मयोगयोः यच्छ्रेयः प्रशस्यतरम्, अधिकमिति यावत् । तदेकं 'सामान्ये नपुंसकम्' । मे मम सुनिश्चितं यथा तथा ब्रूहि व्यक्तं वद ॥

ननु द्वेषादिवर्जनमेव संन्यासशब्दार्थतया विवक्षितं चेत्, तर्हि तस्य योगेन विरोधाभावात् संन्यासयोगयोर्विरोधाभिप्रायेण श्रेयःप्रश्नोऽनुपपन्नः स्यादिति चेन्न । यदि संन्यासोऽधिकः स्यात् तर्हि संन्यासस्य ईषद्विरोधि युद्धमिति हेतोः तत् त्यक्त्वा संन्यास एव कर्तव्ये किं वैगुण्यमङ्गीकृत्यापि युद्धं विधीयत इति प्रश्नाशयात् ॥ १ ॥

**भावदीपिका (श्री.टि.)– ॥ द्वेषादिवर्जनमेवेति ॥** 'यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सर' इत्युक्तत्वेन द्वेषादिवर्जनस्यापि संन्यासशब्दार्थतयोक्तत्वादिति भावः । **योगेनेति ॥** ईश्वरार्पणबुद्ध्या कर्मानुष्ठानरूपयोगेनेत्यर्थः । **विरोधाभिप्रायेणेति ॥** 'एतयोर्मध्ये एकं ब्रूहि' इत्युक्त्या उभयकरणं विरुद्धम् इति विरोधाभिप्रायेणार्जुनशङ्केति तावन्निश्चितम् । तत्र संन्यासस्य सर्वकर्मपरित्यागरूपत्वेन करणरूपयोगेन विरोधः सम्भवेत् । नचैवं भवद्भिरङ्गीक्रियते । द्वेषादिवर्जनमात्रस्य संन्यासशब्दार्थत्वाङ्गीकारेण तस्य कर्मकरणरूपयोगेन विरोधाभावात्, विरोधाभिप्रायको यः संन्यासयोगयोर्मध्ये श्रेयःप्रश्नः सोऽनुपपन्न एव स्यादित्यर्थः ॥

ननु श्रेयःशब्दस्य नपुंसकत्वेन तद्व्याख्याने 'अधिकम्' इत्येव वक्तव्यम्, पुंलिङ्गप्रयोगस्तु कथमित्यत आह– **संन्यासपदेति ॥ एतदिति ॥** 'कामादिवर्जनरूपसंन्यासस्यावर्जनीयरागद्वेषाद्युपेतं युद्धं विरोधि' इत्येतदित्यर्थः । तथा च संन्यासयुद्धयोर्विरोधाभिप्रायकोऽर्जुनप्रश्नः पुनरत्र क्रियमाणोऽनुपपन्न एवेति भावः । **ईषदित्युक्तमिति ॥** पूर्वं महाविरोधाभिप्रायेण 'घोर' इति चोदिते सति, 'श्रेयान्' इति परिहृतम् । अत्र त्वीषद्विरोधाभिप्रायेण तदुपर्येव पुनः शङ्क्यत इति भावः । **तत्त्यक्त्वेति ॥** ईषद्विरोध्यपि युद्धं त्यक्त्वेत्यर्थः । **वैगुण्यमिति ॥** कामादिवर्जनस्य कर्मयोगाङ्गत्वाद्, युद्धे च तदसम्भवाद्, वैगुण्यमङ्गीकृत्यापि 'श्रेयान् स्वधर्मो विगुण' इति युद्धं कस्माद्विधीयत इत्यर्थः ॥ १ ॥

भावप्रकाशः (कृ.टि.)– ननु गीतायां क्लीबस्यैव श्रेयःपदस्य प्रयोगात् तदनुरोधनाधिकमिति व्याख्येयम् । तत्कथं पुंलिङ्गप्रयोग इत्यत आह– अत्र श्रेय इतीति ॥ वैगुण्यमिति ॥ कामादि-वर्जनस्य कर्मयोगाङ्गत्वाद्युद्धे च तदसम्भवाद्वैगुण्यमित्यर्थः ॥ १ ॥

## श्रीभगवानुवाच–

**सन्न्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसन्न्यासात् कर्मयोगो विशिष्यते॥ २ ॥**

## भाष्यम्

**नायं सन्न्यासो यत्याश्रमः । 'द्वन्द्वत्यागात् तु सन्न्यासान्मत्पूजैव गरीयसी' इति वचनात् । 'तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्'(म.ना.१६.१२) इतिच ॥**

भावप्रदीपिका (प.टी.)– नन्वेवं प्रश्नाभिप्रायकथनादपि वरं 'संन्यास'पदोक्तयत्याश्रम 'योग'पदोक्तपारमहंस्ययोः किं वरमित्याभिप्रायकथनमित्यत आह– **नायमिति** ॥ अत्र संन्यासादपि योगस्याधिक्यमुच्यते । तच्च 'संन्यास'पदेन द्वन्द्वत्यागग्रहण एवोपपन्नं न यत्याश्रमग्रहणे, तस्य योगादुत्तमत्वात् । अतो नात्राश्रमसंन्यास इत्यभिप्रायेणाह– **द्वन्द्व इति** ॥ २ ॥

भावप्रकाशिका (न.टी.)– नन्वेतत्प्रश्नपरिहारविषयौ द्वन्द्वत्यागकर्मयोगौ कस्मात् ? यत्याश्रमकर्मयोगौ किं न स्यातामित्याशङ्क्य, द्वन्द्वत्यागादेव संन्यासात् कर्मयोगस्याधिक-वचनात्, यत्याश्रमात् गृहस्थादिकर्मणामाधानाग्निहोत्रादीनामवरत्ववचनाच्च, इति भावेनाह– **नायमिति** ॥ यान्येतानि आधानाग्निहोत्रादीनि तपांसि तान्यवराणि वै न्यास एवात्यरेचयत् अधिकोऽभवदित्यर्थः । 'एतत् खलु वाव तप इत्याहुः, यः स्वयं सन्ददाति' इति तपस्त्वेन श्रूयमाणदक्षिणादानपूर्वत्वात् तपस्त्वमाधानादीनाम् ॥

प्रमेयदीपिका (ज.टी.)– 'सन्न्यासम् '(५.१) इति प्रश्नवाक्ये 'सन्न्यासः' (५.२) इति परिहारवाक्ये च सन्न्यासयोगशब्दौ यतिगृहस्थाश्रमविषयावेव । तयोः सर्वकर्मत्याग-

तदनुष्ठानरूपत्वात् । 'ज्ञेयः' इति वचनं तु न सन्यासशब्दव्याख्यानपरम् । किन्तु यो द्वेषादि-वर्जितो गृही सोऽपि सन्न्यासी ज्ञातव्य इति स्तुतिपरमेव' इत्यत आह– **नायमिति** ॥ अयं परिहारवाक्यस्थः । प्रश्नवाक्यस्थस्य तात्पर्यनिर्णये तथाऽभ्युपगतत्वात्। योगश्च न गृहस्थाश्रम इत्यपि द्रष्टव्यम् । कुतो नेति चेत् - अत्र 'तयोस्तु' इति सन्न्यासात् कर्मयोगस्य विशिष्टत्व-वचनात् । तस्य चास्मत्पक्ष एव सम्भवात् । अन्यत्रासम्भवादिति भावः । कुतो भवत्पक्षे सम्भव इत्यत आह– **द्वन्द्वेति** । **मत्पूजा** मदर्पणबुद्ध्या कर्मानुष्ठानम् ॥ आश्रमार्थत्वे कुतोऽसम्भवः? इत्यत आह– **तानीति** ॥ **तानि** आधानादीनि । **अत्यरेचयत्** अत्यरिच्यत । 'इति च वचनात्' इति वर्तते ॥

**भावबोधः (र.टि.)**– ॥ आधानादीति ॥ गृहस्थाश्रमविहिताग्न्याधानादीनीत्यर्थः ॥

**भावदीपः (रा.टि.)**– ॥ **तात्पर्येति** ॥ 'योगसन्न्यस्तकर्माणम् 'इत्यादौ 'न्यासशब्दः' इत्यादिना गीतातात्पर्यनिर्णये यतिपरत्वाभ्युपगमादित्यर्थः ॥ **अस्मत्पक्ष एवेति** ॥ कामादिवर्जनं सन्न्यासशब्दार्थः; भगवदर्पणबुद्ध्या कर्मानुष्ठानं कर्मयोग इति पक्ष एव । न तु गृहस्थयतिपरः सन्न्यासादिशब्दः इति पक्ष इत्यर्थः ॥ **इत्यनुवर्तत इति** ॥ एवञ्च गृहस्थाश्रमतो न्यासशब्दित-यतेरुत्कर्षस्य च वचनसिद्धत्वाद् गीतायां 'तयोः' इत्यर्धे सन्न्यासात् कर्मयोगपदोक्तगार्ह-स्थ्यस्योत्तमत्वोक्तिः तद्विरुद्धेति भावः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **संन्यासमितीति** ॥ 'संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि' इति प्रश्नवाक्ये, 'संन्यासः कर्मयोगश्च निश्रेयसकरावुभौ' इति परिहारवाक्ये चेत्यर्थः । **तयोः** यतिगृहस्थाश्रमयोः । संन्यासशब्दस्य यत्याश्रमरूपसर्वकर्मत्यागपरत्वे भगवद्व्याख्यान-विरोधः ? इत्याशङ्क्याह– **ज्ञेय इति वचनं त्विति** ॥ प्रश्नवाक्येऽपि तस्य सद्भावात् किं विशिष्याभिधीयते 'अयं परिहारवाक्यस्थः' इति ? इत्यत आह– **प्रश्नवाक्यस्थस्येति** ॥ 'संन्यासं कर्मणां कृष्ण' इति प्रश्नवाक्यस्थसंन्यासशब्दस्य 'योगसंन्यासयोर्भिन्नपुन्निष्ठत्वाभिप्रायेण पृच्छति' इति तात्पर्यनिर्णयपर्यालोचनायां यत्याश्रमपरत्वेनाभ्युपगतत्वावेदनाद्, अत्र भाष्ये परिहारवाक्यस्थ एव संन्यासशब्दो न यत्याश्रमार्थ इत्युक्तमिति भावः । संन्यासयोगशब्दौ यतिगृहस्थाश्रम-विषयावेवेति शङ्कनाद् भाष्ये कथमेकस्यैव प्रतिक्षेपः ? इत्याशङ्क्य 'नायम्' इति भाष्यमुपलक्षण-

मिति भावेनाह– **योगश्चेति** ॥ **अत्र** परिहारवाक्ये । **अस्मत्पक्ष एव** 'भगवदर्पणबुद्ध्या कर्मानुष्ठानं कर्मयोगः' इति पक्ष एव । **अन्यत्र** गृहस्थयत्याश्रमविषयत्वे ।

प्रकृतासङ्गतिमाशङ्क्य भाष्यं व्याचष्टे – **मत्पूजेति** ॥ 'तानि' इत्यनुवादः, 'आधानादीनि' इति व्याख्या । 'सत्यं परं परं सत्यम्' इत्यादिना नारायणानुवाके 'सत्यतपोदमशमदान-धर्मप्रजननाग्न्याधानाग्निहोत्रयज्ञमानससंन्यासानां मध्ये सत्यादीनामादित्वेन पाठेऽपि अग्न्या-धानाग्निहोत्रयज्ञानामत्र ग्रहणं गृहस्थकर्मतोऽपि संन्यासस्य स्फुटमतिशयं द्योतयितुम् । गार्हस्थ्य-संन्यासयोः प्रस्तुतत्वात् सत्यादीनामुभयसाधारणत्वात्, 'तस्मादग्नय आधातव्याः' इत्यग्न्याधानादे-र्विशिष्य विधानाच्च 'आधानादीनि' इत्युक्तम् । श्रुतिशेषार्थतपस्त्वघटना च 'यान्येतानि आधानाग्निहोत्रादीनि तान्यवराणि वै' इति । 'एतत्खलु वाव तप इत्याहुः यः स्वं सन्ददाति' इति यजुःसंहितावाक्योदाहरणपूर्वं तपस्त्वेन श्रूयमाणदक्षिणादानपूर्वत्वात् तपस्त्वमाधानादीनामिति प्राचीनटीकायां कृता ।

णिचः स्वार्थिकत्वम्, लङश्च 'छन्दसि लुङ्लङ्लिटः' इति लडर्थत्वम् इत्यभिप्रेत्य व्याचष्टे– **अत्यरेचयत् अतिरिच्यत इति** ॥ अधिको भवतीत्यर्थः । 'अधिकोऽभवत्' इति प्राचीनटीकारीत्या अत्रापि 'अत्यरिच्यत' इत्यपि भवति । 'इति च' इति भाष्यपदमनूद्य तदन्वयायाह– **इतीति** ॥

**भावदीपिका (श्री.टि.)**– ॥ **तयोः** यतिगृहस्थाश्रमयोः । **रूपत्वादिति** ॥ तथा च तत्प्रतिपादकत्वमेव संन्यासयोगशब्दयोर्युक्तम् इति भावः । ननु कथं संन्यासशब्दो यत्याश्रमपरः ? 'ज्ञेयः स नित्यसंन्यासी' इति संन्यासशब्दार्थस्य पृथगेवाभिधानादित्यत आह– **ज्ञेय इतीति** ॥ **परिहारवाक्यस्थः** 'संन्यासः कर्मयोगश्च' इति परिहारवाक्यस्थः । 'अयम्' इति विशिष्योक्तौ निमित्तमाह – **प्रश्नवाक्यस्थस्येति** ॥ संन्यासशब्दस्येत्यर्थः । **तथा** यत्याश्रमपरत्वेन । **आधानादीनीति** ॥ गृहस्थाश्रमविहिताग्न्याधानादीनि कर्माणीत्यर्थः । 'रिच वियोजनसम्पर्कयोः' इति धातोरात्मनेपदित्वादाह – **अत्यरिच्यतेति** ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **अभ्युपगतत्वादिति** ॥ योगसन्न्यासयोः भिन्नपुंन्निष्ठत्वाभिप्रायेण पृच्छतीति प्रश्नवाक्यस्यावतारितत्वादिति भावः । **आधानादीनीति** ॥ गृहस्थाश्रमविहिताग्न्या-धानादीनीत्यर्थः । ननु अत्यरेचयदित्यत्र णिचो लङश्चानर्थक्यमित्याशङ्क्य स्वार्थे णिच् च्छन्दसि

श्लोकः २
लुङ्-लङ्-लिट इत्युक्तेः लङ् वर्तमानार्थ इति भावेन व्याचष्टे– **अतिरिच्यत इति** ॥ **ब्रह्मैव न्यास इतीति** । न्यास एवत्यरेचयदितिश्रुत्युक्त इति शेषः ॥

## भाष्यम्

**'सन्न्यासस्तु तुरीयो यो निष्क्रियाख्यः सधर्मकः ।**
**न तस्मादुत्तमो धर्मो लोके कश्चन विद्यते ।**
**तद्भक्तोऽपि हि यद् गच्छेद् तद्गृहस्थो न धार्मिकः ।**
**मद्भक्तिश्च विरक्तिस्तदधिकारो निगद्यते ।**
**यदाऽधिकारो भवति ब्रह्मचार्यपि प्रव्रजेत् ॥' इति नारदीये**

**'ब्रह्मचर्यादेव प्रव्रजेत् यदहरेव विरजेत्' (ना.प.उ.३.७५) इति च ।**

**'सन्न्यासे तु तुरीये वै प्रीतिर्मम गरीयसी ।**
**येषामत्राधिकारो न तेषां कर्मेति निश्चयः ॥'**

**इत्यादेश्च ब्राह्मे । अतो नात्राश्रमः सन्न्यास उक्तः ॥ २ ॥**

भावप्रकाशिका (न.टी.)– ननु यत्याश्रमादपि संन्यासाद्वरः कर्मयोगः । संन्यासस्य निष्क्रियत्वात्, अनिष्टपरिहारमात्रत्वेनाल्पफलत्वात्, कर्मयोगासमर्थवृद्धान्धपङ्ग्वाद्यधिकारित्वाच्च । कर्मयोगस्य तु वेदाद्युक्तसर्वकर्मानुष्ठानलक्षणत्वात्, स्वर्गादिसर्वेष्टफलत्वात्, समर्थाधिकारित्वाच्च । अतो यत् संन्यासस्य कर्मयोगादाधिक्यवचनं वेदे तदुत्तमे वयस्यनुष्ठीयमानत्वेना उपचारमात्रमित्याशङ्कापरिहारत्वेन नारदीयवाक्यान्युदाहरति– **संन्यासस्त्विति** ॥ कुटीचकात् तुरीयो यः पारमहंस्यलक्षणसंन्यासः स बाह्यकर्मसङ्कोचेन निष्क्रियाख्योऽपि स्वविहितासाधारणमहाधर्मत्वेन सधर्मकश्च । अतः क्रियत्वादक्रियत्वाद्वा न तस्य कर्मयोगाद् अवरत्वम् । सन्न्यासिभक्तोऽपि धार्मिकगृहस्थप्राप्यात् महदिष्टं प्राप्नोति, किमुत संन्यासीति ॥

नानिष्टपरिहारमात्रत्वेनाल्पफलत्वादवरत्वं संन्यासस्य । नापि कर्मयोगासमर्थाधिकारत्वेन अवरत्वं संन्यासस्य । धर्ममात्रदुर्लभहरिभक्तीतरविरक्त्योः संन्यासाधिकारिविशेषत्वात् । अतो यदा हरिभक्तीतरविरक्ती भवतः तदेव संन्यसेत् ब्रह्मचर्यादपि, न चरमे वयसीति नियमः ।

अतो यदुक्तं न्यास एवात्यरेचयत् इति तन्मुख्यमेव । नोत्तमे वयस्यनुष्ठीयमानत्वेन उपचार-मात्रमित्यर्थः ।

हरिभक्तीतरविरक्तयोरेव संन्यासाधिकारिविशेषणत्वमित्येतच्छ्रुत्याऽपि समर्थयति– **ब्रह्मचर्यादिति** ॥ **विरजेदिति** । हरौ विशिष्टरागोऽन्यत्र विरागो भवेदित्यर्थः । अतः कर्मकरणासमर्थानामेव संन्यास इति मत्वा न तस्यावरत्वं कल्पनीयम् । भगवदतिप्रीति-विषयत्वात्, तदनधिकारिणामेव कर्मविधानाच्च, वरः संन्यासस्तुरीय इत्येतत् ब्रह्मपुराणवाक्ये-नाह **संन्यासेति** । यत एवं श्रुतिपुराणयुक्तिभ्यः संन्यासस्याधिक्यं प्रतीयते तुरीयस्य, अतोऽत्र प्रश्नपरिहाराभ्यामवरत्वेनोक्तः संन्यासः न यत्याश्रम इत्युपसंहरति– **अत इति** ॥ २ ॥

**प्रमेयदीपिका (ज.टी.)**– 'न्यस्यतेऽस्मिन् सर्वमिति ब्रह्मैव न्यासः' इति कश्चित्। तदसत्। तपोऽपेक्षयोत्तमत्वाभिधानस्यासङ्गतत्वात् । उपायोपेयभावेन सङ्गतिरिति चेत् तर्हि तत्सिद्धौ लोकत एवोत्तमत्वसिद्धेरभिधानवैय्यर्थ्यात् ॥

'गृहस्थाश्रमाद्यत्याश्रमस्योत्तमत्वमयुक्तम् । गृहस्थाश्रमो हि सर्वधर्मोपपन्नः । तत्समर्थे मध्यमे वयस्यनुष्ठेयो महाफलश्च । यत्याश्रमस्तु निष्क्रियश्चरमे वयसि गृहस्थकर्मानधिकृतैरन्ध-पङ्ग्वादिभिरनुष्ठेयोऽल्पफलश्च' इति केचित्। तन्निरासार्थमाह– **सन्न्यासस्त्विति** ॥

काम्यकर्मरहितत्वात् निष्क्रियाख्योऽपि सधर्मकः । न केवलं सधर्मकः, किन्तु न तस्मात् यत्याश्रमानुष्ठेयाद्यतिभक्त्याऽपि यत् फलं प्राप्नुयात्र तत् सर्वैर्गृहस्थधर्मैरित्यर्थः । **ब्रह्मचर्यादेव** ब्रह्मचर्यं विसृज्यैव । विरजेत् विरक्तो भवेत् ।'तदहरेव प्रव्रजेत्' इति श्रुतिशेषः । कर्म इत्याश्रमान्तरम् ॥ यदुक्तं **'नायम्'** (४.४०) इत्यादि तदुपसंहरति– **अत इति** ॥ **अत्र** परिहारवाक्ये ॥ २ ॥

**भावबोधः (र.टि.)**– ॥ **ब्रह्मैव न्यास** इति ॥ 'न्यास एवात्यरेचयत्' इतिश्रुत्युक्त इत्यर्थः । तथा च यत्याश्रमस्यानेनाधिक्यं न सिद्ध्यतीति भावः । **काम्यकर्मरहितत्वादिति** ॥ तथा च न विरोध इति भावः ।

**वाक्यार्थप्रदीपः (पां.टि.)**– ॥ **ब्रह्मचर्यादेव** ॥ **ब्रह्मचर्य विसृज्यैवेति** ॥ अनेन ल्यब्लोप-निमित्ता पञ्चमीत्युक्तं भवति ।

श्लोकः २

**भावदीपः (रा.टि.)**– 'ल्यब्लोपे पञ्चमी' इति भावेनाऽऽह– **ब्रह्मचर्यं विसृज्यैवेति** ॥ २ ॥

**भावरत्नकोशः (सु.टि.)– ब्रह्मैव न्यास इतीति** । 'तानि वा एतान्यवराणि' इति श्रुत्युक्तः संन्यासशब्दार्थ उक्तव्युत्पत्त्या ब्रह्मैव, इति न गृहस्थाश्रमापेक्षया संन्यासाश्रमस्यातिशय-प्रतिपादनपरेयं श्रुतिरिति भावः । **उपायेति** ॥ तपसो ब्रह्मप्राप्त्युपायत्वं तु 'तपसा ब्रह्म विजिज्ञासस्व' इत्यादिश्रुतिसिद्धमिति भावः । **तत्सिद्धौ** उपायोपेयभावसिद्धौ । **अभिधान-वैयर्थ्यादिति** । 'अप्राप्ते शास्त्रमर्थवद्' इति हि प्रवाद इति भावः । एतच्च श्रुतौ तपःपद-प्रयोजनकथनमिति आहुः ॥

'गृहस्थाश्रमो हि' इत्यत्र 'हि'शब्दो 'यतः' इत्यर्थे । 'महाफलश्च' इति सम्बन्धः । तेन 'अयुक्तम्' इति साध्यान्वयो युक्तः । **तत्समर्थे** सर्वधर्माचरणसमर्थे । वयसि इत्यत्र वयः कालकृतशरीरावस्था । इदं च 'न तस्मादुत्तमो धर्मः' इत्यादेर्व्यावर्त्यम् । 'निष्क्रियाख्यः सधर्मकः' इत्यस्य व्यावर्त्यम्– **यत्याश्रम इति** । 'मद्भक्तिश्च विरक्तिः तदधिकारः' इत्यस्य व्यावर्त्यकथनम्– **अन्धपंग्वादिभिरिति** ॥ 'तद्भक्तोऽपि' इत्यस्य निवर्त्यम्– **अल्पफलश्चेति** । 'निष्क्रियाख्यः', 'सधर्मकः' इत्येतयोर्विरोधं परिहर्तुमाह– **काम्यकर्मरहितत्वादिति** ॥ **सधर्मकः** तदुचितसर्वधर्मो-पपन्नः । 'संन्यासस्तु तुरीयः' इत्यस्य कुटीचकात् तुरीयः संन्यासः परमहंसलक्षण इति प्राचीनटीका । 'न तस्माद्' इति भाष्यमवतारयति– **न केवलमिति** ॥ 'तस्मात्' इत्यस्यार्थः– **यत्याश्रमानुष्ठेयादिति** । गृहस्थाश्रमाद् अल्पफलत्वं यदुक्तं तद् व्युदसितुम् – **तद्भक्तोऽपीति** ॥

भाष्यतात्पर्यमाह– **यतिभक्त्याऽपीति** ॥ चरमे वयसि यत्याश्रम आपादनीय इत्येतद्दूषयितुम् 'मद्भक्तिश्च' इति भाष्यम् । हरिभक्ति इतरविरक्त्योरेव संन्यासाधिकारिविशेषणत्वात् तत्सद्भावे ब्रह्मचारिणोऽपि प्रव्रजनावेदनान्न परोक्तं युक्तमिति तदर्थः । 'हरिभक्ति-इतरविरक्त्योरेव संन्यासाधिकारिविशेषणत्वम्' इत्येतत् श्रुत्याऽपि समर्थयते 'ब्रह्मचर्यादेव' इति अवतारितं प्राचीनटीकायाम् । तत्र पञ्चमी ल्यब्लोपनिमित्तेत्याह– **ब्रह्मचर्यं विसृज्येति** ॥ 'प्रासादात्प्रेक्षते' इत्यत्र 'प्रासादमारुह्य' इति यथेति भावः । **प्रव्रजेत्** संन्यस्येत् । 'यदहरेव' इति श्रुतौ 'काला-ध्वनोरत्यन्तसंयोगे' इति द्वितीया । यस्मिन्नेवाहनीत्यर्थः । तत्र 'विरजेत्' इत्यनूद्यार्थमाह– **विरजेद्विरक्तो भवेदिति** ॥ प्राचीनटीकायां तु विरजेत् हरौ विशिष्टरागः, अन्यत्र विगतरागो

भवेदित्यर्थ उक्तः । **इति श्रुतिशेष इति** । तथा च हरिभक्ति-इतरविरक्तिसद्भावे संन्यासविधानान्न चरमे वयसीति नियम इति भावः ।

भगवदतिप्रीतिविषयत्वात् तदनधिकारिणामेव कर्मविधानाच्च 'वरः संन्यासस्तुरीयः' इति पुराणवाक्येनाह– **संन्यास इति** ॥ 'तुरीये पारमहंस्यलक्षणे' इति प्राचीनटीकायाम् अवतारितं वचनमिति । तत्र कर्मशब्दार्थं प्रकृतोपयुक्तमाह– **कर्मेत्याश्रमान्तरमिति** ॥ अन्य आश्रम आश्रमान्तरम् । मयूरव्यंसकादित्वात् समासः । गृहस्थाद्याश्रम इत्यर्थः । 'अतः' इति भाष्ये स्मृत्यादिसाधकसद्भावात्, गृहस्थाश्रमाद् यत्याश्रमस्योत्तमत्वमयुक्तम् इत्याद्युक्तबाधकाभावाच्चेत्यर्थः स्फुट इति भावेन, 'अत्र' इत्येतदेव व्याख्यातम्– **परिहारवाक्य इति** । प्रश्नवाक्यस्थस्य तात्पर्य-निर्णये तथाऽभ्युपगतत्वादित्युक्तमेवेति भावः । अत्रोक्तः संन्यासो नाश्रम इति भाष्येऽन्वयः ॥ २ ॥

**भावदीपिका (श्री.टि.)**– ॥ **ब्रह्मैव न्यास इति** ॥ 'न्यास एवात्यरेचयत्' इत्युक्त-न्यासशब्दवाच्यं ब्रह्मैवेत्यर्थः । तथा चानेन वचनेन यत्याश्रमस्याधिक्यं न सिध्यतीति भावः ॥ **तपोऽपेक्षयेति** ॥ 'तानि वा एतानि' इत्यत्र तपसोऽपि प्रकृतत्वेन, तदपेक्षया ब्रह्मण उत्तम-त्वाभिधानमसङ्गतमित्यर्थः ॥ **उपायोपेयेति** ॥ साधनसाध्येत्यर्थः । तथा च तपआदीनाम् उपायत्वेन तदपेक्षयोपेयस्य ब्रह्मण आधिक्यं वक्तुमिदं वाक्यमिति नासङ्गतिरिति भावः । **तत्सिद्धौ** तपोब्रह्मणोः उपायोपेयभावसिद्धौ । **उत्तमत्वसिद्धेः** । 'उपायापेक्षयोपेयस्य' इति शेषः । 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात् । तथा चापूर्वताभङ्ग इति भावः ।

**तत्समर्थे** सर्वधर्मानुष्ठानसमर्थे । 'सर्वधर्मोपपन्न' इत्यादेर्विरोधित्वेनोक्तम्– **निष्क्रिय इत्यादि** ॥ 'निष्क्रियाख्यः' 'सधर्मक' इत्यनयोर्विरोधपरिहारायाह– **काम्यकर्मेति** ॥ भाष्ये 'हंसाद्यपेक्षया यस्तुरीयो निष्क्रियाख्यः परमहंसाख्यः । **तदधिकारः** तस्मिन् संन्यासाश्रमेऽधिकार इत्यर्थः । अनेनान्धपङ्ग्वाद्यधिकारिकत्वनिरास इति ज्ञेयम् । 'ब्रह्मचार्यपि प्रव्रजेत्' इति प्रमाणशेषं व्याख्यातुं प्रवृत्ते 'ब्रह्मचर्यादेव प्रव्रजेत्' इति भाष्ये 'ब्रह्मचर्यात्' इति 'ल्यब्लोपनिमित्ता पञ्चमी' इत्याशयेन व्याचष्टे– **ब्रह्मचर्यं विसृज्यैवेति** ॥ 'गृहस्थाश्रमम् अस्वीकृत्यैव' इत्यपि द्रष्टव्यम् ॥ **इति श्रुतिशेष इति** ॥ 'यदहरेव विरजेत्' इति श्रुतिशेषभाग इत्यर्थः ॥ **परिहारवाक्य** इति ॥ 'तयोस्तु कर्मसंन्यासात्' इति परिहारवाक्यमित्यर्थः ॥ २ ॥

श्लोकः ३

**अक्षरार्थस्तु** अयं प्रश्नो भगवता परिह्रियते श्रीभगवानुवाच- **संन्यासः कर्मयोगश्चेति** । संन्यासः कामादिवर्जनरूपः कर्मयोगः भगवदर्पणबुद्ध्या कर्मानुष्ठानलक्षणश्चेति उभौ समुच्चितौ सन्तौ निःश्रेयसकरौ । 'अचतुरविचतुर' इत्यादिना निःश्रेयसशब्दो निपातितः । 'कृञो हेतुताच्छील्य-आनुलोम्येषु' इति करोतेस्ताच्छील्ये टः । मोक्षसाधनशीलौ । तयोः मध्ये कर्मणि संन्यासात् कर्मानुष्ठानविषये कामद्वेषादिवर्जनरूपात् कर्मसंन्यासात् भगवदर्पणबुद्ध्या कर्मानुष्ठानलक्षणः कर्मयोगो विशिष्यते ।

यद्यपि प्रश्नपरिहारवाक्ययोः संन्यासयोगशब्दौ यतिगृहस्थाश्रमविषयौ प्रतीयेते । तयोरेव सर्वकर्मत्यागतदनुष्ठानरूपत्वात् । न चैवं भगवतैव 'ज्ञेयः स नित्यसंन्यासी' इति द्वेषादिवर्जनं संन्यास इति वक्ष्यमाणं विरुध्यत इति वाच्यम् । 'यो द्वेषादिवर्जितो गृही सोऽपि संन्यासी ज्ञातव्यः' इत्येवं स्तुतिरूपत्वेन तद्वाक्यस्य प्रतीतार्थाविरोधित्वात् । तथाऽपि नेमौ संन्यासयोगशब्दौ यतिगृहस्थाश्रमपरौ शक्यावङ्गीकर्तुम् । 'तयोस्तु' इति संन्यासात् कर्मयोगस्य विशिष्टत्ववचनात् । तस्य चास्मत्पक्ष एव सम्भवात्, अन्यत्रासम्भवात् । कुतो भवत्पक्षे सम्भव इति चेत् 'द्वन्द्वत्यागात्तु संन्यासात् मत्पूजैव गरीयसी' इति वचनादिति ब्रूमः । द्वेषादिवर्जनरूपात् संन्यासात् मत्पूजा मदर्पणबुद्ध्या कर्मानुष्ठानं गरीय इति वचनार्थः । आश्रमार्थत्वे कुतोऽसम्भव इति चेत् 'तानि वा एतान्यवराणि तपांसि, न्यास एवात्यरेचयत्' इति श्रुतौ गृहस्थाश्रमापेक्षया संन्यासस्यातिशया-वेदनात् इत्यवेहीति ॥ २ ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **उपायोपेयभावेनेति** ॥ तपसो ब्रह्मप्राप्त्युपायत्वादिति भावः । **अभिधानावैय्यर्थ्यादिति** ॥ अप्राप्तेऽर्थे शास्त्रमर्थवदित्युक्तेरिति भावः । **मध्यमे वयसीति** ॥ आषोडशाद्भवेद्बालो यावत् क्षीरान्नवर्तकः । मध्यमः सम्मतिर्यावत् परतो वृद्ध उच्यते' इति वाक्यात् मध्यमचरमशब्दार्थौ ज्ञेयौ । वयोनां कालकृतशरीरावस्थेति विवेकः । निष्क्रियाख्यः सधर्मक इत्यनयोः विरोधपरिहारायाह– **काम्यकर्मरहितत्वादिति** ॥ ल्यब्लोपे पञ्चमीति भावेनाह– **ब्रह्मचर्यं विसृज्येति** ॥ ननु येषां सन्न्यासानधिकारस्तेषां कर्मेत्युक्तौ सन्न्यासिनां कर्म नास्तीति प्राप्तम् । न च तद्युक्तम् । तेषामपि स्नानादिसत्वादित्यत आह– **कर्मेत्याश्रमान्तरमिति** ॥ यत्याश्रमभिन्नाश्रम इत्यर्थः ॥ २ ॥

**ज्ञेयस्स नित्यसन्न्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ॥ ३ ॥**

# भाष्यम्

**सन्न्यासशब्दार्थमाह– ज्ञेय इति ॥ सन्न्यासस्य निःश्रेयसकरत्वं ज्ञापयितुं तच्छब्दार्थं स्मारयति– ज्ञेय इति ॥ ३ ॥**

भावप्रदीपिका (प.टी.)– ननु कथं महाफलाच्छक्ताधिकारिविषयाद् गृहस्थाश्रमादल्पफलस्थविरोधिकारिकस्य .....यत्याश्रम एव विवक्षितः ? इत्यत आह– **संन्यासस्येति** ॥ ३ ॥

भावप्रकाशिका (न.टी.)– द्वन्द्वत्यागस्यैतत्संन्यासशब्दार्थत्वेनोच्यमानत्वाच्च न पूर्वोक्तसंन्यासो यत्याश्रम इति भावेनाह– **संन्यासशब्दार्थमिति** ॥ नन्वनेन यत्याश्रममेव संन्यासशब्दार्थत्वेनार्जुनः पृच्छतीत्यवगम्यते । अन्यथा तं प्रति संन्यासशब्दार्थाभिधानवैय्यर्थ्यादित्यत आह– **संन्यासस्येति** ॥ द्वन्द्वत्यागलक्षणसंन्यासोऽर्जुनस्य प्रसिद्धोऽपि सुस्मरणार्थं भगवतोच्यत इत्यदोषः । तत्र स्मरणं चास्य संन्यासस्य निःश्रेयसकरत्वज्ञापनाय । द्वन्द्वत्यागस्यान्यत्र निःश्रेयसकरत्वप्रसिद्धेः 'द्वन्द्वातीतः कृत्वाऽपि न निबध्यते' इत्यादाविति भावः ॥३॥

प्रमेयदीपिका (ज.टी.)– 'ज्ञेयः' इत्यस्यापव्याख्यानं दूषयंस्तत्तात्पर्यमाह– **सन्न्यासेति** ॥ अर्थान्तरस्याप्रतीतेरिति भावः । ननु 'यदृच्छालाभसन्तुष्टः' (४.२२) इत्यादिनोक्तं कामादिपरित्यागं सन्न्यासं कर्मणाम्' (५.१) इत्यनूद्यार्जुनस्यायं प्रश्न इत्युक्तम् । ततश्च जानात्येवासौ सन्न्यासशब्दार्थमिति न तं प्रति स वक्तव्यः । तथा च पूर्वपक्ष्युत्प्रेक्षित एवास्यार्थ इत्यत आह– **सन्न्यासस्येति** ॥

'सन्न्यासः कर्मयोगश्च निःश्रेयसकरावुभौ'(५.२)इति यत् सन्न्यासस्य निःश्रेयसकरत्वमुक्तं तदुपपादयितुं ज्ञातमपि सन्न्यासशब्दार्थं स्मारयत्यनेन । द्वेषादिवर्जनं हि सन्न्यासः। तस्य च निःश्रेयसकरत्वं श्रुत्यादिप्रसिद्धमेवेति । अतः सन्न्यासशब्दार्थकथन एव तात्पर्याभावान्नानुपपत्तिरित्यर्थः । ज्ञापकं चास्यार्थस्यास्तीत्याह– **ज्ञेय इतीति** ॥ ज्ञेयः स्मर्तव्य इत्यनेनोक्तमित्यर्थः । योगस्य तु निःश्रेयसकरत्वमुत्तरवाक्य एव सेत्स्यति ॥ ३ ॥

भावबोधः (र.टि.)– ॥ **अर्थान्तरस्याप्रतीतेरिति** ॥ गृहस्थप्रत्यायकपदाभावेन यो द्वेषादिवर्जितो गृही सोऽपि सन्न्यास इति परोक्तार्थान्तरस्याप्रतीतेरित्यर्थः । **उत्तरवाक्य एवेति** ॥ 'साङ्ख्ययोगौ पृथग्' इत्यत्रेत्यर्थः ॥

श्लोकः ३

**भावदीपः (रा.टि.)– ॥ अपव्याख्यानमिति ॥** यत्याश्रमार्थत्वरूपमित्यर्थः ॥ **पूर्वपक्ष्युत्प्रेक्षित एवेति ॥** 'ज्ञेय इति वचनं तु न सन्न्यासशब्दव्याख्यानपरम्' इत्यादिनोक्त इत्यर्थः ॥ श्लोकतात्पर्यं व्यनक्ति– **द्वेषेति ॥** गीतास्थहिशब्दार्थः– **श्रुत्यादिप्रसिद्धमेवेति ॥ उत्तरवाक्य एवेति ॥** 'साङ्ख्ययोगौ ' इत्यत्रेत्यर्थः ॥ ३ ॥

**भावरत्नकोशः (सु.टि.)– ॥ अपव्याख्यानमिति ।** 'ज्ञेय इति वचनं न संन्यासशब्दव्याख्यानपरम्, किन्तु 'यो द्वेषादिवर्जितो गृही सोऽपि संन्यासी ज्ञातव्यः' इति स्तुतिपरमेव' इत्यपव्याख्यानमित्यर्थः । तथा च सङ्करः 'यो न द्वेष्टि किञ्चिन्न काङ्क्षति दुःखं सुखं वा तत्साधनं च, एवंविधो यः स कर्मणि प्रवर्तमानोऽपि स नित्यसंन्यासी ज्ञातव्य इति स्तौति' इति अपव्याख्यानदूषणं भाष्यभावोक्त्या व्यनक्ति ॥ **अर्थान्तरस्येति ॥** गृहस्थबोधकपदाभावेन परोक्तार्थस्या- प्रतीतेरित्यर्थः । **तम्** अर्जुनं प्रति । **सः** संन्यासशब्दार्थो वक्तव्यः । 'उच्यते योऽसौ ज्ञेयस्स नित्यसंन्यासी इति' इति योज्यम् । ततः किमित्यत उक्तम्– **तथा चेति ॥ पूर्वपक्ष्युत्प्रेक्षित इति ।** 'ज्ञेय इति वचनं तु' इत्यादिना सङ्करेण कल्पित एव । **अस्य** ज्ञेय इति वचनस्यार्थ इत्यर्थः । **ज्ञापयितुम्** इत्यस्य 'ज्ञानं तं प्रेरयितुम्' इत्यर्थः । तत्र प्रेरणम् उपपादनमेवेत्याह– **तदुपपादयितुमिति ॥** उपपत्तियुक्ततयाऽभिधातुमित्यर्थः । **अनेन** ज्ञेय इति वचनेन । काऽसावुपपत्तिरित्यत आह– **द्वेषादीति ॥** 'प्रसिद्धमेव' इति गीतागतहिशब्दार्थः । **नानुपपत्तिरिति ।** 'न तं प्रति स वक्तव्य इत्युक्तानुपपत्तिर्न' इत्यर्थः । **ज्ञेयः स्मर्तव्य इतीति ।** अनेन भाष्ये यद् द्वितीयं 'ज्ञेय इति' इति वाक्यं तद् ज्ञापकमेव, न तु गीताप्रतीकग्रहणमित्युक्तं भवति । नन्वेवमभिप्राये योगस्यापि निःश्रेयसकरत्वमत्र वक्तव्यम्, सन्नियोगशिष्टत्वात् ? इत्यत आह– **योगस्य त्विति ॥ उत्तरवाक्ये** 'साङ्ख्ययोगौ पृथक्' इति समनन्तरवाक्ये ॥ ३ ॥

**अक्षरार्थस्तु** 'संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ' इति यत् संन्यासस्य निःश्रेयसकरत्वमुक्तं तदुपपादयितुं ज्ञातमपि संन्यासशब्दार्थं स्मारयितुमुच्यते– **ज्ञेय इति** । स्मर्तव्य इत्यर्थः । तेन 'यदृच्छालाभसन्तुष्टः' इत्यादिनोक्तं कामादिपरित्यागम् 'संन्यासं कर्मणाम्' इत्यनूद्यार्जुनस्य प्रश्न इत्युक्तम् । ततश्च जानात्येवासौ संन्यासशब्दार्थम् इति न तं प्रति स वक्तव्यः इति चोद्यं व्युदस्तम् । द्वेषादिवर्जनं हि संन्यासः । तस्य च निःश्रेयसकरत्वं श्रुत्यादिसिद्धमेवेति संन्यासस्य निःश्रेयसकरत्वोपपादनाय तच्छब्दार्थस्मरणे तात्पर्यात् । योगस्य तु निःश्रेयसकरत्वमुत्तरवाक्ये एव सेत्स्यति । शिष्टं स्पष्टम् ॥ ३ ॥

**भावदीपिका (श्री.टि.)– ॥ अपव्याख्यानमिति ॥** 'ज्ञेय इति वचनं न संन्यासशब्द-व्याख्यानपरम्, किन्तु यो द्वेषादिवर्जितो गृही सोऽपि संन्यासी ज्ञातव्य इति स्तुतिपरमेव' इत्यपव्याख्यानमित्यर्थः **॥ अर्थान्तरस्येति ॥** संन्यासशब्दार्थकथनव्यतिरिक्तस्य परोक्तार्थस्यात्र गृहस्थादिवाचकपदाभावेनाप्रतीयमानत्वादित्यर्थः **॥ सन्यासशब्दार्थमिति ॥** कामत्यागादिकमित्यर्थः । नन्वर्जुनस्य कामादित्यागज्ञानमात्रसद्भावेऽपि तस्य संन्यासशब्दार्थत्वं न जानातीति चेन्न । तथासति 'संन्यासं कर्मणाम्' इत्यनुवादासम्भवेन, संन्यासशब्दार्थत्वेनापि ज्ञानसद्भावादिति भावः **॥ पूर्वपक्ष्युत्प्रेक्षित एवेति ॥** 'यो द्वेषादिवर्जितो गृही सोऽपि संन्यासी ज्ञातव्य' इति पूर्वपक्ष्युत्प्रेक्षित इत्यर्थः । 'ज्ञापयितुम्' इत्यस्यार्थः– **उपपादयितुमिति ॥** कथं तदुपपादनमित्यतस्तं प्रकारं दर्शयति– **द्वेषादीति ॥** अस्यार्थस्य 'संन्यास' इत्याद्युक्तार्थस्य । 'ज्ञेय' इत्यनूद्य तस्यार्थमाह– **स्मर्तव्य इति ॥** ननु 'संन्यासः कर्मयोगश्च निश्रेयसकरावुभौ' इति प्रतिज्ञाय, तत्र संन्यासस्य निश्रेयसकरत्वं 'ज्ञेय' इत्यनेनोपपादितम्, योगस्य तु तन्नोपपादितम्, अतो न्यूनता ? इत्यत आह– **योगस्य त्विति ॥ उत्तरवाक्य एवेति ॥** 'यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते' इत्युत्तरवाक्य एवेत्यर्थः ॥ ३ ॥

**भावप्रकाशः (कृ.टि.)– ॥ अर्थान्तरस्येति ॥** गृहस्थबोधकपदाभावेन यो द्वेषादिवर्जितो गृही सोऽपि सन्यासीति परोक्तस्तुतिरूपार्थस्याप्रतीतेरित्यर्थः । किमनेन ज्ञापकमुक्तमित्यत आह– **ज्ञेयः स्मर्तव्य इति ॥** अनेन भाष्ये यत् द्वितीयं ज्ञेय इतीति वाक्यं तज्ज्ञानप्रदर्शकं न तु गीताप्रतीकग्रहणमित्युक्तं भवति । **उत्तरवाक्य एवेति ॥** साङ्ख्ययोगौ पृथगित्यत्रेत्यर्थः ॥ ३ ॥

**साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥**

## भाष्यम्

**सन्यासो हि ज्ञानान्तरङ्गत्वेनोक्तः । 'न तस्य तत्वग्रहणाय'** (भाग.५.११.३) **इत्यादौ । अतः कथं सोऽवमः? इत्यत आह– साङ्ख्ययोगाविति ॥ उभयोरप्यन्तरङ्गत्वे न विरोधः ।**

भावप्रदीपिका (प.टी.)– ननु द्वन्द्वत्यागस्य ज्ञानान्तरङ्गत्वात् कथमसाववमः ? किन्तु

श्लोकः ४

तदुत्तम एवेत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे– **संन्यासो हीति** ॥ साङ्ख्यं ज्ञानम्, कर्मयोगश्च पृथङ् न भवतः । कर्मयोगोऽपि ज्ञानान्तरङ्गम् । तथा च नासौ संन्यासादवमः । किन्तु भगवत्पूजारूपत्वेन केवलसंन्यासादधिक एवेत्यर्थः ॥ ४ ॥

भावप्रकाशिका (न.टी.)– ननु यो गृहमेधसौख्यं हेयत्वेन न मन्यते, किन्तूपादेयत्वेन वाञ्छति, क्रुद्ध्यति च तद्विरोधिनः, तस्य च वरीयस्योऽपि वाचस्तत्त्वग्रहणाय न स्युः । यस्तु कामक्रोधविहीनः, तस्यैव तत्त्वग्रहणाय स्युरिति ज्ञानान्तरङ्गत्वेनोच्यमानत्वात् द्वन्द्वत्यागोऽपि संन्यासः कथं कर्मयोगादवरः स्यात् ? किन्तूत्तम इत्याशङ्क्य, एतत्परिहारायोत्तरं श्लोकमवतार्य व्याचष्टे– **संन्यासो हीति** ॥ योगस्यापि ज्ञानान्तरङ्गत्वान्न तस्य हीनत्वं द्वन्द्वत्यागात् । किन्तूत्तमत्वमेव भगवत्पूजात्मकत्वेनेति भावेनाह– **उभयोरपीति** ॥ ४ ॥

प्रमेयदीपिका (ज.टी.)– 'सन्न्यासं गृहीत्वा योगं त्यक्ष्यामि' इत्याशयेन द्वयोः श्रेयसि पृष्टे 'द्वावपि निःश्रेयसकरौ। तत्रापि सन्न्यासाद्योगो विशिष्टः । अतो न युद्धं त्वया त्याज्यम्' इति परिहारो जातः ।किमर्थं इदानीं साङ्ख्ययोगौ इत्युच्यते? इत्यत आह– **सन्न्यासो हीति** ॥ हिशब्दो हेतौ । **ज्ञानान्तरङ्गत्वेन** ज्ञानोत्पत्तावत्यावश्यकत्वेन । न तस्य इत्यत्र विषय-वैराग्याभावे ज्ञानानुत्पत्तिवचनेन तत एव तदुत्पत्तिरिति हि लभ्यते । एवं कर्मयोगस्तु ज्ञान-विरोधित्वेनोक्तः अग्निमुग्धः इत्यादावित्यपि ग्राह्यम् । **अवमः** योगात् । अनेन योगस्य निःश्रेयसकरत्वमप्याक्षिप्तम् ॥

ननु साङ्ख्यं ज्ञानम् । योगः कर्म । तयोः कथमत्र पृथक्त्वाभाव उच्यते? कथं वाऽने-नोक्ताक्षेपपरिहारः ? इत्यत आह– **उभयोरपीति** ॥ न केवलं सन्न्यासस्य । किन्तु योगस्या-पीत्युभयोरपि ज्ञानान्तरङ्गत्वात् न उक्तविरोध इत्यर्थः । अनेन 'साङ्ख्ययोगौ पृथक् साध्य-साधनभावहीनाविति न पण्डिता मन्यन्ते' इत्येवं व्याख्यातं भवति ॥

भावबोधः (र.टि.)– ॥ धूमादित्वमेवेति ॥ श्रुतौ धूमशब्दो रात्र्यादिपुनरावृत्तिमार्गोपलक्षक इति भावः ॥

भावदीपः (रा.टि.)– 'सन्न्यासः कर्मयोगश्च' इति श्लोकार्थमनुवादव्याजेन व्यनक्ति– **सन्न्यासमिति** ॥ वैराग्यं कामादिवर्जनमित्यर्थः । **योगं** भगवत्पूजात्वेन युद्धादिकर्मानुष्ठानम् ।

वैराग्यस्य ज्ञानान्तरङ्गत्वोक्तिलाभप्रकारं व्यनक्ति ॥ **न तस्येत्यत्रेति** ॥ 'न तस्य तत्वग्रहणाय साक्षात्' इति पञ्चमस्कन्धस्थभागवतश्लोकः पूर्वत्र द्वितीयाध्याये व्याख्यातः ॥ अतःशब्दात् पूर्वं भाष्ये शेषमाह– **कर्मयोगस्त्वित्यादिनोक्तविरोध इति** ॥ एतेन भाष्ये न विरोधः इति पदच्छेदः सूचितः ॥

**भावरत्नकोशः (सु.टि.)– ॥ हिशब्दो हेताविति** ॥ 'यतः' इत्यर्थे वर्तते । अतःशब्देन च तस्य सम्बन्ध इति भावः । **न तस्येत्यत्रेति** ॥

'न तस्य तत्त्वग्रहणाय साक्षाद् वरीयसीरपि वाचः समासन् ।
स्वप्ने निरुक्त्या गृहमेधसौख्यं न यस्य हेयानुमितं स्वयं स्यात्'

इति भागवते । ननु तत्र स्वप्ने निरुक्त्या स्वप्नप्रतीतार्थदृष्टान्तेन गृहमेधसौख्यं विषयसौख्यं हेयत्वेनानुमिनोति, तस्य वरीयसीः वरीयस्योऽपि वाचः तत्त्वग्रहणाय नासन् न स्युरिति विषयवैराग्याभावे ज्ञानानुत्पत्तिरेवावेद्यते, न पुनः संन्यासस्य ज्ञानान्तरङ्गत्वम्, इत्याशङ्क्य श्लोकं तात्पर्यतो व्याकुर्वन् तस्य ज्ञानान्तरङ्गत्वलाभप्रकारं दर्शयति– **विपर्येत्यादि ॥ तत एव** तद्व्यतिरेकेण कार्यव्यतिरेकप्रतिपादकात् उक्तवचनादेव, वैराग्यादेवेति वा । **तदुत्पत्तिः** ज्ञानोत्पत्तिः । गीताभाष्ययोः 'उभयोः' इत्युक्तेर्गमनिकाभाष्येऽनुक्तमपि संयोज्यमित्याह– **एवं कर्मयोगस्त्विति** ॥

'अतः स नावमः' इति भाषयितुं शक्येऽपि, 'कथम्' इत्युक्तेस्तात्पर्यं दर्शयति– **अनेनेति** ॥ 'कथम्' इति वचनेन । यत् 'निःश्रेयसकरावुभौ' इति कर्मयोगस्य निःश्रेयसकरत्वमुक्तं तद् अयुक्तम् । संन्यासस्य ज्ञानान्तरङ्गत्वेन तत उत्तमत्वे वाच्ये ज्ञानविरुद्धत्वेनोक्तस्य योगस्यावमत्वप्राप्तेरुचितत्वात् निःश्रेयसकरत्वमप्याक्षिप्तं भवतीत्यर्थः । न केवलं संन्यासस्य योगादवमत्वमयुक्तम्, योगस्य निःश्रेयसकरत्वमपि इति अपिशब्दः । समुच्चयान्तरस्याभावाद् अपिशब्दः परस्परसमुच्चयार्थ इति भावेनाह– **न केवलमिति ॥ विरोध इति** । ज्ञानं प्रत्यन्तरङ्गत्वाभावलक्षणः, निःश्रेयसकरत्वाभावलक्षणो वा विरोध इत्यर्थः । 'ननु साङ्ख्यम्' इति कृतचोद्यं भाष्यतात्पर्यं वदन् निरसितुमाह– **अनेनेति** ॥

श्लोकः ४

**भावदीपिका (श्री.टि.)– ॥ द्वयोर्मध्ये ॥** ननु 'न तस्य' इत्यादौ कथं संन्यासस्य ज्ञानोत्पत्तावावश्यकत्वमुक्तमित्यतस्तदुपपादयति– **न तस्येत्यत्रेति ॥ विषयवैराग्याभाव इति ॥** विषयेषु विगतरागत्वं हि वैराग्यम् । इदमेव च कामादित्यागरूपः संन्यास इत्याशयः ॥ **तत एवेति ॥** वैराग्यापरपर्यायकामादित्यागरूपसंन्यासादेवेत्यर्थः ॥ **तदुत्पत्तिः** ज्ञानोत्पत्तिः ॥ **लभ्यत इति ॥** ततश्च ज्ञानोत्पत्तावत्यावश्यकत्वाख्यान्तरङ्गत्वं लब्धमिति भावः ।

ननु गीतायां योगज्ञानयोः साध्यसाधनभाव एवोच्यते, न तूक्तशङ्कापरिहार इत्यत आह– **एवमिति ॥ ज्ञानविरोधित्वेनेति ॥** ज्ञानानुकूलत्वे 'अग्निमुग्ध' इत्यादिनिन्दा न स्यात् । तथा च ज्ञानविरोधिनो योगात् ज्ञानान्तरङ्गस्य संन्यासस्यावमत्वं कथमित्यभिप्रायः ॥ **अनेन योगस्येति ॥** 'अग्निमुग्ध' इत्यादौ ज्ञानविरोधित्ववचनेन 'संन्यासः कर्मयोगश्च निश्रेयसकरावुभौ' इति यद् योगस्य निश्रेयसकरत्वमुक्तं तदप्याक्षिप्तं भवति । ज्ञानविरोधित्वे मोक्षविरोधित्वावश्यम्भावादिति भावः ।

**पृथक्त्वाभाव इति ॥** ऐक्यमित्यर्थः ॥ **उच्यत इति ॥** 'साङ्ख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिता' इत्यनेनेत्यर्थः ॥ **नोक्तो विरोध इति ॥** 'अग्निमुग्ध' इति श्रुत्यनुसारेणोक्तो योगस्य ज्ञानविरोधो नास्तीत्यर्थः । तथा चोभयोर्ज्ञानान्तरङ्गत्वेऽपि योगस्य मुख्यान्तरङ्गत्वात् योगाङ्गतया संन्यासस्यान्तरङ्गत्वेन, अन्तरङ्गतायां तारतम्यसद्भावाद् योगात् संन्यासस्यावमत्वमिष्टमेवेति भावः ॥ **अनेनेति ॥** कर्मयोगस्य ज्ञानान्तरङ्गत्ववचनेनेत्यर्थः ॥

**भावप्रकाशः (कृ.टि.)–** नैतावता सन्न्यासस्य योगावरत्वाक्षेपः सिद्ध्यतीत्यत आह– **एवं कर्मयोगस्त्विति ॥** साङ्ख्ययोगाविति गीतायां योगस्य निःश्रेयसकरत्वोक्तेः तदनुसारेणाह– **अनेनेति ॥** उभयोरपीत्यपिशब्दो नान्यसमुच्चयार्थः । अन्यस्य समुच्चेयस्याभावात् । किन्तु उभशब्दोक्तयोः मध्ये परस्परसमुच्चयार्थ इति भावेनाह– **न केवलमिति ॥** तान्त इत्यस्यार्थः – **ग्लान इति ॥** तमु ग्लानाविति धातुव्याख्यानादिति भावः ॥

## भाष्यम्

**'अग्निमुग्धो ह वै धूमतान्तः स्वं लोकं न प्रत्यभिजानाति' 'मा वः पदव्यः पितरस्मादाश्रिता या यज्ञशालासनधूमवर्त्मनाम्' इत्यादि तु काम्यकर्मविषयमिति भावः । ये त्वन्यथा वदन्ति त बालाः ॥ ४ ॥**

**भावप्रकाशिका (न.टी.)–** ननु श्रुतिपुराणेषु योगशब्दोक्तयागादेः कर्मणः, साङ्ख्य-शब्दोक्तज्ञानात् भिन्नमार्गत्वानुगमात् कथं योगस्य ज्ञानान्तरङ्गत्वमित्यत आह– **अग्निमुग्ध इति** । काम्यकर्मैव निन्द्यते, नित्यकर्म तु ज्ञानान्तरङ्गमेवेत्यर्थः । ननु नित्यकर्मापि न ज्ञानान्तरङ्गम्, किन्तु केवलप्रत्यवायपरिहारार्थमिति केचित् । तान् प्रत्याह– **ये त्विति** । 'विविदिषन्ति यज्ञेन' इत्यादिश्रुतितात्पर्यालोचनासामर्थ्यात् वालाः । ये त्वज्ञानिनामेव कर्मयोगो न ज्ञानिनामिति वदन्ति ते वालाः । 'यदेव विद्यया' इत्यादिश्रुतिसूत्रतात्पर्यार्था-लोचनायामसामर्थ्यादिति भावः ॥ ४ ॥

**प्रमेयदीपिका (ज.टी.)–** ननु श्रुतिपुराणाभ्यामेव कर्मणो ज्ञानविरोधित्वमुच्यत इत्युक्तम् । अतः कथमेवमभिधीयते? इत्यत आह– **अग्नीति** ॥ अग्न्युपलक्षिते कर्मणि मुग्धः श्रेयस्करमिति भ्रान्तः । **धूमतान्तः** होमधूमेन तान्तः ग्लानः । धूमता धूमादित्वमेव अन्तः पर्यवसानमस्येति वा । **स्वं लोकं** स्वीयमाश्रयं परमात्मानम् ॥ यज्ञशालासनेन धूमोप-लक्षितमार्गवतां वः पदव्यः अस्मदाश्रिताः नैवेत्यर्थः ॥

नन्वकाम्यमपि नित्यं नैमित्तिकं च कर्म प्रत्यवायपरिहारार्थमेव । न ज्ञानान्तरङ्गमिति विद्वांस एव मन्यन्त इत्यत आह– **ये त्विति** ॥ **वालाः** अविवेकिनः ॥ ४ ॥

**भावदीपः (रा.टि.)–** ॥ पृथक् इत्यनुवादः, साध्येत्यादि व्याख्या ॥ **इत्युक्तमिति** ॥ पूर्वभाष्ये 'अग्निमुग्धः इत्यादौ' इत्यपि ग्राह्यमित्युक्तम् ॥ 'इत्युक्तत्वात्' इत्युक्तम् ॥ ४ ॥

**भावरत्नकोशः (सु.टि.)–** ॥ 'पृथक्' इत्यनुवादः, 'साध्यसाधनभावहीनौ' इति व्याख्यानम् ॥ **इत्युक्तमिति** ॥ 'एवं कर्मयोगस्तु' इति वाक्ये । 'अग्निमुग्ध इत्यादौ' इति आदिपदेन 'मा वः पदव्यः' इति भाष्योपात्तस्मृतेर्ग्रहणादेवमुक्तम् । एवं कर्मयोगस्य ज्ञानान्तरङ्गत्वमस्तीत्येवम् । 'अग्नौ मुग्धोऽग्निमुग्धः' इति विग्रहमभिप्रेत्याग्निशब्दविवक्षितार्थमाह– **अग्न्युपलक्षित इति** ॥ 'मुह वैचित्त्ये' इति धातुव्याख्यानात् 'भ्रान्तः' इत्युक्तम् । अग्निशब्दसन्निधानाद् धूमशब्दो धूमविशेषार्थ इत्याह– **होमेति** ॥ 'तमु ग्लानौ' इति धातुव्याख्यानादाह– **ग्लान इति** । 'धूमवर्त्मनाम्' इति वचनानु-रोधेन प्रकारान्तरेण व्याख्याति– **धूमादित्वमिति** ॥ 'धूमादि' इति वदन् श्रुतौ धूमशब्दो 'धूमो रात्रिस्तथा कृष्णः' इत्यादिशास्त्रोक्तस्वर्गादिपुनरावृत्तिमार्गोपलक्षकः इत्यभिप्रैति । **पर्यवसानमिति** ।

प्राप्यमिति यावत् । अत्र धूमादिभावश्च 'तत्स्वाभाव्यापत्तिरुपपत्तेः' इति सूत्रभाष्ये 'धूमादिषु प्रविश्य तद्गतौ गतिः, तत्स्थितौ स्थितिः' इत्यादिरेव 'तद्भावापत्तिः' इति व्याख्यानाद् धूमादिदेवताऽनु-सारिगत्यादिमत्त्वमेवेति द्रष्टव्यम् ।

विवक्षितविशेष्याभिधानम्– **परमात्मानमिति । यज्ञशालेति** । तथा चायमर्थः- 'कदन्नतृप्तैर-सुहृद्भिरीडिता अव्यक्तलिङ्गा अवधूतसेविताः' इत्युत्तरार्धम् । इदं च दक्षप्रजेश्वरं प्रति सतीवचनं चतुर्थस्कन्धे । हे पितः, यज्ञशालायां याजमान्येन दीक्षालक्षणेन धूमो धूमादिलक्षणो वर्त्म मार्गो येषां ते तथोक्ताः तेषां वो युष्माकं कदन्नतृप्तैः पशुमांसलक्षणेनान्नेनालंबुद्धिं गतैः असुहृद्भिः पशुप्राणहारिभिः पुरुषैरीडिताः पदव्यो मार्गाः ता अस्मदाश्रिताः अस्माभिराश्रिताः मा भैव भवन्ति । कीदृश्य इत्यत उक्तम् – अवधूतैः सनकादियोगीन्द्रैः सेविताः अन्यैरज्ञातलक्षणा अर्चिरादिरूपा इति । एवं महादेवस्य तव च पृथङ्मार्गत्वान्न त्वन्निन्दया तस्य गुणहानिरित्यतो न तद्दूषणं तवोचितमिति भावः ।

**प्रत्यवायेति** ॥ नोपतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् । स शूद्रवद्बहिष्कार्यः सर्वस्मा-द्विजकर्मणः' इत्यादिशास्त्रप्राप्तो यः सन्ध्याऽकरणे प्रत्यवायः तत्परिहारार्थमित्यर्थः । कथं तेषु बालत्वम् ? वृद्धत्वादेर्दर्शनात्, इत्यतो बालशब्दो गौण इति भावेनाह– **बाला अविवेकिन इति** ॥ 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिश्रुतितात्पर्यालोचनासामर्थ्याद् विवेक-शून्या इत्यर्थ इति प्राचीनटीका ॥ ४ ॥

**साङ्ख्ययोगावित्यादिश्लोकत्रयाक्षरार्थस्तु**- यदुक्तं 'संन्यासं गृहीत्वा योगं त्यक्ष्यामि' इत्या-शयेन द्वयोः श्रेयसि पृष्टे द्वावपि निःश्रेयसकरौ, तत्रापि संन्यासाद् योगो विशिष्टः । अतो युद्धं न त्वया त्याज्यमिति, तत्र संन्यसनस्य योगादवमत्वमुक्तम् । 'न तस्य तत्त्वग्रहणाय' इति स्मृतौ विषयवैराग्याभावे ज्ञानानुत्पत्तिवचनेन तत एव तदुत्पत्तिरिति लब्ध्या तस्य ज्ञानोत्पत्ता-वत्यावश्यकत्वावेदनात् । कर्मयोगस्तु ज्ञानविरुद्धत्वेन 'अग्निमुग्धः' इति श्रुतावुक्तः, इति कथं योगाद् असाववमो भवेत् ? कथं चैवंविधस्य निःश्रेयसकरत्वमित्याशङ्क्य संन्यास इव कर्मयोगोऽपि ज्ञानोत्पत्तावत्यावश्यक इत्युच्यते– **साङ्ख्ययोगाविति** । साङ्ख्यं ज्ञानं योगः कर्म एतौ पृथक् साध्यसाधनभावहीनाविति न पण्डिता मन्यन्त इति ज्ञानं प्रत्यावश्यकत्वं योगस्योक्तम् । तत एव श्रेयस्करत्वं च । 'अग्निमुग्धः' इत्यादि तु काम्यकर्मविषयमिति भावः । अकाम्यमपि नित्यं

नैमित्तिकं कर्म प्रत्यवायपरिहारार्थमेव, न ज्ञानान्तरङ्गमिति ये मन्यन्ते ते तु बालाः 'विविदिषन्ति' इत्यादिश्रुतितात्पर्यालोचनासामर्थ्याद् अविवेकिनः । योगस्य ज्ञानसाधनत्वे प्रमिते भवेदेतत् । तदेव कथमित्यत उक्तम् – **एकमपीति** ॥ ४ ॥

**भावदीपिका (श्री.टि.)**– ॥ **साङ्ख्ययोगौ** ज्ञानकर्मणी ॥ **साध्यसाधनभावहीनाविति** ॥ 'अग्निमुग्ध' इति श्रुत्यनुसारेण योगस्य ज्ञानविरोधित्वादिति भावः । तथा च कर्मापि साङ्ख्य-शब्दोक्तज्ञानान्तरङ्गमेवेति द्रष्टव्यम् ॥ **न पण्डिता मन्यन्त इति** ॥ प्रत्युत साङ्ख्यस्य योगोऽ-विरोध्येवेति मन्यन्त इति द्रष्टव्यम् । **तान्त** इत्यस्यार्थो 'ग्लान' इति ॥ **धूमादित्वमेवेति** ॥ तथा च श्रुतौ धूमशब्द '**धूमो** रात्रिस्तथा कृष्ण' इत्याद्युक्तरात्र्यादिमार्गोपलक्षक इत्युक्तं भवतीति द्रष्टव्यम् । **पर्यवसानमिति** धूमादिलोकप्राप्तिरेव यस्य कर्मणः फलमिति यावत् । **वः पदव्य इति** ॥ दक्षं प्रति सतीदेव्या वचनमिदम् । **प्रत्यवायेत्यादि** ॥ 'नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहीर्षया' इति वचनादिति भावः ॥ **विद्वांस एवेति** ॥ तथा च 'साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिता' इत्युक्तमयुक्तमिति भावः । योगशब्दोक्तनित्यनैमित्तिककर्मणोऽज्ञानसाधनत्वाभावादिति ज्ञातव्यम् ॥ **अविवेकिन इति** ॥ तथा च विद्वांसो नैवं मन्यन्त इति भावः । भाष्ये ये 'अकाम्यं नित्यनैमित्तिकं कर्म प्रत्यवायपरिहारार्थमेव, न ज्ञानान्तरङ्गम्' इत्येवम् अन्यथा वदन्ति ते बाला अविवेकिन इत्यर्थो द्रष्टव्यः ॥ ४ ॥

**भावप्रकाशः (कृ.टि.)**– धूमवर्त्मनामिति पुराणानुसारात् प्रकारान्तरेण व्याचष्टे– **धूमादित्वमेवेति** ॥ श्रुतौ धूमादिशब्दो रात्र्यादिस्वर्गमार्गोपलक्षक इति भावः । धूमादिभावश्च–

'धूमादिभावप्राप्तिश्च तद्गतौ गतिरेव तु । स्थितौ स्थितिः प्रवेशश्च'
इति प्रमाणाद्धूमादिदेवतानुसारिगत्यादित्वमिति ज्ञातव्यम् ॥

**यत् साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥**

## भाष्यम्

**'एकमपि'** (५.४) **इत्यस्याभिप्रायमाह– यत् साङ्ख्यैरिति ॥ योगिभिः अपि ज्ञानद्वारा ज्ञानफलं प्राप्यते इत्यर्थः ॥ ५ ॥**

श्लोकः ५

भावप्रदीपिका (प.टी.)– एवमप्युत्तरार्धे योगस्य ज्ञानान्तरङ्गत्वं (कथं) कर्मण इत्याशङ्क्य, उत्तरश्लोकमवतार्य व्याचष्टे– **एकमिति** ॥ ५ ॥

भावप्रकाशिका (न.टी.)– ननु यद्यपि ज्ञानमेकमास्थितः कर्मफलमपि विन्दते स्वर्गादिकम् । 'पुरुषार्थोऽतःशब्दात्' इत्यादेः । तथाऽपि कर्मणो ज्ञानाङ्गत्वे किमायातमित्यत आह– **एकमपीत्यस्येति** । यथा साङ्ख्यैः कर्मफलं प्राप्यते, तथा योगिभिरपि ज्ञानफलं प्राप्यते। तदपि ज्ञानद्वारा । 'नान्यः पन्था अयनाय विद्यते', 'कर्मणा ज्ञानमातनोति, ज्ञानेनामृती भवति' इत्यादिश्रुतेः । अतः कर्मणो ज्ञानान्तरङ्गत्वमित्यर्थः ॥ ५ ॥

प्रमेयदीपिका (ज.टी.)– योगस्य ज्ञानसाधनत्वे प्रमिते भवेदेतत् । तदेव कथम्? इत्यत उक्तम्– **एकमपीति** ॥ तदनुपपन्नम् । उभयोर्मध्ये सम्यगेकमप्यास्थितः फलं विन्दत इति योजनायां द्वयोः साफल्यमात्रमुच्यते । एकमपि सम्यगास्थित उभयोः फलं विन्दत इति पक्षे तु द्वयं किञ्चित् फलं प्रति स्वतन्त्रसाधनमित्युच्यते। पक्षद्वयेऽपि न प्रकृतोपयोग इत्यत आह– **एकमपीति** ॥ एवमनुपयोगेऽपि भगवानेव स्ववाक्याभिप्रायमाह । स ग्राह्य इत्यर्थः ॥ अनेनापि योगस्य ज्ञानसाधनत्वे किं प्रमाणमुक्तम्? इत्यतो व्याचष्टे– **योगिभिरपीति** ॥

'तरति शोकमात्मवित्' (छां.उ.) इत्यादिना यत् ज्ञानफलं मोक्षाख्यं प्रमितं तत्तावत् योगिभिरपि प्राप्यते इत्युच्यते 'अपाम सोमम्' (ऋ.६.४.११) इत्यादिना । तत्र विचार्यम्- किं द्वयमपि स्वतन्त्रं मुक्तिसाधनम्, उत समुचितम्? अथचैकं साक्षात् साधनम्, अपरं तत्साधनत्वेनेति । न प्रथमद्वितीयौ । 'नान्यः पन्थाः' (श्वे.उ.६.१५) इत्यादि विरोधात् । तृतीयेऽपि चिन्त्यं किं कस्य साधनमिति? तत्र न तावज्ज्ञानं कर्मसाधनत्वेन मोक्षहेतुः ।'न किञ्चिदन्तराधाय' इत्यादिविरोधात् । अतः परिशेषाद् योगिभिरपि ज्ञानद्वारा ज्ञानफलं प्राप्यत इति सिद्ध्यति । तथाच योगस्य ज्ञानसाधनत्वं सिद्धमित्यर्थः । अत्र 'योगिभिः' इति वदता योगशब्दो धर्मिणामुपलक्षकः, अर्श आद्यजन्तो वेति सूचितम् ॥ ५ ॥

भावबोधः (र.टि.)– ॥ न प्रकृतोपयोग इति ॥ योगस्य ज्ञानसाधनत्वासिद्धेरिति भावः ॥

वाक्यार्थप्रदीपः (पां.टि.)– ॥ **अर्श आद्यजन्तत्वेति** ॥ योगो विधते यस्येति मत्वर्थे अर्शादिभ्योऽच् इति अचि जयन्त इत्यादिवत् योगशब्दो योगपर इति भावः ॥

श्लोकः ५

**भावदीपः (रा.टि.)– ॥ न प्रकृतोपयोग इति ॥** योगस्य ज्ञानहेतुत्वासिद्धेरिति भावः । **योगिभिरिति ॥** कर्मयोगवद्भिरित्यर्थः ॥ **योगशब्द इति ॥** गीतास्थः 'योगैः' इतिशब्द इत्यर्थः ॥ ५ ॥

**भावरत्नकोशः (सु.टि.)–** भाष्यं घटयितुं गीतामवतारयति– **योगस्येति ॥** 'उभयोः' इत्यस्य किम् एकशब्देनान्वय उत फलशब्देनेति विकल्पं मनसि निधाय आद्ये आह– **उभयोर्मध्ये सम्यगेकमपीति ।** द्वितीय आह–**एकमपीति ।** 'इति हि योजनायाम्' इत्यत्र हिशब्दो 'यतः' इत्यर्थे वर्तमानो 'यत उभयोः' इति । 'यत एकमपि' इति च सम्बध्यते । तेन 'तदुपपन्नम्' इति साध्ये हेतुरुक्तो भवति । 'पक्षद्वयेऽपि' इत्यतः पूर्वं 'तथा च' इति योज्यम् । **न प्रकृतोपयोग इति।** योगस्य ज्ञानसाधनत्वालाभादिति भावः । **एवमनुपयोगेऽपि** उक्तयोजनाद्वयप्रकारेणा-नुपयुक्ततया प्रतीयमानत्वेऽपि । 'आह' इत्याख्यातोपात्तकर्तारमाह– **भगवानिति ॥**

अनेनापि योगस्य ज्ञानसाधनत्वलाभप्रकारः कथमुक्त इत्यतस्तत्परिष्करोति– **तरतीति ॥ अपाम सोममिति ।** सोमपदोपलक्षितकर्मानुष्ठानेन अमृताः मुक्ता अभूमेत्यर्थः । **द्वयं** ज्ञानं कर्म च । स्वतन्त्रं स्वर्गं प्रति ज्योतिष्टोमोऽग्निहोत्रं चेव । **समुचितं** दर्शपूर्णमासाविव परस्परसापेक्षम् । **प्रथमद्वितीयौ** स्वातन्त्र्यसमुच्चयपक्षौ । **तृतीये** एकं साक्षात्साधनम्, अपरं तत्साधनत्वेन साधनमिति पक्षे । **इत्यादीति ।** 'निर्वाणायापरोक्षदृक् । अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते ॥ इत्या-दीत्यर्थः । गीतागतं 'योगैः' इति पदं 'योगिभिः' इति कथं व्याख्यातमित्यत आह– **अत्रेति ॥** अच्प्रत्ययश्च मत्वर्थीयः, इति युक्तं 'योगिभिः' इति व्याख्यानमिति भावः ॥ ५ ॥

**अक्षरार्थस्तु** तत्र 'उभयोर्मध्ये सम्यग् एकमप्यास्थितः फलं विन्दते' इति योजनायां द्वयोः साफल्यमात्रमुच्यते । 'एकमपि सम्यगास्थितः उभयोः फलं विन्दते' इति पक्षे तु द्वयं किञ्चित्फलं प्रति स्वतन्त्रं साधनमुच्यते । पक्षद्वयेऽपि न योगस्य ज्ञानसाधनत्वे प्रमाणमुक्तमित्यतः 'एकमपि' इत्यस्याभिप्राय उच्यते **यत्साङ्ख्यैरिति ।** 'एकमपि सम्यगास्थित उभयोः ज्ञानकर्मणोः फलं विन्दते' इत्यत्रेदमाकूतम् । 'तरति शोकमात्मवित्' इत्यादिना यत् ज्ञानफलं मोक्षस्थानं साङ्ख्यैः ज्ञानि-भिराप्यं प्रमितम्, तत् तावद् योगैः योगिभिरपि प्राप्यमित्युच्यते अपाम सोमम् इत्यादिना । तत्र विचार्यम् किं ज्ञानं कर्म इति द्वयमपि स्वतन्त्रं मुक्तिसाधनम्, उत समुचितम् । अथवा एकं साक्षात्साधनम्, अपरं तत्साधनत्वेन परम्परयेति ।

न प्रथमद्वितीयौ । 'नान्यः पन्थाः' इत्यादिविरोधात् । तृतीयेऽपि चिन्त्यम् 'किं कस्य साधनम्' इति । तत्र न तावज्ज्ञानं कर्मसाधनत्वेन मोक्षहेतुः । 'न किञ्चिदन्तराधाय' इत्यादि-विरोधात् । अतः परिशेषाद् योगेनापि ज्ञानद्वारा ज्ञानफलं प्राप्यत इति वक्तव्यमिति सिद्धम्-'योगस्य ज्ञानसाधनत्वम्' इति । अत्र साङ्ख्ययोगशब्दौ धर्मिणामुपलक्षकौ । अर्श आद्यजन्तौ वा । अतः साङ्ख्यं योगं चैकं साध्यसाधनभावेनैकफलसाधनं यः पश्यति सः सम्यक् पश्यति ज्ञानी इति ॥ ५ ॥

**भावदीपिका (श्री.टि.)– ॥ भवेदिति ॥** 'मुग्ध' इत्यादेः काम्यकर्मविषयत्वकल्पन-मित्यर्थः ॥ **साफल्यमात्रमिति** ॥ न तु योगस्य ज्ञानसाधनत्वे प्रमाणमिति भावः ॥ **स्वतन्त्र-साधनमिति** ॥ 'उभयोः फलं विन्दते' इत्युक्तिरुभयोरपि यदि किञ्चित्फलं स्यात्, तर्ह्येवाश्लिष्टा स्यात्, नान्यथेति भावः । तथा चोभयोः किञ्चित्फलं प्रति स्वतन्त्रसाधनत्वोक्त्या, न योगस्य साङ्ख्यशब्दोदितज्ञानसाधनत्वं प्राप्तमिति, नानेनापि प्रमाणमुक्तमिति भावः । **प्रकृतं** योगस्य साधनत्वम् । **एवं** योजनेन । 'यत्साङ्ख्यैः' इत्यनेन भगवता योगस्य ज्ञानसाधनत्वेऽपि परिशेषप्रमाणम् अभिहितमित्याशयेनोपपादयति– **तरति शोकमित्यादिना ॥ नान्य इति ॥** तत्र ज्ञानातिरिक्तसाधननिषेधादिति भावः । 'इत्यादि' इत्यनेन 'निर्वाणायापरोक्षदृक्' इति पादो ग्राह्यः । ननु गीतायां 'योगैः' इत्युक्तत्वाद् 'योगिभिः' इति कथं भाष्ये ? इत्यत आह– **अत्रेति** ॥ निवृत्तधर्मपर्यायो योगशब्दो गीतागतः ॥ **अर्शआदीति** ॥ स च मत्वर्थीय इति भावः । तथा च योगोऽस्ति येषां ते योगाः, तैर्योगैरित्यर्थो द्रष्टव्यः ॥ ५ ॥

**भावप्रकाशः (कृ.टि.)–** उभयोरित्यस्य किमेकशब्देनान्वयः,उत फलशब्देनेति विकल्प्याद्य आह– **उभयोर्मध्य इति** ॥ अन्त्ये आह– **एकमपीति** ॥ **न प्रकृतोपयोग इति** ॥ योगस्य ज्ञानसाधनत्वासिद्धेरिति भावः । नन्वेवमपि प्रमाणालाभ एवेत्यत आह– **तरतीति** ॥ ५ ॥

**सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥**

## भाष्यम्

**इतश्च सन्न्यासाद्योगो वर इत्याह– सन्न्यासस्त्विति ॥ योगाभावे**

**मोक्षादिफलं न भवति । अतः कामजयादिदुःखमेव तस्य । मोक्षाद्येव हि फलम् । अन्यत् फलम् अल्पत्वादफलमेवेत्याशयः ॥**

भावप्रदीपिका (प.टी.)– अतिशयेन ज्ञानान्तरङ्गत्वाद्योगः संन्यासाधिक इत्युक्तम् । संन्यासस्य योगाभावे विफलत्वाच्चासौ वर इत्यर्थं श्लोकमवतारयति– **इतश्चेति** ॥ ननु कथं ज्ञानयोगसंन्यासस्य दुःखहेतुत्वमुच्यते ? इत्यत आह– **योगेति** ॥ विफलत्वमेव दुःख-साधनत्वमित्यर्थः । ननु मोक्षाभावे फलान्तरसम्भवात् कथं संन्यासो विफलः ? इत्यत आह– **मोक्षादीति** ॥

भावप्रकाशिका (न.टी.)– 'संन्यासः कर्मयोगश्च' इत्येतद्व्याख्याने द्वन्द्वत्यागात् तु संन्यासात् मत्पूजा इति वाक्योदाहरणेन भगवत्पूजात्मकत्वात् कर्मयोगः संन्यासाद्वर इत्युक्तम् । अधुनाऽनेन विना निःश्रेयसकरत्वाभावाच्च स तस्माद्वर इत्याह– **इतश्चेति** ॥ ननु निःश्रेयसकरयोरेव संन्यासकर्मयोगयोः कर्मयोगस्यातिनिःश्रेयसकरत्वमेव समर्थनीयम् । न तु संन्यासस्य दुःखहेतुत्वम् । पूर्वापरविरोधादित्याशङ्क्य तदेव समर्थ्यत इति भावेनाह– **योगाभाव इति** । योगरहितसंन्यासस्य निष्फलत्वात् साधनानुष्ठानश्रम एवावशिष्यत इत्युच्यते । न तु नरकादिदुःखहेतुत्वम् । निष्फलत्वं च मोक्षादिमहाफलाभावादेव । न तु सर्वथा फलाभावादित्यर्थः । किञ्चित्फलहेतोरपि मुक्त्यहेतोरफलत्वोक्तिरयुक्तेत्यतः सप्रमाणक-माह– **मोक्षादिति** ॥

प्रमेयदीपिका (ज.टी.)– 'सन्न्यासस्तु' इत्यस्य सङ्गतिमाह– **इतश्चेति** ॥ ननु प्राक् सन्न्यासाद्योगस्य वरत्वे न कोऽपि हेतुरुक्तः । तत्कथमेवमुच्यते? मैवम् । सन्न्यासस्य योगावरत्वे बाधकं परिहृतम् । साधकमिदानीमुच्यते । बाधकाभावसहितमेव साधकं वस्तुनो व्यवस्थापकम् । तस्माद् इतश्च इति युक्तम् । पूर्वं सन्न्यासस्य निःश्रेयसकरत्वमुक्तम् । इदानीं कथं दुःखहेतुत्वमुच्यते ? किंवा अनेन साधकमुक्तम्? इत्यतो व्याचष्टे– **योगेति** ॥ विष्ण्वर्पणबुद्ध्या कर्मकरणाभावे। 'सन्न्यासमात्रेण' इति शेषः । आदिपदेन ज्ञानं गृह्यते । **तस्य** केवलसन्न्यासिनः । योगाभावे सन्न्यासो निष्फल एवेत्येतन्न युज्यते । मोक्षाद्यभावे अपि तात्कालिकापमानादि – दुःखाभावादेर्भावादित्यत आह– **मोक्षादीति** ॥

श्लोकः ६

**भावदीपः (रा.टि.)**– ॥ **बाधकमिति** ॥ ज्ञानान्तरङ्गत्वरूपमित्यर्थः ॥

**भावरत्नकोशः (सु.टि.)**– समुच्चेयहेत्वन्तरानुक्तेः चशब्दानुपपत्तिरिति शङ्कते– **ननु प्रागिति** ॥ **एवमुच्यते** 'इतश्च' इत्येवमुच्यते । **परिहृतमिति** । 'संन्यासो हि ज्ञानान्तरङ्गत्वेनोक्तः इत्यत्र' इति शेषः । तथाच समुच्चयार्थत्वमित्याह– **बाधकेति** ॥ एवं च न केवलं बाधकाभावात् संन्यासाद्योगो वरः, अपि तर्हि साधकसद्भावाच्चेति युक्तमेवं भाषणमित्यर्थः । **उक्तं** 'संन्यासः कर्मयोगश्च' इत्यत्र । **उच्यते** तथा च व्याहृतिः । **किञ्चेति** । साधकं च 'संन्यासस्तु' इति वचनेन किमुक्तं भवतीत्यर्थः ।

**अपमानादिदुःखाभावादेरिति** । अपमानादिजनितदुःखाभावस्य, आदिपदगृहीतप्राकृतजनमाननिमित्तकसुखस्य च फलस्य सत्त्वादित्यर्थः । 'बाह्यस्पर्शेष्वसक्तात्मा' इति गीताव्याख्याऽवसरे टीकायां संन्यासमात्रेण स्वस्वरूपसुखाविर्भावस्याप्यावेदितत्वाद् अत्रादिपदेन स्वरूपसुखसङ्ग्रह इत्यपि आहुः । **अत्र** अन्यत् अपमानादिकृतदुःखाभावादिफलं न भवतीत्येतस्मिन्नर्थे । वचने 'यस्य कस्यापि साधनस्य यत् फलत्वेनावगतं तत् तस्य फलं न भवति' इति कथं प्रतिषिध्यत इति शङ्कते– **ननु मोक्षेति** । **उक्तम्** 'अन्यत् फलम् अल्पत्वाद् अफलमेव' इत्यादावुक्तम् । 'महाफलस्य योग्यं महाफलयोग्यम्' इति विग्रहमभिप्रेत्य तत्फलितमाह– **महाफलमिति** ॥ कृष्यादिकं तु मुक्त्यहेतुत्वात् न तद्योग्यमिति भावः । तर्हि वचने मोक्षपदस्य, भाष्ये मोक्षादिपदस्य चायोगः ? इत्यत आह– **मोक्षादिग्रहणमिति** ॥

**भावदीपिका (श्री.टि.)**– ॥ **एवमुच्यत इति** ॥ 'इतश्च' इति समुच्चयार्थकशब्दोपेतवाक्यप्रयोगः कथमित्यर्थः ॥ **बाधकमिति** ॥ ज्ञानविरोधित्वरूपमित्यर्थः ॥ **युक्तमिति** ॥ तथा च बाधकाभावसमुच्चयार्थश्चशब्द इति भावः ॥ **साधकमिति** ॥ 'संन्यासाद्योगस्य वरत्वे' इति शेषः ॥ **अपमानादीति** ॥ केनचिदपमाने कृते सति तत्र कामक्रोधपरित्यागरूपसंन्यासानुष्ठाने तत्प्रयुक्तं दुःखं न भवतीत्यर्थः । 'मोक्षादि' इत्यादिपदेन ज्ञानं ग्राह्यम् ॥ **भाष्ये अन्यत्फलमपीति** ॥ तात्कालिकाप-मानादिप्रयुक्तदुःखाभावादिरूपमित्यर्थः ।

ननु तर्हि 'यत्तु महत्फलयोग्यम्' इत्याद्येव वक्तव्ये 'मोक्षाद्येव' इति, 'विना मोक्षफलम्' इति मोक्षादिग्रहणं किमर्थमित्यत आह– **मोक्षादीति** ॥ 'योगस्य महाफलं मोक्षाद्येव' इति प्रकृता-

पेक्षयेत्यर्थः । भाष्येऽनर्घ्यधनप्राप्तिसाधनभूतपद्मरागमणिं कस्मैचिद्दत्त्वा तस्मान्मुष्टिपरिमिततण्डुल-मात्रग्रहणं, तद् यथा फलं न भवति तथेत्यर्थः ॥

**भावप्रकाशः (कृ.टि.)**– समुच्चयाभावात् समुच्चयार्थकचशब्दानुपपत्तिरित्याक्षिपति– **ननु प्रागिति** ॥ **बाधकाभावेति** ॥ तथा च बाधकाभावसहितस्यैव साधकस्य योगोत्तमत्वसिद्धि-रूपक्रियया अन्वयात् मिलितानामेकान्वयरूपेतरेतरयोगार्थश्चशब्द इति भावः । **अपमानादि-दुःखाभावादेरिति** ॥ आदिपदात् स्वरूपसुखसङ्ग्रहः । बाह्यस्पर्शेष्विति गीताव्याख्यावसरे टीकायां सन्न्यासमात्रेण स्वल्पस्वरूपसुखाविर्भावस्यावेदितत्वादिति मन्तव्यम् ॥

## भाष्यम्

**तच्चोक्तम्– 'विना मोक्षफलं यत् तु न तत् फलमुदीर्यते' इति पाद्मे । यत् तु महाफलयोग्यं तस्याल्पं फलमेव न भवति । यथा पद्मरागस्य तण्डुलमुष्टिः। महाफलश्च योगयुक्तश्चेत् सन्न्यास इत्याह – योगयुक्त इति ॥ मुनिः सन्न्यासी । तच्चोक्तम् 'स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः' इति ॥ ६ ॥**

भावप्रदीपिका (प.टी.)– तर्हि कृष्यादेरफलत्वव्यवहारः किं न स्यात् ? इत्यत आह– **यत्त्विति** । योगं व्यावहारिकेण फलासत्त्वात्, (?) योग एवाधिक इत्युक्तम् । फलस्य तदन्वयित्वाच्चासावधिक इत्यर्थमुत्तरार्धमवतारयति– **महाफलश्चेति** । अत्र योगयुक्तस्य मुनेः फलमुच्यते न संन्यासिन इत्यत आह– **मुनिरिति** ॥ ६ ॥

भावप्रकाशिका (न.टी.)– नन्वेवं तर्ह्यारोग्यहेतोरौषधादेरफलत्वोक्तिः किं न स्यात् ? इत्यत आह– **यत्त्विति** । औषधादेर्मुक्तिहेतुत्वयोग्यताभावात् नातिप्रसङ्ग इति भावः । ननु योगरहितसंन्यासवत् सहितस्याप्यमुक्तिसाधनत्वे कथं साधनत्वं योगस्य तदुत्तमत्वं ? इत्याशङ्कापरिहारत्वेनोत्तरार्धमवतार्य व्याचष्टे– **महाफलश्चेति** । नन्वनेनैव योगयुक्तसंन्यासस्य मुक्तिसाधनत्वं नोच्यते । अत्र तद्वाचकपदाभावादित्याशङ्क्य, मुनिपदं तद्वाचकमित्येतत् सप्रमाणकमाह– **मुनिरिति** ॥ ६ ॥

प्रमेयदीपिका (ज.टी.)– तत्र पुराणसम्मतिमाह– **तच्चेति** ॥ ननु मोक्षफलाभावेऽपि धान्यादिनैव कृष्यादिकं सफलमित्युच्यते । तत्कथमेवमभिहितम्? इत्यत उक्तं विवृणोति–

श्लोकः ६

**यत्त्विति** ॥ महाफलं साधयितुं योग्यमित्यर्थः । मोक्षादिग्रहणं प्रकृतापेक्षयैव कृतमिति भावः ॥ ननु सन्न्यासाद्योगस्य वरत्वमनेन साधितम् । तत्किमुत्तरार्धेन? इत्यत आह– **महाफलश्चेति** ॥ महत् फलं यस्मात् स तथोक्तः । योगाङ्गत्वेन सन्न्यासस्य ततोऽवरत्वं सिपाधयिपितम्। तच्चान्वयव्यतिरेकाभ्यां सिद्ध्यति । तत्र पूर्वार्धेन व्यतिरेकमुक्त्वाऽनेनान्वयमाचष्ट इत्यर्थः॥ ननु योगोऽप्येवमेवेति चेत् सत्यम् । तथाऽपि चरमभावित्वेन विशेषः ॥

नन्वत्र सन्न्यासवाचकं न श्रूयते । तत्कथमेवमुच्यते? इत्यत आह– **मुनिरिति** ॥ मुनिशब्दस्यकामादिवर्जनलक्षणसन्न्यासवचनत्वं कुतः ? इत्यत आह– **तच्चेति** ॥ ६ ॥

भावदीपः (रा.टि.)– ॥ **एवमेवेति** ॥ यथा योगं विना कृतः सन्न्यासो न मोक्षहेतुस्तथा योगोऽपि तेन विना कृतो न महाफलहेतुरित्यर्थः ॥ **चरमेति** ॥ सन्न्यासापेक्षया चरमभावित्वाद् ज्ञानोत्पत्तौ अव्यवहितसाधनत्वात् ततोऽप्यस्यातिशय इति भावः ॥

भावरत्नकोशः (सु.टि.)– ॥ **प्रकृतापेक्षया** योगयुक्तसंन्यासापेक्षया । **सिसाधयिपितं** साधयितुमिष्टम् । 'अन्वयव्यतिरेकाभ्याम्' इति वदन् केवलसंन्यासस्य दुःखफलकत्वेऽपि योगयुक्तस्य निःश्रेयसकरत्वमभिप्रेतम् इति न व्याहतिरित्यभिसन्धत्ते । **योगोऽप्येवमेवेति** । यथा 'योगं विना संन्यासो निष्फलः', 'सति च योगे सफलः' तथा 'योगोऽपि संन्यासं विना निष्फलः', 'सति च तस्मिन् सफलः' इत्यन्वयव्यतिरेकसाम्येन विनिगमकाभावात्, न योगाङ्गत्वं संन्यासस्येति भावः । **चरमेति** । कामादिवर्जनपूर्वकमीश्वरार्पणबुद्ध्या स्ववर्णाश्रमविहितानुष्ठानं हि कर्मयोगः । तत्र कामादिवर्जनस्य पूर्वभावित्वात् तदनन्तरभाविनः कर्मानुष्ठानात्मनो योगस्य ज्ञानं प्रत्यव्यवहितसाधनत्वं 'कर्मणा ज्ञानमातनोति' इति शास्त्रसिद्धमिति युक्तं संन्यासापेक्षया तस्य प्राधान्यमिति भाव इति स्वामिनः । **संन्यासवचनत्वम्** उक्तलक्षणसंन्यासोपस्थापनद्वारा तद्वचनत्वम् । अत एव 'यः कामक्रोधवर्जितः' इति भाष्यम् ॥ ६ ॥

**अक्षरार्थस्तु**- संन्यासस्य योगादवरत्वे 'न तस्य' इत्यादावावेदितं ज्ञानान्तरङ्गत्वं न स्यादिति बाधकं 'साङ्ख्ययोगौ' इत्यादिना परिहृत्य, इदानीं 'संन्यासाद्योगो वरः' इत्यत्र साधकमुच्यते संन्यासस्त्विति । अयोगतः विष्ण्वर्पणबुद्ध्या कर्मकरणरूपयोगाभावे कामादिवर्जनरूपः संन्यासस्तु दुःखमाप्तुमेव भवति, न पुनस्तेन किमपि निःश्रेयसम् । तात्कालिकापमानादिदुःखाभावस्तु अल्पत्वादफलमेवेत्याशयः । योगयुक्तस्तु मुनिः संन्यासी न चिरेण शीघ्रं ब्रह्माधिगच्छति जानाति

प्राप्नोति च । अनेन योगाभावे संन्यासस्य न निःश्रेयसकरत्वम्, तत्सहितत्वे तत्त्वम् इति व्यतिरेकान्वयलक्षणं संन्यासस्यावरत्वे साधकमुक्तं भवतीति ॥ ६ ॥

**भावदीपिका (श्री.टि.)– ॥ साधितमिति ॥** सत्यपि संन्यासे 'योगाभावे महाफलाभाव' इति व्यतिरेकदर्शनेन योगस्याङ्गित्वं ततश्च प्राधान्यम्, संन्यासस्याङ्गत्वं ततश्चाप्राधान्यम् इति साधितमिति भावः ॥ **अन्वयमिति ॥** 'योगे सति संन्यासेन महाफलम्' इत्यन्वयमाचष्ट इत्यर्थः ॥ **ननु योगोऽप्येवमेवेति ॥** सत्यपि योगे संन्यासाभावे महाफलाभावात्, तस्मिन् सति च भावात्, इत्यन्वयव्यतिरेकाभ्यां संन्यासस्यैवाङ्गित्वेन प्राधान्यम्, योगस्य त्वङ्गत्वेनाप्राधान्यमेवेति साम्यम् इत्यर्थः ॥ **चरमेति ॥** कामादिवर्जनरूपसंन्यासानन्तरं हि विष्ण्वर्पणबुद्ध्या कर्मानुष्ठानरूपो योगः सम्पद्यत इति योगस्य संन्यासानन्तरभावित्वेन संन्यासस्याङ्गत्वम्, योगस्यैव त्वङ्गित्वमित्येवंरूप एव विशेषः स्वीकार्यः, नापर इत्याशयः ॥ **वाचकं** पदादि ॥ ६ ॥

**भावप्रकाशः (कृ.टि.)–** महाफलभोगयोग्यमित्यन्यथाप्रतीतिनिरासायाह– **महाफलं साधयितुमिति ॥ योगोऽप्येवमेवेति ॥** यथा योगं विना सन्न्यासो निष्फलः योगे सति च सफलः, तथा योगोऽपि सन्न्यासं विना निष्फलः सति च तस्मिन् सफल इत्यर्थः । तथा च विनिगमकाभावात् सन्न्यासस्य (योगादवरत्वम्) योगाधिक्यम् अयुक्तमिति भावः । **चरमभावित्वेनेति ॥** कामादिवर्जनपूर्वकमीश्वरार्पणबुद्ध्या कर्मानुष्ठानं हि विशिष्टः कर्मयोगः । तत्र कामादिवर्जनस्य पूर्वभावित्वात् तदनन्तरभाविकर्मानुष्ठानात्मकयोगस्य ज्ञानं प्रति चरमसाधनत्वेन सन्न्यासापेक्षया प्राधान्यमिति भाव इत्यर्थः ॥ ६ ॥

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥**

## भाष्यम्

**एतदेव प्रपञ्चयति – योगयुक्त इति ॥ सर्वभूतात्मभूतः परमेश्वरः । 'यच्चाप्नोति' (म.भा.) इत्यादेः । स आत्मभूतः स्वसमीपं प्रत्यादानादिकर्ता यस्य सः सर्वभूतात्मभूतात्मा ॥ ७ ॥**

श्लोकः ७

भावप्रदीपिका (प.टी.)– ननु कथं योगयुक्तेन संन्यासेन मोक्षः ? इत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतारयति– **एतदेवेति** । 'सर्वभूतात्मभूतात्मा' पदमन्यथप्रतीतिनिरासाय यथावद्व्याचष्टे **सर्वेति** । योगयुक्ततया कृतसंन्यासेन कर्मलेपाभावेन मोक्ष इत्यर्थः ॥ ७ ॥

भावप्रकाशिका (न.टी.)– ननु कर्मैव योगः कर्मयोगः । कर्मणश्च बन्धकत्वात् कथं तद्युक्तः संन्यासी ब्रह्म गच्छति ? इत्याशङ्कापरिहारायोक्तप्रपञ्चात्मकत्वेनोत्तरं श्लोकमवतारयति– **एतदेवेति** ॥ यथावद्विष्णुं ज्ञात्वा, तदर्थत्वेन कर्मकरणमित्येतत् कर्मकरणमेव कर्मकौशलमेव योगः, न कर्ममात्रम् । अतस्तद्युक्तः संन्यासी कर्म कुर्वन्नपि न लिप्यत इति युक्तमेव । 'विशुद्धात्मा विजितात्मा जितेन्द्रियः' इति सन्न्यास्युच्यते । विशुद्धबुद्धित्वात् विजितमनाः । अत एव जितबाह्येन्द्रियश्च । अतः स कामक्रोधवर्जित इत्यर्थः । जीवपरमात्मैक्यस्य लाक्षणिकत्वात् सर्वप्रमाणविरुद्धत्वाच्च, 'सर्वभूतात्मभूतात्मा' इत्यस्य मुख्यार्थं सर्वप्रमाणानुकूलमाह– **सर्वेति** ॥ ७ ॥

प्रमेयदीपिका (ज.टी.)– प्रकृतप्रमेयस्य समाप्तत्वादुत्तरस्य वैय्यर्थ्यमाशङ्क्याऽह– **एतदेवेति** ॥ योगयुक्तस्य सन्न्यासस्य महाफलत्वमेव । प्रपञ्चनं च 'यो न द्वेष्टि' (५.३) इत्यत्रोक्तद्वेषादिवर्जनकारणोपन्यासेन, 'ब्रह्माधिगच्छति' (५.६) इत्यत्रोक्तब्रह्मज्ञानावान्तरफलोपन्यासेन चेति ज्ञातव्यम् । 'सर्वभूतात्मभूतात्मा' इत्यनेन 'जीवस्य परमात्मस्वरूपत्वमुच्यते' इत्यन्यथप्रतीतिनिरासायाह– **सर्वेति** ॥ सर्वभूतानामात्मभूतः कथम्? इत्यत उक्तम्– **यच्चेति** ॥ एतन्निर्वचनमाश्रित्य न स्वरूपत्वमित्यर्थः ॥ स आत्मभूतः इति 'सर्वभूतात्मभूतः' इत्युक्तस्यानुवादः । 'स्वसमीपम्' इत्यादि द्वितीय आत्मशब्दार्थः। एवं जानन्नत्र विवक्षितः ॥७॥

भावबोधः (र.टि.)– ॥ **कारणोपन्यासेनेति** ॥ न लिप्यत इति विशुद्धात्मत्वादिकारणोपन्यासेनेत्यर्थः । **ज्ञानावान्तरफलोपन्यासेनेति** ॥ पापलेपाभावरूपावान्तरफलोपन्यासेनेत्यर्थः ।

भावदीपः (रा.टि.)– ॥ **कारणोपन्यासेनेति** ॥ विशुद्धात्मत्वजितेन्द्रियत्वादिरूपकारणेत्यर्थः ॥ ७ ॥

भावरत्नकोशः (सु.टि.)– 'एतदेव' इत्यस्यार्थमाह– **योगयुक्तस्येति** ॥ उक्तस्य विस्तरेण वर्णनं हि प्रपञ्चनम् । तदस्ति प्रकृते इत्याह– **प्रपञ्चनं चेति** ॥ **कारणोपन्यासेनेति** । 'विशुद्धात्मा

विजितात्मा जितेन्द्रियः' इति यद् द्वेषादिवर्जने कारणं तदुपन्यासेनेत्यर्थः । तथा च प्राचीनटीका 'विशुद्धात्मा विशुद्धबुद्धिः , विशुद्धबुद्धित्वात् विजितमनाः । अत एव जितबाह्येन्द्रियः । अतो द्वेषादिवर्जितः' इति । अधिपूर्वस्य गच्छतेः ज्ञानेऽपि प्रसिद्धेरुक्तम्– **ब्रह्मज्ञानेति ॥ अवान्तर-फलेति** । 'कुर्वन्नपि न लिप्यते' इति सर्वकर्मलेपाभावरूपं यद् ज्ञानावान्तरफलं तदुपन्यासेनेत्यर्थः । मोक्षस्यैव महाफलत्वाद् 'अवान्तर' इत्युक्तम् । 'सर्वेषां ब्रह्मादीनां स्तम्बपर्यन्तानां भूतानाम् आत्मभूत आत्मा प्रत्यक्चेतनः यस्य सः सर्वभूतात्मभूतात्मा' इति सङ्करेण भाषणादाह– **सर्वभूतात्मभूतात्मेत्यनेनेति** । 'इत्यादेर्निर्वचनात्' इति संयोज्य, तत्र पञ्चमी ल्यब्लोपनिमित्ते-त्यभिप्रायेणाह– **एतन्निर्वचनमाश्रित्य इति** ।

'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावः तस्मादात्मेति भण्यते'

इति वचनोक्तं निर्वचनमाश्रित्य सर्वभूतानाम् आदानादिकर्तृत्वेन निमित्तेन 'सर्वभूतानाम् आत्मभूतः' इति परमेश्वरः प्रतिपत्तव्यः, न पुनः सर्वभूतस्वरूपत्वमाश्रित्य तथेति ज्ञातव्यमित्यर्थः । बहुमानविरुद्धत्वात् जीवपरमात्मैक्यस्येति भावः । 'स आत्म....' इत्यादि भाष्यं सङ्गमयति– **स** इत्यादि ॥ 'स्वसमीपम्' इत्यत्र स्वशब्दो भगवत्परो भाष्ये, न त्वेवंविधसर्वभूतात्मत्वस्य । सर्वसाधारणत्वात् कथं साधकस्यैव एतद्विशेषणमित्यत आह– **एवं जानन्निति** ॥ 'एवं ज्ञानवान्' इति वक्तुं शक्येऽपि 'एवं जानन्' इति वदन् 'इति जानन् हि तत्त्ववित्' इति तात्पर्यनिर्णयोदा-हृतवचनं न्यायसाम्याद् अत्राप्यनुसन्धातव्यमिति सूचयति । सर्वस्वामित्व आत्मस्वामित्वप्रकारक-भगवज्ज्ञानं च न साधारणमिति युक्तमेव साधकविशेषणमिति भावः ॥ ७ ॥

**गीताक्षरार्थस्तु** योगयुक्तस्य संन्यासस्य महाफलत्वं यत् पूर्वश्लोकोक्तं तदेव विशुद्धात्मत्व-रूपकारणोपन्यासादिना प्रपञ्च्यते– **योगयुक्त इति** । कर्मयोगयुक्तः, विशुद्ध आत्मा बुद्धिः यस्य सः तथा । अत एव विजितः वशीकृतः आत्मा मनः यस्य सः तथा, तत एव जितबाह्येन्द्रियः । सर्वेषां भूतानाम् आदानादिकर्तृत्वेन आत्मत्वं स्वामित्वं प्राप्तः सर्वभूतात्मभूतः भगवान्, स आत्मा स्वामी यस्य सः सर्वभूतात्मभूतात्मा, 'सर्वस्वामी मम स्वामी' इति जानन् इति यावत् । कुर्वन्नपि सर्वाणि कर्माणि अनुतिष्ठन् अपि कर्मभिः न लिप्यते तत्कृतम् अशुभत्वादिकं न प्राप्नोतीति ॥ ७ ॥

श्लोकः ८,९

भावदीपिका (श्री.टि.)– ॥ **प्रकृतप्रमेयस्येति** ॥ योगस्य ज्ञानसाधनत्वप्रतिपादनरूप-प्रकृतप्रमेयस्येत्यर्थः ॥ **यो न द्वेष्टीत्यत्रोक्तेत्यादि** ॥ 'यो न द्वेष्टि न काङ्क्षति' इत्यत्रोक्तं यद् द्वेषादिवर्जनम्, तत्र यत्कारणं विजितात्मत्वादिरूपम्, तस्यात्रोपन्यासेनेत्यर्थः ॥ **ब्रह्माधिगच्छतीत्यत्रेति** ॥ 'योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति' इत्यन्वयप्रदर्शनेनैवं व्यवहृतमिति द्रष्टव्यम् ॥ **अवान्तरफलेति** ॥ 'कुर्वन्नपि न लिप्यते' इति पापाद्यलेपरूपावान्तरफलोपन्यासेनेत्यर्थः । 'इत्यादेः' इत्यस्य 'इत्यादेर्निर्वचनात्' इति ह्यर्थः ॥ **स आत्मभूत इत्यादि** ॥ गीतागतं सर्वभूतात्मभूतपदार्थं 'स आत्मभूत' इत्यनेनानूद्य 'स्वसमीपम्' इत्यादिना द्वितीयात्मशब्दार्थं वदन्नेव विग्रहं दर्शयतीत्यर्थः । तथाच 'स आत्मभूत' इति भाष्यांशस्य सर्वभूतात्मभूत इत्यर्थो द्रष्टव्यः । स्वरूपतः सर्वभूतात्मभूतात्मत्वादेः पापाद्यलेपं प्रति कारणत्वाभावादाह– **एवं जानन्नेति** ॥ ७ ॥

भावप्रकाशः (कृ.टि.)– ॥ **कारणोपन्यासेनेति** ॥ विशुद्धात्मत्वादिकारणोपन्यासेनेत्यर्थः ॥ **अवान्तरफलेति** ॥ न लिप्यत इति पापलेपाभावरूपावान्तरफलोपन्यासेत्यर्थः । **एतन्निर्वचनमिति** ॥ 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावः तस्मादात्मा सतां मतः' इति निर्वचनमित्यर्थः । नन्वेवं विधसर्वभूतात्मभूतात्मत्वस्य सर्वसाधारण्यात् कथं साधकस्यैवं-तद्विशिष्योच्यत इत्यत आह– एवं जानन्निति ॥ ७ ॥

**नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यञ्छृण्वन् स्पृशञ्जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥ ८ ॥**

**प्रलपन् विसृजन् गृह्णन्नुन्मिषन् निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥**

## भाष्यम्

**सन्न्यासं स्पष्टयति पुनः श्लोकद्वयेन ॥ ८,९ ॥**

भावप्रदीपिका (प.टी.)– न केवलं विवक्षितात्मत्वाद्येव संन्यासः, किन्तु सङ्कल्पत्यागोऽपीत्यभिप्रायेण श्लोकद्वयमवतारयति– **संन्यासमिति** ॥ ८,९ ॥

**भावप्रकाशिका (न.टी.)**– न केवलं द्वन्द्वत्यागः संन्यासः । किन्तु भगवत्प्रेरितेन्द्रियादिभिः क्रियमाणे कर्मणि 'अहं करोमि' इति सङ्कल्पत्यागरहित इति भावेन 'नैव' इत्यादि-श्लोकद्वयमवतारयति– **संन्यासमिति** । 'विशुद्धात्मा' इत्यादिनेपत्स्पष्टितत्वात्– **पुनः इति** । कामसङ्कल्पादिदोपरहितस्यैव विशुद्धवुद्धित्वात् ॥ ८,९ ॥

**प्रमेयदीपिका (ज.टी.)**– **'नैव किञ्चित्'** इत्यादेः प्रतिपाद्यमाह– **सन्न्यासमिति** ॥ 'ज्ञेयः'(५.३) इत्यादिना 'विशुद्धात्मा' (५.७) इत्यादिना च स्पष्टीकृतत्वात् पुनः इति ॥ स्पष्टं च प्रागनुक्तसङ्कल्पत्यागस्याभिधानात् ॥ ८,९ ॥

**भावदीपः (रा.टि.)**– ॥ **स्पष्टीकृतत्वादिति** ॥ 'ज्ञेयः स हि सन्न्यासी' इत्यत्र 'द्वेषादि-वर्जनं हि सन्न्यास शब्दार्थः' इति 'विशुद्धात्मा' इत्यादि तत्कारणोपन्यासेन च स्पष्टीकृतत्वा-दित्यर्थः ॥ ८,९ ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **प्रागनुक्तेति** । 'ज्ञेयः' इत्यत्र, 'विशुद्धात्मा' इत्यत्र च अनुक्तेत्यर्थः । केचित्तु संन्यासत्वेन रूपेण प्रागनुक्तस्य । कर्तृत्वाभिमानत्यागरूपसङ्कल्पत्यागस्य 'नैव किञ्चित् करोमि' इत्यनेनाभिधानादित्यर्थः । तेन 'कामसङ्कल्पवर्जिताः' इति पूर्वाध्याये कर्माङ्गत्वेन सङ्कल्पत्यागाभिधानेऽपि न दोष इत्याहुः ॥ ८,९ ॥

**गीताश्लोकद्वयाक्षरार्थस्तु** 'ज्ञेयः' इत्यादिना, 'विशुद्धात्मा' इत्यादिना च स्पष्टीकृतोऽपि कर्मसंन्यासः प्राग् अनुक्तसङ्कल्पत्यागाभिधानेन पुनश्च स्पष्टीक्रियते । युक्तः योगयुक्तः दर्शन-श्रवणस्पर्शनाघ्राणादिज्ञानेन्द्रियव्यापारान् गमनादिकर्मेन्द्रियचेष्टाश्च कुर्वन्नपि परमेश्वरेच्छया इन्द्रियाणि विषयेषु वर्तन्त इति मनसाऽवमृशन्, स्वस्य स्वातन्त्र्याभावात् 'नैव किञ्चित् करोमि' इति मन्येत, त्यक्तसङ्कल्पो भवेदित्यर्थः । तथा च तत्त्वविदुच्यते । तथा च प्रस्थानान्तरे 'विष्णुनार्थेष्वीरितानि मन आदीनि सर्वशः । वर्तन्तेऽन्यो न स्वतन्त्र इति जानन् हि तत्त्ववित् ॥ इति ॥ ८,९ ॥

**भावदीपिका (श्री.टि.)**– ॥ **सङ्कल्पत्यागस्येति** ॥ 'नैव किञ्चित्करोमि' इत्यनेन स्वातन्त्र्येण कर्तृत्वाभिमानत्यागरूपसङ्कल्पत्यागस्याभिधानादिति भावः ॥ ८,९ ॥

श्लोकः १०

भावप्रकाशः (कृ.टि.)– ॥ प्रागनुक्तेति ॥ सन्न्यासत्वेन रूपेण प्रागनुक्तस्य कर्तृत्वाभिमानत्यागरूपसङ्कल्पत्यागस्य नैव किञ्चित्करोमीत्यादिनाऽभिधानादित्यर्थः । तेन कामसङ्कल्पवर्जिता इति पूर्वाध्याये कर्माङ्गत्वेन सङ्कल्पत्यागाभिधानेऽपि न दोषः ॥ ८,९ ॥

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥**

## भाष्यम्

**सन्न्यासयोगयुक्त एव च कर्मणा न लिप्यत इत्याह – ब्रह्मणीति ॥ साधननियमस्योपचारत्वनिवृत्त्यर्थं पुनः पुनः फलकथनम् ॥ १० ॥**

भावप्रदीपिका (प.टी.)– उत्तरश्लोकमवतारयति– **संन्यासेति** । 'योगयुक्तः' इत्यनेनैवास्य गतार्थत्वात् किमर्थमयं श्लोकः ? इत्यत आह– **साधनेति** । योगेन विना न मोक्ष इत्युपचारः किं न स्यात् ? 'त्वां विना न मे जीवनम्' इत्यादिवदिति चोद्यमनेन परिहृतमित्यर्थः ॥ १० ॥

भावप्रकाशिका (न.टी.)– कश्चिदेवमाह– 'नित्यनैमित्तिकं कर्म कुर्वन्नन्यत् परित्यजन् मुच्यते संसृतेरतः कामत्याग एव कर्मालेपहेतुः, न सङ्कल्पत्यागादिः' इति । अन्यस्त्वन्यथा 'निष्क्रियेण परमात्मनैकीभावं पश्यत आत्मनः कर्माभावज्ञानात् सर्वकर्मसंन्यासाधिकार एव तस्य न किञ्चित् कर्तव्यम्' इति । तौ निराकर्तुमुत्तरं श्लोकमवतारयति– **संन्यासेति** । संन्यासेन योगेन च युक्तः संन्यासयोगयुक्तः । स एव कर्मणा न लिप्यते । तद्रहितस्तु लिप्यते एव । नित्यनैमित्तिकं कर्म कुर्वन्, तथा निष्क्रियेण परमात्मनैकीभूतस्य मम सर्वकर्मसंन्यास एवाधिकारो न तु कर्मणीति यः कर्मयोगं जहाति, स तु सर्वकर्तुः परमात्मनो निष्क्रियत्वज्ञानदोषात्, स्वस्याल्पकर्तुः तेनाभेदज्ञानदोषात्, स्वविहितकर्मत्यागदोषाच्च नरक एव पततीति चशब्दार्थः ॥

एवमेषः श्लोकत्रयार्थः सङ्ग्रहेणावगन्तव्यः । स्वतन्त्रं हि कर्तृत्वं च तदभावात् भगवदायत्तस्य तदायत्तसर्वचेष्टः नैवाहं किञ्चित् करोमि । भगवत्प्रेरितान्येव मनआदीन्द्रियाण्येवार्थेषु

वर्तन्ते । अतः स एव कर्ता । भगवत्पूजात्मकानि च तानि कर्माणीत्युभयथाऽपि तस्मिन्नेव परे ब्रह्मणि कर्माण्याधाय स्वर्गादिफलस्नेहं त्यक्त्वा, यः करोति स न लिप्यते । अन्यस्तु लिप्यत एवेति । नन्वेवं तर्हि 'विष्णुमित्र त्वदागमनं विनाऽस्मद्यज्ञो न सिद्ध्यति' इतिवत् संन्यास-योगौ विना कर्मालेपाख्यं कैवल्यं न सिद्ध्यतीति यः साधननियमः प्रतीयते, स चौपचारिकः किं न स्यात् ? ततश्च त्वदधीनसर्वकर्मसंन्यास एवाधिकारो न कर्मयोग इत्याशङ्कामात्रं परिहरति– **साधनेति** । फलमेव तात्पर्यलिङ्गम् । किं पुनस्तदभ्यासः ? तस्मान्मुख्य एव साधननियम इति भावः ॥ १० ॥

**प्रमेयदीपिका (ज.टी.)**– ननु 'योगयुक्तः' (७.५) इत्यनेन यत्सन्न्यासयोगयुक्तस्य कर्मालेपलक्षणफलमुक्तं तदेव तस्य मुक्तस्य 'ब्रह्मण्याधाय' इति किमर्थं पुनरुच्यते? इत्यत आह– **सन्न्यासेति** ॥ प्रागुक्तस्यैव नियमोऽत्र क्रियते । सिद्धे सत्यारम्भस्य नियमार्थत्वादिति भावः ॥ योगविवरणं च किञ्चिदधिकमिति चार्थः ॥

ननु 'सन्न्यासस्तु '(५.६) इत्यनेनैव सन्न्यासयोगौ मिलितावेव फलं साधयत इति नियमोऽपि लब्ध एव । तत् किमर्थमिदं सन्न्यासयोगयुक्तस्य 'कुर्वन्नपि न लिप्यते' (५.७), 'लिप्यते न स पापेन ' इति पुनः पुनः फलकथनम्? इत्यत आह– **साधनेति** ॥ **साधन-नियमस्येति** ॥ तदुक्तेरित्यर्थः । सन्न्यासयोगौ मिलितावेव फलसाधनमिति नियमोक्ते-रुपचारत्वमपि सम्भवति । लोकवत् तन्निवृत्त्यर्थमित्यर्थः ॥ १० ॥

**भावबोधः (र.टि.)**– ॥ योगविवरणं च किञ्चिदिति ॥ ब्रह्मण्याधायेत्यनेनेत्यर्थः ॥

**भावदीपः (रा.टि.)**– ॥ तदुक्तेरिति ॥ साधननियमोक्तेरित्यर्थः ॥ १० ॥

**भावरत्नकोशः (सु.टि.)**– ॥ तस्य संन्यासयोगयुक्तस्य । इति किमर्थमिति । इति 'श्लोके लिप्यते न स पापेन इत्यनेन' इति शेषः । **प्रागुक्तस्यैव** 'योगयुक्तो विशुद्धात्मा' इति प्रागुक्तस्यैव संन्यासयोगस्य । 'इन् हन् पूषार्यम्णां शौ' इत्यादौ सिद्धं वैयाकरणन्यायमाह– **सिद्धे सतीति** ॥ **योगविवरणमिति** । 'ब्रह्मण्याधाय कर्माणि' इति कृतकर्मणां 'तत्पूजात्मकानि मम शुभार्थम्' इत्यनुसन्धानेन भगवति समर्पणोक्तेरिति भावः । **मिलितावेवेति** । उभयत्रान्वयव्यतिरेकयोः तत्राभिप्रेतत्वादिति भावः । ननु उपचारो नाम गौणी वृत्तिः । स च शब्दधर्म एव । तत् कथं नियमे

तच्छङ्केत्यत आह– **तदुक्तेरिति** ॥ 'साधननियमोपचारत्वनिवृत्त्यर्थम्' इति भाष्ये 'नियमस्य उपचारत्वनिवृत्त्यर्थम्' इति विग्रह इति मनसि निधायैवमुक्तम् । उपचारत्वं गौणत्वमपि ॥ १० ॥

**गीताक्षरार्थस्तु**– 'योगयुक्तो विशुद्धात्मा' इत्यनेन यत् संन्यासयोगयुक्तस्य कर्मालेपलक्षणं फलमुक्तम्, तदेव 'संन्यासयोगयुक्त एव कर्मणा न लिप्यते' इति साधननियमतात्पर्येण पुनरुच्यते । योगविवरणं च किञ्चिदधिकम् ब्रह्मणीति । 'तत्पूजात्मकानि मत्कृतानि मम शुभार्थम्' इति ब्रह्मणि कर्माणि आधाय तत्र स्वातन्त्र्यमभिसन्धाय सङ्गं फलस्नेहं च त्यक्त्वा यः करोति स पापेन न लिप्यते, पद्मपत्रमम्भसेवेति । ननु 'संन्यासस्तु' इत्यनेनैव संन्यासयोगौ मिलितावेव फलं साधयत इति नियमोऽपि लब्ध एव, तत् किमर्थमिदं संन्यासयोगयुक्तस्य 'कुर्वन्नपि न लिप्यते' 'लिप्यते न स पापेन' इति पुनः पुनः फलकथनमिति चेत्? संन्यासयोगौ मिलितावेव फलसाधनमिति साधननियमोपचारत्वशङ्काव्युदासार्थमिति ब्रूम इत्याकरे स्फुटमिति ॥ १० ॥

**भावदीपिका (श्री.टि.)**– नियमज्ञापकावधारणादेरभावादाह – **सिद्धे सतीति** ॥ **योगविवरणं च किञ्चिदिति** ॥ 'ब्रह्मण्याधाय' इत्यनेनेत्यर्थः । यद्वा **योगविवरणं** योगफलविवरणमित्यर्थः । तथा च 'कुर्वन्नपि न लिप्यते' इत्युक्तमेव योगफलम् 'पद्मपत्रम्' इति दृष्टान्तकथनेन किञ्चिद्विव्रियत इति भावः । वृत्तेः शब्दधर्मत्वादाह– **तदुक्तेरिति** ॥ **लोकवदिति** ॥ यथा लोके 'उभौ मिलितावेव ग्रामं गच्छत' इत्यादिप्रयोगे उपचारोऽपि दृष्टः, किञ्चित्पूर्वापरीभावादनुभवसिद्धत्वादित्यर्थः ॥ १० ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **योगविवरणञ्चेति** ॥ 'ब्रह्मण्याधाय'इत्युक्तेरिति भावः । इति **नियमोऽपीति** ॥ सामान्यनियमोऽपीत्यर्थः । सन्न्यासयोगौ मिलितावेव मोक्षज्ञानाख्यफलं साधयत इति 'सन्न्यासस्तु' इत्यत्रत्यभाष्योक्तविशेषनियमसमुच्चयार्थोऽपिशब्दः । 'सन्न्यासस्तु' इत्यस्य सामान्यवाक्यत्वादिति भावः । तथा च सन्न्यासयोगौ मिलितावेव कर्मालेपं साधयत इति नियमस्यापि सामान्यनियमान्तर्गतत्वेन लाभाद् व्यर्थं पुनर्वचनमिति भावः । उपचारस्य शब्दवृत्तित्वादाह– **तदुक्तेरित्यर्थ इति** ॥ **उपचारत्वमिति** ॥ अर्शआद्यजन्तोपचारशब्दात्त्वप्रत्ययोऽयम् । तेनोपचारत्वमित्यर्थः ॥ १० ॥

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥ ११ ॥**

# भाष्यम्

**एवञ्चाचार इत्याह– कायेनेति ॥ ११ ॥**

भावप्रदीपिका (प.टी.)– इतश्च युक्तावेव योगसंन्यासौ फलदौ, इतरत्यागेनेत्यभिप्रायेण उत्तरश्लोकमवतारयति– **एवं चेति** ॥ ११ ॥

भावप्रकाशिका (न.टी.)– तत्त्वदर्शिनामपि शुकादीनां संन्यासकर्मयोगयोराचरण-दर्शनाच्च नैकतरोऽपि त्याज्य इति भावेनोत्तरं श्लोकमवतारयति– **एवं चेति** । प्रसिद्धं हि तेषामपि स्वाश्रमोचितं मानसवाचकादिकं कर्म पुराणादिषु । 'केवलैः' कर्माहङ्कारादिरहितैः कायादिभिः, 'आत्मशुद्धये' संसारमोक्षायेत्यर्थः ॥ ११ ॥

प्रमेयदीपिका (ज.टी.)– 'कायेन' इत्यनेनापि सन्यासयोगयुक्तस्याऽऽत्मशुद्धिलक्षणः पापालेप उच्यत इत्यत आह – **एवञ्चेति** ॥ उभयसमुच्चयरूप एवेत्यर्थः । अन्यत्र तात्पर्यान्न पुनरुक्तिरिति भावः । आचारकथनमपि नियमसमर्थनार्थमिति ज्ञातव्यम् ॥ ११ ॥

भावदीपः (रा.टि.)– ॥ उभयसमुच्चयरूप इति ॥ सप्तम्यन्तम् ॥ ११ ॥

भावरत्नकोशः (सु.टि.)– चशब्द एवार्थ इति भावेनाह– **उभयसमुच्चयरूप एवेति** ॥ संन्यासयोगरूपोभयसमुच्चयरूप एव आचार इत्यर्थः । उक्तशङ्कां निरसितुं भाष्यभावमाह– **अन्यत्रेति** ॥ **अन्यत्र** आचारसद्भावे । आचारकथनस्य प्रयोजनमाह– **आचारेति** ॥ प्राक् संन्यासयोगमेलननियममात्रमुक्तम् । अत्रेदानीं तत्राचाररूपप्रमाणमुच्यते । तच्चोक्तनियमसमर्थनार्थ-मित्यर्थः ॥ ११ ॥

**गीताक्षरार्थस्तु** 'संन्यासयोगौ मिलितावेव महाफलहेतू' इत्यत्र तदुभयसमुच्चयानुष्ठानरूप एव आचारोऽस्तीत्युच्यते कायेनेति । बुद्ध्या 'द्वादशैवेन्द्रियाण्याहुः मनोबुद्धी तु द्वादशे' इति वचनाद् बुद्धिरूपेन्द्रियेण । 'बुद्ध्यत अनया' इति बुद्धिः वागिति द्वितीयभाष्यरीत्या बुद्धिः वाक् अत्र ग्राह्या । अत एव प्राचीनटीकायां प्रसिद्धं हि तेषामपि स्वाश्रमोचितं मानसवाचिकादिकं कर्मेति वाचकशब्दप्रयोग इत्यपि आहुः । केवलैः कामाहङ्कारादिहीनैः इन्द्रियैः योगिनोऽपि तत्त्वदर्शिनः शुकादयोऽपि सङ्गं फलस्नेहं च त्यक्त्वा आत्मशुद्धये मनसः पापालेपलक्षणफलाय, प्राचीन-

टीकारीत्या जीवस्यान्यथाकारपरित्यागेन स्वरूपाविर्भावरूपमुक्तय इति वा कर्म स्नानसन्ध्यावन्दन-तत्त्वनिश्चयार्थश्रवणकीर्तनादिरूपं कुर्वन्तीति ॥ ११ ॥

भावदीपिका (श्री.टि.)– ननु नात्र पापालेप उच्यते, किन्तु आत्मशुद्धिरेव ? इत्यत आह– **आत्मशुद्धिलक्षण इति** ॥ आत्माशुद्धिरेव हि पापमिति भावः ॥ **उच्यत इति** ॥ तथा च पुनरुक्तिरिति भावः ॥ **उभयसमुच्चयरूप एवेति** ॥ संन्यासयोगयोरुभयोः समुच्चयेनानुष्ठानरूप आचार इत्यर्थः ॥ **अन्यत्रेति** ॥ आचारकथन इत्यर्थः । नन्वाचारकथनमपि किमर्थमित्यत आह– **आचारेति** ॥ **नियमेति** ॥ संन्यासयोगयोरन्वयव्यतिरेकाभ्यां यः साहित्यनियमः 'संन्यासस्तु' इत्यादिश्लोकेनोक्तः तत्समर्थनार्थमित्यर्थः ॥ ११ ॥

भावप्रकाशः (कृ.टि.)– नन्वाचारकथनं व्यर्थमित्यत आह– **आचरकथनमपीति** ॥ प्राङ्नियममात्रमुक्तम् । इदानीं तु तत्राचाररूपं प्रमाणमुच्यतेऽतो न वैय्यर्थ्यमिति भावः । अत एव समर्थनार्थमित्युक्तम् ॥ ११ ॥

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निबद्ध्यते ॥ १२ ॥**

## भाष्यम्

**पुनर्युक्त्यादिनियमनार्थं युक्तायुक्तफलमाह– युक्त इति ॥ युक्तः योगयुक्तः ॥ १२ ॥**

भावप्रदीपिका (प.टी.)– न केवलं संन्यासयोगाभ्यां पुरुपार्थसिद्धेस्तौ कार्यौ । किन्त्वन्यथाऽनर्थाच्चेत्यभिप्रायेणोत्तरश्लोकमवतार्य व्याचष्टे– **पुनरिति** । युक्तिः योगः । आदिपदेन संन्यासः कर्मफलं त्यक्त्वा इत्युक्तः । युक्तायुक्त इति युक्तसंन्यासस्यायुक्तसंन्यासि-फलमित्यर्थः ॥ १२ ॥

भावप्रकाशिका (न.टी.)– इतोऽपि संन्यासयोगाववश्यानुष्ठेयौ नैव त्याज्यौ कथञ्चिदिति भावेनोत्तरश्लोकमवतारयति – **पुनरिति** । **युक्तिः** योगः । आदिशब्देन संन्यासः 'कर्मफलं त्यक्त्वा' इत्युक्तः । तत्सहिता युक्तिः कार्येति तयोर्नियमनम् इत्यर्थः ॥ १२ ॥

श्लोकः १२

**प्रमेयदीपिका** (ज.टी.)– तथाऽपि 'युक्तः' इत्येतत् पुनरुक्तमित्यत आह– **पुनरिति** ॥ **युक्तिः योगः । आदिपदेन सन्न्यासः । युक्तायुक्तः इत्युपलक्षणम् । 'सन्न्यास्यसन्न्यासी' इत्यपि ग्राह्यम् । प्राक् सन्न्यासयोगौ मिलितावेव फलं साधयतः, नान्यतरत्यागेनान्यतर इति नियमज्ञापनार्थं तयोः फलमुक्तम् । इदानीं तु तावेव मोक्षसाधनम्, न तु तदुभयपरित्यागेनान्यदिति नियमज्ञापनाय योगसन्न्यासवतस्तदुभयाभाववतश्च मुक्तिसंसारविस्तारलक्षणं फलमाहेत्यर्थः ।युक्तशब्दस्य सहितायर्थनिवारणाय अर्थमाह– युक्त इति ॥ १२ ॥**

**भावरत्नकोशः** (सु.टि.)– ॥ **पुनरुक्तम्** 'संन्यासस्तु' इत्यनेन । आदिपदेन संन्यासग्रहणानुसारेणाह–**युक्तायुक्तेत्युपलक्षणमिति** । अनेन कथं पुनरुक्तिपरिहारः ? इत्यत आह– **प्रागिति** ॥ 'संन्यासस्तु' इत्यादावित्यर्थः । **तयोः** संन्यासयोगयोः, **फलं** ब्रह्माधिगतिरूपं पापालेपरूपं च । **योगसंन्यासवतः** योगश्च संन्यासश्च तदुभयवतः । 'नैष्ठिकीम्' इति शान्तिशब्दितमुक्तिविशेषणात् 'निबध्यते' इति 'नि'शब्दश्रवणाच्चाह– **मुक्तिसंसारविस्तारलक्षणमिति** । **सहितायर्थेति** । आदिपदेन न्याय्यलभ्यादिग्रहः । तथा च अमरः 'युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् । न्याय्यं च' इति ॥ १२ ॥

**गीताक्षरार्थस्तु** - प्राक् संन्यासयोगौ मिलितावेव फलं साधयतः, नान्यतरपरित्यागेनान्यतर इति नियमज्ञापनार्थं तयोः फलं 'ब्रह्माधिगच्छति' 'कुर्वन्नपि न लिप्यते' इत्यादिनोक्तम् । इदानीं तु 'तावेव मोक्षसाधनम्, न तु तदुभयत्यागेनान्यत्' इति नियमज्ञापनाय योगसंन्यासवतः तदुभयाभाववतश्च मुक्तिसंसारविस्तारलक्षणं फलमुच्यते– **युक्त इति** । कर्मफलं कर्मफलकामनां त्यक्त्वा युक्तः भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपयोगयुक्तः, नैष्ठिकीम् 'निष्ठोत्कर्षे व्यवस्थायां नाशेऽन्ते व्रतयाश्रयोः । स्यान्निर्वहणनिष्पत्त्योः परमायां गतौ तथा' इति कोशवचनात् निष्ठा उत्कर्षः परमा गतिर्वा, तस्यां भवां नैष्ठिकीं शान्तिम्, 'सामर्थ्यबलदुर्गादिदेवतासु च कथ्यते । शक्तिः शान्तिस्तु कल्याणमारामः' इति दर्पणकोशात्, 'शान्तिर्मोक्षोऽथ निर्वाणम्' इत्यभिधानाच्च, कल्याणशब्दितमोक्षम् आप्नोति । अयुक्तः योगहीनस्तु कामकारेण 'कामकारेण चैके' इति सूत्रतत्त्वप्रदीपिकायाम् 'कामितकरणं कामकारः' इति व्याख्यानात्, कामितकरणेन कामप्रेरिततयेति यावत् । फले क्षुद्रफले स्वर्गादौ सक्तो निबध्यत इत्यत्र पूर्वार्धे योगसंन्यासवतो मुक्तिलक्षणफलोक्तिः । उत्तरार्धे तदुभयाभाववतः संसारविस्ताररूपं फलमभिहितमिति तावेव मोक्षसाधनम्, न तु तदुभयत्यागेनान्यदिति ॥ १२ ॥

श्लोकः १३

**भावदीपिका (श्री.टि.)**– नन्वादिपदेन संन्यासस्य गृहीतत्वात् तदनुसारेण 'संन्यासी' 'असंन्यासी' इति च वक्तव्यम् । अतो न्यूनता? इत्यत आह– **युक्तायुक्तेत्युपलक्षणमिति** ॥ गीतायां 'कर्मफलं त्यक्त्वा' इत्यनेन संन्यासिनः, 'कामकारेण फले सक्त' इत्यसंन्यासिनश्चोक्तत्वादित्यवधेयम् । ननु 'योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति' इति फलमप्युक्तमेवेति चेत्, तत्राह– **प्रागिति** ॥ **नान्यतरेति** ॥ तथा चायोगव्यवच्छेदेन नियमः पूर्वं समर्थित इति भावः ॥ **तावेवेत्यादि** ॥ तथा चात्र अन्यत्र योगव्यवच्छेदेन नियमः समर्थ्यत इति भावः ॥ १२ ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **पुनरुक्तमिति** ॥ सन्न्यासस्त्वित्यादिनेति शेषः । कथमनेन पुनरुक्तिनिरास इत्यत आह– **प्रागिति** ॥ सन्न्यासस्त्वित्यादावित्यर्थः । सन्न्यासस्त्वित्यादिवाक्यानां सन्न्यासयोगयोः मध्येऽन्यतरत्यागेनान्यतरस्य फलसाधकत्वव्यवच्छेदे तात्पर्यम् । युक्त इत्यस्य तु तदुभयातिरिक्तसाधनव्यवच्छेदे तात्पर्यमिति न पुनरुक्तिरिति भावः । **सहिताद्यर्थेति** ॥ आदिपदात् न्याय्यसङ्ग्रहः । युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् । न्याय्यं चेत्यमरोक्तेरिति भावः ॥ १२ ॥

**सर्वकर्माणि मनसा सन्न्यस्याऽऽस्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥**

## भाष्यम्

**पुनः सन्न्यासशब्दार्थं स्पष्टयति– सर्वकर्माणीति ॥ मनसा इति विशेषणादभिमानत्यागः ॥ १३ ॥**

भावप्रदीपिका (प.टी.)– ननु 'संन्यास'शब्देन कर्मत्याग एवोच्यते, 'कर्मसंन्यास' इत्यादिप्रयोगादित्येतत् (?) कथं तस्य योगेन सहावस्थानमित्याशङ्कां परिहर्तुमुत्तरश्लोकमवतारयति– **पुनरिति** । 'कर्मसंन्यास' इति प्रयोगेऽपि मनसैव कर्मत्यागाभिप्रायो न सर्वात्मनेत्यर्थः ॥ १३ ॥

भावप्रकाशिका (न.टी.)– ननु 'तयोस्तु कर्मसंन्यासात्' इत्युक्तत्वान्न द्वन्द्वत्याग एव संन्यासः, किन्तु कर्मत्याग एव । कर्मत्यागिनस्तु कथं कर्मयोगादि ? इत्याशङ्कापरिहारत्वेनोत्तरं श्लोकमवतारयति– **पुनरिति** । भवतु नाम कर्मत्याग एव संन्यासः । स च

श्लोकः १३

'मनसा' इति विशेषणादभिमानत्याग एव । अतः सन्न्यासिनः कर्मयोगो न विरुद्ध्यते । देहेन्द्रियैः क्रियमाणेऽपि कर्मणि 'नाहं करोमि' इत्यभिमानत्यागसम्भवादिति भावः ॥ १३ ॥

**प्रमेयदीपिका (ज.टी.)– 'सर्वकर्माणि'** इत्यस्य **'स्वरूपेण कर्मत्यागोऽर्थः'** इति प्रतीतिनिवारणाय प्रतिपाद्यमाह **— पुनरिति** ॥ प्राक् (५.८) कर्तृत्वाभिमानत्याग उक्तः । इदानीं तु कारयितृत्वाभिमानत्यागोऽपीति स्पष्टनम् । 'स्वरूपेण कर्मत्याग उच्यते' इत्येतन्निराचष्टे **— मनसेति** ॥ अन्यथा तद्व्यर्थं स्यादिति भावः ॥ १३ ॥

**भावरत्नकोशः (सु.टि.)–** ॥ **प्रागिति** ॥ 'नैव किञ्चित्करोमि' इत्यत्रेत्यर्थः । न 'कारयन्' इति गीतत्वादाह– **इदानीं कारयितृत्वेति** ॥ **अनेन** पूर्वं 'नैव किञ्चित्करोमि' इति कर्तृत्वाभिमानत्यागेन संन्यासोऽभिहितः । इदानीं तु कारयितृत्वाभिमानत्यागेनापि स एव स्पष्टीक्रियत इति भाष्यार्थ उक्तो भवति । **अन्यथा** स्वरूपेण कर्मत्याग एवोच्यत इति पक्षे । **तद्वैयर्थ्यम्** 'मनसा' इति विशेषणवैयर्थ्यम् । यत्त्वत्र सङ्करभाष्ये 'मनसा विवेकबुद्ध्या कर्मादौ अकर्मत्वदर्शनेन' इति, तत्तु कर्मणां मिथ्यात्वस्य सर्वानुभवविरुद्धत्वाद्युक्तम् । अतो मनसैव कर्मन्यासो नाम तत्र स्वातन्त्र्याभिमानत्याग एव, न तु स्वरूपत्यागोऽत्र व्याख्यातव्य इति भाष्यार्थ इति भावः ॥ १३ ॥

**गीताक्षरार्थस्तु** - प्राक् 'नैव किञ्चित्करोमि' इत्यत्र कर्तृत्वाभिमानत्यागेन संन्यासो विवृतः । इदानीं कारयितृत्वाभिमानत्यागेनापि स एव स्पष्टीक्रियते– **सर्वकर्माणीति** । मनसा सर्वकर्माणि संन्यस्य भगवानेव स्वपूजात्मकानि मम शुभार्थं मम कर्तृत्वशक्तिं दत्त्वा कारयतीत्यनुसन्धाय वशी जितेन्द्रियः । स्वातन्त्र्येण नैव कुर्वन्, न कारयंश्च नवद्वारे– नव द्वाराणि चक्षुर्युग्मम्, श्रोत्रयुगलम्, घ्राणयुगम्, मुखमेकमिति सप्त वै शीर्षण्याः प्राणाः प्रसिद्धाः, अर्वाग्द्वे मूत्रपुरीषविसर्गार्थे द्वारे पायूपस्थशब्दिते इति नवविधद्वारयुक्ते– पुर इव पुरे आत्मस्वामिके देहे सुखं यथा तथा भगवत्प्रेरितानीन्द्रियाणि स्वस्वविषयेषु व्याप्रियन्त इति परिज्ञानात् सुखमनुभवन्नास्ते । तत्कृतलेपहीनो वर्तत इति ॥

**भावदीपिका (श्री.टि.)–** ॥ **प्रागिति** ॥ 'नैव किञ्चित्' इत्यत्रेत्यर्थः ॥ **अन्यथेति** ॥ क्रियमाणे कर्मणि कारयितृत्वाद्यभिमानत्यागम् अनङ्गीकृत्य, स्वरूपेण कर्मत्यागाङ्गीकारे ॥ १३ ॥

श्लोकः १४

भावप्रकाशः (कृ.टि.)– ॥ प्रागिति ॥ नैव किञ्चित्करोमीत्यत्रापीत्यर्थः ॥ कारयितृत्वेति ॥ न कारयन्नित्युक्तेरिति भावः ॥ १३ ॥

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥**

## भाष्यम्

**नच करोति वस्तुत इत्याह– न कर्तृत्वमिति ॥ प्रभुर्हि जीवो जडमपेक्ष्य ॥ १४ ॥**

भावप्रदीपिका (प.टी.)– ननु कर्तृत्वकारयितृत्वयोः प्रत्यक्षसिद्धत्वेन यदि नैव करोमीत्यादि मन्यते तर्ह्यसावात्मनि विप्रलिप्सुरित्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतारयति– **नचेति** ॥ करोति कारयति चेत्यर्थः । ननु जीवस्य कर्तृत्वाद्यभावे न तमुद्दिश्य विधिनिषेधौ स्यातामित्यत आह– **प्रभुरिति** ॥ 'प्रभुविभुशब्दौ विधिनिषेधशास्त्रपरिवृतत्वेन जीवे प्रयुक्तौ' ॥ १४,१५ ॥

भावप्रकाशिका (न.टी.)– ननु यदि वचनदर्शनादिकर्मवत्त्येव नवद्वारे देहे 'नाहं वच्मि, न पश्यामि, न श्रावयामि शिष्यान्' इत्यभिमत्यैवाकुर्वन्न कारयंश्चास्ते । तर्ह्यसौ विप्रलम्भकः किं न स्यात् ? इत्याशङ्कापरिहारत्वेनोत्तरं श्लोकद्वयमवतारयति– **नचेति** ॥। चशब्दान्न कारयति च । तथाहि । कर्माणि न सृजतीति न करोतीत्यर्थः । कर्तृत्वं लोकस्य न सृजतीति न कारयतीत्यर्थः । यत एवं न कर्ता न च कारयिता, अतः कर्मफलसंयोगं न कस्यापि सृजत स्वमन्यं च सुखदुःखाभ्यां न स्वयं संयोजयतीत्यर्थः । तथाऽपि न तस्य कर्मयोगे प्रवृत्त्यभावः शङ्कनीय इत्युच्यते– **स्वभावस्त्विति** ॥ स्वः स्वतन्त्रः परमात्मा । तेनैव सदा स्वयं भवति भावयति चान्यानिति स्वभावः संन्यासी । प्रतिबिम्बसत्ताक्रिययोर्बिम्बाधीनत्वात् । तुशब्दात् सर्वेषां स्वभावत्वेऽप्ययं जानन्नेव प्रवर्तत इति विशेषः ॥

यद्वा स्वतन्त्रं भावयति ध्यायतीति स्वभावः । स्वतन्त्रः परमात्मैव सर्वं करोति, तेनैवाह विहितकृदित्युच्यते तत्प्रसादादिति भावयन्नेव स्वविहितकर्मयोगे प्रवर्तते । एवं ध्यायन् कर्तृत्वेन कारयितृत्वेन वा स्वविहितकर्मयोगे प्रवर्तमानो न कस्यापि पापं पुण्यं वाऽऽदत्ते ।

ननु यद्यात्मनः परः स्वतन्त्रोऽन्यः कर्ताऽस्ति, यत्कर्तृके कर्मणि 'अहं करोमि' इत्यभिमन्यते जीवः, तर्हि कथं तं सर्वे न पश्यन्ति ? इत्यत उच्यते– **अज्ञानेनेति** ॥ इति श्लोकद्वयार्थः । नन्वेवं जीवपरमौ विविच्य, जीवकर्तृत्वस्यैव निषेधे प्रभुशब्दः कथं तत्रेत्यत आह –**प्रभुर्हीति** ॥

एतेन 'विभु'शब्दार्थोऽपि सोऽवगन्तव्यः । जडापेक्षया विशिष्टभवनत्वात् ॥ १४,१५ ॥

प्रमेयदीपिका (ज.टी.)– ननु 'न कर्तृत्वम्' इत्येतत् प्रागुक्तान्न विशिष्यत इत्यत आह – **नचेति** ॥ दर्शनादिकं कुर्वन्नेव 'नैव किञ्चित् करोमीति मन्येत' इत्युक्तम् । तर्हि 'मिथ्याज्ञानी प्रसज्येत' इत्याशङ्कानिरासाय परमेश्वरप्रेरितः कुर्वन् कारयन् अपि वस्तुतः स्वातन्त्र्येण न करोति **न कारयति च** इति अनेन आहेत्यर्थः । अस्य जीवविषयत्वे प्रभुः इत्येतन्न सम्भवति इत्यत आह – **प्रभुर्हीति** ॥

अनेन **'विभुः'** (५.१५) इत्येतदुपपादितप्रायम् ॥ १४,१५ ॥

भावदीपः (रा.टि.)– ॥ **प्रागुक्तादिति** ॥ 'नैव किञ्चित्करोमि' इत्यादिना प्रागुक्तादित्यर्थः ॥ १४ ॥

भावरत्नकोशः (सु.टि.)– ॥ **प्रागुक्तात्** 'नैव कुर्वन्न कारयन्' इति प्रागुक्तात् । 'जीवलोकस्य कर्तृत्वं न सृजति' इत्यनेन कारयितृत्वस्य, 'यः कर्माणि न सृजति' इति कर्तृत्वस्य च निषेधे 'नैव कुर्वन्न कारयन्' इत्युक्तादधिकं नात्रोच्यत इति भावः । मन्येतेत्युक्तम् इत्यनन्तरं 'तथा नैव कुर्वन्न कारयन् इत्यपि' इति संयोज्यम् । टीकायाम् 'इत्यादिशङ्का' इति आदिशब्दप्रयोगात् 'कुर्वन् कारयन्नपि' इत्यनुवादाच्चेति केचित् । 'वस्तुतः' इत्यस्य व्याख्यानम् **स्वातन्त्र्येणेति** । भाष्यगतचशब्दसमुच्चेयमाह– **न कारयति चेतीति** ॥

भाष्ये अपेक्ष्य 'उच्यते' इति शेषः । हिशब्दश्चेतनत्वादियुक्तिसिद्धतां प्रभवस्याहेति व्याख्यानं द्रष्टव्यमिति भावः । **विभुरित्येतदिति** । 'पदं 'न चैवं सुकृतं विभुः' इत्युत्तरश्लोकस्थम्' इति शेषः । प्रभुशब्दस्याहत्यानुपादानात् 'प्रायम्' इत्युक्तम्, समानन्यायत्वादिति भावः ॥ १४ ॥

**गीताक्षरार्थस्तु** - दर्शनादिकं कुर्वन्नेव 'नैव किञ्चित्करोमि' इति मन्येत इत्युक्तम्, 'नैव कुर्वन्

श्लोकः १४

न कारयन्' इति च । तर्हि मिथ्याज्ञानी प्रसज्येत ? 'न कारयन्' इति वदन् मिथ्यावादी ।प्राचीनटीकारीत्या 'विप्रलम्भकश्च स्यात्' इति शङ्कानिरासाय परमेश्वरप्रेरितः कुर्वन् कारयन्नपि स्वातन्त्र्येण न करोति न कारयति चेति प्रतीतिव्यवहारौ युक्ताविति भावेनेदमुच्यते– **न कर्तृत्व-मिति** । जडमपेक्ष्य प्रभुः इत्युच्यमानो जीवो न कर्माणि सृजति स्वातन्त्र्येण न करोति, लोकस्य कर्तृत्वं न सृजति, लोके न किमपि रथप्रासादादिकं स्वातन्त्र्येण कारयति । यत एवं न करोति न कारयति, अतः कर्मफलसंयोगं न कस्यापि सृजति । स्वात्मानं लोकं वा कर्मफलाभ्यां सुखदुःखाभ्यां न संयोजयति ।

एवं कर्तृत्वकर्मफलादेरभावे पुरुषो न कर्मयोगे प्रवर्तेत इति न शङ्कनीयमित्युच्यते– **स्वभाव इति** । स्वः स्वतन्त्रः परमात्मा । तेनैव सदा स्वयं भवति भावयति चान्यानिति स्वभावः संन्यासी । प्रतिबिम्बसत्ताक्रिययोर्बिम्बाधीनत्वात् तुशब्दः । सर्वेषां स्वभावत्वेऽपि अयं स्वभावत्वं जानन्नेव प्रवर्तत इति विशेषार्थः । स्वं स्वतन्त्रं भावयति ध्यायतीति वा स्वभावः । स्वतन्त्रः परमात्मैव मद्गतः सर्वं करोति, नाहं स्वातन्त्र्येण किञ्चित्करोमि । तत्प्रसादायत्तकर्मणैवाहं विहितकृदित्युच्यत इति भावयन्निति यावत् । स एव स्वविहितकर्मयोगे प्रवर्तते ॥

अनेन यदुक्तम् 'जीवस्य कर्तृत्वफलसम्बन्धयोरभावे कर्मयोगे स न प्रवर्तेत' इति तन्निरस्तम् । स्वातन्त्र्याभावविवक्षयैवाकर्तृत्वस्याभ्युपगतत्वेन भगवदधीनतया कर्तृत्वोपपत्त्या फलसम्बन्धस्य सम्भवेन तत्र प्रवृत्तेरनौचित्याभावादिति । तथा चोक्तम्

'स्ववन्दनं यथा पित्रा कारितं शिशुकर्तृकम् ।
एवं पूजा विष्ण्वधीना भवेज्जीवकृतेत्यपि ॥' इति ।

अस्वतन्त्रेऽपि कर्तृशब्दप्रयोगः फलसम्बन्धश्चास्तीति, एवमक्षरयोजना प्राचीनटीकायां कृता ।

गीताविवृतौ तु जीवो लोकस्य कर्तृत्वं लोकेन कर्म न सृजति न कारयति स्वातन्त्र्येणेत्यर्थः । स्वयं च कर्माणि न सृजति न करोति । कर्मणि स्वातन्त्र्यं न चेत्, फले नास्तीति किमु वाच्यम् इत्युच्यते न कर्मेति । 'सृजतीत्यनुषङ्गः' इत्युक्त्वा चतुर्थपाद उक्तार्थ एव व्याख्यात इति ॥ १४ ॥

**भावदीपिका (श्री.टि.)– ॥ न करोतीति** ॥ तथाच न मिथ्याज्ञानित्वमिति भावः ॥ **विभुरितीति** ॥ उत्तरश्लोकगतं विभुपदमपीत्यर्थः ॥ १४-१५ ॥

**भावप्रकाशः (कृ.टि.)– ॥ प्रागुक्तादिति ॥** नैव कुर्वन्न कारयन्निति प्रागुक्तादित्यर्थः । जीवो लोकस्य कर्तृत्वं न सृजतीत्यनेन कारयितृत्वस्य स्वयं च कर्माणि न सृजतीत्यनेन कर्तृत्वस्य च निषेधादिति भावः । **विभुरित्येतदिति** ॥ उत्तरश्लोकस्थमिति शेषः ॥ १४ ॥

**नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनाऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥**

**भावरत्नकोशः (सु.टि.)–** एवं ध्यायन् कर्तृत्वेन कारयितृत्वेन वा स्वविहितकर्मयोगे प्रवर्तमानः मानवः कस्यापि पुण्यं पापं वा नादत्ते । 'ननु यद्यात्मनः परः स्वतन्त्रोऽन्यः कर्ता अस्ति, तत्कर्तृके कर्मणि 'अहं करोमि' इत्यभिमन्यते जीवः, तर्हि कथं तं न पश्यति ? इत्यत उक्तम् अज्ञानेनेति' इति प्राचीनटीकायां 'नादत्ते' इति गीताक्षराणि व्याख्यातानि । जडापेक्षया विभुः समर्थो जीव इति पूर्वभाष्यादेव व्याख्यातप्रायं विभुपदम् । विवृतं च जडापेक्षया विशिष्ट-भवनत्वाद्विभुर्जीव इति । तत्रैव भावप्रदीपिकायां 'प्रभुविभुशब्दौ विधिनिषेधशास्त्रपरिवृतत्वेन जीवे प्रयुक्तौ' इति तत्पदप्रयोजनमुक्तम् ॥ १५ ॥

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥**

## भाष्यम्

**ज्ञानमेव अज्ञाननाशकमित्याह– ज्ञानेनेति ॥ प्रथमज्ञानं परोक्षम् ॥ १६ ॥**

**भावप्रदीपिका (प.टी.)–** नन्वज्ञानेन चेज्ज्ञानमावृतं किं तर्हि तन्निवर्तकम् ? न हि प्रकाशस्य तमसाऽऽवृतत्वे तन्निवर्तकमस्तीत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतारयति– **ज्ञान-मेवेति** । दीपस्तमो निवारयति, प्रकाशयति चार्थम् । तद्वदपरोक्षज्ञानं द्वयं करोतीत्यर्थो न भवतीत्यभिप्रायेणाह– **प्रथमेति** ।

**भावप्रकाशिका (न.टी.)–** ननु ज्ञानस्याज्ञानावृतत्वे किमज्ञाननाशकं स्यात् ? इत्यत आह– **ज्ञानमेवेति** । यथाऽऽदित्यस्तमो निवर्तयन्नेव धरामण्डलं प्रकाशयति, तथा पञ्च-पर्वात्मकमज्ञानं निवर्तयदेवापरोक्षज्ञानं ब्रह्म प्रकाशयतीति न मन्तव्यम् । किन्तु परोक्ष-तत्त्वज्ञाननिवर्तितपञ्चपर्वाज्ञानस्यैवापरोक्षज्ञानमुदेतीति भावेनाह प्रथमेति ॥ १६ ॥

श्लोकः १६

**प्रमेयदीपिका (ज.टी.)– ननु ज्ञानस्याज्ञाननाशकत्वमर्थप्रकाशकत्वं च प्रसिद्धमेव । तत्किमर्थमुच्यते? इत्यत आह– ज्ञानमेवेति ॥ 'अज्ञानेनावृतं ज्ञानम्' (५.१५) इत्युक्तम् । एवं तर्हि तस्याविनाश एव स्यात् । तथा च न कदाचिद् ब्रह्मप्रकाशः । विनाशकान्तराङ्गीकारे च ज्ञानार्थयोः सन्न्यासयोगयोर्वैयर्थ्यमित्याशङ्क्य ज्ञानमेवाज्ञानस्य नाशकम् । अतो नोक्तदोषः । किन्तु स्वरूपज्ञानम् अविद्यया आवृतम् । वृत्तिज्ञानं त्वविद्यां शिथिलयति ब्रह्म प्रकाशयति इत्येतदनेनाहेत्यर्थः ॥**

**अत्र केचित् 'यथैक एवादित्योऽन्धकारं नाशयति भूमण्डलं च प्रकाशयति तथैकमेव ज्ञानमज्ञानं निवर्तयति परं च प्रकाशयति' इति व्याचक्षते । तदसदिति भावेनाऽह– प्रथमेति ॥ तृतीयान्तपदोक्तम् । 'द्वितीयमपरोक्षम्' इति शेषः । अन्यथा द्विर्ज्ञानग्रहणं व्यर्थं स्यादिति भावः ॥ १६ ॥**

**भावरत्नकोशः (सु.टि.)– ॥ तत्किमर्थमुच्यत इति** । मानान्तराप्राप्तबोधार्थत्वाच्छब्दस्येति भावः । **अविनाश एवेति** । प्रकाशस्य तमसाऽऽवृतस्य तन्निवर्तकत्वादृष्टेर्ज्ञानस्याज्ञानावृतत्वे-नाज्ञाननाशकत्वायोगादिति भावः । **विनाशकान्तरेति** । 'तस्याज्ञानस्य' इत्यनुवर्तते । **वैयर्थ्य-मिति** । अङ्गीक्रियमाणाज्ञानविनाशके एव प्रवृत्तिविधानौचित्येन, संन्यासे योगे च प्रवृत्ति-विधानफलमापद्येत इत्यर्थः । **उक्तदोषः** 'अविनाश एव स्यात्' इत्युक्तदोषः । नन्वेवं सति 'ज्ञाने सत्यज्ञाननिवृत्तिः', 'आवरकाज्ञाननिवृत्तौ ज्ञानोदयः' इत्यन्योन्याश्रय इति शङ्कते– **किन्त्विति** ॥ ज्ञानं हि द्विविधम् – स्वरूपम्, मनोवृत्तिरूपं चेति । तत्र स्वरूपज्ञानमीश्वरविषयं नित्यं तदावरकाज्ञाननिवर्तकम् । मनोवृत्तिरूपं ज्ञानं प्रमाणजन्यमिति नोक्तदोषावकाश इत्याह– **स्वरूपेत्यादि ॥**

**तदसदितीति** । 'शृणुयाद्यावदज्ञानं मतिर्यावदयुक्तता । ध्यानं च यावदीक्षा स्यात्' 'श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ॥' इत्यादिप्रमाणेषु अज्ञाननाशस्य श्रवणमननादिजन्यपरोक्षज्ञानकार्यत्वावेदनात् दर्शनशब्दितापरोक्षज्ञानस्य च ब्रह्म-प्रकाशत्वावगमाच्चेति भावः । परामर्शस्थल इवात्र प्रथमत्वादेरसम्मतेराह **तृतीयेति** । 'ज्ञानेन' इति यत्तृतीयान्तं पदं तत्र प्रातिपदिकार्थभूतं ज्ञानमत्र परोक्षरूपं विवक्षितमिति भाष्यार्थ इत्यर्थः । **द्वितीयमिति** । 'तेषाम्' इत्युत्तरार्धे परप्रकाशरूपत्वेनोक्तमपरोक्षज्ञानमित्यर्थः । एवं ज्ञानद्वया-

श्लोकः १६

नङ्गीकारे बाधकमाह– **अन्यथेति** ॥ अनेन 'वृत्तिज्ञानमविद्यां शिथिलयति' इत्यत्र वृत्तिज्ञानमपि द्विविधम्, परोक्षमपरोक्षं चेति । तत्र परोक्षज्ञानम् अविद्यानाशकम् । अपरोक्षं तु परब्रह्म प्रकाशयतीति स्वाशय उद्घाटितो भवति । तथा च प्राचीनटीका 'परोक्षतत्त्वज्ञाननिवर्तित-पञ्चपर्वाज्ञानस्यैवापरोक्षज्ञानमुदेति' इति ॥

**गीताक्षरार्थस्तु** 'अज्ञानेनावृतं ज्ञानम्' इत्युक्तम् । एवं तर्हि तस्याविनाश एव स्यात् । तथाच न कदाचिद् ब्रह्मप्रकाशः । विनाशकान्तराङ्गीकारे च ज्ञानार्थयोः न्यासयोगयोः वैयर्थ्यमित्याशङ्क्य ज्ञानमेवाज्ञानस्य नाशकम् । अतो नोक्तदोषः । किन्तु स्वरूपज्ञानम् अविद्ययाऽऽवृतम् । वृत्तिज्ञानं तु अविद्यां शिथिलयति, ब्रह्म प्रकाशयति चेत्येतदुच्यते– **ज्ञानेन त्विति** । आत्मनो भगवतो ज्ञानेन परोक्षतत्त्वनिश्चयरूपेण तत् 'मुह्यन्ति जन्तवः' इत्युक्तमज्ञानं नाशितम् । किं ज्ञानस्यैवासौ महिमा ? नेत्युच्यते आत्मन इति । भगवत्प्रसादादित्यर्थः । तेषां नाशिताज्ञानानाम् ज्ञानम् आत्मनस्साक्षात्कारः परं तद् ब्रह्म प्रकाशयतीति ॥ १६ ॥

**भावदीपिका (श्री.टि.)**– ॥ **अर्थप्रकाशकत्वं चेति** ॥ अर्थप्रकाशकत्वस्य ज्ञानलक्षण-त्वादिति भावः ॥ **तत्किमर्थमुच्यत इति** ॥ 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायादिति भावः । तस्य आवरकाज्ञानस्य । विनाशकत्वेनाभिमतस्य ज्ञानस्यावृतत्वादिति भावः ॥ **विनाशकान्तरेति** ॥ ज्ञानव्यतिरिक्तेत्यर्थः । **ज्ञानार्थयोः** ज्ञानप्रयोजकयोः । यन्निवर्तकान्तरं तत्साधनस्यैवानुष्ठेयत्वादिति भावः । ज्ञानस्याज्ञाननाशकत्वप्रसिद्धावपि 'सिद्धे सत्यारम्भो नियमार्थ' इत्याशेनाह– **ज्ञानमेवेति** ॥ **नोक्तदोष इति** ॥ 'तस्याविनाश एव स्यात्' इत्यादिनोक्त इत्यर्थः ।

ननु ज्ञानस्यैवाज्ञाननाशकत्वाङ्गीकारे विरोधः स्यात् । 'अज्ञानेनावृतं ज्ञानम्' इति ज्ञानस्याज्ञानेनावृतत्वोक्तेः । 'ज्ञानेन तु' इत्यत्र तु तस्यैव ज्ञानस्य तन्निवर्तकत्वाभिधानादित्याशयेन शङ्कते– **किन्त्विति** ॥ अज्ञानावृतम्, अज्ञाननिवर्तकं च ज्ञानं भिन्नमेव, अतो न विरोध इत्याशयेनोत्तरमाह– **स्वरूपज्ञानमिति** ॥ ईश्वरस्य स्वरूपविषयकं जीवनिष्ठं भगवदपरोक्ष-ज्ञानमित्यर्थः ॥ **अविद्ययाऽऽवृतमिति** ॥ परमाच्छादिकमायया आवृतमित्यर्थः । यथोक्तं श्रुतिगीतिकातात्पर्ये–

> अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विके स्थिते ।
> स्वगुणाच्छादिका त्वेका परमाच्छादिकाऽपरा ॥

श्लोकः १६

इत्याद्युक्त्वा कथं प्रकृतेः परमाच्छादकत्वम् ? तस्य व्याप्तत्वादित्याशङ्क्योक्तम् ।

'न विष्णुं छादयत्येषा तज्ज्ञानं छादयेत्परम् । जीवस्यैव .................. ॥' इत्यादि ॥

**वृत्तिज्ञानं त्विति** ॥ श्रवणादिजन्यं मनोवृत्तिरूपं परोक्षज्ञानम् अविद्यां परमाच्छादिकां मायां शिथिलयति जीवादपसारयतीत्यर्थः । यथोक्तं तत्रैव–

'...............परमाच्छादिकां पुनः । व्याघुट्य मोक्षपदवीं ददाति पुरुषोत्तमः ॥' इति ।

तथा 'प्रकृतिं द्रावय द्रावय ।' इति च । अत एव 'अविद्यां नाशयति' इत्यनुक्त्वा 'शिथिलयति' इत्येवोक्तम् । तथा च तदनन्तरम् ईश्वररूपविषयकमपरोक्षज्ञानं मानसमुत्पद्यते । पश्चात्तदपरोक्षज्ञानं जीवाय परं ब्रह्म प्रकाशयतीति योज्यम् । तथा च 'अत्र स्वरूपज्ञानपदेन जीवस्वरूपज्ञानग्रहणे, अविद्याशब्देन लिङ्गशरीररूपस्वगुणाच्छादकमायाग्रहणे च तृतीयान्तज्ञान-पदोक्तपरोक्षरूपवृत्तिज्ञानस्य तन्नाशकत्वोक्तेरयोगात्, अपरोक्षज्ञानस्यैव तन्नाशकत्वादित्या-द्यनुपपत्तिः' इति कुचोद्यानवकाश इतीमं ग्रन्थं व्याचक्षते । तच्चिन्त्यम् । परमाच्छादकमायाया अपसार्यत्वेन श्रवणजन्यपरोक्षज्ञाननिवर्त्यत्वोक्त्ययोगादिति ।

वस्तुतस्तु श्रवणेनाज्ञाननिवृत्तेः प्रसिद्धत्वात् तदेवाज्ञानम् इहाविद्यापदेनाभिप्रेतम् । तथा चेश्वरस्वरूपज्ञानम् अविद्यया आवृतमस्ति । श्रवणजन्यमनोवृत्तिरूपं ज्ञानं त्वविद्याम् ईश्वरस्वरूपा-परोक्षज्ञानप्रतिबन्धकाज्ञानं नाशयति । एवं श्रवणेनाज्ञाने नष्टे मननेन च संशयविपर्ययनाशानन्तरम्, ध्यानेनेश्वरस्वरूपापरोक्षज्ञानमुत्पद्यते । तच्चापरोक्षज्ञानं सम्यक् परं ब्रह्म प्रकाशयतीत्यर्थः । यथोक्तम् 'तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्' इति,

श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ॥ इति चेति ॥

**अन्यथेति** ॥ प्रथमज्ञानपदस्य परोक्षज्ञानार्थतामनङ्गीकृत्य अपरोक्षज्ञानार्थताऽङ्गीकारे 'येषामज्ञानं ज्ञानेनापरोक्षेण नाशितम्, तेषामादित्यवत् परं ब्रह्म प्रकाशते' इत्येव वक्तव्यत्वेन उत्तरार्धे पुनर्ज्ञानग्रहणं व्यर्थं स्यादिति भावः ॥ १६ ॥

भावप्रकाशः (कृ.टि.)– ॥ **अविनाश एव स्यादिति** ॥ ज्ञानस्याज्ञानावृतत्वेनाज्ञान-नाशकत्वायोगादिति भावः । नन्वेवं सत्यन्योन्याश्रयः, ज्ञाने सत्यज्ञाननिवृत्तिः आवरकाज्ञाननिवृत्तौ च ज्ञानमितीत्याशयेन पृच्छति– **किन्त्विति** ॥ उत्तरमाह– **स्वरूपज्ञानमिति** ॥ ईश्वरविषयं साक्षिज्ञानमित्यर्थः । साक्षिज्ञानस्य नित्यत्वेनेश्वरस्य च सन्निहितत्वेन प्रकाशप्रसक्तौ प्राप्तप्रकाश-प्रतिबन्धरूपावरणस्य स्वरूपज्ञाने सम्भवात् प्रमाणाभावादेव वृत्तिज्ञानाभावात् तत्रोक्तरूपावरणा-योगादिति भावः । **तदसदिति भावेनेति** ॥

'शृणुयाद्यावदज्ञानं मतिर्यावदयुक्तता । ध्यानं च यावदीक्षा स्यात्'

'श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम्'

इत्यादिषु अज्ञाननाशकब्रह्मप्रकाशकयोः पृथक्त्वोक्तेरिति भावः ॥ १६ ॥

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥**

## भाष्यम्

**अपरोक्षज्ञानाव्यवहितसाधनमाह– तद्बुद्धय इति ॥ १७ ॥**

भावप्रदीपिका (प.टी.)– नन्वपरोक्षज्ञानादेव तत्त्वदृष्टेः, अपरोक्षज्ञानस्य च परोक्षज्ञानेन सम्भवात् किमर्थं तद्बुद्धित्वाद्युच्यते ? इत्यत आह– **अपरोक्षेति** ॥ परोक्षज्ञानस्यापरोक्ष-ज्ञानसाधनत्वेऽपि तद्बुद्धित्वादिकमन्तरङ्गसाधनतयोच्यत इत्यर्थः ॥ १७ ॥

भावप्रकाशिका (न.टी.)– ननु परोक्षज्ञानोत्पन्नमपरोक्षज्ञानं सर्वकल्मषापनोदेना-पुनरावर्तिं साधयत्येव । किं तत्र तद्बुद्धित्वादिसाधनान्तरेण ? इत्यत आह– **अपरोक्षेति** ॥ सत्यम्, मुक्तावपरोक्षज्ञानं विना नान्यत् साधनमिति । तदुत्पत्तौ तु ध्यानादिव्यवहितपरोक्षज्ञानं विनाऽन्यदप्यस्त्यव्यवहितं साधनं तद्बुद्धित्वादिकम् । तथा हि- न सकृद्भगवत्परोक्षज्ञानेन चरितार्थाः, किन्तु पुनः तत्र बुद्धिर्येषां ते तद्बुद्धयः । स आत्मा आदानकर्ता स्वामी येषां ते तदात्मानः । न चासौ स्वामीति बुद्धिरपरं गच्छति येषामापद्यपि, अनापदि वा प्रतीकादिषु ते

श्लोकः १७

**तन्निष्ठाः । सममेतावत् देवदेवमनुष्ययोः । अथ देवानामेव । स एव परमयनं येषां ते तत्परायणाः । तच्चक्षुराद्याश्रिता वयमिति ध्यायिन इत्यर्थः । यद्वा, स देवः परो येषां ते तत्पराः, अयनं तेषां गुर्वादित्वेन ते तत्परायणाः । ते चापरोक्षज्ञानेन निर्धूतकल्मषाः निर्धूत-पापाः, अपुनरावृत्तिं गच्छन्तीत्यर्थः ॥ १७ ॥**

**प्रमेयदीपिका (ज.टी.)– तद्बुद्धित्वादिकं यद्यपुनरावृत्तिसाधनत्वेनोच्यते तदाऽपरोक्ष-ज्ञानादेव मोक्ष इति गतः पक्षः । अथ तद्बुद्धयो ज्ञाननिर्धूतकल्मषा इति ज्ञानसाधनत्वेन । तदसत् । ज्ञानेन इति परोक्षज्ञानस्य अपरोक्षज्ञानसाधनत्वेनोक्तत्वादित्यत आह– अपरोक्षेति ॥ सत्यम् । परोक्षज्ञानम् अपरोक्षज्ञानसाधनम् । किन्तु व्यवहितम् । न हि श्रवणमननानन्तरमेवापरोक्षज्ञानमुत्पद्यते । इदं तु अव्यवहितसाधनमाह इत्यर्थः ॥ १७ ॥**

**भावरत्नकोशः (सु.टि.)– ॥ अपरोक्षज्ञानादेव मोक्ष इतीति** । 'तमेवं विद्वानमृत इह भवति' इत्यादिश्रुत्या, 'विद्यैव तु निर्धारणात्' इत्यादि शास्त्रैश्च सिद्धः' इति शेषः । **ज्ञानसाधन-त्वेन** 'तद्बुद्धित्वादिकमुच्यते' इति वर्तते । **परोक्षज्ञानस्येति** । 'ज्ञानेन तु तदज्ञानम्' इत्यत्र 'प्रथमज्ञानं परोक्षम्' इत्यादिभाषणेन तस्यापरोक्षज्ञानसाधनत्वस्योक्तत्वेन तद्विरोधापत्तेरित्यर्थः । इदं तद्बुद्धित्वादिकम् **अव्यवहितसाधनमिति** 'निदिध्यासनरूपम्' इत्युपस्कर्तव्यम् । अत एव 'श्रवणमननानन्तरमेव' इत्युभयोरेवोक्तिः ॥ १७ ॥

**गीताक्षरार्थस्तु** अपरोक्षज्ञानं प्रति परोक्षज्ञानरूपं व्यवहितं साधनमुक्तम् । इदानीं तत्प्रति अव्यवहितसाधनमुच्यते– **तद्बुद्धय इति** । न सकृत् परोक्षज्ञानेन चरितार्थम्, किन्तु तत्र बुद्धिर्येषां ते तद्बुद्धयः । स भगवान् आत्मा स्वामी येषां ते तदात्मानः । तन्निष्ठाः तस्मिन् परमात्मनि निष्ठा मम स्वामीति बुद्धेरनापदि आपद्यप्यचलनं येषां ते तथोक्ताः । सममेतद्देवमनुष्ययोः । अथ देवानामेव विशेष उच्यते तत्परायणा इति । स एव भगवान् परम् अयनं येषां ते तथोक्ताः । 'चक्षुराद्याश्रिता वयम्' इति ध्यायिन इत्यर्थः । यद्वा स एव परो येषां ते तत्पराः । ते अयनं येषां गुर्वादित्वेन ते तत्परायणाः । ते च अपरोक्षज्ञानेन निर्धूतकल्मषाः परिगतपापाः अपुनरावृत्तिं मुक्तिं गच्छन्ति इति प्राचीनटीकातोऽप्यवसेयः ॥ १७ ॥

**भावदीपिका (श्री.टि.)–** 'ज्ञानसाधनत्वेन' इत्यनन्तरम् 'तद्बुद्धित्वादिकं यद्युच्यते' इत्यनुवर्तते । तथा च 'तद्बुद्धयः' इत्युक्तपरोक्षज्ञानवन्तोऽपरोक्षज्ञानवन्तो भूत्वा, तेन निर्धूत-

कल्मषाः सन्तः, अपुनरावृत्तिं गच्छन्तीति योजना द्रष्टव्या ॥ **उक्तत्वादिति** ॥ तथा च पुनरुक्तिरिति भावः । व्यवहितसाधनत्वमुपपादयति – **नहीति** ॥ **श्रवणेति** ॥ गुरूपदेशे-नागमार्थावधारणाख्यपरोक्षज्ञानरूपश्रवणेत्यर्थः । 'किन्तु ध्यानेनैव' इति शेषः ॥ **इदं त्विति** ॥ 'तद्बुद्धयः' इति वाक्यम्, अपरोक्षज्ञानाव्यवहितपूर्वक्षणवृत्तिध्यानरूपं साधनमाहेत्यर्थः ॥ १७ ॥

भावप्रकाशः (कृ.टि.)– ॥ **अव्यवहितसाधनमिति** ॥ ध्यानाख्यमिति शेषः ॥ १७ ॥

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥**

## भाष्यम्

**परमेश्वरस्वरूपाणां सर्वत्र साम्यदर्शनं चापरोक्षज्ञानसाधनमित्याशयवानाह– विद्येति ॥ १८ ॥**

भावप्रदीपिका (प.टी.)– उत्तरश्लोकद्वयं क्रमेणावतारयति– **परमेश्वरेति** ॥ १८ ॥

भावप्रकाशिका (न.टी.)– समदर्शनमप्यपरोक्षज्ञानद्वारेणैवापुनरावृत्तिसाधनम् । न तु साक्षादिति भावेनोत्तरश्लोकमवतारयति– **परमेश्वरेति** । 'ब्राह्मणे गवि' इत्यधिकरणे सप्तमी । समदृष्टिविषयस्तु ततः ब्रह्मैव । 'निर्दोषं हि समं ब्रह्म' इति वक्ष्यति । न च तेषामेव ब्रह्मता । सर्वप्रमाणविरोधादिति भावः ॥ १८ ॥

प्रमेयदीपिका (ज.टी.)– 'विद्याविनय' इत्यादि प्रकृतानुपयुक्तमयुक्तं च कथमुच्यते? इत्यत आह– **परमेश्वरेति** ॥ सर्वत्र ब्राह्मणादिषु स्थितानाम् । सर्वत्र गुणेषु दोषाभावेषु वा । साम्यं तारतम्याभावः । तद्बुद्धित्यादिना सहास्य समुच्चयार्थश्चशब्दः । परमेश्वरविषयता 'निर्दोषं हि' इत्युत्तरवाक्यगम्या । अपरोक्षज्ञानसाधनता च प्रकरणगम्येत्यतः आशयवान् इत्युक्तम् । पण्डितशब्दस्तु परोक्षज्ञानवचनः । 'पाण्डित्यमागमज्ञानम्' इति वचनात् ॥ १८ ॥

भावदीपः (रा.टि.)– ॥ **प्रकृतानुपयुक्तमयुक्तश्चेति** ॥ अपरोक्षज्ञानहेतूक्तेः प्रकृतत्वात् तदुपयोगिसर्वेषु साम्यदर्शनमयुक्तं च । (योगविवरणं च किञ्चिदधिकमिति 'ब्रह्मण्याधाय'

श्लोकः १८

इत्यनेनेत्यर्थः । साम्यदर्शनस्य) तत्तद्योग्यतानुरोधेन दर्शनस्यैव युक्तत्वादिति भावः । भेदव्याप्त-समत्वस्य प्रकृते अभावादाह– **तारतम्याभाव इति** ॥ **परमेश्वरविषयतेति** ॥ 'साम्यदृष्टेः' इति योज्यम् ॥ १८ ॥

**भावरत्नकोशः (सु.टि.)– ॥ प्रकृतानुपयुक्तमिति** । संन्यासयोगज्ञानानाम् अन्यतम-स्यानुक्तेः, अपरोक्षज्ञाना-व्यवहितसाधनानुक्तेर्वेति भावः । **अयुक्तं चेति** । 'ब्राह्मणादयः समाः' इति ज्ञानं हि समदर्शनम् । तदयुक्तमापादयितुम् । तेषां साम्याभावानुभवादिति भावः । 'ब्राह्मणे गवि' इत्याद्यधिकरणसप्तमीति प्राचीनटीकाऽनुरोधेन भाष्यं व्याचक्षाणः शेषमाह– **सर्वत्रेति** ॥ अनध्याहारेण पक्षान्तरमाह– **सर्वत्र गुणेष्विति** ॥ ननु साम्यं नाम सादृश्यम् । तच्च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । न च परमेश्वररूपाणां भेदोऽस्ति । 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति प्रतिषेधात् । न चेश्वरीयगुणानां दोषाभावानां च परस्परसाम्यदर्शनमत्र विवक्षितम् । तेषामपि भेदव्याप्यसाम्यस्य 'आ याहि समसद्गुणैः' इत्यादौ प्रतिक्षेपात् इत्यत आह– **साम्य-मिति** ॥ **अस्य** साम्यदर्शनस्य । परमेश्वररूपाणां साम्यदर्शनम् अपरोक्षज्ञानसाधनमित्युक्तं भाष्ये । न चायमर्थः श्लोकाक्षरात्प्रतीयते इत्यत आह– **परमेश्वरेति** ॥ **अस्य** श्लोकस्य, साम्यदृष्टेर्वेति योज्यम् । **उत्तरवाक्यम्** अव्यवहितोत्तरश्लोकः । तद्बुद्धित्वादेरपरोक्षज्ञानाव्यवहितसाधनतायाः पूर्ववाक्ये प्रकृतत्वादाह– **प्रकरणेति** ॥ ननु 'ये समदर्शिनस्ते पण्डिताः' इति वचनेनैव पाण्डित्य-शब्दितापरोक्षज्ञानाव्यवहितसाधनत्वं साम्यदर्शनस्य तद्बुद्धित्वादेरिवाहत्योच्यत इति कथं तस्य प्रकरणगम्यत्वमित्यत आह– **पण्डितशब्दस्त्विति** ॥ नायं पण्डितशब्दोऽपरोक्षज्ञानिनमाह । प्रमाणेनागमजन्यपरोक्षज्ञान्यर्थत्वेन व्याख्यातत्वादिति भावः ॥ १८ ॥

**गीताश्लोकाक्षरार्थस्तु** परमेश्वररूपाणां सर्वत्र साम्यदर्शनं चापरोक्षज्ञानसाधनम् इत्याशये-नोच्यते– **विद्येति** । पण्डिताः आगमजन्यपरोक्षतत्त्वनिश्चयवन्तः । श्रोत्रियब्राह्मणादिषु स्थितं ब्रह्म समं पश्यन्तीति समदर्शिनः ज्ञाननिर्धूतकल्मषाः गच्छन्त्यपुनरावृत्तिम् इति । 'तस्माद्ब्रह्मणि स्थिताः' इत्युक्तवक्ष्यमाणवचनादुक्तार्थलाभः ॥ १८ ॥

**भावदीपिका (श्री.टि.)– ॥ प्रकृतानुपयुक्तमिति** ॥ प्रकृतापरोक्षज्ञानसाधनत्वाभावादिति भावः ॥ **अयुक्तं चेति** ॥ सर्वत्र ब्राह्मणादिषु साम्यदर्शनस्यायुक्तत्वादिति भावः ॥ **तद्बुद्धि-त्वादिनेति** ॥ अस्य साम्यदर्शनस्य तद्बुद्धित्वादिना पूर्वोक्तेन सह समुच्चयार्थ इत्यर्थः ।

नन्वेतच्छ्लोकोक्तसाम्यदर्शनस्य परमेश्वररूपविषयत्वं कुतो गम्यते ? इत्यतो 'निर्दोषं हि समं ब्रह्म' इत्युत्तरवाक्यबलादित्याह– **परमेश्वरेति** ॥ नन्वेतत् साम्यदर्शनस्यापरोक्षज्ञानसाधनत्वं केन ज्ञातव्यमित्यत उक्तम्– **अपरोक्षेति** ॥ **प्रकरणेति** ॥ अपरोक्षज्ञानसाधनकथनप्रकरण एवोक्तत्वादित्यर्थः ॥ **इत्यत इति** ॥ वाक्यप्रकरणाभ्यामेव ज्ञायमानत्वेन स्पष्टमनुक्तत्वाद् इत्यभिप्रायेणेत्यर्थः । नन्वपरोक्षज्ञानवत एवेदं साम्यदर्शनं कथ्यते, 'पण्डिताः समदर्शिन' इति वचनात्, न त्वपरोक्षज्ञानसाधनत्वेन ? इत्यत आह – **पण्डितशब्दस्त्विति** ॥ **आगमज्ञानम्** आगमजन्यं ज्ञानमित्यर्थः ॥ १८ ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **प्रकृतानुपयुक्तमिति** ॥ सन्न्यासयोगज्ञानानामन्यतमस्यानुक्तेरिति भावः । **अयुक्तं चेति** ॥ ब्राह्मणादीनां साम्याभावादिति भावः । ननु तद्भिन्नत्वे सति तद्गत(भूयो)धर्मवत्वं साम्यम् । तच्च परमेश्वररूपाणां भेदाभावादयुक्तम् । न चेश्वरीयगुणानां तदीयदोषाभावानां च साम्यं विवक्षितम् । तेषामपि भेदाभावात् । साम्यस्य सम्बन्धितया षष्ठ्या न्याय्यत्वेन सप्तम्ययोगाच्चेत्यत आह– **तरतमभाव इति** ॥ ननु पण्डिता भूत्वा समदर्शिन इति योजनायां साम्यदर्शनस्यापरोक्षज्ञानसाध्यत्वप्राप्तेः कथमपरोक्षज्ञानसाधनत्वमुक्तम् । समदर्शिनो भूत्वा पण्डिता इति योजनायां तु कण्ठरवेणैव अपरोक्षज्ञानसाधनत्वप्राप्तेः कथं प्रकरणगम्यत्वमुक्तमित्यत आह– **पण्डितशब्दस्त्विति** ॥ १८ ॥

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।**
**निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः ॥ १९ ॥**

## भाष्यम्

**तदेव स्तौति– इहैवेति ॥ १९ ॥**

**भावप्रकाशिका (न.टी.)**– **ननु कथमपरोक्षज्ञानसाधनमेव साम्यज्ञानम् ? मुक्तिसाधनं किं न स्यात् ? 'तैर्जितः सर्गः' इति पुनःसर्जनाभावोक्तेरित्यत आह– तदेवेति । अपरोक्षज्ञानद्वारा सर्गजयहेतुत्वाविरोधात् । अन्यथा 'दृष्ट्वैव तं मुच्यते' इत्यादिश्रुतिविरोधात् । न च 'पण्डिताः समदर्शिनः' इति दर्शनत्ववचनादिदमेवापरोक्षज्ञानमिति वाच्यम् । तथा सति स्वदेह एव ब्रह्मदर्शिनो मुक्तिः स्यादिति भावः ॥ १९ ॥**

श्लोकः १९

**प्रमेयदीपिका (ज.टी.)– ननूत्तरवाक्ये साम्यदर्शनं मुक्तिसाधनमेवोच्यते । तत् कथमुच्यते अपरोक्षज्ञानसाधनम्? इति । प्राग् ज्ञानिनोऽपि जन्मान्तरसद्भाव उक्तः । तत्कथम् इहैव इति तद्देह एव मुक्तिरुक्ता? इत्यत आह– तदेवेति ॥ स्तुतावधिकोक्तिः सम्भवतीति भावः** ॥ १९ ॥

**भावदीपः (रा.टि.)– ॥ मुक्तिसाधनमेवेति ॥** 'तैर्जितः सर्गो जन्मादिः' इतीत्यनेनेति भावः । कैमुत्येनाप्ययुक्ततामाह – **प्राग्ज्ञानिनोऽपीति ॥** 'एषा ब्राह्मी स्थितिः पार्थ' इति श्लोकव्याख्यानभाष्ये 'ज्ञानिनामपि सति प्रारब्धकर्मणि शरीरान्तरं युक्तम्' इत्यादिनेति भावः ॥ १९ ॥

**भावरत्नकोशः (सु.टि.)– ॥ मुक्तिसाधनमिति ।** 'तैर्जितस्सर्गः' इति सर्गशब्दितजन्माभावप्रतिपादनादिति भावः । 'इति कथमुच्यते' इति सम्बन्धः । **प्राक्** इत्याक्षेपान्तरम् 'किञ्च' इति योज्यम् । 'एषा ब्राह्मी स्थितिः पार्थः' इत्यत्र 'ज्ञानिनामपि सति प्रारब्धकर्मणि शरीरान्तरं युक्तम्' इति द्वितीय इत्यर्थः । 'इहैव' इत्यस्यार्थः– **तद्देह एवेति** । 'न तु जन्मान्तरे' इत्येवकारार्थः । **तदेव** साम्यदर्शनमेव, **आहत्य मुक्तिसाधनमिति** । न तु जन्मान्तरे, किन्तु तस्मिन्नेव जन्मनि मुक्तिमापादयतीति च स्तौतीति भाष्यार्थ इति भावेनोक्तशङ्काद्वयं भाष्यभावोक्त्या परिहरति– **स्तुताविति ॥** साम्यदर्शनम् अपरोक्षज्ञानद्वारैव मुक्तिहेतुः । 'तमेवं विद्वानमृत इह भवति', 'दृष्ट्वैव तं मुच्यते नापरेण' इत्यादिश्रुत्या भगवदपरोक्षज्ञानाद् अन्यस्य साक्षान्मुक्तिसाधनत्वप्रतिषेधात् । एवं स्थितौ साम्यदर्शनस्य मुक्तिसाधनत्ववचनम्, 'इहैव' इति जन्मान्तरानपेक्षत्ववचनं च स्तुतिरूपम् । स्तवनं च तस्यात्यावश्यकतयाऽऽपादनीयत्वावेदनायेति भाष्यभाव इत्यर्थः ॥१९॥

**गीताक्षरार्थस्तु** साम्यदर्शनं सर्वथा सम्पादनीयमिति विभावयितुं स्तूयते– **इहैवेति** । येषाम् अधिकारिणां मनः साम्ये नानास्थानस्थितानां भगवद्रूपाणां तारतम्याभावे स्थितं परिनिष्ठितं तैः इह अस्मिन्नेव देहे सर्गो जन्मादिरूपः संसारो जितः पराजितः विनाशित इति यावत् । स्तुतावधिकोक्तिः सम्भवतीति न क्षुद्रोपद्रवः । 'समदर्शिनः' इति दृश्यत्वेनोक्तं वस्तु कथं समम् ? किञ्च तत् ? इत्यत उक्तम्– **निर्दोषं ब्रह्मेति** ॥ सकलदोषाभाववत्तया सकलगुणवत्तया च समम्, तच्च ब्रह्म । तथा चोक्तम्–

विषमेष्वपि जीवेषु समो विष्णुः सदैव तु ।
यत्तृणादिगतस्यापि गुणाः पूर्णा हरेः सदा ॥ इति ।

ते चैवंविधाः समदर्शिनः । तस्मात् ब्रह्मणः, विष्णुप्रसादाद् एव ब्रह्मणि स्थिताः प्राप्त-ब्रह्मापरोक्षज्ञानाः निर्दुःखानन्दानुभवात्मिकां स्थितिं प्राप्ता इति वेति ॥ १९ ॥

**भावदीपिका (श्री.टि.)–** ॥ **ज्ञानिनोऽपि** अपरोक्षज्ञानिनोऽपि । उक्तः 'ज्ञानिनामपि सति प्रारब्धकर्मणि जन्मान्तरं युक्तम्' इति द्वितीयाध्याय इत्यर्थः ॥ **तद्देह एवेति** ॥ अपरोक्षज्ञान-साधनभूतं साम्यज्ञानं यस्मिन् जन्मन्युत्पन्नं तद्देह एवेत्यर्थः ॥ **अधिकोक्तिरिति** ॥ तथा चार्थवादत्वान्न स्वार्थे तात्पर्यम् । किन्तु साम्यदर्शनस्य प्राशस्त्य एवेति भावः ॥ १९ ॥

**भावप्रकाशः (कृ.टि.)–** ॥ प्रागिति ॥ स्थित्वास्यामन्तकालेपीत्यत्रेत्यर्थः ॥ १९ ॥

**न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसम्मूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥ २० ॥**

## भाष्यम्

**सन्न्यासयोगज्ञानानि मिलित्वा प्रपञ्चयत्यध्यायशेषेण ॥ २० ॥**

भावप्रदीपिका (प.टी.)– अध्यायशेषेण ज्ञानिनः सर्वकर्मप्रहाणमुच्यत इत्यपव्याख्यान-मेवेति ज्ञापयितुमध्यायशेषार्थं दर्शयति– **संन्यासेति** । संन्यासस्यादौ ग्रहणेन 'न प्रहृष्येत्' इति श्लोकसम्बन्धोऽप्युक्तो भवति ॥ २० ॥

भावप्रकाशिका (न.टी.)– अत्र केनचित् 'विद्याविनय' इत्यादिश्लोकयोः स्वोक्त-जातिसङ्करे श्रुतिस्मृतिविरोधमाशङ्क्य तासां कर्मविषयत्वात्, अत्रेतःपरं सर्वकर्मस्मृतिविरोध-संन्यासस्योच्यमानत्वात् न विरोध इत्युक्तम् । तद्वचःशङ्कमानबुद्धीनां श्रीगीतानुयायिनां सुखप्रतिपत्त्यर्थमध्यायशेषमाह– **संन्यासेति** ॥ २० ॥

प्रमेयदीपिका (ज.टी.)– अत्र कश्चित् 'आध्यायपरिसमाप्तेर्ज्ञानिनः कर्माभावः प्रतिपाद्यते' इत्याह । अपरस्तु 'ज्ञानस्वरूपं तत्सहकारिसाधनं च प्रतिपाद्यते' इति ।

श्लोकः २०

तदुभयमसत् । अप्रतीतेरिति भावेनाध्यायशेषप्रतिपाद्यमाह– **सन्न्यासेति** ॥ **मिलित्वा** मेलयित्वा शङ्कानुसारेणैव, नतु प्रकरणभेदेनेत्यर्थः । पुनरुक्तिपरिहारार्थं **प्रपञ्चयति** इत्युक्तम् । सन्न्यासस्यादौ ग्रहणेन न प्रहृष्येत् इति सन्न्यासप्रपञ्चनमिति सूचितम् ॥ २० ॥

**भावबोधः** (र.टि.)– सन्न्याससोगज्ञानानां संवलनलक्षणमेलनस्याप्यसम्भवादाह– शङ्कानुसारेणैवेति ॥

**भावरत्नकोशः** (सु.टि.)– 'इदं तु सर्वकर्मसंन्यासिविषयं प्रस्तुतं 'सर्वकर्माणि मनसा' इत्यारभ्य आ अध्यायपरिसमाप्तेः' इति सङ्करभाषणम् अर्थतोऽनुवदति– **अत्र कश्चिदिति** । इति 'आह' इत्यनुवर्तते । ननु भाष्ये त्त्वाश्रुतिनिर्वाहाय भगवान् मिलित्वा संन्यासयोगज्ञानानि प्रपञ्चयतीति वक्तव्यम् । तत्र केन मिलित्वा संयुज्येत्याकाङ्क्षापूरणाय सन्निहितैः 'संन्यासादिभिः' इति वा, योग्यतया 'पुरुषान्तरेण' इति वा वाच्ये, तेषां प्रपञ्चनं प्रति कर्तृत्वाभावाद् बाधः इत्यत आह– **मिलित्वेति** ॥ संन्यासयोगज्ञानान्येव मेलने प्रपञ्चने च कर्म इति भाष्ये णिजन्त-भावाङ्गीकारान्नोक्तशङ्काऽवकाश इति भावः । संन्यासयोगज्ञानानां संवलनलक्षणमेलनस्याप्यत्रा-दर्शनादाह– **शङ्काऽनुसारेणैवेति** ।

'प्राग् योगाभावे संन्यासवैयर्थ्यमुक्तं तदसत्' इति, 'उत्तरश्लोके संन्यासादित्रितयान्तर्गतं न किञ्चिदुच्यते' इति, 'ननु योगिनो ब्रह्माधिगतिः प्रागुक्ता, तत्किं पुनरुच्यते' इति च करिष्यमाणा या शङ्काः तदनुसारेणैव प्रपञ्चनम् । न पुनः संन्यासप्रपञ्चनमादौ, ततो योगप्रपञ्चनम्, ततो ज्ञानप्रपञ्चनमिति प्रकरणभेदेन विस्तृत्य वर्णनमत्र क्रियत इति 'मेलयित्वा' इत्यस्य तात्पर्यार्थः । 'न प्रहृष्येत्' इति संन्यासप्रपञ्चनं विधाय, 'बाह्यस्पर्शेषु 'इति योगाधिक्यस्पष्टनम्, पुनः संन्यासार्थम् 'ये हि संस्पर्शजाः' इति कामभोगनिन्दनादिना संन्यासनिरूपणम् इत्यादिरूपेण कथनादिति भावः ।

**पुनरुक्तीति** । 'ज्ञेयः' इत्यादिना 'विशुद्धात्मा' इत्यादिना च स्पष्टीकृतत्वात्, 'नैव किञ्चित्करोमि इत्यादिश्लोकद्वयेन संन्यासं स्पष्टयति' इति भाषणेन पुनः स्पष्टीकृतत्वाद् 'युक्तः कर्मफलम्' इत्यादिना योगस्य स्पष्टीकृतत्वात्, 'तेषामादित्यवद् ज्ञानं प्रकाशयति' इति ज्ञानस्याप्युक्तत्वात्, पुनरुक्तिरिति शङ्कापरिहाराय प्रपञ्चयति ततोऽपि विस्तृत्य निरूपयतीत्यर्थ इति भाव इति सूचितमिति ॥ २० ॥

**गीताक्षरार्थस्तु** 'संन्यासः कर्मयोगश्च' इत्यादिना प्रागुक्तः संन्यासः 'नैव किञ्चित्करोमि' इत्यादिना विवृतोऽपि पुनरिह प्रपञ्च्यते– **न प्रहृष्येदिति** । प्रियं प्राप्य न प्रहृष्येत् प्रहर्षं प्राप्नुयात् । अप्रियं प्राप्य नोद्विजेत् उद्वेगरूपमनोदौर्बल्यं न प्राप्नुयाच्च । तत्रोपायोक्तिः स्थिरबुद्धिः स्थिरा निर्विचिकित्सा बुद्धिर्यस्य स इति । बुद्धिस्थैर्यहेतुकथनम् असम्मूढः स्वात्मैव प्रियाप्रियप्राप्तौ स्वतन्त्र इति मिथ्याऽध्यवसायहीन इति । तदपि कुतः ? ब्रह्मवित् ब्रह्मैव प्रियाप्रियप्रापणे स्वतन्त्र इति विद्वान् । नैतावताऽलम्, किन्तु ब्रह्मणि स्थितः एकान्ततो ब्रह्मणि स्थितिमान् इति । पुनःपुनरुक्तार्थप्रपञ्चनम् अनुक्तविशेषणादिसङ्ग्रहाद्यर्थमिति विवृतिकृतः ॥ २० ॥

**भावदीपिका (श्री.टि.)–** ॥ **कश्चित्** सङ्करः । **आ अध्यायपरिसमाप्तेः** अध्याय-परिसमाप्तिपर्यन्तम् । **अपरः** भास्करः । 'स्वयं मिलित्वा' इत्यन्यथाप्रतीतेराह– **मेलयित्वेति** ॥ संन्यासयोगज्ञानानां प्रतिपादकस्य भिन्नभिन्नप्रकरणस्यादर्शनादाह– **शङ्कानुसारेणैवेति** ॥ **आदौ ग्रहणेनेति** ॥ 'अल्पाच्तरन्यायमतिक्रम्य' इति शेषः ॥ **सूचितमिति** ॥ योगज्ञानयोरन्यतरस्यादौ ग्रहणे 'न प्रहृष्येत्' इत्यत्रान्यतरस्याप्यप्रतिपादनादसङ्गतिः स्यादिति भावः ॥ २० ॥

**भावप्रकाशः (कृ.टि.)–** ननु समानकर्तृकतानिर्वाहार्थं भगवान् मिलित्वा सन्न्यासयोग-ज्ञानानि प्रपञ्चयतीति वक्तव्यम् । तत्र केन मिलित्वेत्याकाङ्क्षायां यदि सन्निहितैः सन्न्यासादिभिरिति वा पुरुषान्तरेणेति वोच्यते तदा तेषां प्रपञ्चनकर्तृत्वाभावाद्बाध इत्यत आह– **मेलयित्वेति** ॥ सन्निधानात् सन्न्यासाद्यन्वय इति भावः । सन्न्यासयोगज्ञानानां संवलनलक्षणमेलनस्याप्यभावादाह– **शङ्कानुसारेणैवेति** ॥ तत्र तत्र प्राप्तशङ्कानुसारेणैवेत्यर्थः । **न तु प्रकरणभेदेनेति** ॥ सन्न्यासः,ततो योगः, ततो ज्ञानमिति प्रकरणशुद्ध्या मेलनं तु नेत्यर्थः । सन्न्यासानन्तरं यत्किञ्चिद्योगः, पुनः सन्न्यास इत्यादिरूपेण प्रतिपादनादिति भावः । सन्न्यासप्रपञ्चनावसरेऽपि ज्ञानस्य ज्ञानप्रपञ्च-नावसरेऽपि सन्न्यासस्येत्यादिरूपेण प्रतिपादनादिति भाव इत्यन्ये ॥ २० ॥

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत् सुखम् ।**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २१ ॥**

श्लोकः २१

## भाष्यम्

**पुनर्योगस्याधिक्यं स्पष्टयति– बाह्यस्पर्शेष्विति ॥ कामरहित आत्मनि यत् सुखं विन्दति स एव ब्रह्मयोगयुक्तात्मा चेत् तदेव अक्षयं सुखं विन्दति ॥**

भावप्रदीपिका (प.टी.)– 'संन्यासस्तु महाबाहो' इत्युक्तस्य स्पष्टीकरणपरतयोत्तरश्लोकमवतार्य व्याचष्टे – **पुनरिति** ॥ २१ ॥

भावप्रकाशिका (न.टी.)– न केवलमितः परमपि कर्मयोगमाचष्ट इत्येतावत् । किन्तु तस्याधिक्यं स्पष्टयति । अत इतःपरं सर्वकर्मबहिष्कृतानेवाधिकृत्य तेषां जातिसङ्करज्ञानं श्रेयःसाधनत्वेन उच्यत इति नाशङ्कनीयमिति भावेनाह– **पुनरिति** ॥ श्लोकेऽस्मिन् यत्तच्छब्दान्वयस्य दुर्गमत्वादन्वयमाह– **कामेति** । आत्मनि यत्सुखम् आत्मधर्मत्वेनात्मस्वरूपभूतं सुखं स एव कामरहित एव । **तदेव** स्वरूपसुखमेव ।

प्रमेयदीपिका (ज.टी.)– 'प्रकृतस्य सन्न्यासिन एवाक्षयसुखप्राप्तिरुच्यते' इति परव्याख्यानमसदिति भावेनाऽह– **पुनरिति** ॥ 'सन्न्यासस्तु' इत्यादिना प्रागुक्तत्वात् पुनरिति । **आधिक्यं** सन्न्यासात् । प्राग् (५.६) योगाभावे सन्न्यासस्य वैयर्थ्यमुक्तम् । तदसत् । कामाद्युपद्रवक्षये स्वरूपसुखस्याविर्भावादित्याशङ्कानिराकरणात् स्पष्टनम् । नैतदत्र प्रतीयत इत्यतो व्याचष्टे– **कामेति** ॥

'बाह्यस्पर्शेष्वसक्तात्मा' इत्यस्यार्थः– **कामरहित इति** ॥ आत्मस्वरूपस्यापि सुखस्य न निर्विशेषत्वमिति ज्ञापनाय आत्मनि इत्युक्तम् । स एव कामरहित एव । **तदेव** आत्मसुखमेव ॥

भावबोधः (र.टि.)– ॥ बहूनां पदानामिति ॥ 'बाह्यस्पर्शेष्वसक्तात्मा ह्यक्षयं सुखमश्नुते' इत्येतावतैव पूर्तेरन्येषां पदानां वैय्यर्थ्यमित्यर्थः ।

भावदीपः (रा.टि.)– ॥ **वैय्यर्थ्यमुक्तमिति** ॥ 'सन्न्यासस्तु' इत्यत्र न निर्विषयत्वमिति ॥ एतेन 'आत्मनि' इति विषयसप्तमीत्युक्तं भवति ॥

**भावरत्नकोशः** (सु.टि.)– 'ब्रह्मविद् ब्रह्मणि स्थितः' इति पूर्वश्लोके 'अकर्मकृत् सर्वकर्मसंन्यासी' इति सङ्करेण भाषणादाह– **प्रकृतस्य संन्यासिन इति** । परव्याख्यानस्यासत्त्वे बहूनां

पदानां वैयर्थ्यं हेतुं वक्ष्यति । 'स्पष्टयति' इत्युक्तमुपपादयति– **प्रागिति** । 'संन्यासस्तु महाबाहो' इत्यादावित्यर्थः । **आविर्भावात्** आविर्भावानुभावात् । **एतत्** स्पष्टनम् । **इत्यस्यार्थ इति** । स्पर्शशब्दितशब्दादिविषयेषु मनसः सक्तिर्हि कामः, तद्रहितः कामरहित इत्येकोऽर्थ इत्यर्थः । गीताभाष्ययोः 'आत्मनि' इत्युक्तेः प्रयोजनमाह– **आत्मेति** ॥ **इत्युक्तमिति** । तथा च सुखमात्रस्य विषयसम्बन्धवत्त्वात्, स्वरूपसुखे च विषयाभावात् सुखत्वमेव कथमिति न चोद्यावकाशः । आत्मन एव विषयत्वात् । अत एव 'आत्मनि' इति विषयसप्तमीति भावः । 'न निर्विशेषत्वम्' इति पाठे 'आत्मनि सुखम्' इत्यात्मनो धर्मितया निर्देशेनात्माभिन्नस्यापि सुखस्य भेदप्रतिनिधिविशेषबलेनैव धर्मत्वेनोक्तिर्युक्तेति सूचनादिति भावः । सन्निधानादात्मपरत्वं तच्छब्दस्य न मन्तव्यमित्याह– **स एवेति** ॥ 'यत्'शब्दश्रवणात् 'तत्' इत्यध्याहृतं भाष्य इति भावेन तदर्थमाह– **तदेवेति** ॥

## भाष्यम्

**ब्रह्मविषयो योगो ब्रह्मयोगः । ध्यानादियुक्तस्यैवात्मसुखमक्षयम्, अन्यथा नेत्यर्थः ॥ २१ ॥**

भावप्रकाशिका (न.टी.)– ननु कामरहितोऽप्यहोरात्रादिकर्मयोगं ब्रह्मार्थत्वेन ब्रह्मयोग-मनुतिष्ठन्नपि नाक्षयं सुखमनुभवति । तत्कथं ब्रह्मयोगयुक्तात्माऽक्षयं सुखं विन्दति ? इत्यत आह– **ब्रह्मविषय इति** । तदपि स्पष्टयन् श्लोकतात्पर्यमाह– **ध्यानादिति** । अक्षयात्मस्वरूपं तु सुखमप्यक्षयं तद्ध्यानसमाधिभ्यां भगवदापरोक्ष्याद्व्यज्यमानं तेन लब्धमित्युच्यते, तस्य मुक्तेः सिद्धत्वात् । यद्यपि कामाद्युपद्रवक्षयेऽपीपत् तात्कालिकमात्मसुखं व्यज्यते । तथाऽपि ध्यानादिकं विना संसारानिवृत्तेस्तस्य पुनरावृत्तत्वात् नाक्षयं सुखं तदित्यर्थः ॥ २१ ॥

प्रमेयदीपिका (ज.टी.)– 'ब्रह्मणा योगः' इति प्रतीतिनिरासायाऽह– **ब्रह्मेति** ॥ कथमनेन सन्न्यासाद्योगस्याधिक्यं स्पष्टीकृतम्? इत्यतो ब्रह्मयोगशब्दार्थं विवृण्वन् तात्पर्यमाह– **ध्यानादीति** ॥ 'ज्ञानद्वारा' इति शेषः । **अक्षयं** पुनस्तिरोभावरहितम् । **अन्यथा** सन्न्यासमात्रेण तिरोभावोपेतं तु अल्पत्वादफलमेव' (५.६) इत्युक्तमेव ॥ व्याख्यानान्तरे तु बहूनां पदानां वैयर्थ्यमिति भावः ॥ २१ ॥

श्लोकः २१

**भावदीपः (रा.टि.)**– ॥ अन्यथा इत्यनुवादः, सन्न्यासमात्रेण इति व्याख्या ॥ कामाद्युपद्रवक्षये स्वरूपसुखाविर्भावसत्वात् न इत्युक्तिः कथम्? इत्यत आह–**तिरोभावेति** ॥ **उक्तमेवेति** ॥ सन्न्यासस्तु इत्येतद्व्याख्यावसरे उक्तमित्यर्थः ॥ **व्याख्यानान्तरे त्विति** ॥ सन्न्यासिन एवाक्षयसुखमिति व्याख्याने तु 'बाह्यस्पर्शेष्वसक्तात्मा सुखमक्षयमश्नुते' इत्येतावतैव पूर्तेरन्येषां पदानां वैय्यर्थ्यम् । अस्मन्मते तु 'कामाद्युपद्रव' इत्यादिनोक्तशङ्कानिरासाद्यर्थतया सार्थक्यमिति भावः ॥ २१ ॥

**भावरत्नकोशः (सु.टि.)**– भाष्ये 'ब्रह्मणो योगो ब्रह्मयोगः', षष्ठ्यर्थः सम्बन्धश्च विषयविषयिभावः । 'ब्रह्मणि योगो ब्रह्मयोगः' इत्यङ्गीकारेऽपि, 'घटे ज्ञानम्' इतिवत् तद्विषयत्वमेव लक्ष्यत इति भावेन 'ब्रह्मविषयः' इत्युक्तमिति मनसि निधाय तदवतारयति– **ब्रह्मणेति** ॥ गीतायां मध्यमपदलोपः समासः शाकपार्थिवादिवत् विवक्षित इति भावेन 'ब्रह्मविषयः' इत्युक्तं भाष्य इत्यपि आहुः । 'ध्यानादि' इति भाष्ये आदिशब्देन समाधिर्गृह्यत इति प्राचीनटीकायाम् । 'अन्यथा' इत्यनुवादः 'संन्यासमात्रेण' इति व्याख्या । कामाद्युपद्रवक्षये स्वरूपस्याविर्भावोऽस्तीति शङ्कितम् । तत्रोत्तरमाह– **तिरोभावोपेतं त्विति** ॥ **उक्तमेवेति** । 'संन्यासस्तु महाबाहो' इत्येतद्व्याख्याऽवसरे 'अन्यत् फलं त्वल्पत्वादफलमेव इत्याशय इत्युक्तमेवेत्यर्थः ।

अयं भावः । यद्यपि कामाद्युपद्रवक्षयेऽपीषत् तात्कालिकम् आत्मस्वरूपसुखमाविर्भवति । तथाऽपि संसारे कामादेः पुनरावृत्त्या आविर्भूतस्यापि तेन तिरोभावावश्यम्भावेनाल्पफलत्वमेवेति नाक्षयत्वम् । ध्यानसमाधिलक्षणेन मानसेन कर्मयोगेन तु भगवदपरोक्षज्ञानोदये संसारनिवृत्तौ स्वरूपसुखस्याविर्भूतस्य तिरोधायकाभावाद् अक्षयत्वमिति । तथाविधात्मस्वरूपसुखलाभाय ध्यानादिकर्मयोग आवश्यक इति युक्तं तस्य संन्यासादाधिक्यमिति ।

**व्याख्यानान्तरे** 'प्रकृतस्य संन्यासिन एवाक्षयसुखप्राप्तिरुच्यते' इति परव्याख्याने । 'बाह्यस्पर्शेष्वसक्तात्मा सुखमक्षयमश्नुते' इत्येतावता पूर्तेः, 'विन्दन्त्यात्मनि यत्सुखम् । स ब्रह्मयोगयुक्तात्मा' इति बहूनां पदानां वैयर्थ्यमित्यर्थः । अतः संन्यासात् कर्मयोगस्याधिक्यं स्पष्टयितुमेवायं श्लोक इति भाष्यकारीयं व्याख्यानमेव युक्तमिति ॥ २१ ॥

श्लोकः २१

**गीताक्षरार्थस्तु** 'संन्यासस्तु' इत्यादिना प्रागुक्तमपि संन्यासाद्योगस्याधिक्यमत्र स्पष्टीक्रियते– **बाह्यस्पर्शेष्विति** ॥ स्पृश्यन्त इति स्पर्शाः शब्दादिविषयाः, तेषां बाह्यत्वं च श्रोत्रादीन्द्रिया-विषयत्वापादनेन बहिष्कार्यत्वम् । वक्ष्यति च 'स्पर्शान्' इत्यत्र । असक्तः आत्मा अन्तःकरणं यस्य स तथा, कामरहितः संन्यासीति यावत् । आत्मनि स्वस्वरूपे स्वस्वरूपसविशेषाभिन्नधर्मतया यत्सुखं विन्दति लभते, स कामरहित एव ब्रह्मयोगयुक्तात्मा चेत् ब्रह्मविषयो योगो ध्यान-समाधिलक्षणः तद्युक्तान्तःकरणश्चेदिति ध्यानसमाधिलक्षणमानसकर्मयोगयुक्त इत्युच्यते । अक्षयं पुनस्तिरोभावरहितं सुखमश्नुते प्राप्नोति । भाष्ये 'विन्दति' इति तु 'अश्नुते' इत्यस्यार्थकथनं पुनरावृत्तस्यानुवाद इति ज्ञेयम् । प्राग्योगाभावे संन्यासवैयर्थ्यमुक्तम् । तदसत् । कामाद्युपद्रवक्षये स्वरूपसुखस्याविर्भावादित्याशङ्कानिराकरणात् स्पष्टनमिति ॥ २१ ॥

**भावदीपिका (श्री.टि.)–** 'शङ्कानुसारेणैव' इत्युक्तं दर्शयति– **प्राग्योगाभाव इति** ॥ **स्वरूपसुखेति** ॥ तथा च न विगतप्रयोजनत्वरूपं वैयर्थ्यमिति भावः । एवं च योगेन तदभावात् संन्यासस्यैवाधिक्यमिति द्रष्टव्यम् ॥ **न निर्विशेषत्वमिति** ॥ सुखस्यात्मस्वरूपत्वेऽपि अभेदे भेदकार्यकारिणो विशेषस्याङ्गीकारेण आधाराधेयभावोपपत्तिरित्याशयेन 'आत्मनि सुखम्' इत्युक्त-मिति भावः ॥ **ज्ञानद्वारेति** ॥ अपरोक्षज्ञानद्वारेत्यर्थः ॥ **पुनस्तिरोभावेति** ॥ कामादि-राहित्यरूपसंन्यासेन लभ्यमानस्य सुखस्याक्षयत्वेऽपि पुनस्तिरोभावोऽस्ति । ब्रह्मयोगेन ज्ञानंद्वारा लभ्यमानस्य सुखस्य मौक्तिकत्वेन पुनस्तिरोभावो नास्तीत्याशयः । कथमनेन योगस्य संन्यासा-दाधिक्यमुक्तमिति चेन्न । योगस्य तिरोभावरहितमहाफलसाधनत्वात्, संन्यासस्यातथात्वात् । तथाऽपि कथमाधिक्यमित्यतः पूर्वोक्तन्यायं स्मारयति– **तिरोभावोपेतं त्विति** ॥ **उक्तमेवेति** ॥ 'यत्तु महाफलयोग्यं तस्याल्पं फलमेव न भवति, यथा पद्मरागस्य तण्डुलमुष्टि' इत्युक्तमित्यर्थः ॥ **व्याख्यानान्तरे त्विति** ॥ 'प्रकृतसंन्यासिन एवाक्षयसुखप्राप्तिरुच्यते' इत्यपव्याख्याने 'बाह्य-स्पर्शेष्वसक्तात्मा सुखमक्षयम् अश्नुते' इत्येतावता पूर्णत्वात्, 'विन्दति' 'आत्मनि' इत्यादीनां बहूनां वैयर्थ्यमित्यर्थः ॥ २१ ॥

**भावप्रकाशः (कृ.टि.)–** ॥ **आत्मनीत्युक्तमिति** ॥ आत्मनि सुखमिति सम्बन्धितया निर्देशेन आत्माभिन्नस्यापि सुखस्य भेदप्रतिनिधिविशेषसूचनादिति भावः । **उक्तमेवेति** ॥ सन्न्यासस्त्वित्येतद्व्याख्यावसर इति शेषः । तथैव तत्र विवृतमस्माभिः ॥ **व्याख्यानान्तरे त्विति** ॥

श्लोकः २२
प्रकृतस्य सन्न्यासिन एवाक्षयसुखप्राप्तिरुच्यत इति व्याख्यानान्तरे 'बाह्यस्पर्शेष्वसक्तात्मा सुखमक्षयमश्नुते' इत्येतावतैव पूर्तेर्बहूनां वैय्यर्थ्यमित्यर्थः ॥ २१ ॥

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥**

## भाष्यम्

**सन्न्यासार्थं कामभोगं निन्दयति– ये हीति ॥**

भावप्रदीपिका (प.टी.)– यद्यपि योगधर्मः संन्यासः । तथाऽप्यावश्यक एवेत्यभिप्रायेणोत्तरश्लोकमवतारयति– **संन्यासार्थमिति** ॥ २२ ॥

भावप्रकाशिका (न.टी.)– ध्यानं समाधिश्च मानसं कर्म । अतः कर्मयोग एव वरः संन्यासादित्युक्तं भवति । तथाऽपि महाफलसाधनज्ञानाङ्गत्वेनावश्यकर्तव्यः सन्यास इति भावेन तत्प्रतिकूलं निन्दयतीत्याह– **संन्यासार्थमिति** ॥ २२ ॥

प्रमेयदीपिका (ज.टी.)– ननूत्तरश्लोके सन्न्यासादित्रितयान्तर्गतं न किञ्चिदुच्यत इत्यत आह– **सन्न्यासार्थमिति** ॥ निन्दयति इति स्वार्थे णिच् । सन्न्यासार्थिनेति वा ॥ २२ ॥

वाक्यार्थप्रदीपः (पां.टि.)– ॥ **निन्दयतीति स्वार्थे णिजिति** ॥ बहुलमेतन्निदर्शनमिति वचनादिति शेषः ॥

भावदीपः (रा.टि.)– ॥ त्रितयेति ॥ सन्न्यासयोगब्रह्मध्यानरूपत्रितयान्तर्गतमित्यर्थः । प्रयोजककर्तर्येवायं णिजिति मध्ये कर्त्रन्तरमाह– **सन्न्यासार्थिनेति** ॥ कामादित्यागार्थिना पुरुषेणेत्यर्थः ॥ २२ ॥

भावरत्नकोशः (सु.टि.)– 'संन्यासादि' इत्यत्रादिशब्देन योगज्ञाने ग्राह्ये । 'णिदि कुत्सायाम्' इत्यस्य कर्तरि 'निन्दति' इति रूपम् । तत्कथं निन्दयतीत्युक्तमित्यत आह– **निन्दयतीति** ॥ **स्वार्थ इति** ॥ 'बहुलमेतन्निदर्शनम्' इत्युक्तेरिति भावः । प्रयोजकव्यापारे णिजुत्पाद-

नेऽपि न दोष इति भावेनाह– **संन्यासार्थिनेति वेति** ॥ संन्यासार्थी कामभोगं निन्दति, तं प्रेरयति संन्यासार्थिना क्रियमाणां निन्दां स्वयमनुवदतीत्यर्थ इति भावः ॥ २२ ॥

**गीताश्लोकद्वयाक्षरार्थस्तु** संन्यासार्थं कामभोगो निन्द्यते– **ये हीति** ॥ ये संस्पर्शजाः विषयसम्बन्धसम्भवाः भोगाः सन्ति ते दुःखयोनयः दुःखहेतवः दुःखोदर्का एव । कुतः । हि यतः आद्यन्तवन्त उत्पत्तिविनाशवन्तः बुद्बुदा इव अतिफल्गव इति यावत् । अतो बुधः ज्ञानी तेषु कामभोगेषु न रमते सक्तिं न करोति ॥ २२ ॥

**भावदीपिका (श्री.टि.)– ॥ आहेति ॥** तदुपयोगिकथनेन संन्यासकथनपरत्वमेवेत्याशयेनाहेत्यर्थः ॥ २२ ॥

**भावप्रकाशः (कृ.टि.)– ॥ स्वार्थे णिजिति ॥** बहुलमेतन्निदर्शनमित्युक्तेरिति भावः । प्रयोजकव्यापारे णिच्पक्षेऽपि नानुपपत्तिरिति भावेनाह– **सन्न्यासार्थिनेति वेति** ॥ यथा भागवतादौ सूताद्युक्तं शुकादिरनुवदति तथा सन्न्यासार्थिकृतां निन्दां गीताचार्योऽनुवदति । ततश्च भगवान् सन्न्यासार्थिनां कामभोगं निन्दयतीत्युपपन्नमिति भावः ॥ २२ ॥

**शक्नोतीहैव यः सोढुं प्राक्छरीरविमोक्षणात् ।**
**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥**

## भाष्यम्

**तत्परित्यागं प्रशंसति– शक्नोतीति ॥ कामक्रोधोद्भवं वेगं सोढुं शक्नोति, शरीरविमोक्षणात् प्राक् । यथा मनुष्यशरीरे सोढुं सुशकं तथा नान्यत्रेति भावः । ब्रह्मलोकादिस्तु जितकामानामेव भवति ॥ २३ ॥**

भावप्रदीपिका (प.टी.)– 'प्राक् शरीरविमोक्षणात्' इत्यस्य कृत्यं दर्शयितुं श्लोकान्वयं दर्शयति– **कामेति** ॥ तत्कृत्यमाह– **यथेति** ॥ ब्रह्मादिलोके कामादिक्षयः सुतरां भवति । अतः कथं मानुष्यशरीर एवेत्युच्यते ? इत्यत आह– **ब्रह्मेति** ॥ २३ ॥

भावप्रकाशिका (न.टी.)– तदर्थमेव कामपरित्यागं प्रशंसतीत्याह – **तदिति** ॥ 'प्राक्

श्लोकः २३

शरीरविमोक्षणात्' इत्यस्योपयोगं वक्तुं श्लोकान्वयं तावदाह कामेति । तस्योपयोगमाह– **यथेति** ॥ एतेनैव लोक एतच्छरीरात् विमोक्षणात् प्रागित्युक्तं भवति । नन्वितोऽपि ब्रह्मलोकादिगतदिव्यशरीरे सोढुमतिसुशकत्वात् कथम् 'इहैव' इत्यादिविशेषः ? इत्यत आह– **ब्रह्मेति** ॥ २३ ॥

प्रमेयदीपिका (ज.टी.)– उत्तरश्लोकमप्यन्तर्भावयितुमाह– **तदिति** ॥ 'कामभोग-परित्यागं सन्यासार्थम्' इति वर्तते । इहैव 'शरीरविमोक्षणात् प्राक्' इति प्रशंसायामनुपयुक्त-मिति भावेन तद्विहायान्ययोजयति– **कामेति** ॥ **वेगं** मनसोऽनवस्थानम् । एवं तर्हि इहैव 'शरीरविमोक्षणात् प्राक्' इति किमर्थमुक्तम्? इत्यतस्तदनूद्य तात्पर्यमाह– **शरीरेति** ॥ इहैव इत्यनुवादे ग्राह्यम् । 'अस्मिन्नेव लोके' इति । अत एवोक्तम्– **मनुष्यशरीर इति** ॥ 'अतोऽत्रैव तत्सहनाय प्रयतितव्यम्' इत्यभिप्रायशेषः ॥ ननु ब्रह्मलोकादौ तत्सहनमत्यन्त-सुशकम् । तत्कथमेवमुच्यते? इत्यत आह– **ब्रह्मेति** ॥ तथाचान्योन्याश्रय इति भावः ॥ अन्यत्र इति पश्वादिशरीरं व्युदस्तमिति हृदयम् । एतेनात्र वाक्यभेदः कार्य इति सूचितम् ॥

'शरीरविमोक्षणपर्यन्तं न सकृत्' इति कश्चित् । तदसत् । तथा सति 'आशरीर-विमोक्षणात्' इति स्यात् । इहैव इति च व्यर्थम् ॥ २३ ॥

भावबोधः (र.टि.)– ॥ **अन्योन्याश्रयत्वमिति** ॥ तथा च ब्रह्मलोकादिस्थितानां कामादिसहनं न साधनमित्यर्थः । ननु तर्हि कामादिसहनस्य तत्रापि विद्यमानात्वात् कथं नान्य-त्रेत्युक्तं भाष्य इत्यतस्तदभिप्रायमाह– **अन्यत्रेति** ॥ **वाक्यभेदः कार्य इति** ॥ यः कामक्रोधोद्भवं वेगं सोढुं शक्नोति, स युक्तः स सुखी नरः इत्येकं वाक्यम् । तच्च सहनमिहैव प्राक् शरीरविमोक्षणादित्यपरं वाक्यमिति वाक्यभेदः कार्य इत्यर्थः ।

भावदीपः (रा.टि.)– ॥ **अन्योन्याश्रयत्वमिति** ॥ कामराहित्ये सति श्रुतब्रह्मलोकादि-प्राप्तिः, तत्प्राप्तौ सति तदित्येवमिति भावः ॥ नन्वेवं नान्यत्र सोढुं सुकरम् (सुशकं) इति कथम्? इत्यत आह– **अन्यत्रेतीति** ॥ **एतेनेति**॥ 'कामक्रोध' इति भाष्येण,'इहैव प्राक् तच्छरीर-विमोक्षणात्' इत्येतावद् विना सर्वमेकं वाक्यम् । तच्च 'सहनसामर्थ्यं मानुषशरीरविमोक्षणात् प्राक्'इत्यपरम् इत्येवं वाक्यभेदः सूचित इत्यर्थः । न सकृदिति सोढुं शक्नोति स युक्तः स सुखीत्यर्थमाह कश्चिदित्यर्थः ॥ २३ ॥

श्लोकः २३

**भावरत्नकोशः (सु.टि.)– ॥ अन्तर्भावयितुमिति ।** तथा च तेनापि श्लोकेन संन्यास एव महाफलसाधनज्ञानाङ्गत्वेनावश्यं कर्तव्य इति स्पष्टीकृतो भवतीति विभावितमिति भावः । **वर्तते** 'संन्यासार्थम्' इति पदं पूर्वभाष्यादनुवर्तते । 'प्रशंसयति' इति पाठे 'स्वार्थे णिच्' इत्यादिरूपेण पूर्ववद् व्याख्येयम् । **इति पदजातम् ।** 'कामक्रोधवेगं यः सोढुं शक्नोति स युक्तः स सुखी' इत्यनेनैव कामपरित्यागप्रशंसासम्भवात् अन्यत् पदजातं तत्रानुपयुक्तमित्यर्थः । **तत्** उक्तं पदजातम् । वेगाख्यसंस्कारस्य तान्त्रिकैः कामक्रोधजन्यत्वानङ्गीकारादाह– **वेगमिति ॥** 'वेगः प्रवाहजवयोरपि' इत्यभिधानादत्र वेगशब्देन जवो ग्राह्यः । योग्यतया मनसोऽन्वयः । ताभ्यां हि मनसो जवशब्दितम् अनवस्थानम् उद्भवतीति भावः । 'वेगः उद्वेगः' इत्यभिप्रेत्य तदर्थमाह 'वेगं मनसोऽनवस्थानम्' इति इत्यपि आहुः ॥ **इति** 'अर्थः' इति योज्यम् ।

नन्वनुवादभाष्ये कुतस्तस्य ग्रहणम् ? 'अस्मिन् लोके' इति, 'तदर्थः' इति च कुतो वाच्यमित्यत उपष्टम्भकमाह– **अत एवेति ॥** 'इहैव' इत्यनुवादे ग्राह्यत्वात् तस्य चोक्तार्थत्वादेव भाष्ये 'मनुष्यशरीरे' इति तत्तात्पर्यमुक्तम् । अन्यथा तत् कथमस्य तात्पर्यरूपं स्यात् । 'शरीरविमोक्षणात् प्राक्' इत्येवानुवादे शरीरशब्देन मनुष्यशरीरालाभात् 'इहैव' इत्यनुवादे तस्य 'अस्मिन्नेव लोके' इत्युक्तार्थत्वे च मनुष्यशरीरं लभ्यते । तस्यैतल्लोकमात्रवृत्तित्वात् । पश्चादिशरीरस्यैतल्लोकस्थत्वेऽपि तस्य कामक्रोधसमुद्भववेगसहनायोग्यतयैव निरास इति 'मनुष्यशरीरे' इति तात्पर्यकथनम् उक्तमर्थं ज्ञापयतीति भावः । **अत्रैव** मनुष्यशरीर एव । **तत्सहनाय** कामादिवेगसहनाय । एवशब्दव्यावर्त्यमुक्तं भाष्ये नान्यत्रेति ॥

तत्र शङ्कते– **नन्विति ॥ एवमुच्यते** 'नान्यत्र' इत्येवमुच्यते । अनेन कृतचोद्यस्य किमुत्तरमुक्तं भवति ? इत्यत आह– **तथा चेति ॥** जितकामानामेव ब्रह्मलोकप्राप्तिः, प्राप्तब्रह्मादिलोकानां जितकामत्वम् इत्यन्योन्याश्रयत्वमित्यर्थः । ननु तर्हि कामादिसहनस्य ब्रह्मलोकादावसत्त्वात् कथं 'नान्यत्र' इत्यप्रसक्तप्रतिषेध इत्यत आह– **अन्यत्रेतीति ॥** पश्वादिशरीरस्य कर्मभूमिस्थत्वेन तत्र कामादिसहनप्रसक्तौ तद्व्युदासार्थमेव भाष्ये 'नान्यत्र' इत्युक्तमित्यर्थः ।

केचित्तु यदि साधनरूपं कामादिसहनं न ब्रह्मलोकादौ तर्हि साध्यरूपस्य तस्य ब्रह्मलोकादौ प्रसक्त्यभावात् तद्व्यावृत्त्यर्थं 'नान्यत्र' इति न वक्तव्यमित्यत आह– **अन्यत्रेतीति इत्यवतारयन् ॥**

श्लोकः २३
एतेन 'कामक्रोध' इति, 'शरीरविमोक्षणात्' इति च भाष्येण 'यः कामक्रोधोद्भवं वेगं सोढुं शक्नोति, स युक्तः स सुखी नरः' इत्येकं वाक्यम् । 'तच्च सहनम् इहैव प्राक् शरीरमोक्षणात्' इत्यपरं वाक्यम् इत्येवम् **अत्र** गीतायां **वाक्यभेदः कार्यः** इति सूचितमित्यर्थः ।

'यावन्मरणं तावन्न विस्रम्भणीयम्' इति सङ्केतेण भाषणादाह– **शरीरविमोक्षणपर्यन्तमिति** । ननु 'प्राग्दीव्यतोऽण्' इत्यादाविव आङोऽभावेऽपि तदर्थबोधः किं न स्यात् ? इत्यतो दोषान्तरमाह– **इहैवेतीति** ॥ २३ ॥

**गीताक्षरार्थस्तु**– संन्यासस्यात्यावश्यकत्वावेदनाय कामभोगपरित्यागः प्रशस्यते– **शक्नोतीति** । यः कामक्रोधोद्भवं कामक्रोधौ उद्भवौ उत्पादकौ यस्य मनसोऽनवस्थानलक्षणस्य वेगस्य स तथा तं सोढुं प्रसहितुं शक्नोति स नरः युक्तो योगयुक्तः, स एव च सुखी भवति । तच्च सहनम् इहैव अस्मिन्नेव लोके शरीरविमोक्षणात् प्राक् । यथा मनुष्यशरीर एव सुकरं नान्यत्र पश्वादिशरीरे । अतः अत्रैव तत्सहनाय प्रयतितव्यमित्यभिसन्धिना 'इहैव शरीरविमोक्षणात् प्राक्' इत्युक्तमिति ॥ २३ ॥

**भावदीपिका (श्री.टि.)**– ॥ **अन्तर्भावयितुम्** 'संन्यासादित्रितये' इति शेषः ॥ **संन्यासार्थमिति** ॥ तथा च तदुपयोगिकथनेन संन्यासकथनपरत्वमेवेति भावः । **प्रशंसाया-मनुपयुक्तम्** प्रशंसानुपयोगीत्यर्थः । उत्तरत्र 'नान्यत्र' इति व्यावर्त्यकथनादाह– **इहैवेति** ॥ **अनुवादे** 'शरीरविमोक्षणात् प्राक्' इत्यनुवादपरे भाष्ये । तस्यार्थमाह– **अस्मिन्नेवेति** ॥ भूलोक एवेत्यर्थः ॥ **अत एवेति** ॥ 'इहैव' इत्यस्यैतल्लोकपरत्वादेवेत्यर्थः ॥ **मनुष्यशरीर इति** ॥ तस्यैतल्लोकगतत्वादित्यर्थः ॥ **तत्सहनेति** ॥ कामक्रोधवेगसहनेत्यर्थः ॥ **एवमुच्यत इति** ॥ 'इहैव, नान्यत्र' इति कस्मादुच्यत इत्यर्थः । नन्वनेन को दोष उक्त इत्यत आह– **तथा चेति** ॥ कामादिजयानन्तरं ब्रह्मलोकप्राप्तिः, तत्प्राप्तौ कामादिजय इत्यन्योन्याश्रयः स्यादित्यर्थः । तथा च ब्रह्मलोकस्थितानां कामादिसहनं न साधनरूपमिति भावः । ननु तर्हि कामादिसहनस्य ब्रह्मलोकेऽपि सत्त्वात्, कथं 'नान्यत्र' इत्युक्तं भाष्य इत्यतस्तदभिप्रायमाह– **अन्यत्रेतीति** ॥ **वाक्यभेद इति** ॥ 'यः कामक्रोधोद्भवं वेगं सोढुं शक्नोति स युक्तः, स सुखी नरः' इत्येकं वाक्यम् । 'तच्च सहनमिहैव प्राक् शरीरविमोक्षणात्' इत्यपरं वाक्यमित्यर्थः ॥ २३ ॥

**भावप्रकाशः (कृ.टि.)**– वेगाख्यगुणस्य कामक्रोधजन्यत्वाभावादाह– **मनसोऽनवस्थानमिति** ॥ नन्विहैवेत्येतदनुवादे कुतो ग्राह्यम् । तथात्वेऽपि वाऽस्मिंल्लोक इत्यर्थः कुतो वाच्य इत्यत आह– **अत एवेति** ॥ इहैवेत्यस्यानुवादे ग्राह्यत्वदेवेति तस्योक्तार्थत्वादेवेति चार्थः । यद्यनुवादे इहैवेति न स्यात्, यदि च तस्योक्तार्थो न स्यात्तदा मनुष्यशरीर इति तात्पर्योक्तिः कथं स्यात् । शरीरविमोक्षणात् प्रागित्यनेन शरीर इत्यस्य लाभेऽपि मनुष्यशरीर इत्यस्यालाभात् इहैवेत्युक्त तस्योक्तार्थत्वे च मनुष्यशरीरलाभः । तस्यैतल्लोकमात्रवृत्तित्वादिति भावः । न च पश्वादिदेहस्याप्येतल्लोकस्थत्वात् मनुष्यादिशरीर इति वक्तव्यम् । पश्वादिदेहे सहनाभावेनायोग्यतयैव तन्निरासात् । एवशब्दवैय्यर्थ्यमाशङ्कते– **नन्विति** ॥ **कथमेवमुच्यत इति** ॥ नान्यत्रेति कथमुच्यत इत्यर्थः । ततश्च तदर्थैकवशब्दवैय्यर्थ्यमिति भावः । **अन्योन्याश्रयत्वमिति** ॥ तथाच ब्रह्मलोकादिस्थितानां कामादिसहनं न साधनरूपम् । तदेव चात्र विवक्षितमिति भावः ॥ ननु यदि साधनरूपं कामादिसहनं न ब्रह्मलोकादौ तर्हि साधनरूपस्य ब्रह्मलोकादौ प्रसक्त्यभावात् तद्व्यावृत्त्यर्थं नान्यत्रेति न वक्तव्यमित्यत आह– **अन्यत्रेतीति** ॥ पश्वादिशरीरस्य कर्मभूमिस्थत्वात् तत्र साधनरूपकामादिसहनप्रसक्तौ तद्व्युदासार्थं नान्य इत्युक्तमिति भाव इत्याहुः ।

भावबोधे तु– ननु तर्हि कामादिसहनस्य ब्रह्मलोकादावपि सत्त्वात् कथं नान्यत्रेतीत्युक्तमित्यत आह– **अन्यत्रेतीत्युक्तम्** ॥ **वाक्यभेद इति** ॥ यः कामक्रोधोद्भवं वेगं सोढुं शक्नोति स युक्तः स सुखी नर इत्येकं वाक्यम् । तच्च सहनमिहैव प्राक् शरीरविमोक्षणादित्यपरं वाक्यमिति वाक्यभेद इत्यर्थः । नन्वाङोऽभावेऽपि तदर्थो ज्ञायते 'प्राग्दीव्यत' इत्यादौ । तद्वत् किं न स्यादित्यत आह– इहैवेति चेति ॥ २३ ॥

**योऽन्तस्सुखोऽन्तरारामस्तथाऽन्तर्ज्योतिरेव यः ।**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥**

## भाष्यम्

**ज्ञानिलक्षणं प्रपञ्चयत्युत्तरश्लोकैः । आरामः परदर्शनादिनिमित्तं सुखम् । अत्र तु परमात्मदर्शनादिनिमित्तं तत् । सुखं तूपद्रवक्षये व्यक्तम् । अत्र तु कामादिक्षये व्यक्तमात्मसुखम् । स्वयञ्ज्योतिष्ट्वाद् भगवतः ॥**

श्लोकः २४

भावप्रदीपिका (प.टी.)– ननु यदर्थं संन्यासयोगावावश्यकौ तज्ज्ञानं किंलक्षणमित्याशङ्क्य, उत्तरश्लोकमवतारयति– **ज्ञानीति** । तत्र 'आराम' 'सुख'शब्दौ सामान्यविशेषाभ्यां व्याचष्टे– **आराम इति** । 'अन्तर्ज्योतिः' इत्येतद्व्याचष्टे स्वयंज्योतिष्ट्वादिति ।

भावप्रकाशिका (न.टी.)– यावत्पर्यन्तं मुमुक्षुणाऽवश्यकर्तव्यौ संन्यासयोगौ, अन्यथा न मुक्तिः, यत ऊर्ध्वं सिद्धेऽपि मोक्षे आनन्दवृद्ध्या एव क्रियते, तद्वतः किं लक्षणमित्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे– **ज्ञानीति** । 'आराम'शब्दार्थं साधारणं प्रस्तुतं चाह– **आराम इति** । 'सुख'शब्दार्थमपि तथैवाह– **सुखं त्विति** । अनन्यापेक्षद्युतिस्वरूपत्वात् स्वयंज्योतिर्भगवान् । ततोऽसौ **स्वयमेवान्तर्व्यक्तो** यस्य सोऽन्तर्ज्योतिः । नत्वनन्यापेक्षद्युतिस्वरूपान्तरपदार्थज्ञानमात्रज्ञानीति भावेनान्तर्ज्योतिपदं व्याचष्टे– **स्वयमिति** ॥

प्रमेयदीपिका (ज.टी.)– ननु योगिनो ब्रह्माधिगतिः प्रागुक्ता (२.७०)। तत् किं पुनरुच्यते? इत्यत आह– **ज्ञानीति** ॥ द्वितीये कथितत्वात् (२.७०) प्रपञ्चयति इत्युक्तम् । यथा योगस्याधिक्यकथनं योगनिरूपणमेव, सन्न्यासार्थे निन्दास्तुती च सन्न्यासनिरूपणमेव । तथा ज्ञानिलक्षणकथनं च ज्ञानिनिरूपणमिति ॥ आरामशब्दार्थं तावदाह– **आराम इति** ॥ इदानीमन्तरारामशब्दलब्धमर्थमाह– **अत्र त्विति** ॥ **तत्** सुखम् । एवं तर्हि अन्तस्सुखः इत्यनेनैव गतार्थमेतदित्याशङ्क्य सुखशब्दस्य तावदर्थभेदमाह– **सुखं त्विति** ॥ व्यक्तमात्मसुखमिति सम्बन्धः ॥

तर्हि अन्तस्सुखः इति कथम्? इत्यतस्तल्लब्धार्थमाह– **अत्र त्विति** ॥ अनेनारामसुखशब्दार्थान्तर्गतयोः परोपद्रवक्षययोः 'अन्तः' इत्येतत् सामर्थ्याद्विशेषणमित्युक्तं भवति ॥ ज्योतिःशब्दार्थं तावदाह– **स्वयमिति** ॥ 'ज्योतिष्ट्वम्' इति शेषः ॥

भावबोधः (र.टि.)– ॥ परेत्येतद्दर्शनविषयप्रदर्शनार्थं स्वरूपकथनम् । एतदभिप्रायेणैव टीकायामारामशब्दार्थान्तर्गतत्वं परस्योक्तम् । नतु तच्छब्दार्थान्तर्गतत्वं परस्य । तथात्वे परेत्येतत्स्वरूपकथनमिति प्रागुक्तविरोधात् । 'दर्शनस्पर्शसम्भाषादित्याद्यभिधानविरोधाच्चेति ज्ञातव्यम् ॥

भावदीपः (रा.टि.)– ॥ **प्रागुक्तेति** ॥ 'योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति' (५.६) इत्यत्रोक्तेत्यर्थः ॥ **कथितत्वादिति** ॥ 'प्रजहाति यदा कामान्' (२.५५) इत्यादिनेति योज्यम् ॥

ननु 'सन्न्यासयोगज्ञानानि प्रपञ्चयत्यध्यायशेषेण' इत्युक्तम्। तथाच ज्ञानिलक्षणोक्तिः कथं सङ्गता? इत्यत आह– **यथेति** ॥ 'बाह्यस्पर्शेषु' (५.२१) इत्यनेन योगाधिक्यकथनं 'ये हि संस्पर्शजाः' 'शक्नोतीहैव' (५.२२,२३) इत्यादि श्लोकद्वयेन क्रमात् कामभोगनिन्दातत्त्यागस्तुतीत्यर्थः ॥ 'तत्' इत्यनुवादः, 'सुखम्' इति व्याख्या ॥

**आरामसुखशब्दार्थान्तर्गतयोरिति** ॥ 'परदर्शनादिनिमित्तं सुखमारामः' इति, 'उपद्रवक्षयव्यक्तं तु सुखम्' इति आरामसुखशब्दार्थान्तर्गतयोः पर इति उपद्रव इति विशेषणयोः 'अन्तः' इत्येतद् योग्यतावशाद् विशेषणम्। अन्तःस्थितो यः परः, अन्तःस्थितो यः कामाद्युपद्रव इत्येवमित्यर्थः। अत्र परत्वस्यारामशब्दार्थान्तत्वोक्तिरभ्युपगमवादेन। दर्शनजसुखस्यैव आरामशब्दार्थत्वस्याग्रतनाभिधाने व्यक्तत्वात्। द्वितीये 'यस्त्वात्मरतिरेव' इत्यत्र परेति स्वरूपकथनम् इति भाष्यार्थाक्तोऽश्चेति ज्ञेयम्। इदानीमिति तात्पर्योक्त्यनन्तरं 'सर्वेषाम्' इत्यादिना प्रयोजनमुच्यत इत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)– ॥ प्रागुक्तेति**। 'योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति' इत्यत्रोक्तेत्यर्थः। सामान्यत उक्तस्य विस्तृत्य वर्णनं हि प्रपञ्चनम्। न च ज्ञानिलक्षणमत्राध्याये प्रागुक्तम्। अतः कथं 'प्रपञ्चयति' इत्युक्तमित्यत आह– **द्वितीय इति** ॥ 'प्रजहाति यदा कामान्' इत्यादिना इति शेषः। ननु 'संन्यासयोगज्ञानानि मेलयित्वा प्रपञ्चयति' इत्यध्यायशेषप्रतिपाद्योऽर्थो भाषितः। ज्ञानिलक्षणं च न तृतीयान्तर्गतम् इति तत्कथनं कथं न विप्रतिषिद्धमित्यत आह– **यथेति** ॥ 'बाह्यस्पर्शेषु' इति योगस्याधिक्यकथनम्, 'ये हि संस्पर्शजाः' 'शक्नोतीहैव' इति श्लोकद्वयेन कामभोगनिन्दातत्परित्यागस्तुती च तादर्थ्यात् तत्प्रपञ्चनमेव यथेत्यर्थः। 'अतो नास्य प्रकृतासङ्गतिः शङ्क्येति भावः' इति शेषः। 'परदर्शनादि' इति भाष्ये आदिशब्देन स्पर्शसम्भाषणे ग्राह्ये। **परदर्शनादिनिमित्तं** परदर्शनादिनिमित्तकम्। 'तत्' इत्यनुवादः। 'सुखम्' इति व्याख्या। एवं **तर्हि** आरामशब्देन सुखग्रहणे। **इति सम्बन्ध इति**। तथा च व्यक्तमात्मसुखमेव 'अन्तःसुख' इत्यत्र सुखशब्देन विवक्षितमिति न गतार्थमिति भावः। **इति कथमिति**। आत्मसुखस्यान्तरत्वा-व्यभिचाराद् व्यर्थम् 'अन्तः' इति सुखविशेषणमिति भावः।

**आरामसुखशब्दार्थान्तर्गतयोरिति**। 'परदर्शनादिनिमित्तकं सुखम्' इत्यारामशब्दार्थान्तर्गतस्य परस्य, 'उपद्रवक्षये व्यक्तमात्मसुखं सुखशब्दार्थः' इति सुखशब्दार्थान्तर्गतस्योपद्रव्यस्य च 'अन्तः

यः परः', 'अन्तः यः उपद्रवः' इत्येवम् 'अन्तः' इत्येतद्विशेषणम् । 'नामार्थस्य नामार्थेनैवान्वयः, न तु तदेकदेशेन' इति नियमात् कथमेतदित्यत उक्तम्– **सामर्थ्यात् योग्यतावलाद् इति** ॥ 'चैत्रनप्ता' इत्यादौ चैत्रस्य पुत्रेणान्वयस्य सर्वसम्मततयोक्तनियम एवासिद्ध इति भावः । न च 'रमणं परदर्शनादिनिमित्तं सुखम्' इति तृतीयभाष्यव्याख्याऽवसरटीकायाम् 'पर' इति स्वरूपकथनम्, न शब्दार्थान्तर्भूतम् इत्युक्तम् । अत्र तु 'पर' इत्यारामशब्दार्थान्तर्गतम् इत्युच्यत इति कथं विप्रतिषिद्धमुच्यत इति वाच्यम् । दर्शनजन्यसुखमेवाराम इति आरामशब्दार्थान्तर्गतदर्शनविषयप्रदर्शनपरतया परिचायकरूपत्वाभिधानरूपं स्वरूपकथनं यत् 'पर' इति, तस्य 'अन्तः' इत्येतत् सामर्थ्याद्विशेषणम् इत्यभिप्रायात् । तृतीयटीकायाश्च सुखे 'दर्शनादि' इव 'पर' इत्येतदपि नाऽहत्य प्रविष्टमिति तात्पर्यादिति ।

**भावदीपिका (श्री.टि.)– ॥ कथितत्वादिति ॥** 'प्रजहाति इत्यादिना' इति शेषः । संन्यासादित्रितयकथनान्तर्भावं ज्ञानिलक्षणकथनस्योपपादयितुमाह– **यथेत्यादिना ॥ कथमिति ॥** 'अन्त' इत्येतद्व्यर्थम् । सुखस्यान्तस्थत्वाव्यभिचारादिति भावः ॥ **आरामसुखशब्दार्थान्तर्गतयोरिति ॥ अत्र** भाष्ये दर्शनजन्यसुखमेवारामशब्दार्थः । 'पर' इत्येतद्दर्शनविषयप्रदर्शनार्थं स्वरूपकथनम् । एतदभिप्रायेणैव परस्यारामशब्दार्थान्तर्गतत्वमुक्तं टीकायाम्, न तु तच्छब्दार्थान्तर्गतत्वं परस्य । तथात्वे 'पर इत्येतत् स्वरूपकथनम्' इति प्रागुक्तविरोधापत्तेः, 'दर्शनस्पर्शसम्भाषात्' इत्यभिधानविरोधाच्चेति ज्ञातव्यम् ॥ **अन्तरित्येतदिति ॥** तथा चान्तःस्थितं यत्परं ब्रह्म तद्दर्शनादिनिमित्तं सुखम् आरामः । तथाऽन्तःस्थिता ये कामाद्युपद्रवास्तत्क्षये व्यक्तं यत्सुखं तदेव सुखशब्देनोच्यत इत्यर्थो द्रष्टव्यः । परोपद्रवयोः 'अन्त' इत्येतद् विशेषणमिति कुत इत्यत उक्तम्– **सामर्थ्यादिति ॥** आकाङ्क्षापूर्तिरूपाद् योग्यतारूपाच्च सामर्थ्यादित्यर्थः ।

**भावप्रकाशः (कृ.टि.)– ॥ प्रागुक्तेति ॥** योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छतीत्यत्रोक्तेत्यर्थः । **द्वितीय इति ॥** 'प्रजहाति यदा' इत्यादिनेति शेषः । नन्वेवं सति सन्न्यासयोगज्ञानानि प्रपञ्चयतीति प्रागुक्तविरोध इत्यत आह– **यथेति ॥ अन्तःसुख इति कथमिति ॥** सुखस्यान्तःस्थत्वाव्यभिचाराद् 'अन्त'रिति व्यर्थमित्यर्थः । **आरामसुखशब्दार्थान्तर्गतयोरिति ॥** नच 'पर' इत्यस्यारामशब्दार्थत्वमयुक्तम् । 'पर' इत्येतत्स्वरूपकथनमिति प्रागुक्तविरोधात् । अभिधानविरोधाच्चेति वाच्यम् । आरामशब्दार्थान्तर्गतदर्शनविषयप्रदर्शनार्थं स्वरूपकथनं यत्'पर' इति

तस्य'अन्त'रिति विशेषणमित्यभिप्रायात् । **विशेषणमिति** ॥ अन्तर्यः पर इति आन्तर्योपद्रव इति विशेषणमित्यर्थः । ननु 'नामार्थस्य नामार्थेनैवान्वयो नत्वेकदेशेन' इति नियमात् कथमन्त-रित्यस्यैकदेशान्वय इत्यत उक्तम्– **सामर्थ्यादिति** ॥ योग्यत्वादित्यर्थः । चैत्रस्य नप्तेत्यादौ व्यभिचारादुक्तनियम एवासिद्ध इति भावः । ननु तर्हि शाब्दबोध आर्थिकबोधश्चेति बोधद्वयमापन्न-मित्यत आह– **यद्वेति** ॥

## भाष्यम्

**तद्व्यक्तेः अन्तर्ज्योतिः । सर्वेषामन्तर्ज्योतिष्ट्वेऽपि व्यक्तेर्विशेषः । असम्प्रज्ञातसमाधीनां बाह्यादर्शनात् । दर्शनेऽप्यकिञ्चित्करत्वात् एवशब्दः ॥**

भावप्रदीपिका (प.टी.)– तस्यान्तःस्थितिरिति वक्तव्ये तद्व्यक्तेरित्युक्तं सर्वजीवविशेष-ज्ञानार्थम् । तदेव स्पष्टयति– **सर्वेषामिति** । ननु ज्ञानिनोऽन्यदपि दृश्यते । अतः कथं सोऽन्तर्ज्योतिरेवेत्यवधारणयोग्यः इत्यत आह– **असम्प्रज्ञातेति** ।

भावप्रकाशिका (न.टी.)– तद्व्यक्तेः इत्येतत् स्वयं विवृणोति– **सर्वेषामिति** । ज्योतिःशब्दार्थस्य भगवतः सर्वान्तर्गतत्वेऽपि यस्यासावन्तः (र्गतः) व्यक्तः स एवान्तर्ज्योतिः (अत्र विवक्षितः) इत्यर्थः । ननु मा भूद्भगवतः स्वयंज्योतिष्ट्वेन तज्ज्ञानाय अन्यज्ञानम्, घटज्ञानायेव आलोकज्ञानम् अन्यथाप्यानुपङ्गिकत्वेनान्यस्यापि ज्ञानं स्यादेव । अतः कथम् 'अन्तर्ज्योतिः' इत्यवधारणमित्यत आह– **असम्प्रज्ञातेति** । **अकिञ्चित्करत्वात्** चित्त-विक्षेपाद्यकरत्वादित्यर्थः ।

प्रमेयदीपिका (ज.टी.)– यद्यपि ज्योतिःशब्दः प्रकाशमात्रे प्रवर्तते । तथाऽपि भगवत एव परानपेक्ष्य प्रकाशत्वात्, मुख्ये च सम्प्रत्ययात् स एव ज्योतिरित्यर्थः । इदानीमन्तर्ज्योति-श्शब्दार्थमाह– **तद्व्यक्तेरिति** ॥ तस्य भगवतोऽन्तर्हृदये व्यक्तेरित्यर्थः । नन्वन्तर्ज्योतिर्यस्या-सावन्तर्ज्योतिः । व्यक्तेः इति तु कथं लभ्यते ? इत्यत आह– **सर्वेषामिति** ॥ शब्दतः प्राप्तमन्तर्ज्योतिष्ट्वं सर्वसाधारणम् । अत्र तु ज्ञानिनो विशेषणत्वेनोच्यते । तत्सामर्थ्यादिदं लब्धमिति भावः ॥ यद्वा तद्व्यक्तेः इत्यध्याहारेण तात्पर्यमुक्तम् । अध्याहारस्येदानीं प्रयोजन-मुच्यते । नन्वेवशब्दो यदि धर्मान्तरनिवृत्त्यर्थस्तदा 'अन्तःसुख' इत्यादि व्याहतम् । अथ

श्लोकः २४

**वस्त्वन्तरदर्शननिवृत्त्यर्थः तदाऽसम्भवित्वमित्यत आह— असम्प्रज्ञातेति ॥ वाह्यं भगवतोऽन्यत् । दर्शनेऽपि 'अन्यदा' इति शेषः । अकिञ्चित्करात् विक्षेपकरणाभावादित्यर्थः । एवशब्दः 'सम्भवदर्थः' इति शेषः । एतेन 'लक्ष्यमेवेदं कथं लक्षणत्वेनोच्यते' इति परिहृतम् । व्यवच्छेदप्रधानत्वात् । एवशब्दस्य सामर्थ्याज्ज्योतिषा सम्बन्ध इति ॥**

**भावबोधः (र.टि.)– ॥ व्यवच्छेदप्रधानत्वादिति ॥** यद्यप्यन्तर्ज्योतिष्ट्वमेव लक्ष्यतावच्छेदकभूतज्ञानित्वम् । तथाऽपि इतरदर्शनव्यवच्छेदकावधारणघटितमेवान्तर्ज्योतिष्ट्वं लक्षणमिति न तयोरैक्यमिति भावः । यद्यपि याथार्थ्यमेव मानत्वमित्यादिवत्तयोरैक्येऽपि न दोषः । व्यवहारस्य साध्यत्वोपपत्तेः । तथापि गीतागत 'अवधारण' तद्व्याख्यानरूप 'असम्प्रज्ञात' इत्यादिभाष्यानुरोधादेवमुक्तम् । अन्यथा तद्वैय्यर्थ्यं स्यादिति भावः । **एवशब्दस्य सामर्थ्यादिति ॥** अन्तस्सुखत्वादिधर्मान्तरस्योक्तत्वेन धर्मान्तरव्यवच्छेदकत्वायोगेन सामर्थ्याद् अन्तर्ज्योतिरेव यस्येति ज्योतिषा सम्बन्ध इत्यर्थः । अनेन भगवज्ज्ञानिनः भगवन्मात्रज्ञानित्वं लक्षणमुक्तमिति हृदयम् ।

**भावदीपः (रा.टि.)–** एवशब्द इति भाष्यपदमनूद्याकाङ्क्षितं पूरयति– **एवशब्दः सम्भवदर्थ इति शेष इति॥** युक्तार्थक इत्यर्थः । **एतेनेति ॥** एवकारार्थकथनेनेत्यर्थः । वक्ष्यति 'ज्ञानिस्वरूपमेव इदमन्तर्ज्योतिः' इत्येतदित्यर्थः । व्यवच्छेदप्रामाण्यं व्यनक्ति – **एवशब्दस्येति ॥** 'अन्तर्ज्योतिरेव यस्य न तदन्यदर्शनं स ज्ञानी' इत्युक्त्या भगवदन्यादर्शनवत्वम्, अन्यदर्शनेऽप्यविक्षेपवत्त्वं लक्षणं लभ्यत इति भावः ॥

**भावरत्नकोशः (सु.टि.)–** 'अन्तर्ज्योतिः' इति समासार्थस्य वक्ष्यमाणत्वात् 'तावत्' इत्युक्तम् । नात्र ज्योतिःशब्दार्थो भाषितः ? इत्यतः शेषमाह– **ज्योतिष्ट्वमितीति ॥** भाष्ये स्वयंशब्दस्य प्रयोजनं वक्तुं शङ्कते– **यद्यपि इति । प्रकाशमात्र इति ।** अत एव 'ज्योतिः भद्योतदृष्टिषु' इत्यमरव्याख्याने हरिदीक्षितः । द्योतः प्रकाशः । तथाच जयः 'ज्योतिः प्रकाशे धारायां वेदाङ्गान्तरनेत्रयोः' इतीति । 'स्वयंज्योतिष्ट्वात्' इत्यस्यार्थोक्तिः– **परानपेक्षप्रकाशत्वादिति ॥** तथाऽपि तस्य ग्रहणं कुत इत्यत उक्तम्– **मुख्ये चेति ॥** 'मुख्यामुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति न्यायात्, सापेक्षनिरपेक्षयोर्निरपेक्षस्यैव मुख्यत्वात्, स एव ग्राह्य इत्यर्थः । 'व्यक्तः इति तु कथम्' इति कृतचोद्यं भाष्यभावोक्त्या परिहरति– **शब्दत इति ॥ सर्वसाधारणमिति ।**

प्राणभृन्मात्रेऽपि भगवतोऽन्तःस्थितेरिति भावः । अत्र तु 'ज्ञानिनः' इति वदन् योगिपदं ज्ञानितात्पर्यकमित्यभिप्रैति ॥

नन्वेवं तर्हि 'अन्तर्ज्योतिः' इत्यत्र शाब्दबोध एकः । अर्थबोधोऽपर इति बोधद्वयम् इत्यापन्नमित्यतः पक्षान्तरमाह– **यद्वेति** ॥ **अध्याहारेणेति** । तथाच शब्देन एक एव बोधः, न बोधद्वयमिति भावः । **तात्पर्यमुक्तम्** अन्तर्ज्योतिश्शब्दस्य । **इदानीम्** तात्पर्योक्त्यनन्तरम् । **उच्यते** 'सर्वेषाम्' इति भाष्येण । प्राचीनटीकायां तु 'तद्व्यक्तेरिति स्वपदं वर्णयति– **सर्वेषामिति** ॥ ज्योतिश्शब्दार्थस्य भगवतः सर्वान्तर्गतत्वेऽपि, यस्यासावन्तर्व्यक्तः स एवान्तर्ज्योतिरत्र विवक्षित इत्यर्थः' इत्युक्तम् ।

ननु 'अन्तर्ज्योतिरेव' इत्यत्रैवशब्दः समासान्वित उत तदवयवान्वयीति विकल्प्य, आद्ये पर्यवसितार्थमुक्त्वा दोषमाह– **नन्वेवशब्द इति** ॥ द्वितीयेऽप्यभिप्रेतार्थं वदन् तत्र दोषमाह– **अथेति** ॥ **असम्भवित्वमिति** । बाह्यघटादिप्रकाशस्यापि सत्त्वादिति भावः । 'बाह्यदर्शनात्' इति भाष्ये बाह्यप्रातिपदिकार्थमाह– **बाह्यमिति** ॥ 'दर्शनेऽपि' इति भाष्यपदमनूद्य तत्र शेषमाह – **दर्शनेऽपीति** ॥ **अन्यदा** असम्प्रज्ञातसमाधिकालाद् अन्यकाले । 'सर्वैकान्यकियत्तदः काले दा' इति दाप्रत्ययस्मरणात् । **विक्षेपकरणाभावादिति** । कामिन्यासक्तचित्तस्य यथा आलेख्यदर्शनं न मनसो व्यासङ्गमापादयति, तथा भगवच्चित्तस्य बाह्यदर्शनमपि न मनसो विक्षेपं करोतीति, तद्वतो-रित्यर्थः । 'एवशब्दः' इति भाष्यमनूद्य तत्रोक्तदोषापनुत्तये शेषमाह– **एवशब्दः सम्भवदर्थक इति** ॥

ज्ञानिलक्षणं ह्यत्र निरूप्यते । स च ज्ञानी असम्प्रज्ञातसमाधिस्थः सम्प्रज्ञातसमाधिस्थश्चेति द्विरूपः । तत्रासम्प्रज्ञातसमाधिस्थविवक्षायाम् 'अन्तर्जोतिरेव' इत्येवशब्दस्तत्र सम्भवदर्थक एव, तस्य बाह्यदर्शनशून्यत्वात् । सम्प्रज्ञातसमाधिस्थग्रहणेऽपि तस्य विक्षेपहेतुबाह्यार्थदर्शनाभावेन सोऽप्यन्तर्ज्योतिःपुरुषकल्प एवेति तत्र एवशब्दस्य यः सम्भवन्नर्थः तत्तात्पर्यक एव, इत्येवं सम्भवदर्थको व्याख्यातव्य इति नोक्तासम्भवित्वदोष इति भावः ।

॥ **एतेन** एवम् 'एव'शब्दव्याख्यानेन । **लक्ष्यमेवेति** । लक्षणं ह्यत्रोच्यते । तच्चासाधारणो धर्मः । 'अन्तर्ज्योतिः' इत्येतच्च लक्ष्यस्य ज्ञानिनः स्वरूपसमर्पकमेव । न हि गोः स्वरूपमेव गोर्लक्षणं भवतीति भावः । 'लक्ष्यमेव' इत्यस्य लक्ष्यतावच्छेदकमेवेत्यर्थ इत्यपि आहुः । 'एतेन'

श्लोकः २४

इत्युक्तहेतुमेवाह– **व्यवच्छेदेति** । 'अन्तर्ज्योतिरेव' इत्यवधारणस्य विक्षेपहेतुभगवदन्यदर्शन-व्यवच्छेदतात्पर्यकत्वादित्यर्थः । तथा च विक्षेपहेतुभगवदन्यदर्शनशून्यत्वम् 'अन्तर्ज्योतिरेव' इत्यनेन विवक्षितं ज्ञानिलक्षणमित्युक्तं भवति । नन्वेवं तर्हि एवशब्दोऽवयवार्थान्वयी इत्यापन्नम् । तच्चायुक्तम् । समासान्वयित्वश्रवणादित्यत उक्तम्– **एवशब्दस्येति** ॥ समासार्थान्वयित्वे प्रागुक्तदोषात्, योग्यताबलात् ज्योतिषा सम्बन्धोऽङ्गीकार्य इत्यर्थः ।

**भावदीपिका (श्री.टि.)– ॥ मुख्ये सम्प्रत्ययादिति ॥** 'मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय' इति न्यायेनेति शेषः ॥ **शब्दतः प्राप्तमिति** ॥ अन्तः ज्योतिः यस्यासौ अन्तर्ज्योतिः इति शब्दनिर्वचनात् प्राप्तमित्यर्थः ॥ **विशेपणत्वेनेति** ॥ इतरव्यावर्तकत्वेनेत्यर्थः ॥ **उच्यत इति** ॥ 'अन्तर्ज्योतिष्ट्वम्' इति वर्तते । **तत्सामर्थ्यात्** विशेषणत्वेनोक्तिसामर्थ्यात् । **इदम्** 'व्यक्तः' इति पदम् । अन्यथाऽति-व्याप्तिः स्यादिति भावः ॥ **अध्याहारेणेति** ॥ 'अन्तः' इत्यनन्तरं 'व्यक्तम्' इत्यध्याहारः । तथाचान्तर्व्यक्तं ज्योतिः यस्यासावन्तर्ज्योतिरित्यर्थः । तथा अध्याहारेण किं कृतमित्यतस्तत्-प्रयोजनकथनाय 'सर्वेषाम्' इति भाष्यं प्रवृत्तमित्याह– **अध्याहारस्येति** ॥

**असम्भवित्वमिति** ॥ ज्ञानिनामपि शुकादीनां भगवदन्यवस्त्वन्तरदर्शनसद्भावाद् असम्भवित्वं नाम लक्षणदोष इति भावः ॥ **आहेति** ॥ द्वितीयपक्षमङ्गीकृत्याहेत्यर्थः ॥ **अन्यदेति** ॥ असम्प्रज्ञातसमाधेरन्यदेत्यर्थः । 'किञ्चिद् विक्षेपादिकं क्रियतेऽनेनेति किञ्चित्कारः, न किञ्चित्कारः अकिञ्चित्कर' इति विग्रहमभिप्रेत्यार्थमाह– **विक्षेपकरणेति** ॥ अन्यदर्शनस्य मनोविक्षेपकारित्वा-भावादित्यर्थः । 'एवशब्द' इत्यनन्तरमध्याहार्यमाह– **सम्भवदर्थ इति** ॥ वस्त्वन्तरनिवृत्ति-रूपार्थाङ्गीकारे असम्भवाभावेन लक्षणं लक्ष्ये सम्भवतीति सम्भवदर्थ इत्यर्थः ॥ **एतेनेति** ॥ इतरदर्शनव्यवच्छेदकावधारणेनेत्यर्थः ॥

**लक्ष्यमेवेति** ॥ लक्ष्यतावच्छेदकमेवेत्यर्थः । अपरोक्षज्ञानिनो हि लक्षणमुच्यते । तत्र न ज्ञानित्वं लक्ष्यतावच्छेदकम्, तदेवान्तर्ज्योतिष्ट्वम् इति लक्ष्यतावच्छेदकलक्षणयोरैक्याद् इतरभेदानु-मितेर्वैयर्थ्यं स्यात् । व्याप्तिग्रहणकाल एव पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेर्जातत्वादिति भावः । 'एतेन' इत्युक्तस्याभिप्रायमाह– **व्यवच्छेदेति** ॥ इतरव्यावृत्तिगर्भम् अन्तर्ज्योतिष्ट्वं लक्षणमभिप्रेतम्, न केवलम् । अतो नोक्तदोष इति भावः । नन्वेवकारस्य 'अन्त' इत्यनेन सम्बन्धेऽन्तर्मात्रज्योतिष्ट्वप्राप्त्या 'बाह्यतो भगवद्दर्शनं नास्ति' इत्येव लक्ष्यते, न तु भगवदितरवस्तु-

दर्शननिषेध इत्यत आह– **एवशब्दस्येति** ॥ अर्थाबाधरूपात् सामर्थ्यात् । शुकादीनां वस्त्वन्तर-दर्शनसत्तादशायां ज्ञानस्य तिरोहितत्वेनालक्ष्यत्वमिति तात्पर्योक्तमनुसंन्धेयम् ।

**भावप्रकाशः (कृ.टि.)**– एवशब्दः समासार्थान्वयी वाऽवयवार्थान्वयी वेति विकल्प्य आद्ये तत्पर्यवसितार्थमुक्त्वा दोषमाह– **एवशब्द इति** ॥ अन्तेऽपि तमर्थमनूद्य दोषमाह– **अथेति** ॥ **असम्भवित्वमिति** ॥ घटादिप्रकाशस्यापि सत्त्वादिति भावः । **लक्ष्यमेवेति** । लक्ष्यतावच्छेदक-मेवेत्यर्थः । एतेनेत्युक्तं विवृणोति– **व्यवच्छेदेति** ॥ अन्तर्ज्योतिरेवेत्यस्य भगवदन्यदर्शनव्यवच्छेद-तात्पर्यकत्वादित्यर्थः । तथा च भगवदन्यदर्शनशून्यत्वमेव लक्षणम् । न त्वन्तर्ज्योतिष्ट्वमिति भावः । नन्वेवं तर्हि एवशब्दोऽवयवार्थान्वयीत्यापन्नम् । तच्चायुक्तम् । समासार्थान्वयित्वश्रवणादित्यत आह– **एवशब्दस्येति** ॥ समासर्थान्वयित्वे प्रागुक्तदोषादिति भावः ॥

## भाष्यम्

**उक्तं चैतत् –**

**'दर्शनस्पर्शसम्भाषाद्यत् सुखं जायते नृणाम् ।**
**आरामः स तु विज्ञेयः सुखं कामक्षयोदितम्' इति नारदीये ।**

**'स्वज्योतिष्ट्वान्महाविष्णोरन्तर्ज्योतिस्तु तत्स्थितः' इति च । अन्तः-सुखत्वादेः कारणमाह– ब्रह्मणि भूत इति ॥ २४ ॥**

भावप्रदीपिका (प.टी.)– उक्तार्थे प्रमाणमाह– **उक्तं चेति** । तत्स्थित इति स स्थितो यस्मिन्नित्यर्थः । 'ब्रह्मभूत'पदमन्यथप्रतीतिनिवृत्त्यर्थमवतार्य यथावद्व्याचष्टे– **अन्तरिति** । ब्रह्मभूतत्वं नाम तस्मिन् स्थितत्वम् । तदन्तःसुखत्वादेः कारणम् इत्युक्ते ज्ञानकारणमित्येवोक्तं भवति ॥ २४ ॥

भावप्रकाशिका (न.टी.)– सुखारामान्तर्ज्योतिःशब्दानां स्वोक्तार्थे प्रमाणं चाह– **उक्तं चेति** । न च 'ब्रह्मभूत'पदं ब्रह्मत्वमाचष्टे, तथासति ब्रह्म गच्छतीति विरोधात् । अतस्तदन्तः-सुखत्वादेः कारणध्यानादिकत्वेन ब्रह्मण्यवस्थानमाचष्ट इति भावेन ब्रह्मभूतपदं सविग्रह-मवतारयति– **अन्तःसुखत्वादेरिति** ॥ २४ ॥

श्लोकः २४

**प्रमेयदीपिका (ज.टी.)**– आरामसुखशब्दयोरुक्तार्थत्वं कुतः? इत्यत आह– **उक्तं चेति** ॥ न केवलं पुनरुक्तिबलादिति चार्थः । द्वन्द्वैकत्वादेकवचनम् । 'काम' इत्युपद्रवोपलक्षणम् । **उदितं** व्यक्तम् । 'अन्तर्ज्योतिः' इत्यस्योक्तार्थत्वे प्रमाणमाह– **स्वेति** ॥ सः स्थितो यस्मिन्निति तत्स्थितः । 'अन्तरेव ज्योतिर्दर्शनं यस्य' इत्येवं व्याख्यानेऽपि यद्यप्युक्तार्थो लभ्यते । तथाऽपि 'आर्थिकाच्छाब्दं वरम्' इत्येवं व्याख्यातम् ॥

'ब्रह्मैव भूतः' इत्यन्यथाप्रतीतिनिरासाय ब्रह्मभूतशब्दस्य विग्रहं दर्शयन् प्रकृतसङ्गतिमाह– **अन्तरिति** ॥ 'ब्रह्मणि भूतः' इत्येवं विग्रहो न तु 'ब्रह्मैव भूतः' इति । प्रमाणविरोधात् ॥ ननु ब्रह्मणि भूतत्वं साधकधर्मः । तत्कथं ज्ञानिलक्षणत्वेनोच्यते? मैवम् । यतोऽन्तःसुखत्वादेः कारणत्वेनोच्यते ॥ नन्वेवं सत्यर्थादिदं ज्ञानसाधनत्वेन उच्यते । तच्च तद्बुद्धयः इत्यनेनैवोक्तम् । सत्यम् । 'तद्बुद्धित्वादिकं ब्रह्मणि भूतत्वं यस्य कारणं तद्वानेवंलक्षणकः' इत्येवं सङ्गतिसूचनार्थोऽयमनुवाद इति भावः । एवञ्च अधिगच्छति इत्यस्य जानातीत्यर्थो ज्ञातव्यः ॥ २४ ॥

**भावबोधः (र.टि.)**– ॥ **आर्थिकात् शाब्दं वरमिति** ॥ अन्तरेव दर्शनं यस्येत्युक्ते विष्णुव्यतिरिक्तबाह्यार्थदर्शनस्य अन्तरभावेन अर्थात् भगवन्मात्रदर्शनं सिद्ध्यति । अन्तर्व्यक्तत्वेन ज्योतिरेव परमात्मैव यस्येति व्याख्याने शब्दबलादेव भगवन्मात्रदर्शनं सिद्ध्यतीत्यार्थिकाच्छाब्दं वरमित्यर्थः । **अर्थादिति** ॥ ब्रह्मणि भूतत्वरूपसाधनेन ज्ञाने जात एव अन्तस्सुखादिकं भवति , न साक्षादित्यर्थः ॥ २४ ॥

॥ इति रघूत्तमयतिकृते श्रीमद्गीताभाष्यटीकाभावबोधे पञ्चमोऽध्यायः ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ॥ **द्वन्द्वैकवद्भावादेकवचनमिति** ॥ सर्वो द्वन्द्वो विभाषयैकवद्भवतीति वचनादिति भावः । ततश्च दर्शनं च स्पर्शनं च सम्भाषा च दर्शनस्पर्शसम्भाषं दर्शनस्पर्शनसम्भाषा इत्येकवचनं बहुवचनं चोपपन्नं भवति । नन्वेवं समाहारद्वन्द्वेऽपि वाक्त्वचं श्रीस्रजमित्यत्रापि द्विवचनं प्राप्नोति । तथा इतरेतरद्वन्द्वेऽपि पक्षे एकवचनं स्यादिति । उच्यते । सर्वो द्वन्द्व इत्यनेन समाहारद्वन्द्वः तथा इतरेतरद्वन्द्वो नापूर्वतया विभाषयैव क्रियते किन्तु न्यायसिद्धोऽर्थोऽनूद्यते । तथाहि । चार्थे द्वन्द्व इति चार्थद्वन्द्वः क्रियते । चार्थश्चेतरेतरयोगः । स एव

यदोद्रिक्तावयवभेदो भवति । तदा अवयवभेदानुगमात् द्विवचनबहुवचने सिद्धे एव । यदा तिरोहितावयवभेदविवक्षा । संहतिप्राधान्यमिति यावत् , तदा समाहार इति संहतिप्रधानत्वादेकवचनं भवति । तदेवं चार्थ एव सर्वो द्वन्द्वो विभाषयैकवद्भवतीति परिभाषा पठ्यते ।

ननु चार्थः समुच्चयः नेतरेतरयोगः । प्रयोगे समुच्चयस्य प्रतीतेरिति चेत् । सत्यम् । किन्तु तत्प्रभेद एव । इतरेतरयोगः न समुच्चयादन्यः । तथाहि । समुच्चय एव युगपदर्थाभिधायिनां परस्परापेक्षाणां पदानां भवति । तदा द्वन्द्वः क्रियते । एतावतैव इतरेतरयोगश्चार्थ इत्युच्यते ।

नन्वेवं द्वन्द्वश्च प्राणितूर्येति सूत्रमनर्थकं स्यात् । तेन हि समाहारद्वन्द्वे एकवद्भावो विधेयः । समाहारद्वन्द्वैकत्वादेकवचनसिद्धेरिति चेत् – नाप्राण्यंगादीनां समाहारद्वन्द्व एव यथा स्यादितरेतरयोगो मा भूदिति सूत्रप्रयोजनम् ।

ननु तर्हि किमर्थं समाहारैकत्वं क्रियते, इतरेतरयोग एव एकवद्भावः क्रियताम् । एवं समाहारग्रहणं यत्नप्रतिपाद्यं न भवति । कार्यं च विधिमुखेनैव प्रवर्तते । उच्यते । इतरेतरयोगे एकवद्भावे सति अस्थित्वचमित्यत्र समाहारद्वन्द्वलक्षणे द्वन्द्वाचुदषहान्तात् समाहार इति न स्यात् ।

नन्वेवमपि पूर्वोक्तप्रकारेण समाहार एव एकवचनं भवति, समाहारश्च एक एव । एवं च एकवदिति वतिर्नोपपद्यते । नह्येक एव एकवदित्युच्यत इति चेत् – उच्यते । बुध्या अनेकत्वमध्यारोप्य भविष्यति । उक्तं च । बुद्धिः हि भगवती अभेदेऽपि भेदं जनयति । यथा राहोः शिर इति । यद्वा नायं वतिः । किं तर्हि वदेर्विजन्तादेकवदिति ।

ननु तथाप्यशेषद्वन्द्वे एकत्वाविधानात् सर्वो द्वन्द्व इत्यघटना स्यात् । इति चेद् – उच्यते । सर्वो द्वन्द्व इति कोऽर्थः । इतरेतरयोगसमाहारात्मक इत्यर्थः । नचैवमपि वृक्षमृगादिसूत्रमनर्थकम् । अनयैव परिभाषया बाभ्रव्यशालंकायनं बाभ्रव्यशालंकायना इत्येतद्वत् प्लक्षन्यग्रोधं प्लक्षन्यग्रोधा इत्येवमदीनां सिद्धत्वादिति वाच्यम् । सिद्धेःपरिभाषया एकवत्वे वृक्षादीनां सजातीयैरेव द्वन्द्वो यथा स्यात् न विजातीयैरिति व्यतिरेकनिरासार्थं परिभाषया एकत्वविधानमिति दिक् ।

**॥ इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशपूज्यचरणानां निजशिष्यकेशव कविविरचिते व्याकरणस्पृष्टप्रमेयदीपिका वाक्यार्थप्रदीपे पञ्चमोऽध्यायः ॥**

श्लोकः २४

**भावदीपः (रा.टि.)– ॥ द्वन्द्वैकत्वादिति ॥** 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इत्युक्तेः । अत एव नपुंसकतापीति भावः । **तत्स्थितः** इत्यस्य 'भगवदधिष्ठानभूतः' इत्यर्थलाभायाह– **स स्थितो यस्मिन् इति ॥ उक्तोऽर्थ इति ॥** भगवदेकदर्शनवत्वरूपोऽर्थ इत्यर्थः । **एवं व्याख्यातमिति ॥** 'तत्स्थितः' इत्येवं व्याख्यातमित्यर्थः ॥ **ब्रह्मणि भूतत्वं साधकधर्म इति ॥** तदेकनिष्ठत्वरूपं ब्रह्मणि भूतत्वं साधनानुष्ठातृधर्म इत्यर्थः ॥ **अर्थादिति ॥** ब्रह्मभूतो ब्रह्माधिगच्छतीत्यनुवादबलादित्यर्थः । **इदमिति ॥** ब्रह्मणि भूतत्वमित्यर्थः ॥ **अयमनुवादः** ब्रह्मभूत इत्याद्यनुवाद इत्यर्थः ॥ २४ ॥

**भावरत्नकोशः (सु.टि.)– ॥ उक्तार्थत्वम्** 'आरामः परदर्शनादिनिमित्तं सुखम्, सुखं तूपद्रवक्षये व्यक्तम्' इत्युक्तार्थत्वम् । **पुनरुक्तिबलात्** आरामसुखशब्दयोः । ननु 'दर्शनस्पर्शसम्भाषाभ्यः' इति स्यात् ? समासार्थबाहुल्यात् । सम्भाषाशब्दस्य स्त्रीलिङ्गत्वाच्चेत्यत आह– **द्वन्द्वैकत्वादिति ॥** 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इत्येकवद्भावः । ततः एकवचनम्, 'स नपुंसकम्' इति क्लीबत्वं च । 'कार्यकालं संज्ञापरिभाषम्' इति यथेति भावः । 'कामादिक्षयं व्यक्तम्' इति भाष्याविसंवादायाह– **कामेत्युपद्रवोपलक्षणमिति ॥ उदितं व्यक्तं इति च । उक्तार्थत्वे** भगवन्मात्रदर्शनवत्त्वरूपार्थत्वे । **स्वज्योतिष्ट्वात्** परानपेक्षप्रकाशत्वान्महाविष्णोः ज्योतिष्ट्वमिति भाष्यार्थः ।

ननु 'अन्तर्ज्योतिः' इति बहुव्रीहेः 'तस्मिन् स्थितः तत्स्थितः' इति तत्पुरुषेण व्याख्यानमयुक्तम्, अनुपयुक्तं च ? इत्यतो व्याचष्टे– **स स्थितो यस्मिन्निति ॥** तथा च न विरुद्धार्थत्वम्, नाप्यनुपयोग इति भावः । **उक्तोऽर्थः** भगवन्मात्रदर्शनवत्त्वरूपोऽर्थः । **आर्थिकाच्छाब्दं वरमिति ।** 'अन्तरेव ज्योतिर्दर्शनं यस्य' इत्युक्ते विष्णुभिन्नबाह्यार्थस्यान्तरभावेन अर्थात् अन्तःस्थितभगवन्मात्रदर्शनं सिद्ध्यतीति तस्यार्थिकत्वम् । 'अन्तर्व्यक्तः परानपेक्षप्रकाशतया ज्योतिश्शब्दार्थः परमात्मैव यस्य' इति व्याख्याने शब्दादेव भगवन्मात्रदर्शनं सिद्ध्यतीति तस्य शाब्दत्वम् । शाब्दस्य च शब्दबोध्यत्वेन शीघ्रोपस्थितिकत्वाद् वरत्वम् । आर्थिकस्य तु शब्दबोध्यार्थानुपपत्तिप्रतिसन्धानगम्यत्वेन मन्थरोपस्थितिकत्वाद् जघन्यत्वमिति भावेन भाष्योदाहृतप्रमाणे 'स स्थितो यस्मिन् स तत्स्थितः एवान्तर्ज्योतिः' इति अन्तर्ज्योतिःपदं व्याख्यातमित्यर्थः ।

श्लोकः २४

**प्रमाणेति** । जीवस्य ब्रह्मत्वस्य 'नाहमीश्वरः' इति प्रत्यक्षेण, 'जीवपरमात्मानौ भिन्नौ विरुद्धधर्माधिकरणत्वात्' इत्याद्यनुमानेन, 'द्वा सुपर्णा' इत्याद्यागमेन च विरुद्धत्वादित्यर्थः । **अन्तःसुखत्वादेः** अन्तःसुखत्वस्य, अन्तरारामत्वस्य, अन्तर्ज्योतिष्ट्वस्य च । **कारणत्वेनोच्यते** ब्रह्मणि भूतत्वम् । प्रस्थानान्तरे तु अन्तःसुखत्वाद्येव ज्ञानिलक्षणम् । तत्र कारणत्वेनान्तर्ज्योतिष्ट्व-मुच्यत इत्यन्तर्ज्योतिष्ट्वमपि कारणकोटौ प्रवेशितम् । **अर्थादिति** । अन्तःसुखत्वं कामादिक्षयाभि-व्यक्तात्मस्वरूपसुखवत्त्वम् । तादृशसुखव्यक्तिश्च भगवज्ज्ञानासाधारणकारणिका । ब्रह्मणि भूतत्वं तत्र कारणत्वेनोच्यमानम् आहत्यासम्भवात् ज्ञानं द्वारम् आक्षिपति । तथा च ब्रह्मणि भूतत्वरूपसाधनेन ज्ञाने जाते एवान्तःसुखत्वादिकं भवतीत्यर्थापत्तिबलात् ज्ञानसाधनत्वेनोच्यत इत्युक्तं स्यादित्यर्थः । तत्रेष्टापत्तिमाशङ्क्याह– **तच्चेति** । तद्बुद्धित्वादिकं ब्रह्मणि भूतत्वमिति 'तद्बुद्धयस्तदात्मानः' इत्यत्रोक्तम् । तद्बुद्धित्वादिकमेवात्र ब्रह्मणि भूतत्वमित्यर्थः । **यस्य** ज्ञानस्य । तद्बुद्धित्वादिकं ज्ञानसाधनत्वेनोक्तम् इत्यतोऽत्रापि ज्ञानोपस्थापकमाह– **एवं चेति** ॥ **ज्ञातव्य** इति । अधिपूर्वस्य गमेर्ज्ञानि प्रयोगप्राचुर्यादिति भावः ॥ २४ ॥

**गीताश्लोकत्रयाक्षरार्थस्तु** ज्ञानिलक्षणं प्रपञ्च्यते योऽन्तःसुख इत्यादिना । यथा योगस्याधिक्य-कथनं योगनिरूपणमेव, संन्यासार्थे निन्दास्तुती च संन्यासनिरूपणमेव, तथा ज्ञानिलक्षणकथनं च ज्ञानिनिरूपणमेवेति संन्यासयोगज्ञानानि मेलयित्वा प्रपञ्चयतीति भाषितार्थाविसंवादः । अन्तःसुखः कामादिक्षयाभिव्यक्तात्मस्वरूपसुखः । अन्तरारामः । अन्तरवस्थितपरमात्मदर्शनादिनिमित्तक-सुखवान् । अन्तर्ज्योतिः अन्तरभिव्यक्तपरमात्मस्वरूपः । असम्प्रज्ञातसमाधीनां बाह्यादर्शनात्, सम्प्रज्ञातसमाधीनां बाह्यदर्शनेऽपि तस्य चित्तविक्षेपाहेतुत्वात्, ब्रह्मदर्शनापेक्षया बाह्यदर्शनप्राचुर्या-भावाच्चैवशब्दः । 'यः' इत्यस्य पुनरुक्तिः सर्वज्ञान्यनुगमार्था ।

अन्तःसुखत्वादेः कारणमुच्यते ब्रह्मभूत इति । ब्रह्मणि विष्णौ भूतः मनसा स्थित इत्यर्थः । नन्वेवं सत्यर्थादिदं ब्रह्मणि भूतत्वं ज्ञानसाधनत्वेनोच्यत इत्युक्तं स्यात् । तच्च 'तद्बुद्धयः' इत्यनेनोक्तमेवेति न पुनर्वक्तव्यम् । सत्यम् । तद्बुद्धित्वादिरूपं ब्रह्मभूतत्वं यस्य कारणं तद्वान् एवंलक्षणक इत्येवं सङ्गतिसूचनार्थो ब्रह्मभूतत्वस्य तद्बुद्धित्वादिशब्देनोक्तस्यात्रानुवादः ।

एवं च 'अधिगच्छति' इत्यस्य 'जानाति' इत्यर्थो ज्ञातव्यः । गीताविवृतौ तु योऽन्तःसुखो योऽन्तरारामो योऽन्तर्ज्योतिः तथा यो ब्रह्मभूतो ब्रह्मणि भूतश्च स योगी निर्वाणम् अशरीरम्

श्लोकः २४
अप्राकृतदिव्यसुन्दरविग्रहं ब्रह्म भगवन्तम् अधिगच्छति प्राप्नोतीत्युक्तम् । तदुक्तार्थापरित्यागं-नार्थान्तरवर्णनमेवेति न टीकाविसंवादः ॥ २४ ॥

**भावदीपिका (श्री.टि.)–** यद्यप्यत्र 'याथार्थ्यमेव मानत्वम्' इत्यादाविव लक्ष्यतावच्छेदक-लक्षणयोरैक्येऽपि न दोषः । व्यवहारस्य साध्यत्वोपपत्तेः । तथाऽपि गीतागतावधारणतद्व्याख्यान-रूपासम्प्रज्ञातेत्यादिभाष्यानुसाराद् एवं समाहितम् । अन्यथा तद्वैयर्थ्यापत्तेरित्यवधेयम् । ननु 'दर्शनस्पर्शसम्भाषाभ्य' इति स्यात् ? इत्यत आह– **द्वन्द्वेति** ॥ 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति वचनादिति भावः । भाष्यप्रमाणयोर्विसंवादपरिहारायाह– **कामेतीत्यादिना** ॥ **स इति** ॥ विष्णुरित्यर्थः ॥ **इति व्याख्यानेऽपीति** ॥ ज्योतिःशब्देन भगवन्तमगृहीत्वा ज्ञानमात्रग्रहण-मङ्गीकृत्य व्याख्यानमित्यर्थः ॥ **उक्तार्थ इति** ॥ स्वयंज्योतिष्ट्वाद् भगवतस्तद्व्यक्तेरन्तर्ज्योति-रित्युक्तार्थ इत्यर्थः ॥ **आर्थिकादिति** ॥ ज्योतिःशब्देन ज्ञानं गृहीत्वा अन्तरेव दर्शनं यस्येति व्याख्याने विष्णुव्यतिरिक्तबाह्यार्थदर्शनस्यान्तरभावेन, अर्थाद् अन्तःस्थभगवन्मात्रदर्शनं सिध्यति ॥ अन्तर्व्यक्तत्वेन ज्योतिरेव परमात्मैव यस्येति व्याख्याने तु शब्दबलादेव भगवन्मात्रदर्शनं सिध्यतीति आर्थिकाच्छाब्दं वरमित्यर्थः ॥

**प्रमाणविरोधादिति** ॥ 'द्वा सुपर्णा' इत्यादिभेदप्रमाणविरोधादित्यर्थः ॥ **साधकधर्म इति** ॥ तथा च ज्ञानिलक्षणस्य ज्ञानसाधके जिज्ञासावतिव्याप्तिरित्यर्थः ॥ **अर्थादिति** ॥ ब्रह्मणि भूतत्वरूपसाधनेन ज्ञाने जात एवान्तःसुखत्वादिकं भवति, न साक्षादित्यर्थादित्यर्थः । **उक्तमिति** ॥ तथा चात्र पुनरनुवादो व्यर्थ इति भावः । **तद्बुद्धित्वादिकं ब्रह्मणि भूतत्वम्** तद्बुद्धित्वादिरूपं ब्रह्मणि भूतत्वम् । **यस्य** ज्ञानस्य । **अन्तःसुखत्वादेः** । ननु 'ब्रह्माधिगच्छति' इति ब्रह्मभूतत्वादेर्ब्रह्मप्राप्ति-साधनत्वमेवोच्यते, न ज्ञानसाधनत्वम् ? अत आह– **एवं चेति** ॥ ब्रह्मभूतत्वादेः पूर्वोक्तज्ञान-साधनानुवादरूपत्वादित्यर्थः ॥ २४ ॥

**भावप्रकाशः (कृ.टि.)–** ननु दर्शनस्पर्शसम्भाषादित्ययुक्तम् । इतरेतरयोगद्वन्द्वाश्रयणे बहुवचनापत्तेः समासार्थबाहुल्यात् सम्भाषाशब्दस्य स्त्रीलिङ्गत्वेन द्वन्द्वेऽपि तदापत्तेश्च । परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरित्युक्तेरित्यत आह– **द्वन्द्वेति** ॥ सर्वो द्वन्द्वो विभाषया एकवद्भवतीत्येकवद्भावः । तेनैकवचनं युक्तम् । स नपुंसकमिति नपुंसकत्वं चेति भावः । नन्वन्तर्ज्योतिरिति बहुव्रीहेस्तत्स्थित

इति तत्पुरुषेण व्याख्यानमयुक्तम् । विरुद्धार्थत्वादित्यत आह– **स स्थितो यस्मिन्निति** ॥ **आर्थिकाच्छाब्दं वरमिति** ॥ शाब्दस्य शब्दबोध्यत्वेन शीघ्रगामित्वाद्वरत्वम् । अर्थिकस्य तु शब्दबोध्यार्थानुपपत्तिबोध्यत्वेन मन्थरगामित्वाद्दुर्बलत्वमित्यर्थः । अन्तरेव ज्योतिर्दर्शनं यस्येत्युक्ते विष्णुभिन्नबाह्यार्थदर्शनस्यान्तरभावेनार्थादन्तःस्थभगवन्मात्रदर्शनं सिद्ध्यतीति तस्यार्थिकत्वं अन्तर्व्यक्तत्वेन ज्योतिरेव परमात्मैव यस्येति व्याख्याने शब्दादेव भगवन्मात्रदर्शनं सिद्ध्यतीति तस्य शाब्दत्वं बोध्यम् । **अर्थादिति** ॥ ब्रह्मणि भूतत्वरूपसाधनेन ज्ञाने जात एवान्तःसुखत्वादिकं भवति न साक्षादित्यन्यथानुपपत्त्येत्यर्थः ॥ २४ ॥

**लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।**
**छिन्नद्वैधाऽऽयतात्मानः सर्वभूतहिते रताः ॥ २५ ॥**

## भाष्यम्

**पापक्षयाच्चैतद् भवतीत्याह– लभन्त इति ॥ क्षीणकल्मषाः भूत्वा छिन्नद्वैधा यतात्मानः । द्वेधा भावो द्वैधम् । संशयो विपर्ययो वा ॥**

भावप्रदीपिका (प.टी.)– न केवलं ब्रह्मणि भूतत्वेन तज्ज्ञानम्, साधनान्तरं चास्ती-त्युत्तरश्लोकमवतारयति– **पापेति** ॥ पापक्षयज्ञानयोः कार्यकारणभावं दर्शयति– **क्षीणेति** ॥ 'द्वैध'पदार्थमाह– **द्वेधेति** ॥ तच्च किमित्यतः सप्रमाणमाह– **संशय इति** ॥ वस्तुतत्वापेक्षया द्वितीयग्राहको विपर्ययः ।

भावप्रकाशिका (न.टी.)– यज्ज्ञानिलक्षणमुक्तम् अन्तःसुखत्वादिकम्, तस्य कारण-विधानेन ज्ञानस्यैव कारणमुक्तम् । अथ तत्र कारणान्तरोक्तिपरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे– **पापक्षयाच्चेति** । 'क्षीणकल्मपाः' इत्यादिपदद्वयान्वयप्रदर्शनेन पापक्षयसाध्यत्वं ज्ञानस्य प्रकाशयति– **क्षीणेति** ॥ 'छिन्नद्वैध'पदार्थं सप्रमाणकं प्रदर्शयन्, तस्य ज्ञानस्य फलं प्रकाशयति– **द्वेधेति** ॥

प्रमेयदीपिका (ज.टी.)– उत्तरश्लोके ज्ञानिनो ब्रह्मप्राप्तिः पुनः किमर्थमुच्यते? इत्यत आह– **पापेति** ॥ ब्रह्मभूतत्वेन सहास्य समुच्चयार्थश्चशब्दः । **एतद्** उक्तलक्षणं ज्ञानम् । अतो

श्लोकः २५

**लभन्ते इत्यस्योपलभन्त इत्यर्थः । कथं तर्हि ज्ञानिलक्षणप्रपञ्चार्थत्वं श्लोकत्रयस्योक्तमिति । उच्यते । ज्ञानप्रतिवन्धकपापक्षयाख्यमसाधारणकारणं कार्यस्य लक्षणं भवत्येवेति ।** अत्र **कार्यकारणभावो न प्रतीयत इत्यत आह– क्षीणेति ॥ भवन्ति ततो ब्रह्मोपलभन्त** इत्यर्थः । **छिन्नद्वैधशब्दार्थं ज्ञापयन् द्वैधशब्दं व्याचष्टे– द्वैधेति** ॥ विपयापेक्षयाऽन्यप्रकारत्वम् **अयथार्थत्वमिति यावत् । तेन च तद्वज्ज्ञानमुपलक्ष्यत इति** भावेनाऽह**– संशय इति** ॥ **वाशब्दश्चार्थे** ॥

**भावदीपः (रा.टि.)–** ॥ एतत् इत्यनुवादः, उक्तेत्यादि व्याख्या ॥ अन्तर्भगवदेक-विषयकत्वादिरूपमित्यर्थः ॥ **अत इति** ॥ ज्ञानिनो भगवन्मोक्षोक्तिपरत्वादस्य श्लोकस्येत्यर्थः । **आत्मानः** इत्यनन्तरं भाष्ये शेषमाह**– भवन्ति ततो ब्रह्मोपलभन्त इत्यर्थ** इति ॥ २५ ॥

**भावरत्नकोशः (सु.टि.)–** 'गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः' इति ज्ञानिनो ब्रह्म-प्राप्तेरुक्तत्वादाह**– पुनरिति । उक्तलक्षणकमिति ।** तद्बुद्धित्वादिसाधनजन्यम् अन्तःसुखत्वादि-कारणीभूतस्वरूपमिति, अन्तर्गतभगवदेकविषयत्वरूपलक्षणोपेतमिति वाऽर्थः । **उपलभन्ते** साक्षात्कुर्वन्ति । **असाधारणकारणमिति ।** पापक्षयाख्यासाधारणकारणत्वं कार्यस्य ज्ञानस्या-साधारणधर्मत्वाल्लक्षणमिति युक्तं ज्ञानिलक्षणनिरूपणपरत्वमिति भावः ।

ननु प्रतिवन्धकाभावस्य कारणत्वाभ्युपगमे सिद्धान्तविरोधः । सुधायाम् 'तर्हि दोषाभावः कारणमित्यायातमिति चेन्न । तथा सत्युत्सर्गापवादयोः क्वाप्यभावप्रसङ्गात्' इति । विष्णुतत्त्व-निर्णयटीकायां च दोषाभावोऽपि न प्रामाण्यकारणम्, याद‍ृच्छिकसंवादिषु सत्यपि दोषे प्रमाण-ज्ञानोदयात्' इति प्रतिबन्धकाभावस्य कारणत्वनिरासादिति चेन्न । अत्र कारणशब्दस्य यद्घटं प्रति कुलालपित्रादिसाधारणं तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वरूपं प्रयोजकत्वम्, तन्मात्रतात्पर्य-कत्वात् ।

न च पापे सति ज्ञानानुदयः, पापक्षये तु तदुदयः

'निश्शेषगतदोषाणां बहुभिः जन्मभिः पुनः । स्यादापरोक्ष्यं हि हरेः' इति ।

'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः'

इत्यादिदर्शनात्, इत्यनन्यथासिद्धान्वयव्यतिरेकित्वात् पापक्षयः कारणमेव किं न स्यादिति वाच्यम् । क्लृप्तकारणतद्बुद्धित्वादिरूपं ब्रह्मभूतत्वमादायैव पापाभावस्य भगवज्ज्ञानं प्रति नियत-पूर्वभावित्वग्रहणेन दण्डत्ववत्, दण्डगतदार्ढ्यवत्, 'शक्तिः कारणतावच्छेदिका' इति पक्षे शक्तिवत्, 'उपस्थितेष्टभेदाग्रहः प्रवर्तकः' इत्यत्र उपस्थितिवत्, 'विषयत्वेन विषयजन्यं ज्ञानं प्रत्यक्षम्' इत्यत्र विषयत्ववच्च, तद्बुद्धित्वादिनिष्ठकारणतावच्छेदकत्वमात्रेणान्वयव्यतिरेकयोरुपपत्तौ पापक्षयस्य कारणतायाः, पापक्षयत्वे कारणतावच्छेदकतायाश्च कल्पने गौरवात् ।

विष्णुतत्त्वनिर्णयटीकायां 'दोषाभावोऽपि न प्रामाण्यकारणम्, यादृच्छिकसंवादिषु सत्यपि दोषे प्रमाणज्ञानोदयात्' इति प्रमासामान्यं प्रति प्रतिबन्धकाभावस्य व्यतिरेकव्यभिचारोक्त्या कारणत्वखण्डनाच्च । न चैवं 'दोषाभावस्य कारणत्वे च नास्माकमनिष्टम्, तावताऽपौरुषेयत्वा-व्याघातात्' इति भाष्यटीकाविरोध इति वाच्यम् । अत्रत्यकारणशब्दस्य प्रयोजकत्वमात्र-तात्पर्यकत्वात् । उक्तं हि–

'तस्माद्गुणेभ्यो दोषाणामभावस्तदभावतः ।
अप्रामाण्यद्वयाभावस्तेनोत्सर्गो न चोदितः ॥' इति ।

प्रपञ्चितं चैतत्तर्कताण्डवे प्रमायां दोषाभावस्य हेतुत्वभङ्गे ॥ 'असाधारणं कारणम्' इत्यसाधारणपदं च न पापक्षयस्यादृष्टादिरूपप्रयोजनमात्रसाधारण्यम्, किन्तु ततोऽप्यतिशयोऽस्तीति विभावनायेति ज्ञातव्यम् । यत्तु 'प्रतिबन्धकाभावः कारणं न' इत्युत्सर्गः । यत्र तु 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इत्याद्यपवादः, तत्र प्रतिबन्धकाभावस्यापि कारणत्वमस्त्येव । तथा चोत्सर्गाभिप्रायेण सुधाप्रवृत्तेरविरोध इति व्याख्यातम्, तत्तूक्तविष्णुतत्त्वनिर्णयटीकया, प्रतिबन्धका-भावस्य हेतुप्रकारचतुष्टयं खण्डयित्रा तर्कताण्डवेन च विरुद्धम् इत्यनादरणीयमेवेत्यलम् । त्त्वा-प्रत्ययनिर्वाहाय भाष्ये शेषमुक्त्वा कार्यकारणभावं स्फोरयति– **भवन्ति तत इति** ॥

ननु द्वेधाभावो नाम प्रकारद्वयावगाहित्वं चेत्, 'घटो द्रव्यं पृथिवी' इति प्रमायामतिव्याप्तम् । तत्परिहाराय 'विरुद्धनानाप्रकारत्वम्' इति विवक्षायां विपर्यये अव्याप्तमित्यत आह– **विपर्येति** ॥ विषयापेक्षया विषयिणि ज्ञानमात्रे ज्ञानत्वसविषयत्वाद्यन्यप्रकारत्वमस्तीति प्रमायामतिव्याप्तमित्यत आह– **अयथार्थत्वमिति** ॥ नन्वयथार्थत्वं विशेष्यताव्यधिकरणप्रकारकत्वम्, तद् ज्ञानधर्मः, न

श्लोकः २५

ज्ञानिधर्मः । तत्र च कथं छिन्नत्वान्वयः । अप्रसक्तप्रतिषेधापत्तेरित्यत आह– **तेन चेति** ।। तद्वत् अथार्थत्ववत् । अनेन लक्षणाबीजसम्बन्ध उक्तः । 'तदज्ञानविपर्ययौ संशयं च पराणुद्य' इत्यादि-प्रमाणानुसारेणाह– **वाशब्द इति** ।।

**भावदीपिका (श्री.टि.)**– ।। **उक्तेति** ।। उक्ताद् ब्रह्मभूतत्वलक्षणाज्जायत इत्युक्त-लक्षणकमित्यर्थः ।। **कथं तर्हीति** ।। ज्ञानकारणकथनपरत्व इत्यर्थः । **लक्षणम्** ज्ञापकम् । असाधारणधर्मस्यापि लक्ष्यज्ञापकत्वादेव लक्षणत्वम्, एवमिहापि । यथा विशिष्टमेघोन्नतिर्वृष्टि-र्लक्षणमिति भावः । यद्वाऽसाधारणकारणकत्वं कार्यस्यैवासाधारणमिति युक्तं लक्षणत्वमित्याशयः । ज्ञानिलक्षणप्रपञ्चनार्थत्वेन प्रकृतसङ्गतिस्तु 'पापक्षयो यस्य ज्ञानस्य कारणं तद्वान् एवंलक्षणक' इत्युक्तरीत्या द्रष्टव्या । 'भवन्ति' इति भाष्येऽध्याहारः । ननु गीतायां 'लभन्ते' इत्यनेन पापक्षयादेर्ब्रह्मप्राप्तिसाधनत्वमेवोच्यते, न ज्ञानहेतुत्वम् इत्यतो 'लभन्ते' इत्यस्यार्थमाह– **उपलभन्त इति** ।। द्विशब्दात् प्रकारे धाप्रत्यये द्विप्रकारो द्वेधाशब्दार्थः । तत्र विपर्ययस्य द्विकोटिकत्वाभावात् कथमित्यतो 'विषयापेक्षया' इत्युक्तम् । धर्म्यपेक्षयेत्यर्थः ।।

**भावप्रकाशः (कृ.टि.)**– ।। **पुनः किमर्थमिति** ।। 'गच्छन्त्यपुनरावृत्ति'मित्यनेन ज्ञानिनो ब्रह्मप्राप्तेरुक्तत्वात् पुनरित्युक्तम् । **असाधारणकारणमिति** ।। ननु प्रतिबन्धकाभावस्य कारणत्वोक्तौ सिद्धान्तविरोधः । सुधायां 'तर्हि दोषाभावः कारणमित्यायातमिति चेन्न । तथा सति उत्सर्गापवादयोः क्वाप्यभावप्रसङ्गादि'त्यनेन प्रतिबन्धकाभावस्य कारणत्वनिरासादिति चेत् - उच्यते । प्रतिबन्धकाभावः कारणं नेत्युत्सर्गः । यत्र तु ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मण इत्याद्यपवादस्तत्र कारणत्वमेव । तथा चोत्सर्गाभिप्रायेण सुधाप्रवृत्तेः न विरोधः । अन्ये तु प्रतिबन्धकाभावस्य कारणत्वोक्तेः प्रयोजकत्वाभिप्रायकत्वान्न विरोध इत्याहुः ।।

ननु द्वेधाभावो नाम प्रकारद्वयवत्वम् । तच्च विपर्ययेऽव्याप्तमित्यत आह– **विषयापेक्षयेति** ।। ननु विषयापेक्षयाऽन्यप्रकारवत्वं नाम यदि तदपेक्षयाऽन्यधर्मवत्वं तदा प्रमायामतिव्याप्तिः । यदि त्वन्यप्रकारावगाहित्वं तदा विशेष्यान्यत्वविवक्षायां प्रमायामतिव्याप्तिः । प्रकारान्यत्वविवक्षायां चासम्भवः । प्रकारस्य प्रकारान्यत्वाभावादित्यत आह– **अयथार्थत्वमिति** ।। तर्हि संशयो विपर्ययो वेति कथमुक्तमित्यत आह– **तेनेति** ।। अयथार्थेच्छादिव्यावृत्त्यै ज्ञानमित्युक्तमिति बोध्यम् ।।

## भाष्यम्

**तच्चोक्तम्–**

**'विपर्ययः संशयो वा यद्द्वैधं त्वकृतात्मनाम् ।**
**ज्ञानासिना तु तच्छित्वा मुक्तसङ्गः परं व्रजेत् ॥' इति च ।**

**छिन्नद्वैधास्त एव आयतात्मानः । दीर्घमनसः सर्वज्ञा इत्यर्थः । तत एव छिन्नद्वैधाः । तच्चोक्तम्– 'क्षीणपापा महाज्ञाना जायन्ते गतसंशयाः' इति । छिन्नद्वैधाः यतात्मान इति वा ॥ २५ ॥**

भावप्रदीपिका (प.टी.)– 'छिन्नद्वैधा-आयतात्म' पदस्य विग्रहं दर्शयति– **छिन्नेति** ॥ 'आयतात्म' पदार्थमाह – **दीर्घेति** ॥ आयतात्मत्वछिन्नद्वैधत्वयोरपि कार्यकारणभावो विवक्षित इत्याह– **तत एवेति** ॥ क्षीणकल्मपत्वायतात्मत्वछिन्नद्वैधत्वानां क्रमेण कार्यकारणभावे प्रमाणमाह– **तच्चेति** ॥ पापक्षयमात्रात् कथं ज्ञानमित्यत आह– **छिन्नेति** ॥ क्षीणकल्मपाणां मनोनियतिद्वारा ज्ञानमित्यर्थः ॥ २५ ॥

भावप्रकाशिका (न.टी.)– **अकृतात्मनाम्** अयतचित्तानाम् । परं व्रजेत् इत्यनेन 'लभन्ते ब्रह्म निर्वाणम्' इत्यस्यान्वयं सूचयति । 'आयतात्मानः' इति यद्गुप्तं पदं तत्प्रकाशयति– **छिन्नेति** ॥ तस्यार्थमाह– **दीर्घेति** । 'आयतात्म'पदमुत्तरमपि हेतुवाचीत्याह– **तत इति** ॥ क्षीणकल्मप-आयतात्म-छिन्नद्वैधत्वानां क्रमेण हेतुहेतुमद्भावे प्रमाणमाह– **तच्चेति** ॥ 'यतात्मनः' इति पदं व्यस्तं चेति सूचयति– **छिन्नेति** ॥ २५ ॥

प्रमेयदीपिका (ज.टी.)– अत्रैव प्रमाणमाह– **तच्चेति** ॥ **अकृतात्मनाम्** अशुद्धबुद्धीनाम्। छिन्न इत्यादेः समासत्वमभिप्रेत्य विग्रहमाह– **छिन्नेति**॥ आयतशब्दस्यात्मशब्दस्य चानेकार्थत्वाद् आयतात्मान इत्येतद्व्याचष्टे– **दीर्घेति** ॥ अणुनो मनसः कथं दीर्घत्वमित्यत आह– **सर्वज्ञा इति** ॥ बहुविषयत्वमुपलक्ष्यत इति भावः । श्रवणादिना विदितवेद्या इत्यर्थः । समासेन उक्तयोरप्यर्थयोर्बुद्ध्या विविक्तयोर्हेतुहेतुमद्भावोऽस्तीति भावेनाऽह– **तत एवेति** ॥ आयतात्मत्वादेव । क्षीणकल्मपत्वायतात्मत्वच्छिन्नद्वैधत्वानां हेतुहेतुमद्भावे प्रमाणमाह– **तच्चेति** ॥ व्यस्ते वा एते पदे इत्याह– **छिन्नेति** ॥ नियतमनस इत्यर्थः ॥ २५ ॥

श्लोकः २५

**भावरत्नकोशः (सु.टि.)**– ॥ **अत्रैव** 'अयथार्थज्ञानमेव द्वैधशब्दार्थः' इत्यत्र । नन्वात्मनां नित्यत्वेन सर्वेऽप्यकृतात्मान एव । तत्कथम् 'अकृतात्मनाम्' इति विशेषणमित्यतस्तदनूद्य अर्थमाह– **अकृतात्मनाम् अशुद्धबुद्धीनामिति** ॥ ज्ञानस्य लूनसंशयविपर्ययतादशायामित्यर्थः । तेन 'ज्ञानासिना तद् द्वैधं छित्त्वा' इति युज्यते । **समासत्वम्** ऐकपद्यम् । अन्यथाऽपि प्रतिपत्ति-व्याख्यानबीजमित्यभिसन्धाय आह– **आयतशब्दस्येति** । तथा च नानालिङ्गाध्याये त्र्यक्षरकाण्डे 'आयतं दीर्घवस्तुनि । स्यात् कृतायमने च' इति । तथा नान्तनानार्थे

'आत्माऽर्कचन्द्रवाताग्निजीवेषु परमात्मनि ।
देहे यत्ने धृतौ कार्तौ बुद्धौ मनसि विश्रुते ।
धर्मे स्वभावे पुत्रेऽर्थे परस्य प्रतियोगिनि ॥' इति केशवः ।

केचित्तु 'आयतिः संयमे दैर्घ्ये प्रभावागामिकालयोः' इति, 'आत्मा देहमनोब्रह्मस्वभाव-धृतिबुद्धिषु' इति च विश्वोक्तेः, आयतात्मशब्दौ नानार्थाविति भावेन 'अनेकार्थत्वात्' इत्युक्त-मित्याहुः ॥

ननु ज्ञानिमात्रे सार्वज्ञं प्रमाणविरुद्धमित्यतो भाष्यभावमाह– **बहुविषयत्वमिति** ॥ 'दीर्घवाचकायतशब्देन' इति शेषः । नन्वायतात्मत्वं छिन्नद्वैधत्वे हेतुः, यद्वक्ष्यति 'तत एव छिन्नद्वैधाः' इति । अत्र चायतात्मत्वं बहुविषयत्वं विवक्षितमित्युक्तम् । नैतद्युक्तम् । न हि गङ्गावालुकादिबहुविषयज्ञानेन तत्त्वसंशयादिच्छेदो दृश्यते । तस्य

'श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयं च पराणुद्य'

इति **श्रवणादिजन्यज्ञानच्छेद्यत्वावेदनादित्यत आह– श्रवणादिनेति** ॥ 'विशेषणं विशेष्येण बहुलम्' इत्यत्र बहुलग्रहणाद् विशेषणयोरपि, समासो युक्त इति भावेनाह– **समासेनेति** ॥ **अर्थयोः** छिन्नद्वैधत्वायतात्मत्वयोः । छिन्नद्वैधत्वानां 'क्रमेण' इति शेषः । 'यतात्मनः' इत्यस्यार्थमाह– **नियतेति** ॥ २५ ॥

**गीताश्लोकाक्षरार्थस्तु** न केवलं ब्रह्मभूतत्वाद् उक्तलक्षणकं ज्ञानमुत्पद्यते । किन्तु ज्ञानप्रतिबन्धकपापक्षयाख्यासाधारणप्रयोजकादपीत्युच्यते लभन्त इति । क्षीणकल्मषाः क्षीणपापाः

भूत्वा छिन्नद्वैधायतात्मानः छिन्नं विनष्टं द्वैधाभावो द्वैधं विषयापेक्षयाऽन्यप्रकारत्वम् अयथार्थत्वमिति यावत्। तेन तद्वज्ज्ञानं संशयो विपर्ययश्च लक्ष्यते। तद्येषां ते तथा, आयतात्मानः बहुविषयमानसाः श्रवणादिना विदितवेद्याः, छिन्नद्वैधाश्च ते आयतात्मानश्च तथोक्ताः। समासेनोक्तयोरप्यर्थयोर्वुद्ध्या विविक्तयोर्हेतुमद्भावोऽत्र विवक्षितः। आयतात्मत्वात् छिन्नद्वैधा इति। क्षीणकल्मषत्वायतात्मत्व-छिन्नद्वैधत्वानां क्रमेण हेतुहेतुमद्भावे 'क्षीणपापा महाज्ञाना जायन्ते गतसंशयाः' इति भाष्ये प्रमाणमुक्तम्। छिन्नद्वैधा यतात्मानः नियतमनस इति व्यस्ते वा पदे। एतादृशा ऋषयः ज्ञानिन निर्वाणम् अप्राकृतदिव्यविग्रहं भगवन्तं लभन्ते उपलभन्ते साक्षात्कुर्वन्ति। ज्ञानप्रतिबन्धकपा-पक्षयाख्यम् असाधारणकारणं कार्यस्य ज्ञानस्य लक्षणं भवत्येवेति, अस्य श्लोकस्य ज्ञानिलक्षण-प्रपञ्चनपरत्वं युक्तम् ॥ २५ ॥

**भावदीपिका (श्री.टि.)**– ॥ **तद्वदिति** ॥ लक्षणाबीजसम्बन्धोपपादनाय विषयापेक्षयाऽन्य-प्रकाररूपायथार्थज्ञानं द्वैधा, तस्य भावोऽयथार्थज्ञानत्वं द्वैधम्, तद्वज्ज्ञानमित्यर्थः ॥ **चार्थ इति** ॥ तथाच समुच्चयार्थक एव चशब्दः, न विकल्पार्थ इत्यर्थः। प्रमाणेऽपि द्वैधशब्देन तद्वदेव ग्राह्यमिति द्रष्टव्यम् ॥ **अशुद्धेति** ॥ 'केशान् करोतीत्यादौ शोधनेऽपि करोतेः प्रयोगात्' इति ऊर्ध्वमूलाध्याये 'यतन्तोऽप्यकृतात्मान' इत्यत्र वक्ष्यमाणत्वादिति भावः ॥ २५-२६ ॥

**भावप्रकाशः (कृ.टि.)**– नन्वात्मनोऽनादित्वात् सर्वेऽप्यकृतात्मानः। तत्किम् अकृतात्म-नामिति विशिष्योच्यत इत्यत आह– **अशुद्धबुद्धीनामिति** ॥ **अनेकार्थत्वादिति** ॥ आयतिः संयमे दैर्घ्ये प्रभवागामिकालयोरिति विश्वोक्तेर्भावे क्तिन्नन्तस्याङ्पूर्वस्य यमेरनेकार्थत्वे कर्त्रर्थप्रत्ययान्त-स्यायतशब्दस्याप्यनेकार्थत्वम्। 'आत्मादेहमनोब्रह्मस्वभावधृतिबुद्धिषु' इति विश्वोक्तेरात्म-शब्दस्याप्यनेकार्थत्वमिति भावः। नन्वायतात्मान इत्यनेन कथं सर्वज्ञत्वलाभ इत्यत आह– **बहुविषयत्वमिति** ॥ दैर्घ्यवाचकायतशब्देनेति शेषः। ननु श्रवणादिकर्तॄणां साधकानां सर्वज्ञत्वं विरुद्धमित्यत आह– **श्रवणादिनेति** ॥ २५ ॥

**कामक्रोधवियुक्तानां यतीनां यतचेतसाम्।**
**अभितो ब्रह्म निर्वाणं वर्तते विदितात्मनाम्॥ २६ ॥**

श्लोकः २६

# भाष्यम्

**सुलभं च तेषां ब्रह्मेत्याह– कामक्रोधेति ।। अभितः सर्वतः ।। २६ ।।**

भावप्रदीपिका (प.टी.)– न केवलं ते लभन्त इत्येव, किन्तु कारुण्यात् सर्वकालदेशेषु ब्रह्म लभ्यमित्यभिप्रायेण उत्तरश्लोकमवतारयति– **सुलभं चेति** ।। किं तत् सौलभ्य-वाचि-पदमित्यत आह– **अभित इति** ।। २६ ।।

भावप्रकाशिका (न.टी.)– क्षीणकल्मषत्वादिविशेषणचतुष्टयवन्त प्राकृतविग्रहा ब्रह्म लभन्त इत्युक्तम् । अथ नैतावदेव । किन्तु ते तत्सुखेन लभन्त इति विशिनष्टीति भावेनोत्तरं श्लोकमवतारयति– **सुलभं चेति** ।। सौलभ्यवाचिपदमुपपादायन् व्याचष्टे– **अभित इति** ।। प्रायः सर्वत्र सर्वदा स्वप्रयत्नं विना स्वयमेव कृपया तन्मनोगोचरो भवतीत्यर्थः ।। २६ ।।

प्रमेयदीपिका (ज.टी.)– 'यतीनां सर्वं ब्रह्मतयैव प्रतीयते' इत्यन्यथाप्रतीतिनिरासायाह– **सुलभं चेति** ।। न केवलमुक्तलक्षणा इति चार्थः । इदं चासाधारणधर्मत्वाज्ज्ञानिलक्षणं भवत्येव । सौलभ्यवाचि किमप्यत्र न प्रतीयत इत्यतस्तदुपादाय व्याचष्टे– **अभित इति** ।। सर्वदेशकालेष्वित्यर्थः ।।

भावदीपः (रा.टि.)– ।। **उक्तलक्षणा इति** ।। योऽन्तःसुखः इत्यादिनोक्तलक्षणा इत्यर्थः । ज्ञानिलक्षणं प्रपञ्चयत्युत्तरश्लोकैः इति प्राक्तनभाष्यकथनायाः सङ्घटनायाह– **इदं चेति** ।। सर्वदेशकालेषु सुखेन ब्रह्मलब्धित्वमित्यर्थः ।। २६ ।।

भावरत्नकोशः (सु.टि.)– ।। **उक्तलक्षणा इति** ।। ज्ञानिनो न केवलं 'योऽन्तःसुखः' इत्याद्युक्तान्तःसुख इत्यादिलक्षणकाः । किन्तु सर्वदेशकालेषु सुखेन ब्रह्मलब्धिमन्तश्चेति भावेन भाष्ये चशब्दः प्रयुक्त इत्यर्थः । ननु 'ज्ञानिलक्षणं प्रपञ्चयत्युत्तरैः' इत्युक्तम् । न चास्य श्लोकस्य ज्ञानिलक्षणप्रपञ्चनार्थत्वम् प्रतीयते ? इत्यत आह– **इदं चेति** ।। सर्वदेशकालेषु ब्रह्मलब्धिमत्त्व-मित्यर्थः । **असाधारणेति** । न ह्यज्ञानिनो ब्रह्म सुलभमिति भावः । **तत् सौलभ्यवाचिपदम्** । सर्वशब्दात्सप्तम्यर्थे तसिरिति भावेनाह– **सर्वदेशकालेष्विति** ।। यो यत्र यत्र देशे सञ्चारार्हः तत्र तत्र देशेषु कालेषु च तस्य सुलभं ब्रह्मेति भावः ।

श्लोकः २७,२८

न केवलं ज्ञानिनः 'योऽन्तःसुखः' इत्याद्युक्तान्तःसुखत्वादिलक्षणकाः । किन्तु सर्वदेशकालेषु सुखेन ब्रह्मलब्धिमन्तश्चेत्युच्यते– **कामक्रोधेति** ॥ कामक्रोधाभ्यां हीनानां क्षीणसकलकल्मषाणां यतीनां प्रयत्नवतां यतचेतसां नियतमनसां विदित आत्मा परमात्मा यैस्तेषां ज्ञानिनां निर्वाणम् अप्राकृतविग्रहं ब्रह्म अभितः सर्वदेशकालेषु वर्तते रक्षकत्वेनोपलब्धिविषयत्वेन चेति योज्यम् । तथा चोक्तं प्राचीनटीकायाम् 'प्रायः सर्वत्र सर्वदा स्वप्रयत्नं विना स्वयमेव कृपया तन्मनोगोचरो भवति' इति । सर्वदेशकालेषु ब्रह्मलब्धिमत्त्वं चासाधारणधर्मत्वाद् ज्ञानिलक्षणं भवत्येवेति युक्तमस्यापि श्लोकस्य ज्ञानप्रपञ्चनपरत्वमिति ॥ २६ ॥

**भावप्रकाशः (कृ.टि.)–** अस्य ज्ञानिलक्षणप्रपञ्चार्थत्वाभावादुक्तविरोध इत्यत आह– इदं चेति ॥ २६ ॥

**स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।**
**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥**

**भावरत्नकोशः (सु.टि.)– गीताश्लोकार्थस्तु** ब्रह्मयोगादिपदेन प्रकृतध्यानप्रकार उच्यते– **स्पर्शानिति ।** स्पृश्यन्त इति स्पर्शाः शब्दाद्या विषयाः । तेषाम् आत्मस्वरूपसुखाभिभावकत्वाद् बाह्यत्वम् । बाह्यान् स्पर्शान् बहिः श्रोत्रादीन्द्रियाविषयान् कृत्वा प्रत्याहारेण श्रोत्रादीन्द्रियाणि नियम्येति यावत् । श्रोत्रादीनामनियमे पद्वभ्यासादप्रत्ययवशाच्छब्दाद्या आन्तरा इव भवन्ति । तन्नियमे तु बाह्याः बहिष्कृताः स्युरिति तन्नियमो ध्यानाङ्गमिति भावः । भ्रुवोरन्तरे मध्ये एव चक्षुः चाक्षुषमवलोकनं कृत्वा 'दिशश्चानवलोकयन्' इति वक्ष्यमाणत्वात् भ्रूममध्यमेवावलोकयन्नित्यर्थः । तेन 'चक्षुरन्तरे भ्रुवोः कृत्वा' इति दुर्घटमिति चोद्यं निरस्तम् । 'सम्प्रेक्ष्य नासिकाग्रं स्वम्' इति षष्ठे वक्ष्यमाणविरोधस्तु 'नासाग्रे वा भ्रुवोर्मध्ये ध्यानी चक्षुर्निधायपयेत्' इति भाष्ये वैकल्पिकत्वेन निरस्तः । तथा प्राणापानौ नासाभ्यन्तरचारिणौ समौ निर्विकारौ निश्चलौ कृत्वा, कुम्भकप्राणायामे स्थापयित्वेति यावत् ॥ २७ ॥

**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।**
**विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २८ ॥**

श्लोकः २७,२८

## भाष्यम्

**ध्यानप्रकारमाह– स्पर्शानित्यादिना ॥ बाह्यान् स्पर्शान् बहिः कृत्वा । श्रोत्रादीनि योगेन नियम्येत्यर्थः । चक्षुर्भ्रुवोरन्तरे कृत्वा भ्रुवोर्मध्यमवलोकयन्नित्यर्थः ॥ उक्तं च– 'नासाग्रे वा भ्रुवोर्मध्ये ध्यानी चक्षुर्निधापयेत्' इति । प्राणापानौ समौ कृत्वा कुम्भके स्थित्वेत्यर्थः ॥ २७,२८ ॥**

भावप्रदीपिका (प.टी.)– 'ब्रह्मभूत'पदेन यद्व्याख्यानमुक्तम्, तत्प्रकारप्रदर्शनपरतयोत्तरश्लोकद्वयमवतारयति– **ध्यानेति** ॥ 'स्पर्शान्' इत्येतत् 'विषयांस्त्यक्त्वा' इत्यन्यथप्रतीतिनिरासाय व्याचष्टे– **बाह्यानिति** ॥ इन्द्रियानियमने विषयदूरीकरणमात्रेण न प्रयोजनमित्यभिप्रायः । चक्षुपोः भ्रूमध्यस्थत्वं कथमित्यत आह– **चक्षुरिति** ॥ नानेन 'सम्प्रेक्ष्य नासिकाग्रम्' इत्यस्य विरोध इत्यभिप्रायेणाह– **उक्तं चेति** ॥ 'प्राणापानौ' इत्यस्यान्यथाप्रतीतिनिरासार्थमाह– **प्राणेति** ॥ २७ ॥

भावप्रकाशिका (न.टी.)– सोऽयं समाधिर्नाम । ध्यानं तु ध्यातृप्रयत्नात् । तच्च किदृशं कार्यमित्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे– **ध्यानप्रकारमिति** । **योगेन** उपायेन । कुम्भवदुच्छ्वासनिःश्वासरहितं केवलं वायुपूरणं कं शिरो यस्य शरीरस्य कृतं तत् कुम्भकम् । तत्र स्थित्वेत्यर्थः ॥ २७ ॥

प्रमेयदीपिका (ज.टी.)– ध्यायिनां मुक्तत्वं साक्षाच्चेत् प्रमाणविरोधः । ज्ञानद्वारा चेत् पुनरुक्तिरित्यतः श्लोकद्वयतात्पर्यमाह– **ध्यानेति** ॥ मुक्त एव सः (५.२८) इति स्तुतिरिति भावः । पदानां व्यवहितत्वादन्वयमाह– **बाह्यानिति** ॥ स्पृश्यन्त इति स्पर्शा शब्दाद्याः । स्पर्शा बाह्या एव । तेषां किं बहिष्करणम्? इत्यत आह– **श्रोत्रादीनीति** ॥ योगेन प्रत्याहारेण । श्रोत्रादीनाम् अनियमे पद्वभ्यासाऽदरप्रत्ययवशाच्छब्दाद्या अन्तरा इव भवन्ति । तन्नियमे तु बाह्या बहिष्कृताः स्युरिति भावः । कृत्वा इत्यस्यानुवृत्त्या योजयति– **चक्षुरिति** ॥ दुर्घटमेतदित्यत आह– **भ्रुवोरिति** ॥

चक्षुर्वृत्तौ चक्षुःशब्द इत्यर्थः ॥ 'सम्प्रेक्ष्य नासिकाग्रं स्वम्'इति वक्ष्यमाणविरोध इत्यत आह– **उक्तं चेति** ॥ 'न्यूनाधिकभावराहित्यं समीकरणम्' इत्यन्यथप्रतीतिनिरासायाऽनूद्य

**व्याचष्टे– प्राणेति ॥ कुम्भके प्राणायामे । ततश्च समौ निर्विकारौ निश्चलावित्यर्थः । इतरत्समीकरणं कुम्भकार्थमेवेति भावः ॥ २७,२८ ॥**

**भावदीपः (रा.टि.)– ॥ प्रमाणेति ॥** 'दृष्ट्वैव तं मुच्यते' इत्यादि प्रमाणेत्यर्थः । **पुनरुक्तिरिति ॥** स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते इत्येवं ध्यानादेर्ज्ञानद्वारा अक्षयसुखहेतुत्वोक्तेरिति भावः । गीतापदस्य निष्कृष्यार्थमाह– **ततश्चेति ॥** तस्यैवार्थः– **निश्चलाविति ॥ इतरदिति ॥** न्यूनाधिकराहित्यरूपम् ॥ २७.२८ ॥

**भावरत्नकोशः (सु.टि.)– ॥ ध्यायिनामिति ।** यद्यपि गीतायां 'मुनिः' इत्याद्येकवचनश्रवणाद् अत्रापि 'ध्यायिनः' इति वक्तव्यम् । तथापि 'तद्बुद्धयः' इत्यत्र बहुवचनश्रवणात् तत्रोक्तानामेवात्र 'मुक्त एव सः' इति स्तूयमानत्वाद् बहुवचनं प्रयुक्तम् । अत एव 'ज्ञानद्वारा चेत् पुनरुक्तिः' इत्याह । उक्तवाक्याग्रहणे ज्ञानद्वारा ध्यानस्य मोक्षहेतुत्वप्रतिपादनपरवाक्यान्तराभावात् पुनरुक्त्युद्घाटनायोग इति बोद्धव्यम् । 'मुनिर्मुक्तः' इत्याद्येकवचनं तु समुदायाशयमिति भाव इति आहुः ।

**प्रमाणेति ।** 'दृष्ट्वैव तं मुच्यते' इत्यादिप्रमाणविरोध इत्यर्थः । **पुनरुक्तिरिति ।** 'स ब्रह्मयोगयुक्तात्मा सुखमश्नुते' इत्यत्र ध्यानादियुक्तस्यैव ज्ञानद्वाराऽत्मसुखमक्षयम्, नान्यथेति ध्यानादियोगस्याक्षयसुखहेतुत्वोक्तेः पुनरुक्तिरिति स्वामिनः ।

'स्पर्शान् इत्यादिना' इत्यत्रादिपदसङ्ग्राह्योक्तिः– **श्लोकद्वयेति ।** ध्यायिनोऽमुक्तस्य 'कथं मुक्त एव सः' इति मुक्तत्वमुच्यत इत्यत आह– **मुक्तमेवेति ॥** स्तुतावधिकोक्तिः सम्भवतीति हृदयम् । एतेन 'ध्यायिनां मुक्तत्वं साक्षाच्चेत् प्रमाणविरोधः' इति दूषणम् अलग्नकं वेदितव्यम् । ननु भाष्ये योगशब्देन यदि कर्मयोगो विवक्षितः, तदा श्रोत्रादिनियमनस्य प्रत्याहारादिसाधनान्तरसाध्यत्वेन कर्मयोगसाध्यत्वाभावाद् बाधः ॥ यदि समाधिः, तदाऽपि तस्य श्रोत्रादिनियमनस्य साध्यत्वेन तत्साधनत्वाभावाद् बाध एवेत्यत आह– **प्रत्याहारेणेति ॥** बाह्यानामेव तेषां बहिष्करणं नाम किमिति कृतचोद्यपरिहाराय भाष्यभावमाह– **श्रोत्रादीनामिति ॥ पट्वभ्यासादरप्रत्ययवशादिति ।** अनादिकालानुबद्धत्वाच्छब्दादिविषयेषु श्रोत्रादीनां पटुः अभ्यासः आवृत्तिः परिचयः, आदरः तत्र सम्प्रीतिः, केषुचिद्विषयेषु तात्कालिकात्यल्पसुखानुकूलत्वानुभवात् प्रत्ययः

श्लोकः २७,२८

विश्वासश्च, तदायत्तत्वादित्यर्थः । तन्नियमे श्रोत्रादीन्द्रियनियमे बाह्याः स्वभावतः बहिष्कृताः आन्तरत्वाध्यासागोचराः । **योजयति** द्वितीयपादम् । एतत् भ्रुवोरन्तरे चक्षुषः करणम् । चक्षुर्वृत्तौ चक्षुर्जन्यावलोकने ।

**वक्ष्यमाणविरोधः** यतः 'चक्षुश्चैवान्तरे भ्रुवोः' इत्यस्य भाष्ये 'चक्षुः' इत्यस्यावलोकनम् अर्थः । वैकल्पिकत्वान्न विरोध इति भावः । **राहित्यम्** राहित्यापादनम् । 'अल्पः कुम्भः कुम्भकः' इत्यादिप्रतीतिनिरासाय 'कुम्भकः' इत्यनूद्यार्थमाह– **कुम्भक इति** ।। तथा च तन्त्रसारे–

'रेचकः पूरकश्चैव कुम्भकश्च त्रिधा स्मृतः ।
प्राणायामः ..........................................।।' इति ।

एतावता किन्नाम समीकरणमुक्तमित्यत आह– **ततश्चेति** ।। कीदृशं निर्विकारत्वमित्यत-स्तद्दर्शयति– **निश्चलाविति** ।। ननु रेचके पूरके च प्राणायामे प्राणापानयोः समीकरणमस्ति । तन्त्रसारे–

'द्विगुणोत्तरं रेचकादि षोडशादिक्रमेण तु ।
मात्राणां ह्रस्ववर्णस्य कालो मात्रेति शब्द्यते ।
क्रमेणैवाभ्यसेन्मात्रावृद्धिमेकाग्रधीः पुनः ।।'

इति षोडशद्वात्रिंशदादिसङ्ख्याया अन्यूनानतिरिक्तायाः समशब्दार्थत्वावेदनात्, अत्र च तस्यैव समीकरणशब्दार्थत्वसम्भवेन तस्यैव 'प्राणापानौ समौ कृत्वा' इत्यत्रापि ग्रहणमस्त्वित्यत आह– **इतरदिति** ।। निश्चलत्वरूपसमीकरणादितरत् । न्यूनाधिकभावराहित्यरूपसमीकरणं कुम्भक-प्राणायामनिष्पादनार्थमेव शास्त्रे विहितम् । कुम्भकप्राणायाम एव तु प्रकृतध्यानोपयोगीति भावः । तथा चतुर्थाध्याये 'अपाने जुह्वति प्राणम्' इति गीताभाष्यव्याख्यानटीका 'पूरकरेचकयोः कुम्भ-कार्थत्वेन पृथक् प्राणायामत्वाभावाच्च' इति ।।

**गीताश्लोकाक्षरार्थस्तु** - यतेन्द्रियमनोबुद्धिः नियतानीन्द्रियाणि मनो बुद्धिश्च यस्य स तथोक्तः । मुनिः मननशीलः । मोक्षः परम् अयनं परा गतिर्यस्य स मोक्षपरायणः । विगता इच्छा भयं च क्रोधश्च यस्मात्स विगतेच्छाभयक्रोधः । 'सदा' इति सर्वत्रान्वेति । भवेत् । एवम्भूतो यः

साधकः स मुक्त एवेति स्तुतिः । एवं ध्यानं ज्ञानद्वारा मुक्तिहेतुत्वाद् अवश्यं आपादनीयमिति स्तुतितात्पर्यमिति ॥ २८ ॥

**भावदीपिका (श्री.टि.)–** ॥ **प्रमाणेति** ॥ 'तमेवं विद्वान्' इत्यादिप्रमाणविरोध इत्यर्थः ॥ **पुनरुक्तिरिति** ॥ 'स ब्रह्मयोगयुक्तात्मा' इत्यनेनेत्यर्थः ॥ **स्तुतिरिति** ॥ स्तुतौ चाधिकोक्तिर्दुष्टेति भावः ॥ **व्यवहितत्वादिति** ॥ कृत्वा वहिःपदाभ्यामित्यर्थः । **प्रत्याहारेण** 'विषयेभ्य' इति शेषः ॥ **पद्विति** ॥ इन्द्रियाणां विषयेषु पटुतराभ्यासजनितो य आदरः स्नेहः पुनः पुनः सन्निकर्षरूपः, तज्जातानुभवजन्यसंस्कारवशादित्यर्थः । बाह्या इत्यस्यार्थः– **वहिष्कृता इति** ॥ संस्काररूपेण हृदि न परिवर्तन्त इत्यर्थः ॥ **दुर्घटमिति** ॥ चक्षुरिन्द्रियस्य स्वगोलकस्थितस्य भ्रूमध्ये स्थापनं दुर्घट-मित्यर्थः । अयमर्थो गीतागतचक्षुःशब्देन कथं लब्ध इत्यत आह– **चक्षुर्वृत्ताविति** ॥ चक्षुर्जन्यज्ञाने इत्यर्थः । तथा च 'चक्षुर्जन्यज्ञानं भ्रुवोरन्तरे कृत्वा' इति गीतार्थो द्रष्टव्यः ॥ **वक्ष्यमाणविरोध इति** ॥ भ्रूमध्यावलोकनाङ्गीकारे नासाग्रावलोकनप्रतिपादकवक्ष्यमाणगीतावचन विरोधः स्या-दित्यर्थः ॥ **इत्यत आहेति** ॥ तथा च नासाग्रावलोकननिषेधो न दोष इति भावः । भ्रूमध्य-नासाग्रावलोकनप्रतिपादनस्य दिशामनवलोकन एव तात्पर्यं मन्तव्यम् । तथा च वक्ष्यति 'दिशश्चानवलोकयन्' इति ॥ **प्राणायाम इति** ॥

> प्राणायामो रेचयित्वा पूरयित्वा च कुम्भके ।
> स्थितिः प्राणायाम उक्तः ........... ॥ इति तन्त्रसारोक्तेरिति भावः ॥

**ततश्चेति** ॥ प्राणापाननिरोधेन कुम्भकेऽवस्थानादित्यर्थः । ननु न्यूनाधिकभावराहित्यमेव समीकरणं किं न स्यादित्यत आह– **इतरदिति** ॥ रेचकपूरकयोः कुम्भकार्थत्वेनामुख्यत्वात्, कुम्भकस्यैव मुख्यत्वात्, मुख्यस्यैव ग्राह्यत्वादिति भावः ॥ २७.२८ ॥

**भावप्रकाशः (कृ.टि.)–** ॥ **ध्यायिनामिति** ॥ यद्यपि व्याख्येयगीतायां मुनिरित्याद्येक-वचनाद् ध्यायिन इति वक्तव्यम् । तथाऽपि तद्बुद्धय इत्यत्र बहुवचनश्रवणात् तदुक्तानामेव चात्र स्तूयमानत्वात् ध्यायिनामिति बहुवचनं प्रयुक्तम् । अत एवाह– **ज्ञानद्वारा चेत् पुनरुक्तिरिति** ॥ अन्यथा ध्यानस्य ज्ञानद्वारा मोक्षहेतुत्वप्रतिपादकवाक्यान्तराभावात् पुनरुक्त्ययोग इति बोध्यम् । मुक्त इत्याद्येकवचनं समुदायाभिप्रायमिति भावः । ननु योगशब्देन यदि कर्मयोगो विवक्षितः तदा

बाधः । श्रोत्रादिनियमस्य प्रत्यहारादिसाधनान्तरसाध्यत्वेन कर्मयोगसाध्यत्वाभावात् । यदि च समाधिः तदापि तस्य श्रोत्रादिनियमसाध्यत्वेन तत्साधनत्वाभावाद्बाध एवेत्यत आह– **प्रत्याहारेणेति** ॥ **पट्वभ्यासादरप्रत्ययवशादिति** ॥ पटुः योऽभ्यासः तस्यादरोऽतिशयः तत्प्रत्ययवशादित्यर्थः। यद्वा सकृदेवोत्पन्नो विद्युदादिप्रत्ययः पटुप्रत्ययः कण्डिकादिप्रत्ययोऽभ्यासप्रत्ययः अद्भुतप्रत्यय आदरप्रत्ययः तद्वशादित्यर्थः । अल्पः कुम्भः कुम्भक इत्याद्यन्यथाप्रतीतिनिरासाय व्याचष्टे– **कुम्भके प्राणायाम इति** ॥ २७,२८,२९ ॥

॥ इतिश्रीमत्तिरुमलाचार्यसुतकृष्णविरचितायां प्रमेयदीपिकाभावप्रकाशे पञ्चमोध्यायः ॥

## भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
## सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९ ॥

॥ ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मसन्यासयोगो नाम पञ्चमोऽध्यायः ॥ ५ ॥

## भाष्यम्

**ध्येयमाह– भोक्तारमिति ॥ २९ ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये पञ्चमोऽध्यायः ॥ ५ ॥

भावप्रदीपिका (प.टी.)– ध्यानस्य ध्येयसापेक्षत्वात् किं ध्येयमित्याशङ्क्य, उत्तरश्लोकमवतारयति– **ध्येयमिति** । 'ज्ञात्वा' इत्यस्य ध्यात्वेत्यर्थः ॥ २९ ॥

॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचितश्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां पञ्चमोऽध्यायः ॥

भावप्रकाशिका (न.टी.)– ध्यानस्य ध्येयसापेक्षत्वात् तमुत्तरश्लोकेनाचष्टे, न ज्ञेयमात्रमिति भावेनाह– **ध्येयमिति** ॥ ध्यानं नाम निरन्तरमेकविषयः ज्ञानसन्तानः । ततश्च 'ज्ञात्वा माम्' इत्यस्य ध्यात्वा मामित्यर्थ उक्तो भवति ॥ २९ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां
श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां पञ्चमोऽध्यायः ॥

श्लोकः २९

**प्रमेयदीपिका (ज.टी.)– भगवज्ज्ञानस्य शान्तिसाधनत्वं पुनः किमर्थमुच्यते? इत्यत आह– ध्येयमिति ॥ ततश्च ज्ञात्वा इत्यस्य 'ध्यात्वा' इत्यर्थः । शान्तिसाधनज्ञानत्वमपि भोक्तृत्वादिवद् ध्येयविशेषणमेवेति भावः ॥ २९ ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥**

**भावदीपः (रा.टि.)–** नन्वेवमपि 'ध्यात्वा शान्तिमृच्छति' इति ध्यानफलमेव प्राप्तम् , नतु ध्येयमहिमेत्यत आह–**शान्तिसाधनज्ञानत्वमपीति** ॥ २९ ॥

**॥ इति श्रीमद्गीताभाष्यटीकाभावदीपे राघवेन्द्रयतिकृते पञ्चमोऽध्यायः ॥**

**भावरत्नकोशः (सु.टि.)– ॥ पुनरिति ॥** 'स शान्तिमाप्नोति न कामकामी', 'निर्ममो निरहङ्कारः स शान्तिमधिगच्छति' इति द्वितीये, 'श्रद्धावान् लभते ज्ञानं मत्परः संयतेन्द्रियः । ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति' इति चतुर्थे च भगवद्ध्यानस्य शान्तिसाधनत्वमुक्तमिति 'पुनः' इत्युक्तम् । ध्येयं ध्यानकर्माहेति भाषितम् । न चात्र ध्यानवाचकं पदमस्ति इत्यत आह– **ततश्चेति ॥** ध्यानं नाम निरन्तर एकविषयकज्ञानसन्तानः । ततश्च 'ज्ञात्वा' इत्यस्य 'ध्यात्वा' इत्यर्थो युक्त एवेति भावः । नन्वेवं सति 'मां ध्यात्वा शान्तिमृच्छति' इति ध्यानस्य मोक्षफल-कत्वमुक्तं स्यात् । तदयुक्तम् । तस्य ज्ञानसाध्यतायाः 'तमेवं विद्वानमृत इह भवति' , 'दृष्ट्वैव तं मुच्यते नापरेण' विद्यैव तु निर्धारणात्' इत्यादौ स्थितत्वात् । अतो 'ज्ञात्वा माम्' इति यथाश्रुतमेव साधु । तथा च सङ्करः 'समाहितचित्तेन विज्ञेयमत्रोच्यत इति' इत्यत आह– **शान्तिसाधनत्वमपीति ॥** 'चक्षुश्चैवान्तरे भ्रुवोः' इत्यादि ध्यानाङ्गोक्त्या, 'अथेदानीं ध्यानयोगं सम्यग्दर्शनस्यान्तरङ्गं विस्तरेण भगवानुपदिशति' इति सङ्करेण भाषितत्वेन च ध्यानस्य प्रकृतत्वात्, तस्य च ध्येयसापेक्षत्वेन ध्येयविशेषणोक्तेरुचितत्वाच्छान्तिपदेनोक्तं शान्तिसाधनत्वं ध्येयविशेषणमिति युक्तं 'ध्येयमाह' इति भाष्यमिति भावः ॥ २९ ॥

**गीताक्षरार्थस्तु** - उक्तध्यानस्य ध्येयसापेक्षत्वादत्र ध्येयमुच्यते– **भोक्तारमिति** । यज्ञतपसाम् 'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः' इत्यादिशास्त्रोक्तानाम् अग्निहोत्रादियज्ञानाम्, तपसाम् कृच्छ्रचान्द्रायणादिरूपाणां च भोक्तारं सर्वलोकमहेश्वरं सर्वेषां

श्लोकः २९

लोकानां महान्तमीश्वरं सर्वभूतानां सुहृदं प्रत्युपकारानपेक्षयोपकारिणं शान्तिं मोक्षसाधनं मां भगवन्तं ज्ञात्वा ध्यात्वा ऋच्छति साक्षात्करोतीति ॥ २९ ॥

श्रीमद्गीताभाष्यटीकापञ्चमाध्यायसेवया ।
गुणिनः परितुष्यन्तु गुणग्रहणभूषणाः ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सुरेन्द्रतीर्थपूज्यपादशिष्यश्रीमत्सुमतीन्द्रभिक्षुविरचितायां श्रीमद्भगवद्गीताभाष्यटीकाव्याख्यायां भावरत्नकोशसमाख्यायां पञ्चमोऽध्यायः ॥

**भावदीपिका (श्री.टि.)**– ननु 'ज्ञात्वा माम्' इत्यनेन ज्ञेयमेवोच्यते, न ध्येयमित्यत आह– **ततश्चेति ॥** ध्येयप्रतिपादकत्वादेवेत्यर्थः । नन्वनेन श्लोकेन ध्येयं कथं प्रतिपाद्यते? 'ज्ञात्वा मां शान्तिमृच्छति' इत्यस्यांशस्य भोक्तृत्वादिवद् ध्येयविशेषणत्वासम्भवेन ध्येयस्वरूपाप्रतिपादकत्वा-दित्यत आह– **शान्तिसाधनज्ञानत्वमपीति ॥** मोक्षसाधनध्यानविषयत्वमपीत्यर्थः ॥ २९ ॥

इति यदुवरगीताभाष्यटीकासु युक्ता-
शयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराट्छात्रचीर्णा
समगमदयमस्यां पञ्चमोऽध्याय अन्तम् ॥

॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां श्रीमद्भगवद्गीताभाष्यटीकाविवृतौ भावप्रदीपिकाख्यायां पञ्चमोऽध्यायः ॥

## ।। षष्ठोऽध्यायः ।।

**श्रीभगवानुवाच—**

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स सन्न्यासी च योगी च न निरग्निर्न चाक्रियः ।। १ ।।**

## भाष्यम्

**ज्ञानान्तरङ्गं समाधियोगमाहानेनाध्यायेन । विवक्षितं सन्न्यासमाह— योगेन सह— अनाश्रित इति ।। चतुर्थाश्रमिणोऽप्यग्निः क्रिया चोक्ता दैवमेव (४-२५) इत्यादौ । 'अग्निर्ब्रह्म च तत्पूजा क्रिया न्यासाश्रमे स्मृता' इति च । तस्मात् निरग्निरक्रियः सन्न्यासी योगी च न भवत्येव ।। १ ।।**

भावप्रदीपिका (प.टी.)— एतदध्यायार्थं दर्शयति— **ज्ञानेति** । आद्यपट्कस्य प्राधान्येन साधनपरत्वात्, साधनेपु च ध्यानयोगस्य मुख्यत्वादसावेव कथ्यत इत्यर्थः । समाधियोगश्च सर्वकर्मप्रहाणे शनैर्भवतीति मन्दाशङ्कानिवारकतयाऽऽद्यश्लोकमवतारयति— **विवक्षितमिति** । निप्कामकर्मिणामेव योगित्वात् संन्यासित्वाच्च तेपामेव समाधियोगो न निरग्नेरक्रियस्यापीत्यर्थः । यतीनामग्न्याद्यभावात् कथं 'न निरग्निः' इत्याद्युच्यत इत्यत आह— **चतुर्थेति** । चतुर्थाश्रमिणोऽप्यग्न्यादिसद्भावो यस्मात् तस्मात् 'न निरग्निः' इति युक्तमेवेत्याह— **तस्मादिति** ।। १ ।।

भावप्रकाशिका (न.टी.)— प्राधान्येन साधनप्रतिपादनपर आद्ये पट्के पूर्वाध्यायोक्तज्ञानादिसर्वसाधनसापेक्षत्वात् स्वयमपरोक्षज्ञानान्तरङ्गत्वाच्च पष्ठ एव समाधियोगः प्रतिपादनीय इति भावेनाध्यायार्थमाह— **ज्ञानान्तरङ्गमिति** । अत्र केचिदाहुः । यावद्यावत्कर्मभ्य उपरमते तावत्तावन्निरायासस्य जितेन्द्रियस्य चित्तं समाधीयत इति समाधियोगः सर्वकर्मसंन्यासिनः चतुर्थाश्रमिण एव घटते । न तु यः पूर्वाध्यायविवक्षितः संन्यासः कर्मयोगसहितः, तद्वतः । तस्य चित्तसमाधानविरोधित्वादिति । तन्निराकरोतीति भावेनाद्यं श्लोकमवतारयति— **विवक्षितमिति** । समाधियोगवतोऽपि पूर्वाध्यायविवक्षितं कर्मयोगसहितं कामसङ्कल्पत्यागादिलक्षणमेव संन्यासमाह। न तु सर्वकर्मसंन्यासमित्यर्थः ।

श्लोकः १

तथाहि श्लोकार्थः । 'अनाश्रितः कर्मफलम्' इति यः पूर्वाध्यायोक्तः कामसङ्कल्पादित्यागवान् संन्यासीत्युच्यते । कार्यं कर्म करोतीति यस्तत्रोक्तः कर्मयोगी च, स एव चतुर्थाश्रमवान् समाधियोगवांश्च । यस्तु निरग्निरक्रियश्च स न चतुर्थाश्रमी । विहितपरित्यागेनेश्वरप्रकोपवान्, न समाधियोगवांश्चेति । ननु चतुर्थाश्रमिणो निरग्नित्वाक्रियत्वेनैव वेदादिसिद्धत्वात् कथं निरग्निरक्रियः संन्यासी योगी च न भवति ? इत्यत आह– **चतुर्थेति** । 'दैव'शब्दोक्तब्रह्मोपासनं यथा यज्ञो भवति तथोपासत इति व्याख्यातत्वाद्ब्रह्मैवाग्निः, तदुपासनं क्रियेत्यर्थः । प्रकटं वाऽन्यत्रोक्तमित्याह– **अग्निरिति** । अनग्नित्वाक्रियत्वप्रसिद्धिस्तु बाह्याग्न्यभावात्, बाह्यकर्मसङ्कोचाच्च । एवमविरुद्धत्वादयमेव श्लोकार्थ इति भावेन तच्छेपं व्याचष्टे– **तस्मादिति** । एतेनैतदप्यपास्तम् । यदाह मायी 'न केवलं निरग्निरक्रिय एव संन्यासी योगी च । किन्तु फलानपेक्षया कर्मकृदपीत्यकाम्यकर्म स्तूयते' इति । अनध्याहारेण प्रतीयमानमुख्यार्थोपपत्तौ, अप्रतीयमानाध्याहारेण स्तुतिमात्रकल्पनायोगादिति भावः ॥ १ ॥

प्रमेयदीपिका (ज.टी.)– सङ्गतिं सूचयन् एतदध्यायप्रतिपाद्यमर्थमाह– **ज्ञानान्तरङ्गमिति** ॥ योगे त्विमां शृणु (२.३९) इति प्रतिज्ञाय द्वितीयषट्के वक्ष्यमाणं भगवज्ज्ञानं प्रति कर्मयोगस्य बहिरङ्गत्वात् स प्राधान्येनातीते ग्रन्थे प्रतिपादितः । तत्साध्यत्वात् ज्ञानान्तरङ्गत्वाच्च अवसरप्राप्तं समाधियोगमाहानेन षष्ठाध्यायेनेत्यर्थः ॥ आसनादीनामङ्गानां वक्ष्यमाणत्वेऽपि तेषां समाध्यर्थत्वात् प्राधान्येन समाधियोगस्य ग्रहणम् । पञ्चमान्तोक्तस्य प्रपञ्चोऽयम् इत्यदोषः ॥

'गृहस्थस्यापि स्तुत्यर्थमुपचरितं सन्न्यासित्वं योगित्वं चाऽद्येन श्लोकेनोच्यते' इति परकीयतात्पर्यकथनम् असदिति भावेनाऽह– **विवक्षितमिति** ॥ समाधियोगं विधातुं तत्राधिकारिणं ज्ञापयिष्यन् साङ्ख्याद्यभिमततदधिकारिनिरासाय तद्विशेषणं प्राग् विवक्षितं कामादिवर्जनलक्षणं सन्न्यासम् ईश्वराराधनस्वकर्मानुष्ठानलक्षणेन योगेन सह आह इत्यर्थः । यदि हि सन्न्यासो यत्याश्रमोऽत्र विवक्षितः स्यात्, योगश्च कश्चिद् गृहस्थासम्भवी स्यात् तदोपचारेण तत्स्तुतिरियम् । न चैवमिति भावः ॥

'न केवलं निरग्निरक्रियश्चतुर्थाश्रमिसन्न्यासी योगी च किन्तु अनाश्रितः इत्याद्युक्तो गृहस्थोऽपि' इति परकीयां योजनां निराकरोति– **चतुर्थेति** ॥ अत्रैव स्पष्टं वाक्यान्तरं पठति–

**अग्निरिति** ॥ चस्त्वर्थः । 'अतो न परकीया योजना युक्ता' इति शेषः । तर्हि कथमित्यत आह – **तस्मादिति** ॥ परकृतयोजनायाः निरस्तत्वात् ॥ ननु निरग्नेरक्रियस्य चतुर्थाश्रमिणोऽपि सन्न्यासित्वाद् योगित्वाच्च कथं न निरग्निः इत्याद्युक्तमित्यतो वाऽह– **चतुर्थाश्रमिणोऽपीत्यादि** ॥ न भवत्येवेति ॥ 'युक्तम्' इति शेषः । अनग्नित्वादिप्रवादश्च बाह्याग्न्याद्यभावनिबन्धन इति भावः ॥ १ ॥

भावबोधः (र.टि.)– स्पर्शान् कृत्वेति समाधेरुक्तत्वात्पुनरुक्तिदोष इत्यत आह– **पञ्चमान्त** इति ॥

भावदीपः (रा.टि.)– भाष्यमित्युपलक्षणं मत्वाऽह– **तत्साध्यत्वादिति** ॥ कर्मयोगसाध्यत्वादित्यर्थः ॥ स्पर्शान् कृत्वा (५.२७) इत्यत्र ध्यानयोगस्योक्तत्वात् पुनरुक्तिदोषमाशङ्क्याऽह– **पञ्चमान्तेति** ॥ **विधातुमिति** ॥ योगी युञ्जीत इत्यादिनेति योज्यम् ॥ **प्राग्विवक्षितमिति** ॥ ज्ञेयः स नित्यसन्न्यासी इत्यत्रेति भावः ॥ ननु कामहीनकर्मानुष्ठानं योगः, कामवर्जनं सन्न्यासः । 'योगेन सह आह' इति कथं इत्यतोऽत्र योगशब्द एकदेशपर इति भावेनाऽह– **ईश्वरेति** ॥ १ ॥

**भावरत्नकोशः (सु.टि.)– ॥ सङ्गतिं सूचयन्निति** । ज्ञानपदेन वक्ष्यमाणग्रन्थप्रतिपाद्यज्ञानरूपार्थेन योगेन चैतदध्यायार्थसमाधियोगस्य साध्यसाधनभावलक्षणां सङ्गतिं सङ्क्षेपेण ज्ञापयन्नित्यर्थः । तामेवाह **योग इत्यादिना । प्रतिज्ञाय** प्रतिपादित इति सम्बन्धः । **बहिरङ्गत्वात्** मनःशुद्ध्यादिद्वारा साधनत्वात् । तथा च आहुः 'कर्मभिः शुद्धसत्त्वस्य' इति, 'प्राचीनाचीर्णपुण्योच्चयचतुरतराचारतश्चारुचित्तान्' इति च । **तत्साध्यत्वात्** कर्मयोगसाध्यत्वात् । **ज्ञानान्तरङ्गत्वात्** भगवज्ज्ञानं प्रत्यावश्यकसाधनत्वात् **समाधियोगमिति** ।

यद्यपि तात्पर्यनिर्णये 'ध्यानमत्रोच्यते' इति ध्यानमध्यायार्थ इत्युक्तम् । तद्व्याख्यानं कृतं न्यायदीपिकायाम् ' 'योगे त्विमां शृणु' इति प्रतिज्ञातम् । योगश्च कर्मयोगो ध्यानयोगश्चेति द्वेधा भवति । तत्र सङ्क्षेपविस्तराभ्यां कर्मयोगो निरूपितः । ध्यानयोगप्रकारश्च सङ्क्षेपेण पञ्चमान्ते निरूपितः । विस्तरेणास्मिन्नध्याय उच्यते' इति । अत्र तु समाधियोगोऽध्यायार्थ उच्यते । ध्यानसमाधी च भिन्नलक्षणौ । यथोक्तं तन्त्रसारे–

श्लोकः १

'खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते ।
अप्रयत्नात्समाधिश्च ................................॥' इति ।

पञ्चमान्तप्राचीनटीकायां च 'सर्वदा सर्वत्र ध्यातृप्रयत्नं विना स्वयमेव कृपया आत्मन्यभिव्यक्तस्य भगवतो मनसाऽवलोकनं समाधिः । ध्यानं तु ध्यातृप्रयत्नसाध्यम्' इति । तथाप्यवान्तरसूक्ष्मवैलक्षण्यं अनालक्ष्योभयोरेकत्वमभिसन्धाय एवमुक्तमित्यविरोधः । तथा च 'सोपासना च द्विविधा' इत्यत्र सुधा 'ध्यानसमाध्योरनतिभिन्नत्वाद् ध्यानशब्देन समाधिरपि गृह्यते' इति । 'आसनादीनाम्' इत्यादिपदेन स्वनासाग्रावलोकनदिगनवलोकनप्रशान्तात्मत्वब्रह्मचर्यमनःसंयमनादीनां ग्रहणम् । नन्वेवं ध्यानसमाध्योरेकत्वे ध्यानयोगस्य 'स्पर्शान् कृत्वा बहिर्बाह्यान्' इति पञ्चमान्ते कथितत्वान्नात्र स वक्तव्यः, पौनरुक्त्यापत्तेरित्यत आह– **पञ्चमान्तोक्तस्येति** ॥ तत्र सङ्क्षेपेणोक्तस्यात्र विस्तरेण निरूपणान्नोक्तदोष इति भावः ।

**परकीयतात्पर्यकथनमिति** । तथा च सङ्करः 'प्रतिपन्नगार्हस्थ्यस्याग्निहोत्रादिकर्म फलनिरपेक्षमनुष्ठीयमानं ध्यानयोगारोहणसाधनत्वं सत्त्वशुद्धिद्वारेण प्रतिपद्यत इति 'संन्यासी च योगी च' इति स्तूयते' इति । **विधातुम्** 'उद्धरेदात्मनाऽत्मानमित्यनेन' इति शेषः । **तद्विशेषणं** समाधियोगाधिकारिविशेषणम् । **प्राक्** 'ज्ञेयस्स नित्यसंन्यासी' इत्यत्र । ननु कामहीनं कर्मानुष्ठानं योगः । तथा च कामवर्जनाख्यं संन्यासं योगेन सहाहेति कथमुच्यत इत्यतोऽत्र योगशब्देन तदेकदेशो गृह्यत इति भावेनाह– **ईश्वरेति** । परकीयतात्पर्यकथनस्यासत्त्वं भाष्यभावोक्त्या स्पष्टयति– **यदि हीति** ॥ स्तुतिरियम् 'इति तात्पर्यं कथनीयं स्यात्' इति शेषः ।

'न केवलं निरग्निरक्रिय एव संन्यासी योगी च, किं तर्हि ? कर्म्यपि कर्मफलासङ्गं संन्यस्य कर्मयोगमनुतिष्ठन् संन्यासी योगी च भवतीति स्तूयते' इति सङ्करभाष्यं सार्धमनुवदति– **न केवलमिति** । **अत्रैव** चतुर्थाश्रमिणोऽप्यग्निः क्रिया चास्तीत्यत्रैव । 'दैवमेव' इत्यस्योक्तार्थत्वे विप्रतिपद्यमानं प्रति वाक्यान्तरं पठतीत्यर्थः । **च इति** । 'क्रिया तु ब्रह्मपूजा' इति चशब्दस्तुशब्दार्थ इत्यर्थः । 'इति च' इत्यनन्तरं शेषमाह– **अत इति** ॥ 'चतुर्थाश्रमिणोऽप्यग्निः क्रिया चास्ति' इत्यस्य प्रमाणसिद्धत्वादित्यर्थः । कथं योजना **इत्यतो वेति** । अस्मिन् पक्षे 'तस्मात्' इत्यस्य चतुर्थाश्रमिणोऽप्यग्निक्रियासद्भावस्य प्रमाणसिद्धत्वादित्यर्थः इति भावः । तर्हि 'अनग्निरनिकेतनः'

इति, 'विशेषो निष्क्रिययतेः' इत्यादावनग्नित्वाद्युक्तिः कथमित्यत आह– **अनग्नित्वादीति** ॥ **बाह्याग्न्यादीति** । आहवनीयाद्यग्निहोत्रादिर्बाह्याग्निशब्दार्थः । आदिपदेन तदितरक्रिया ग्राह्या ॥१॥

**भावदीपिका (श्री.टि.)–**

प्रणम्य यादवाचार्यगुरूणां पदपङ्कजे ।
षष्ठाध्यायस्य टीकायाः क्रियते भावदीपिका ॥

नन्वासनादीनामङ्गानामपि वक्ष्यमाणत्वात् समाधियोगग्रहणमेव कुत इत्यत आह– **आसनादीनामिति** ॥ **समाध्यर्थत्वादिति** ॥ 'तदङ्गं धारणाकिम्' इत्युक्तत्वादिति भावः ॥ ननु पञ्चमाध्यायान्ते '**स्पर्शान् कृत्वा**' इत्यादिना समाधियोगस्योक्तत्वात् पुनरुक्तिदोषः ? इत्यत आह– **पञ्चमान्तोक्तस्येति** ॥ **विधातुमिति** ॥ 'उद्धरेत् इत्यादिना' इति शेषः । अत एव वक्ष्यति 'उद्धरेदित्यादिनैव योगो विहितः' इति । **साङ्ख्याद्यभिमतेति** । अचेतनप्रकृतेरेव स्वातन्त्र्येण कर्तृत्वज्ञानप्रकृतिपुरुषविवेकज्ञानादिमानेव ध्यानाधिकारीति साङ्ख्यैरुक्तत्वा-दित्यर्थः । तद्विशेषणम् अधिकारिविशेषणमित्यर्थः । **प्राग्विवक्षितमिति** ॥ अधिकारिनिरूप-णात् प्राग्वक्तुमिष्टमित्यर्थः । **इयम्** '**स्यात्**' इति वर्तते । **चस्त्वर्थ इति** । न्यासाश्रमेऽग्निस्तु त्रय्येत्यर्थः । ननु तर्हि अनग्नित्वादिप्रसिद्धिविरोध इत्यत आह– **अनग्नित्वादीति** ॥ १ ॥

**भावप्रकाशः (कृ.टि.)– ॥ समधियोगमिति** ॥ यद्यपि ध्यानमत्रोच्यत इति तात्पर्यनिर्णये उक्तम् । ध्यानसमाधी च भिन्नलक्षणौ । यथोक्तम्–

'खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते । अप्रयत्नात् समाधिश्चे'ति ।

तथाऽप्यनतिभिन्नत्वादविरोधः । ननु 'योगी युञ्जीत सतत'मित्यादिभिः 'योगो भवति दुःखहा' इत्यन्तैः श्लोकैरासनादीनां वक्ष्यमाणत्वात् कथं समाधियोगमाहेत्युक्तमित्यत आह– **आसनादीनामङ्गानामिति** ॥ नन्वत्रासनपदेन चैलादिकम्, आदिपदेन च विविक्तदेश-सेवित्वादिकं विवक्षितमिति मन्तव्यम् । 'योगी युञ्जीत, आत्मानं रहसि स्थितः' इत्यादिना युक्तस्वप्रावबोधस्य योगो भवति दुःखहा' इत्यन्तेन तस्यैव वक्ष्यमाणत्वात् । तथा च तन्त्रसार-विरोधः । तत्र वीराद्यासनस्य यमनियमप्राणायामानां चाङ्गत्वेनोक्तत्वात् । यथोक्तम्–

'एकं ध्यानं हरेरन्यच्चत्वार्यङ्गानि तस्य च ।
यमश्चनियमश्चासा प्राणायाम इतीरितः'
'वीरपद्मे च स्वस्तिकाद्यानि चासनमिति' । इति च

इति चेदुच्यते । अस्मिन्नेव देशे काले चेत्यादिरूपदेशकालावस्थाव्यवस्थया विना अनुष्ठेययमशब्धाभिधेयं रहसि स्थित इत्याद्युक्तम् । विविक्तदेशसेवित्वादिकं च तथात्वद्यम एव ।

नचैवम् 'अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ । यमा' इति तन्त्रसारीयपरिगणनविरोधः । परिगणनं प्रदशनार्थमिति सुधायामेवोक्तत्वात् । एवं 'शुचौ देशे' इत्यादिना चैलाद्यासनस्य वक्ष्यमाणत्वेऽपि न तन्त्रसारविरोधः । 'वीरपद्मे च स्वस्तिकाद्यानि चासन'मित्याद्यपदेनात्रोक्त-चैलादिसङ्ग्रहात् । अत्र च चैलादिग्रहणस्योपलक्षणत्वात् । एवं 'प्राणापानौ समौ कृत्वा' इति पूर्वाध्यायोक्त एव प्राणायामः 'समं कायशिरोग्रीव'मित्यादिनेत्थम्भावान्तरविधानेन विव्रियत इति प्राणायामोऽप्युक्त एव । एवं 'युक्ताहारविहारस्य' इत्यादिना वक्ष्यमाणं नियमाहार-त्वादिकमपि तपोरूपनियम एवेति नियमोऽप्यत्रोक्तः । तस्मात् तन्त्रसारोक्तयमादीनामेवात्र वक्ष्यमाणत्वान्न विरोधगन्धोऽपीति प्रतिभाति । यद्यप्येवं सति यमादीनामिति वक्तव्यम् । प्रथमातिक्रमे कारणाभावात् । तथाऽप्यासनस्य स्फुटप्रतिभासत्वादासनादीनामित्युक्तम् ।

ननु स्पर्शान् कृत्वेत्यादिना समाधेरुक्तत्वात् पुनरुक्तिरित्यत आह– **पञ्चमान्तेति** ॥ **विधातुमिति** । उद्धरेदात्मनेत्यनेनेति शेषः । परेषां तात्पर्यं दूषयति– **यदि हीति** ॥ **वाह्याग्न्याद्यभावेति** । आदिपदेन बाह्यकर्माभावग्रहणम् ॥ १ ॥

**यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।**
**न ह्यसन्न्यस्तसङ्कल्पो योगी भवति कश्चन ॥ २ ॥**

## भाष्यम्

**सन्न्यासोऽपि योगान्तर्भूत इत्याह– यं सन्न्यासमिति ॥ कामसङ्कल्पाद्य-परित्यागे कथमुपायवान् स्यादित्याशयः ॥ १ ॥**

भावप्रदीपिका (प.टी.)– यद्यपि योगसंन्यासौ द्वावप्यपेक्षितौ । तथाऽपि संन्यासो योगादवम इत्यभिप्रायेणोत्तरश्लोकमवतारयति– **संन्यासोऽपीति** । कथं सङ्कल्पमात्रत्यागः संन्यासश्च ? इत्याशङ्क्य, 'न हि' इत्यस्यार्थमाह–**कामेति** । कामोऽप्युपलक्ष्यते 'सङ्कल्प'-पदेनेत्यर्थः ॥ २ ॥

भावप्रकाशिका (न.टी.)– अधुना योगस्य प्राधान्यं वक्तुमितरस्य तदन्तर्गतत्वमाह– **संन्यासोऽपीति** । ननु सङ्कल्पत्यागमात्रात् कथं संन्यासी ? इत्याशङ्कां परिहरन् 'योगी' इति पदं व्याचष्टे– **कामेति** । कामाद्युपलक्षणार्थः सङ्कल्पशब्द इति भावः ॥ २ ॥

प्रमेयदीपिका (ज.टी.)– ननु सन्न्यासयोगौ भिन्नलक्षणौ । तत्कथं तयोरैक्यमुच्यते? इत्यत आह– **सन्न्यासोऽपीति** ॥ 'स सन्न्यासी च योगी च' इत्युक्त्या प्राप्तात्यन्तभेद-शङ्कानिवृत्त्यर्थम्' इति शेषः । 'अमुख्ययोगापेक्षया पृथगुक्तोऽपि' इत्यपेरर्थः । योगशब्देन मुख्योऽत्राभिहितः । अत एव वक्ष्यति उपायवान् इति । अन्तर्भूतत्वादैक्योक्तिः इत्यर्थः ॥

'सन्न्यासस्य योगान्तर्भूतत्वमुपपाद्यते न हि इति' । तदसत् । सङ्कल्पत्यागमात्रस्य असन्न्यासत्वात्, ईश्वराराधनार्थाय स्वकर्मकरणमात्रं योगः । तस्य सन्न्यासाभावेऽप्युपपत्तेः इत्यत आह– **कामेति** ॥ सङ्कल्पशब्दस्य कामाद्युपलक्षणत्वात्, योगशब्दस्य च ज्ञानोपाय-रूपमुख्ययोगार्थत्वान्नानुपपत्तिरिति भावः ॥ २ ॥

भावबोधः (र.टि.)– ॥ **अमुख्ययोगेति** । ईश्वरार्पणबुद्ध्या कर्मकरणमात्ररूपयोगैकदेशा-पेक्षयेत्यर्थः । **मुख्ययोगे इति** । कामादिवर्जनपूर्वकेश्वरार्पणबुद्ध्या कर्मकरणलक्षण इत्यर्थः । तथा च पूर्वोक्तयोगैकदेशे सन्यासस्यान्तर्भावासम्भवेऽपि विवक्षितेऽस्मिन् विशिष्टयोगे विशेषणभूतसन्यास-स्यान्तर्भावः सम्भवतीति भावः । **अत एवेति** ॥ यतः सन्यासान्तर्भावाधिकरणं योगो मुख्यः, अत एवान्तर्भावोपपादक 'न हि' इति गीतावाक्यगतयोगीतिपदमुपायवानिति व्याख्यास्येतीत्यर्थः । विशेष्यरूपयोगैकदेशस्य ज्ञानोपायत्वांसम्भवादिति भावः ॥ **ऐक्योक्तिरिति** । 'यं सन्यासम्' इति गीतायामित्यर्थः ॥ २ ॥

भावदीपः (रा.टि.)– ॥ **अमुख्ययोगेति** ॥ प्रागुक्तदिशा एकदेशरूपेत्यर्थः ॥ **अत्रेति** ॥ योगं तं विद्धि इत्यत्रेत्यर्थः । **ऐक्योक्तिरिति** ॥ गीतायामिति योज्यम् ॥ २ ॥

श्लोकः २

**भावरत्नकोशः (सु.टि.)– ॥ भिन्नलक्षणाविति ।** 'कामादिवर्जनं संन्यासः', 'भगवदर्पणबुद्ध्या स्वविहितकर्मानुष्ठानं योगः' इति विरुद्धधर्माधिकरणभूतावित्यर्थः । **अमुख्ययोगापेक्षयेति ।** कामादिवर्जनपूर्वकं भगवदर्पणबुद्ध्या कर्मानुष्ठानं मुख्ययोगः । ईश्वरार्पणबुद्ध्या कर्मानुष्ठानं त्वमुख्ययोगः । तदपेक्षया च 'स संन्यासी च योगी च' इति पृथगुक्त इत्यर्थः । तर्हि पृथगुक्तयोगान्तर्भावायोगात् 'योगान्तर्भूतः' इति कथं भाष्य इत्यत आह– **योगशब्देनेति ॥** कामादित्यागेन ईश्वरार्पणबुद्ध्या कर्मानुष्ठानरूपो योगो भाष्ये योगशब्देनात्राभिप्रेतः । विशिष्टे चैकदेशस्यान्तर्भावो युक्त एवेति भावः । **अत एव** योगशब्दस्य मुख्ययोगाभिप्रायकत्वादेव । **उपायवान्** ज्ञानोपायवान् । 'योगी भवति कश्चन' इति गीतास्थयोगपदस्योपायत्वेन व्याख्यानात् । ज्ञानं प्रति च मुख्ययोगस्यैव साधनत्वात् अत्र स एव ग्राह्य इति भावः । विलक्षणयोरैक्योक्तिः कथमिति कृतचोद्यं परिहर्तुमाह– **अन्तर्भूतत्वादिति ॥ ऐक्योक्तिः** 'यं संन्यासमिति प्राहुर्योगं तं विद्धि' इति गीतायाम् । गीतामवतारयति– **संन्यासस्येति ॥** भाष्ये आदिशब्दस्योपायशब्दस्य च तात्पर्यं वदन्, सङ्कल्पत्यागमात्रस्य संन्यासत्वाभावात्, योगस्य संन्यासाभावेऽप्युपपत्तेरिति कृतशङ्काद्वयं परिहरति– **सङ्कल्पशब्दस्येति ॥ योगशब्दस्य** योगिशब्दे प्रकृतिभूतस्य ॥ २ ॥

**गीताश्लोकद्वयाक्षरार्थस्तु** द्वितीयाध्याये 'योगे त्विमां शृणु' इति योगाभिधानं प्रतिज्ञातम् । योगो नाम द्वितीयषट्के वक्ष्यमाणं भगवज्ज्ञानं प्रत्युपायः । स च कर्मयोगः, समाधिलक्षणध्यानयोगश्चेति द्विविधः । तत्र कर्मयोगो ज्ञानं प्रति बहिरङ्गत्वात् 'त्रैगुण्यविषया वेदाः' इत्यादिना द्वितीये सङ्क्षेपेण, तृतीयादावतीतग्रन्थे विस्तरेण च निरूपितः । अथ तत्साध्यत्वात् ज्ञानान्तरङ्गत्वाच्च समाधिलक्षणध्यानयोगप्रकारः 'स्पर्शान् कृत्वा बहिर्बाह्यान्' इति पञ्चमान्ते सङ्क्षेपेण निरूपितो विस्तरेणास्मिन्नध्याय उच्यते । आसनादीनामत्र वक्ष्यमाणत्वेऽपि, तेषां समाध्यर्थत्वात् प्राधान्येन समाधिः, तदधिकारितदङ्गादिकथनेन प्रपञ्च्यत इत्यध्यायार्थस्तावद्भाष्यादौ स्फुटः ।

'उद्धरेदात्मनाऽऽत्मानम्' इत्यादिना समाधियोगं विधातुं तत्र संन्यासयोगयुक्त एवाधिकारीति ज्ञापयिष्यन् साङ्ख्याद्यभिमतदधिकारिनिरासाय समाध्यधिकारिविशेषणं 'ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति' इति यः प्राग्विवक्षितः कामादिवर्जनलक्षणः संन्यासः, स ईश्वराराधनरूपस्वकर्मानुष्ठानलक्षणयोगेन सहोच्यते– **अनाश्रित इति ।** यः पुमान् कर्मफलं अनाश्रितः कर्मफलाकाङ्क्षाहीनः कार्यं स्ववर्णाश्रमोचिततया कर्तव्यं कर्म करोति स एव संन्यासी योगी च इति स्वयं

ध्यानाधिकारिणं निरूप्य, यत् 'आहवनीयाद्यग्नित्यागेन, अग्निहोत्रादिसकलक्रियात्यागेन च निस्सङ्गतया वर्तमान एव ध्यानाधिकारी' इति मतं निराक्रियते न निरग्निर्न चाक्रिय इति । निरग्निरक्रियश्च कर्तव्यं करोति स एव संन्यासी योगी चेति चतुर्थाश्रमी संन्यासी योगी च भवत्येव । 'स ब्रह्मनिष्ठस्तु यतिर्महात्मा शारीरमग्निं च मुखे जुहोति', 'अग्निर्ब्रह्म च तत्पूजा क्रिया न्यासाश्रमे स्मृता' इत्यादेः चतुर्थाश्रमिणोऽप्यग्न्यादिश्रवणात् । यत्याश्रमस्वीकारकाले पूर्वाश्रमस्वीकृतानां आत्मनि समारोपणाच्च । अनग्नित्वादिप्रवादश्च बाह्याग्न्याद्यभावनिबन्धन इति भावः ॥ १ ॥

'संन्यासी च योगी च' इत्युक्त्या प्राप्ता संन्यासयोगयोरत्यन्तभेदशङ्का निवार्यते । 'यम्' इति शब्दः 'ज्ञेयस्स नित्यसंन्यासी' इत्युक्तप्रकारार्थः । उक्तप्रकारेण यं कामादिवर्जनरूपं संन्यासं प्राहुः, तं योगं कामादिवर्जनविशिष्टनिवृत्तकर्मानुष्ठानलक्षणमुख्ययोगान्तर्भूतं विद्धि हे पाण्डव । संन्यासस्य योगान्तर्भाव उपपाद्यते न हीति । कश्चन कोऽपि असन्यस्तसङ्कल्पः सङ्कल्पशब्दः कामाद्युपलक्षणार्थः, अन्यत्र सङ्कल्पकामादिः कामवर्जनादिहीनकर्मानुष्ठानमात्रवान् इति यावत् । योगी ज्ञानवान् उपायवान् न भवति । सामग्र्येकदेशेन कार्योत्पादो न दृष्ट इति ॥ २ ॥

**भावदीपिका (श्री.टि.)– ॥ भिन्नलक्षणाविति ॥** 'कामादिवर्जनं संन्यासः', 'इश्वरार्पणबुद्ध्या कर्मानुष्ठानं योगः' इति भिन्नलक्षणवन्तावित्यर्थः । **अमुख्येति** ॥ ईश्वरार्पणबुद्ध्या कर्मकरणमात्ररूपामुख्ययोगापेक्षया 'संन्यासी च योगी च' इति पृथगुक्तोऽपि संन्यास इत्यर्थः । ननु तर्ह्येतादृशामुख्ययोगे कथमन्तर्भावः संन्यासस्येत्यत आह– **योगशब्दो मुख्य इति** ॥ 'योगं तं विद्धि' इत्यत्र योगशब्दः कामादिवर्जनपूर्वकेश्वरार्पणबुद्ध्या कर्मनुष्ठानरूपविशिष्टरूपमुख्यार्थ एव विवक्षितः, तत्र चान्तर्भावो विशेषणस्य संन्यासस्य युक्त इत्यर्थः । **अत एवेति** ॥ यतः संन्यासान्तर्भावाधिकरणं योगो मुख्य एव विवक्षितः, अत एवान्तर्भावोपपादकं 'न हि' इति गीतावाक्यगतं 'योगी' इति पदं कामादिवर्जनसङ्ग्रहाय 'उपायवान्' इति सामान्यत एव व्याख्यास्यतीत्यर्थः । विशेष्यरूपयोगैकदेशमात्रस्य ज्ञानोपायत्वासम्भवादिति भावः । भिन्नलक्षणवतोः कथमैक्योक्तिः ? इति शङ्कायाः किमुत्तरमित्यत आह– **अन्तर्भूतत्वादिति** ॥ संन्यासस्य मुख्योगान्तर्भूतत्वादित्यर्थः ॥ २ ॥

श्लोकः २३

भावप्रकाशः (कृ.टि.)– ।। **अमुख्ययोगेति** ।। ईश्वरार्पणवुध्या कर्मानुष्ठानरूपयोगापेक्षये-त्यर्थः । विशिष्टस्यैव योगशब्दमुख्यार्थत्वेनैकदेशस्यामुख्यत्वमिति भावः । **मुख्य इति** ।। कामा-दित्यागेनेश्वरार्पणबुद्ध्या कर्मानुष्ठानरूप इत्यर्थः । तथा च पूर्वोक्तयोगैकदेशे सन्न्यासस्यान्तर्भावा-सम्भवेऽपि विशिष्टभूते योगे विशेषणीभूतसन्न्यासस्यान्तर्भावः सम्भवतीति भावः । **अत एवेति** ।। मुख्ययोगस्याभिप्रेतत्वादेवेत्यर्थः । अन्तर्भावोपपादकं – **नहीति** ।। गीतास्थयोगिपदस्योपायत्वार्थ-कत्वव्याख्यानात् मुख्ययोगोऽभिप्रेत इति गम्यते । एकदेशग्रहणे तु तस्य ज्ञानोपायत्वाभावादग्रि-मव्याख्यानासङ्गतिरिति भावः ।। **ऐक्योक्तिरिति** ।। यं सन्न्यासमिति गीतायामिति शेषः ।। २ ।।

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ।। ३ ।।**

## भाष्यम्

**कियत्कालं कर्म कर्तव्यमित्यत आह– आरुरुक्षोर्मुनेरिति ।। योगम् आरुरुक्षोः उपायसम्पूर्तिमिच्छोः । योगारूढस्य सम्पूर्णोपायस्य । अपरोक्षज्ञानिन इत्यर्थः । कारणं परमसुखकारणम् ।।**

भावप्रदीपिका (प.टी.)– नन्वयं कर्मयोगः कियत्कालमवश्यं कार्यः ? कदा वा त्याज्यः ? इत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे– **कियदिति** । योगमारुरुक्षोः कर्मयोगः कारणं स्यान्नाम । योगारूढस्य किं प्रति कारणमित्यत आह– **कारणमिति** ।

भावप्रकाशिका (न.टी.)– भवत्वन्तर्गतसंन्यासः कर्मयोगः समाधियोगिनामप्य-वश्यानुष्ठेयः । स च कियत्कालमित्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे– **कियदिति** । युज्यतेऽनेनेति योग उपायः । अपरोक्षज्ञानोपायत्वात् समाधिर्योग उच्यते । आरोहणमुपरि-भावः । योगारोहणं नाम तदुपरिभावकार्यावाप्तिः । सा च योगे सम्पूर्ण एव भवतीति भावेन 'योगम्', 'आरुरुक्षोः', 'योगारूढस्य' इति पदत्रयं व्याचष्टे– **योगमित्यादिना** । ननु योगमारुरुक्षोर्योगारोहकारणं भवतु कर्मयोगः । आरूढस्य तु शमः किमर्थम् ? इत्यत आह– **कारणमिति** । परमसुखस्य सर्वेषामपेक्षितत्वेन बुद्धिस्थत्वादनुक्तिरिति भावः ।।

**प्रमेयदीपिका** (ज.टी.)– नन्वेवं समाधियोगस्याधिकारिणि निरूपिते तं प्रति स अभिधेयः । 'आरुरुक्षोः' इत्यादि किमर्थमुच्यते ? इत्यत आह– **कियदिति** ॥ समाधियोगाधिकारत्वेनोक्तं कर्म किं सकृदनुष्ठेयम्, उताऽफलप्राप्तेः? इति प्रश्नार्थः ॥

ननु योगो नाम नाश्वादिरिवारोढव्यः । तत् कथमुच्यते 'योगमारुरुक्षोः, योगारूढस्य? इति । तत्राऽह– **योगमिति** ॥ उपरिभवनसादृश्यादुपचार इत्यर्थः ॥ उपायः **समाधिरेव** । समाधेः पलपरिमाणाद्यवच्छेदाभावात् कादृशी सम्पूर्णता इत्यत आह– **अपरोक्षेति** ॥ साधनस्य हि सम्पूर्णता साध्याय पर्याप्तत्वम् । अतो यावताऽपरोक्षज्ञानं सम्पद्यते तावत्त्वं सम्पूर्णत्वमिति भावः । ननु योगमारुरुक्षोः कर्म कारणम् । सन्निधानाद् 'योगारोहस्य' इति लभ्यते । कारणत्वाच्च तत्पर्यन्तं कर्तव्यमिति । कार्यापेक्षया नियतपूर्वभावित्वात् कारणस्य । योगारूढस्य तु शमः किं प्रति कारणम् । ज्ञानस्य तत एव सिद्धेरित्यत आह– **कारणमिति** ॥ परमसुखं मुक्तिगतम् ॥

**भावबोधः** (र.टि.)– ॥ **सकृदनुष्ठेयमिति** । प्रोक्षणादिवदित्यर्थः । **आफलप्राप्तेरिति** । अवहननादिवदित्यर्थः । **प्रश्नार्थ इति** । तथा चैवं द्वैविध्यदर्शनात् कियत्कालमिति प्रश्नोपपत्तिरिति भावः । **तत एवेति** । समाधेरेवेत्यर्थः ॥

**भावदीपः** (रा.टि.)– अपरोक्षज्ञानिनः पश्चादेव भवतीति 'उपरि भवनसादृश्यात्' इत्युक्तम् ॥ **तत एव सिद्धेरिति** ॥ पूर्वतनकर्मण एव सिद्धेरित्यर्थः ॥

**भावरत्नकोशः** (सु.टि.)– ॥ **अधिकारिणि** कामादिहीननिवृत्तकर्मानुष्ठानवति सः समाधियोगः । असङ्गतवचनत्वं परिहर्तुं परिष्करोति– **समाधीति** । **अधिकारत्वेन** अधिकारिविशेषणत्वेन । एतेनैव 'कर्म यावता कालेन निर्वर्त्यते तावन्तं कालं कार्यमिति सिद्धमेव । किञ्च योगो हि ज्ञानसाधनतयोपदिष्टः । साधनं च साध्यप्राप्तिपर्यन्तमनुष्ठेयमिति प्रसिद्धमेव । नियतपूर्वक्षणवृत्तिकारणमिति हि तल्लक्षणम् । अतः कथमयं प्रश्न इति चोद्यं च परिहृतम् । नायं कर्मनिवृत्तिकालप्रश्नः । किन्तु उक्तं कर्म व्रीहिप्रोक्षणादिकमिव सकृदनुष्ठेयम्, उतावहननादिकमिव आफलसमाप्ति आवर्तनीयमिति प्रश्न इति तात्पर्यात् । भाष्ये 'कियान् कालो यस्य तत् कियत्कालम्' इति कर्मविशेषणमिति ज्ञातव्यम् । कियांश्चासौ कालश्च कियत्कालः, तम् । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । 'कियति काले' इत्यर्थ इत्यपि आहुः ।

श्लोकः ३

'नाश्वादिरिवारोढव्यो योगः' इति कृतचोद्यं परिहर्तुमाह– **उपरिभवनेति** ॥ उपचारः गौणी वृत्तिः । सा च गुणनिबन्धना, 'सिंहो देवदत्तः' इति यथा । अत्राश्वारोहणक्रियायाम् अश्वोपरिभवनात्मकत्वमिवापरोक्षज्ञानस्य योगोत्तरभावित्वरूपयोगोपरिभवनमस्तीति उपरिभवनसादृश्यात् आरोहशब्दो योगसम्पूर्तिफलेऽपरोक्षज्ञाने वर्तत इति भावः ।

ननु साधनस्य साध्याय पर्याप्तत्वं सम्पूर्णत्वमस्तु । 'कियत्कालं कर्म कर्तव्यम्' इति शङ्कायाः परिहारो नानेन लब्ध इति चोद्यं परिहरन्नेव उत्तरभाष्यमवतारयति– **ननु योगमिति** ॥ **तावत्पर्यन्तं** योगारोहपर्यन्तमिति कालेयत्वोक्त्या भवति कारणत्वमात्रेण, कार्यनिष्पत्तिकालावध्यनुष्ठेयत्वं कथं लभ्यत इत्यत उक्तम्– **कार्यापेक्षयेति** ॥ प्रोक्षणादेरदृष्टार्थस्य सकृत्कर्तव्येऽपि, दृष्टार्थस्य कर्मणो यावत्फलप्राप्ति अवहननादेरिव कर्तव्यत्वमिति भावः । 'ज्ञानं प्रति' इति वदाम इत्याशङ्क्याह– **ज्ञानस्येति । तत एव** समाधियोगादेव । ननु सर्वविषयोपरतिलक्षणेन शमेन पुरुषस्य क्लेश एव भवेत् । तत्कथं शमः सुखस्य कारणम् । कथन्तरां परमसुखस्येत्यत आह– **परमसुखं मुक्तिगतमिति** ॥ अपरोक्षज्ञानानन्तरमनुष्ठितः समाधिलक्षणः शमो मुक्तिगतसुखाभिवृद्धेः कारणमिति नोक्तशङ्काऽवकाश इति भाव इत्याशयः ।

**भावदीपिका (श्री.टि.)**– ॥ **सः** समाधियोगः । **सकृदनुष्ठेयमिति** ॥ प्रोक्षणादिवदित्यर्थः । **आफलप्राप्तेरिति** ॥ अवहननादिवदित्यर्थः । **प्रश्नार्थ इति** ॥ एवं द्वैविध्यदर्शनात्, अस्यापि कर्मत्वात्, किं सकृदनुष्ठेयम् उत आफलप्राप्तेरिति सन्देहमूलकः 'कियत्कालं कर्म कर्तव्यम्' इति प्रश्नो युक्त इत्यर्थः । उपरिभवनेति ॥ अश्वमारूढस्य यथाऽश्वोपरिभवनमस्ति, तथा समाधियोगफलस्यापरोक्षज्ञानस्य समाध्युत्तरभावित्वेन योगोपरि भवनमस्तीत्यर्थः । केचित्तु अश्वोपरि भवनवतो यथा सन्तोषः, तथा योगपूर्तिमतोऽपीत्येवं सन्तोषविशेषेणोपरिभवनवतः साम्याद्गौण इत्याहुः । सन्निधानात् शब्दसन्निधानात् । ज्ञानं प्रति इति चेत्, तत्राह– **ज्ञानस्येति** ॥ **तत** एवेति ॥ समाधियोगादेवेत्यर्थः ।

**भावप्रकाशः (कृ.टि.)**– नन्वग्निहोत्रादिकर्म यावति काले समाप्येत तावत्कालं कार्यमिति सिद्धमेव । तत्कथमयं प्रश्नः । किञ्च समाध्यधिकारिनिरूपणानन्तरमयं प्रश्नोऽनवसरदुःस्थ इत्यत आह – **समाधियोगाधिकारत्वेनेति** ॥ **उपरिभावेनेति** ॥ मुनेर्योगोत्तरभावित्वसाम्यादित्यर्थः । **पलपरिमाणादीति** ॥ आदिपदेन संख्यादेः ग्रहः । तत्र कुण्डलादौ पलेन संपूर्णता, वस्त्रादौ परिमाणेन मैत्रीतनयेषु संख्यया देशतः जीवादौ कालतः पूर्णतेति विवेकः ।

नन्वेवमपि कियत्कालमिति प्रश्नस्योत्तरालाभ इत्याशङ्कां परिहरन्नेवोत्तरभाष्यमवतारयति— **नन्विति** ॥ ननु योगारूढस्य शमो ज्ञानहेतुरस्त्वित्यत आह— **ज्ञानस्य तत एवेति** ॥ समाधेरेवेत्यर्थः ॥ **तयोश्चेति** ॥ अपरोक्षज्ञानसमाध्योरित्यर्थः ।

## भाष्यम्

**अपरोक्षज्ञानिनोऽपि समाध्यादिफलमुक्तम् । तस्य सर्वोपशमेन समाधिरेव कारणं प्राधान्येनेत्यर्थः । तथाऽपि यदा भोक्तव्योपरमः तदैव सम्यगसम्प्रज्ञातसमाधिर्जायते । अन्यदा तु भगवच्चरितादौ स्थितिः ॥**

भावप्रदीपिका (प.टी.)– ननु ज्ञानमात्रेण मोक्षसिद्धेर्व्यर्थमेव कर्मेत्यत आह— **अपरोक्षज्ञानिनोऽपीति** । 'शम'शब्दं द्वेधा व्याकुर्वन् वाक्यार्थमाह— **तस्येति** । सर्वकर्मणामपि फलातिशयकारणत्वात् किमिति समाधिरेव गृह्यते ? प्राधान्येनेति । ननु यदि सर्वकर्मसु समाधिरेवातिशयफलं ददाति, तर्हि सर्वज्ञानिनः किमिति व्याख्यानं कुर्वन्ति, समाधिं विहाय ? इत्याशङ्कां सप्रमाणकं परिहरति— **तथाऽपीति** ॥ ३ ॥

भावप्रकाशिका (न.टी.)– नन्वपरोक्षज्ञानिनस्तत एव परमसुखरूपस्य मोक्षस्य सिद्धत्वात्, न पुनस्तस्य शमफलं पश्याम इत्यत आह— **अपरोक्षेति** । द्वितीयाध्याये समर्थितमित्यर्थः । समाध्यादि इति पदेन समाधिजपकथादयः सामान्यतः शमशब्दार्थत्वेनोक्ताः । एतेषु बुद्धेर्विष्णुनिष्ठत्वात् । 'शमो मन्निष्ठता बुद्धेः' इति हि भागवते । अधुनोपशमोऽपि शमशब्दार्थ इति दर्शयन्नेतेषु समाधेः प्राधान्यमाह— **तस्येति** । सर्वोपशमेन तदितरकर्मत्यागेनेत्यर्थः । नन्वपरोक्षज्ञानिनः समाधेरेव प्राधान्ये किमिति शुकादयः प्रायो भगवत्कथादौ प्रवर्तन्ते ? इत्यत आह— **तथाऽपीति** । भोक्तव्यकर्मण्यक्षीणे सम्यगसम्प्रज्ञातसमाधेरपि स्वधर्मस्य कर्तव्यत्वादिति भावः ॥

प्रमेयदीपिका (ज.टी.)– नन्वयं प्रश्नो यदा ते मोहकलिलम् (२.५२) इति परिहृतः । मैवम् । तत्र ज्ञानार्थिनोऽत्र तु योगारोहार्थिन इति भेदात् । तयोश्च साध्यसाधनयोः पृथक्त्वात् । अपरोक्षज्ञानिनः इति चानतिविप्रकर्षेणोक्तत्वात् । यथोक्तम् ऐहिकमप्रस्तुतप्रतिबन्ध इति । अथवा योगारूढस्यापि कर्तव्यं वक्तुं प्रश्नोत्तरानुवादोऽयमिति ॥

श्लोकः ३

नन्वपरोक्षज्ञानिनोऽनाधेयातिशयस्य कथं शमः परमसुखकारणमुच्यते ? इत्यत आह– **अपरोक्षेति** ॥ **उक्तं** समर्थितं द्वितीये(२.५०)। समाध्यादि इत्यनेन शमशब्दार्थः समाधिरिति सूचितम् । तत्किं तस्यान्यत् कर्तव्यमेव नास्तीत्यत आह– **तस्येति**॥

सर्वोपशमेन सर्वविषयोपरतिलक्षणेनेति समाधौ शमशब्दं समर्थयितुमुक्तम् । कारणं सुखाभिवृद्धेः । तदविरोधेनान्यत् कार्यमिति भावः । यदि ज्ञानिनः समाधिरानन्दवृद्धेः कारणं तर्हि तमेव कुतो न कुर्युः? कुतश्च व्याख्यानादौ प्रवर्तन्ते? इत्यत आह– **तथाऽपीति** ॥ भोक्तव्योपरमः प्रतिवन्धकप्रारब्धकर्मोपरमः । **अन्यदा** सम्यक् समाधिप्रतिवन्धककर्मानुपरमकाले ॥

**भाववोधः (र.टि.)– ॥ तयोरिति** । समाध्यपरोक्षज्ञानयोरित्यर्थः । अपरोक्षज्ञानसमाधियोगयोरित्यर्थः । नन्वस्य योगार्थविषयत्वे अपरोक्षज्ञानिन इत्यर्थ इति कथमुक्तमित्य आह– **अपरोक्षज्ञानिन इति चेति ॥ अनतिविप्रकर्षेणेति** । ध्यानपरिपाकरूपसमाध्यव्यवहितोत्तरकाल एव अपरोक्षज्ञानोत्पत्तिसम्भवमभिप्रेत्य तदुक्तम् । न तु योगारूढशब्दार्थत्वेनेति भावः । अनतिविप्रकर्षोऽपि कुत इत्यतः सूत्रसम्मतिमाह– **यथोक्तमिति** ॥ अप्रस्तुतप्रतिबन्धे प्रारब्धकर्मप्रतिवन्धाभावे ऐहिकं ध्यानपरिपाकजन्मन्येव अपरोक्षज्ञानमुत्पत्तिमदित्यर्थः । अस्तु वा अपोक्षज्ञानिन इति भाष्यं योगारूढस्येति शब्दार्थकथनपरम्, तथाऽपि न पुनरुक्तिरित्याभिप्रेत्य पक्षान्तरमाह– **अथवेति ॥ योगारूढस्यापि कर्तव्यं वक्तुमिति** । 'योगारूढस्य तस्यैव शमः कारणमुच्यते' इत्यादिना योगारूढस्याप्यपरोक्षज्ञानिनोऽपि प्रयोजनभावात् ज्ञानोत्तरं कर्तव्यं नास्तीति मतान्तरोक्तस्यापीत्यपेरर्थः। आनन्दाभिवृद्ध्यर्थं शमादिकं कर्तव्यं वक्तुमित्यर्थः । **प्रश्नोत्तरानुवाद इति** । 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते' इति 'यदा ते मोहकलिलम्' इति प्रश्नोत्तरानुवाद इत्यर्थः ॥ ३ ॥

**भावदीपः (रा.टि.)– ॥ अयं प्रश्न इति** ॥ कियत्कालं कर्म कर्तव्यमिति प्रश्नो द्वितीये यदा ते मोहकलिलम् इति श्लोके परिहृत इत्यर्थः । **ज्ञानेति** ॥ परोक्षेत्यर्थः ॥ **योगारोहार्थिन इति** ॥ समाध्यर्थिन इत्यर्थः । **तयोरिति** ॥ परोक्षापरोक्षज्ञानार्थिनोरित्यर्थः ॥ ज्ञानार्थिनो हि ज्ञानं साध्यम्, श्रवणमननादिकं साधनम् । समाध्यर्थिनस्तु निर्णयरूपं तत्त्वज्ञानादि साधनम्, अपरोक्षं साध्यमिति भावः ॥

नन्वेवं योगारूढस्य इत्यस्य समाधिसम्पन्नस्येति वाच्यम् । अपरोक्षज्ञानिन इत्युक्तिस्तु कथमित्यत आह– **अपरोक्षेति** ॥ समाधिस्थस्यापरोक्षदृष्टिरनतिविलम्बेन भवतीत्यत्र

सूत्रसम्मतिमाह– **ऐहिकमिति** ।। 'प्रारब्धप्रतिबन्धकाभावे साधनसम्पूर्तिमज्जन्मन्येव अपरोक्षं भवति' इति सूत्रार्थः ।। योगारूढस्य इत्यस्य 'अपरोक्षज्ञानिनः' इत्यर्थोक्तिरेवेति भावेनाऽह– **अथवेति** ।। **कर्तव्यमिति** ।। समाध्यादिकम् ।। **समर्थितं द्वितीय इति** ।। बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते इत्येतद्व्याख्यावसरे सुकृतमप्रियम् इत्यादिग्रन्थेनेति भावः ।। ३ ।।

**भावरत्नकोशः (सु.टि.)– ।। अयं प्रश्नः** 'कियत्कालं कर्म कर्तव्यम्' इति प्रश्नः । तथा च द्वितीये तद्गमनिकाभाष्यम् 'कियत्पर्यन्तं कर्तव्यानि मुमुक्षुणा कर्माणि इत्याह– **यदेतीति** ।। **ज्ञानार्थिनः** परोक्षज्ञानार्थिनः । तथा च द्वितीये एतच्छ्लोकटीकायाम् 'योगो हि न साक्षाज्ज्ञान-साधनम्, किन्तु श्रवणादिकमेव । प्रमितेः प्रमाणफलत्वात् । योगस्त्वदृष्टद्वारा सत्त्वशुद्धिमुत्पाद्य श्रवणादीनामुपकरोति' इत्युक्त्वा 'यदा ते' इति श्लोकोक्तार्थस्पष्टनपरे 'श्रुतिविप्रतिपन्ना ते' इत्युत्तरश्लोके, 'अनेनापरोक्षज्ञानकाष्ठा दर्शिता' इत्युक्तम् । **योगारोहार्थिनः** योगसम्पूर्तिं कामयमानस्य 'कर्म कारणमुच्यते' इति शेषः । तथा च पुनरुक्तिर्नास्तीत्याह– **तयोरिति** ।। ज्ञानार्थि-योगारोहार्थिनोरित्यर्थः । **पृथक्त्वात्** परोक्षज्ञानार्थिनः परोक्षज्ञानं साध्यम्, श्रवणाद्युपकारक-भगवदाराधनात्मककर्म तत्साधनम् । योगारोहशब्दितसमाध्यर्थिनस्तु समाधिरेव साध्यः । परोक्षज्ञानानन्तरमनुष्ठितं कर्म साधनमिति साध्यसाधनयोः पृथक्त्वान्न पुनरुक्तिशङ्केति भावः ।

नन्वेवमस्य योगारोहार्थप्रश्नोत्तरत्वे 'अपरोक्षज्ञानिन इत्यर्थः' इति कथं भाषणमित्यत आह– **अपरोक्षज्ञानिन इति चेति** ।। समाधिसम्पूर्त्यव्यवहितोत्तरकाल एव प्रतिबन्धाभावे अपरोक्षज्ञानं भवतीत्यत्र ब्रह्मसूत्रसम्मतिमाह– **यथोक्तमिति** ।। **ऐहिकं** साधनसम्पत्तिजन्मनि भवं ज्ञानं प्रारब्धप्रतिबन्धाभावे तत्रैव भवति । 'श्रुत्वाऽऽत्मानं मतिपूर्वं ह्युपास्येहैव दृष्टिम्' इति श्रुता-वुक्तार्थस्य 'दर्शनादि'ति सूत्रार्थः । 'अपरोक्षज्ञानिनः इति भाष्यं 'योगमारुरुक्षोः' इत्यस्य तात्पर्यकथनरूपमित्युक्तम् । इदानीं योगारूढपदस्य व्याख्यानरूपमिति पक्षान्तरमाह– **अथवेति** ।। ननु 'यदा ते' इत्यत्र कियत्पर्यन्तं कर्तव्यं कर्मेति प्रश्नस्य यद् उत्तरम् आफलप्राप्ति कर्म कर्तव्यमिति तस्य 'आरुरुक्षोर्मुनेः' इत्यर्धेनानुवाद इत्ययुक्तम् । निषेध-अधिकविधानयोरत्रानुपलब्धरित्यत उक्तम्– **योगारूढस्यापि कर्तव्यं वक्तुमिति** ।। शमपदविवक्षितभगवन्निष्ठबुद्धित्वरूपध्यान-व्याख्यानार्चनादिकं वक्तुमित्यर्थः । 'योगारूढस्येत्युत्तरार्धेन' इति शेषः ।

श्लोकः ३

उत्तरभाष्यगतापिपदाशयं वदन्नेव तदवतारयति– **नन्वपरोक्षेति** ॥ ननु अपरोक्षज्ञानिनः शमः किं प्रति कारणं भवेत् ? न तावत् मोक्षं प्रति, तस्यापरोक्षज्ञानादेव सिद्धेः । नापि कर्तृगतमतिशयं प्रति, तस्यानाधेयातिशयत्वात् इति कृताक्षेपस्य सोपपत्तिकत्वात् कथमुक्तिमात्रेण निरास इत्यत आह– **समर्थितमिति** ॥ 'बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते' इत्येतद्व्याख्याऽवसरे 'सुकृतमप्यप्रियं मानुष्यादिफलं जहाति, न बृहत्फलम् उपासनादिजनितम्' इत्यादिग्रन्थेन द्वितीयेऽध्याये उपपत्तिभिः साधितमित्यर्थः । 'समाधिरिति' इत्यनन्तरम् 'उपलक्षणार्थश्चशब्द इति च' इति शेषः । **तस्य** अपरोक्षज्ञानिनः । **अन्यत्** शमशब्दितसमाधेः । 'समर्थयितुम्' इति वदन् सर्वोपशमेन सर्वविषयोपरतित्वेन शमशब्दार्थः समाधिरिति भाष्यार्थ इत्यभिप्रैतीति आहुः । भाष्यपदमनूद्य शेषमाह– **कारणमिति** ॥ किं तस्यान्यत् कर्तव्यमेव नास्तीति कृतचोद्यं 'प्राधान्येन' इति भाष्यभावोक्त्या परिहरति– **तदविरोधेनेति** ॥ शमाविरोधेन अन्यत् व्याख्यार्चनादिकमित्यर्थः । **न कुर्युः** 'ज्ञानिनः' इति शेषः । भाष्ये 'तस्य' इत्येकवचनात् 'यदि ज्ञानिनः' इत्येकवचनम्, 'ये त्वाम्' इत्यागमे बहुवचनात् 'कुर्युः' इत्याख्यातोपात्तकर्तरि बहुवचनं च प्रायुङ्क्तेति ज्ञातव्यम् ।

'ध्यानव्याख्याऽर्चनादिकम्' इति तात्पर्यनिर्णयं हृदि कृत्वाऽऽह **व्याख्यानादाविति** । यद्यपि समाधिरेव कर्तव्यः, तथापीति भाष्यार्थः । 'भोक्तव्यकर्मण्यक्षीणे' इति वक्ष्यमाणवचनानुसारेण भाष्यार्थमाह– **भोक्तव्येति** ॥ काले दाप्रत्ययानुशासनादाह– **सम्यगिति** ॥ **सम्यक्** **समाधिः** असम्प्रज्ञातसमाधिः । **अत्र** 'भोक्तव्योपरमे असम्प्रज्ञातसमाधिः' इत्यत्र, 'समाधिप्रतिबन्धककर्मानुपरमकाले भगवच्चरितादौ स्थितिः' इत्यत्र च । **परम्** उत्कृष्टम्' इति भगवद्विशेषणत्वे वक्तुं शक्येऽपि 'केवलम्' इति वचनं परमसुखकारणमिति समाध्युपोद्बलितभगवद्दर्शनस्य परमसुखहेतुत्वस्य प्रसक्तत्वात् तदाशयेनेत्यवधेयम् ।

**भावदीपिका (श्री.टि.)– ॥ यदा त इति ॥** 'कियत्पर्यन्तमवश्यं कर्तव्यानि मुमुक्षुणैवं कर्माणीत्याह' इत्यवतार्य, अस्य श्लोकस्य व्याख्यातत्वादित्यवधेयम् । **तत्रेति** ॥ तत्र ज्ञानार्थिना कियत्पर्यन्तं कर्म कर्तव्यमिति प्रश्नस्य परिहार उक्तः । अत एव 'कियत्पर्यन्तं कार्याणि मुमुक्षुणैवं कर्माणि' इत्युक्तम् । 'मुमुक्षुणा' इत्येतत् 'मोक्षसाधनज्ञानार्थिना' इति टीकायां व्याख्यातम् । अत्र समाधियोगारोहार्थिना कियत्पर्यन्तं कर्म कर्तव्यमिति प्रश्नस्य परिहार उच्यत इति भेद इत्यर्थः । तमेव भेदमुपपादयति– **तयोश्चेति** ॥ । तत्रोक्तयोः अत्रोक्तयोश्चेत्यर्थः । तत्रापरोक्षज्ञानसाध्यो मोक्षः,

ज्ञानसाधनं च समाधिरिति ज्ञानमोक्षयोर्ज्ञानसमाध्योश्च साध्यसाधनभावोऽभिप्रेतः, अत्र तु समाधिसाध्यं ज्ञानम्, समाधिसाधनं च कर्मेति समाधिज्ञानयोः समाधिकर्मणोश्च साध्यसाधन-भावोऽभिप्रेत इत्यर्थ इति आहुः ।

वस्तुतस्तु ज्ञानयोगारोहयोरेकत्वेन तत्र 'मानार्थिना' अत्र तु 'योगारोहार्थिना' इत्युक्त्या कथं प्रमेयभेद इत्यत आह– **तयोश्चेति** ॥ तयोः ज्ञानयोगारोहयोः, पृथक्त्वादित्यन्वयः । कुतः पृथक्त्वमित्यतः 'साध्यसाधनयोः' इत्युक्तम् । अपरोक्षज्ञानयोगारोहयोः साध्यसाधनभावसद्भावेन पृथक्त्वात् प्रश्नभेदो युक्त इत्यभिप्रायः । नन्वपरोक्षज्ञानयोगारोहयोः पृथक्त्वे 'योगारूढस्य' इत्येतत् 'अपरोक्षज्ञानिनः' इति कथं व्याख्यातम् ? तेन ज्ञायते तयोरैक्यम् इति, तथा च न प्रश्नभेद इत्यत आह– **अपरोक्षज्ञानिन इतीति** ॥ ध्यानपरिपाकरूपसमाध्यव्यवहितोत्तरकाल एवापरोक्षमानमुत्पद्यत इत्याशयेनैव तथोक्तम्, न तु योगारूढशब्दार्थत्वेनेति भावः ।

समाधिपरिपाकापरोक्षज्ञानयोरनतिविप्रकर्षोऽपि कुत इत्यतः सूत्रं प्रमाणयति– **यथोक्तमिति** ॥ अप्रस्तुतप्रतिबन्धे प्रारब्धकर्मप्रतिबन्धाभावेऽपरोक्षज्ञानम् ऐहिकं समाधिपरिपाकजन्मन्येवोत्पद्यत इत्यर्थः । अस्तु वा 'अपरोक्षज्ञानिनः' इति भाष्यं 'योगारूढस्य' इति शब्दार्थकथनपरम्, तथाऽपि न पुनरुक्तिरित्याशयेन पक्षान्तरमाह– **अथवेति** ॥ **योगारूढस्यापीति** ॥ अपरोक्षज्ञानिनोऽ-पीत्यर्थः । तेनापरोक्षज्ञानिना प्रयोजनाभावात् कर्म न कर्तव्यमित्यसदित्याशयः । **कर्तव्यं वक्तुमिति** ॥ 'योगारूढस्य तस्यैव शमः कारणमुच्यते' इत्यनेनानन्दाभिवृद्ध्यर्थं शमादिकं कर्तव्य-मिति वक्तुमित्यर्थः । **प्रश्नोत्तरेति** ॥ 'कियत्पर्यन्तमवश्यं कर्माणि कार्याणि' इति प्रश्नस्य यदा त इत्यादिना यदुत्तरमुक्तम्, तस्यानुवाद एव 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यत' इत्यनेन क्रियते, न तु कर्मानुष्ठानविधिर्विधीयत' इत्यर्थः । तथा च योगमारुरुक्षोःअपरोक्षज्ञानार्थिनो मुनेः कर्म कारणम् अपरोक्षज्ञानसाधनमिति तात्पर्यम्, तत्कर्तव्यमित्युच्यते पूर्वम् इत्युक्तमिति यावत् । तस्यैव योगारूढस्य उत्पन्नापराक्षज्ञानिनः शमः आनन्दाभिवृद्धेः कारणमिति शमादिकमपरोक्षज्ञानिना-मप्यनुष्ठेयमिति गीतार्थो द्रष्टव्यः । परमसुखमेव नास्तीत्यत्र 'अनाधेयातिशयस्य' इति हेतुः । **द्वितीय इति** ॥ 'सुकृतमप्यप्रियं मानुष्यादिफलं जहाति, न बृहत्फलमप्युपासनादिनिमित्त-मित्यादिना' इति शेषः ।

श्लोकः ३

ननु गीतानुसारेण 'शमादि' इति वक्तव्यम् । अत आह– **समाध्यादीति ॥ सूचितमिति ॥** 'सर्वविषयोपरमेण भगवन्निष्ठबुद्धिर्हि शमः', 'ईश्वरे सम्यङ्मनस आधानं समाधिः' इति शमसमाधि-शब्दयोरेकार्थत्वमिति द्रष्टव्यम् । **तस्येति** ॥ अपरोक्षज्ञानिन इत्यर्थः । **अन्यत्** शमातिरिक्तम् । **तदविरोधेन** समाधिरूपशमाविरोधेन । **अन्यत्** व्याख्यानजपादिरूपं कर्म ।

**भावप्रकाशः** (कृ.टि.)– नन्वस्य योगारोहार्थिप्रश्नोत्तरत्वेऽपरोक्षज्ञानिन इत्यर्थ इति कथमुक्तमित्यत आह– **अपरोक्षज्ञानिन इति चेति ॥ अनतिविप्रकर्षेणेति ॥** समाधिपूर्त्यव्यवहितोत्तरकाल एव प्रतिबन्धाभावेऽपरोक्षज्ञानोत्पत्तेरिति भावः । अनतिविप्रकर्षे सूत्रसम्मतिमाह– **यथोक्तमिति** ॥ प्रारब्धप्रतिबन्धाभावे श्रवणादिपूर्तिजन्मन्येवापरोक्षज्ञानं भवति तथाश्रुतेरिति सूत्रार्थः । अस्तु वा अपरोक्षज्ञानिन इति भाष्यं योगारूढस्येति शब्दार्थकथनपरम् । तथाऽपि न पुनरुक्तिरित्यभिप्रेत्य पक्षान्तरमाह– **अथवेति ॥ योगारूढस्यापि कर्तव्यं वक्तुमिति** । योगारूढस्येत्यर्धेनेति शेषः । तथा च योगारूढस्येत्यनेनापरोक्षज्ञानिनोऽप्यानन्दोद्रेककारणं शमादिकं कर्तव्यं वक्तुमित्यर्थः । **प्रश्नोत्तरानुवादोऽयमिति** ॥ यदा ते मोहकलिलमित्यादिना यत्प्रश्नोत्तरमुक्तं तस्यैव 'आरुरुक्षो'रित्यर्धोऽनुवाद इत्यर्थः । अनुवादवैय्यर्थ्यनिरासाय वक्तुमित्यन्त-मुक्तम् ॥ नन्वाक्षेपस्य सोपपत्तिकत्वात् कथमुक्तिमात्रेण निरास इत्यत आह– **उक्तं समर्थित-मिति ॥** ननु योगारूढस्यापरोक्षज्ञानमेव कस्मात् लक्षणं नोक्तमित्यत आह– **अपरोक्षज्ञानं त्विति ॥ सति प्रतिवन्ध इति** ॥ तथा च तस्य लक्षणत्वे अव्याप्तिः स्यादिति भावः ॥ ३ ॥

## भाष्यम्

**तच्चोक्तम् –**

> **'ये त्वां पश्यन्ति भगवंस्त एव सुखिनः परम् ।**
> **तेषामेव तु सम्यक्च समाधिर्जायते नृणाम् ॥**
> **भोक्तव्यकर्मण्यक्षीणे जपेन कथयाऽपि वा ।**
> **वर्तयन्ति महात्मानः तद्भक्तास्तत्परायणाः' इति ॥**

**भावप्रदीपिका** (प.टी.)– तुशब्द एवार्थः 'सम्यक्' इति शब्देन सम्बध्यते, चशब्दस्तु समाधिशब्देन, इत्याशयेन योजयति– **तेषामेवेति** ॥ 'समाधिश्च तेषामेव सम्यगेव जायते' इत्यन्वयो द्रष्टव्यः ॥ ३ ॥

**भावप्रकाशिका (न.टी.)– यदुक्तं योगारूढो नामापरोक्षज्ञानी । तस्यैव समाधिः परम-सुखकारणम् । सोऽपि भोक्तव्यकर्मण्यक्षीणे कथादिनाऽऽत्मानं वर्तयतीति तत्र प्रमाणमाह– तच्चेति ॥ ३ ॥**

**प्रमेयदीपिका (ज.टी.)–** अत्राऽगमसम्मतिमाह– **तच्चेति** ॥ परं केवलम् । तेषामेव सम्यगेव समाधिश्च जायते इति योजना । वर्तयन्ति वर्तन्ते, कालं नयन्तीति वा ॥ ३ ॥

**वाक्यार्थप्रदीपः (पां.टि.)– ॥ वर्तयन्ति वर्तन्त इति ॥** बहुलमेतन्निदर्शनमिति वचनात् स्वार्थे णिजिति भावः ॥

**भावरत्नकोशः (सु.टि.)–** 'सम्यक्च' इत्यत्र चशब्द एवार्थः, अपरस्तु पूर्ववाक्यार्थ-समुच्चयार्थः, समाधिपदेनान्वेतीति भावेनाह– **तेषामेवेति । सम्यगेव** असम्प्रज्ञात एव । 'भोक्तव्यकर्मण्यक्षीणे' इति भाष्यस्य प्रतिबन्धकप्रारब्धकर्मानुपरम इत्यर्थः । 'स्वार्थे णिच्' इति भावेनाह– **वर्तन्त इति** । तत एवानुशयादाह– **कालमिति** ॥

**गीताक्षरार्थस्तु** - समाधियोगाधिकारितावच्छेदकत्वेनोक्तो ज्ञानोपायरूपो योगः किं सकृदनुष्ठेय उत आफलप्राप्तेरिति प्रश्ने आफलप्राप्त्यनुष्ठेय इत्युच्यते **आरुरुक्षोरिति** । योगमारुरुक्षोः आरोढुमिच्छोः सम्पूर्णं कामयमानस्य । मुनेः परोक्षज्ञानिनः कर्म कारणं सन्निधानाद् 'योगारोहस्य' इति लक्ष्यते । कारणत्वाच्च तत्पर्यन्तं कर्तव्यमिति । कार्यापेक्षया नियतपूर्वक्षणभावित्वात् कारणस्य । तस्यैव मुनेः योगारूढस्य सम्पूर्णोपायस्यापरोक्षज्ञानिनः शमः सर्वविषयोपरमलक्षणः समाधिः कारणं मुक्तिगतानन्दवृद्धेः व्याख्यार्चनाद्यपेक्षया प्रधानं साधनम् उच्यते । परोक्षज्ञानिनाऽ-नुष्ठितं कर्म योगारोहकारणम् । आरूढयोगेनापरोक्षज्ञानिनाऽप्यनुष्ठितः शमस्तु ध्यानव्याख्यानार्च-नादितोऽप्यतिशयेन मुक्तिगतानन्दातिशयकारणमिति भाव इति ॥ ३ ॥

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।**
**सर्वसङ्कल्पसन्न्यासी योगारूढस्तदोच्यते ॥ ४ ॥**

श्लोकः ४

## भाष्यम्

**योगारूढस्य लक्षणमाह– यदेति ॥ सम्यगननुषङ्गस्तस्यैव भवति । उक्तं च– 'स्वतो दोषलयो दृष्ट्वा त्वितरेषां प्रयत्नतः' इति ॥ ४ ॥**

भावप्रदीपिका (प.टी.)– यदि योगारूढतापर्यन्तमवश्यं कर्म कार्यम्, तर्हि सैव कादृशी ? इत्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतारयति– **योगेति** । ननु विषयाननुषङ्गाख्यलक्षणं जिज्ञासावतिव्याप्तमित्याशङ्क्य, सप्रमाणकं परिहरति– **सम्यगिति** । **तस्यैव** योगारूढस्य । स्वतः प्रयत्नं विना ॥ ४ ॥

भावप्रकाशिका (न.टी.)– योगारूढो नाम योगोपरिभाविकार्यमपरोक्षज्ञानं प्राप्तः, यस्य शमः परमसुखकारणं स कथं ज्ञातव्य इत्यत आह– **योगारूढस्येति** । कर्मस्वननुषङ्गो नाम स्वानुष्ठीयमानाध्ययनादिकर्मसु 'अहं करोमि', 'ममैतत् फलं स्यात्' इति कामसङ्कल्पत्यागः । ननु प्रत्याहारादेरपीन्द्रियार्थादिष्वननुषङ्गो भवति । अतोऽतिव्यापकमिदं लक्षणमित्यत आह– **सम्यगिति** । अपरोक्षज्ञानिन एवेत्यर्थः । तत्र प्रमाणमाह– **उक्तं चेति** । **स्वत इति** । प्रयत्नं विना । विषयकर्मानुषङ्गे दोषहानिलक्षणमिति भावः ॥ ४ ॥

प्रमेयदीपिका (ज.टी.)– स्फुटमपि तात्पर्यं मन्दानुजिघृक्षयाऽऽह– **योगेति** ॥ अपरोक्षज्ञानं तु योगारोहस्य कार्यं सति प्रतिबन्धे विलम्बत इति न लक्षणम् । नन्विदं साधकेऽपि विद्यते । वशे हि यस्येन्द्रियाणि (२.६१)इत्यादेः । अतोऽतिव्यापकमित्यत आह– **सम्यगिति** ॥ प्रयत्नं विनेत्यर्थः । तस्यैव योगारूढस्यैव । अत्र प्रमाणमाह– **उक्तं चेति** ॥ 'परमात्मानं दृष्ट्वा त्तु ' आप्यते' इति शेषः । मुख्य एव चाननुषङ्गोऽत्र विवक्षित इति भावः ॥ ४ ॥

भावबोधः (र.टि.)– ॥ सति प्रतिबन्धे विलम्बत इति । तथा चाव्यापकं स्यादिति भावः । प्राप्यते इति शेष इति । 'स्वतो दोषलयः' इति सम्बन्धः । तेन दृष्ट्वेत्यस्य समानकर्तृकतेति भावः । अत्रेति । 'यदा हि नेन्द्रियार्थेषु' इति गीतावाक्य इत्यर्थः ॥ ४ ॥

भावदीपः (रा.टि.)– योगारूढशब्दितसमाधिसम्पन्नस्यापरोक्षज्ञानमेव लक्षणमस्त्वित्यत आह– **अपरोक्षेति** ॥ नन्विदमित्यनुवादः ॥ 'यदा ते मोह' इत्युक्तस्य आरुरुक्षोः इति

पूर्वार्धेनेति योज्यम् । 'यदा हि' इति श्लोकोक्तम्, वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता इति द्वितीयोक्तगीतावचनादित्यर्थः ।। दृष्ट्वा इति क्त्वाश्रुत्युपपत्तये क्रियान्तरमाह– **दृष्ट्वा त्वाप्यत इति शेष इति** ।। त्वा त्वामित्यर्थः । तावता साधके विद्यत इति शङ्कायाः कः परिहार इत्यत आह– **मुख्य एवेति** ।। **अत्रेति** ।। यदा हि इति श्लोके साधकत्वं त्वमुख्यत इति भावः ।। ४ ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। परमात्मानं दृष्ट्वा आप्यत इति शेष इति** ।। ततश्च परमात्मदर्शनदोषलयाप्त्योः जीवकर्तृकत्वेन समानकर्तृकत्वात् समानकर्तृकयोरिति दृष्ट्वेति क्त्वाप्रत्ययोपपत्तिरिति भावः ।।

**भावरत्नकोशः (सु.टि.)–** 'योगारूढस्तदोच्यते' इति स्वयमेवावेदनादाह– **स्फुटमपीति** ।। समाधियोगाधिकारत्वेनोक्तस्य कर्मण आफलप्राप्ति कर्तव्यत्वे निर्णीते सम्प्रत्यवसरप्राप्तसमाधियोग एव विधेयः । 'योगारूढः सर्वसङ्कल्पसंन्यासी' इति किं प्रकृतासङ्गतमुच्यत इति मन्दानामाशङ्का-परिहाराय उत्तरगीतामवतारयन् भाष्यकारो मन्दाननुजिघृक्षतीत्यर्थः । 'योगारूढस्य' इत्यपरोक्ष-ज्ञानिनो मुक्तिगतसुखवैचित्र्यकारणं शम इत्युक्तम् । योगारूढ एव केन लक्षणेन प्रतिपत्तव्य इत्याकाङ्क्षायां शब्दादिविषयाननुषङ्गेण लक्षणेन स ज्ञातव्यः । एवंविधेन च महाफलहेतुत्वाद् योगोऽवश्यमनुष्ठेय इति फलतीति नासङ्गतिरिति भावः ।

ननु योगारूढस्यापरोक्षज्ञानवत्त्वमेव कस्माल्लक्षणं नोक्तमित्यत आह– **अपरोक्षज्ञानं त्विति** ।। अत्र विवेक्तव्यम्, योग्यता लक्षणम् उत फलोपधानम् । नाद्यः । तस्या मुमुक्षुमात्रसाधारणतयाऽति-व्याप्तेः । न द्वितीयः । प्रतिबद्धफले योगारूढे अव्याप्तेरिति भावेनोक्तम् 'सति प्रतिबन्धे विलम्बते' इति । इदं विषयाननुषङ्गाख्यं लक्षणम् । **साधके** मोक्षस्य । 'वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता' इति द्वितीये 'ज्ञानार्थिन इन्द्रियाणां वशीकरणं नाम तेषां विषयानुषङ्गजननशक्तिकुण्ठनम्' इत्युक्तेः, तस्यापि विषयाननुषङ्गो विद्यत एवेत्यर्थः । अत्र योगारूढस्यैव प्रयत्नं विना विषयानुषङ्ग इत्यत्र । प्रमाणे 'स्वतः' इत्यस्य 'प्रयत्नं विना' इत्यर्थ उक्तो भावप्रदीपिकायाम् । 'दृष्ट्वा' इत्यस्य कर्म पूरयन् क्त्वाप्रत्ययनिर्वाहाय शेषमाह– **परमात्मानमित्यादि** ।। अनेन 'परमात्मानं दृष्ट्वा तु प्रयत्नेन विना विषयानुषङ्गलक्षणदोषलयो योगारूढेनाप्यते । तदितरेण स्वप्रयत्नेन दोषलय आप्यते' इति प्रमाणार्थ उक्तो भवति । लक्षणातिव्यापकत्वशङ्कायाः कः परिहार इत्यत आह– **मुख्य एवेति** ।।

श्लोकः ४

अप्रयत्नसाध्यानानुषङ्ग एव, अत्र 'यदा हि नेन्द्रियार्थेषु' इति गीतावाक्ये विवक्षतः । साधके तु प्रयत्नसाध्य एवासाविति न तत्रातिव्याप्तिरिति भावः इत्यर्थः ।

अत्र केचित् योगारूढपदेन लक्ष्यत्वेनापरोक्षज्ञानी विवक्षित उत समाधिपरिपाकवान् । नाद्यः । लक्ष्यतावच्छेदकलक्षणयोरुत्सर्गतो भिन्नयोः ऐक्यप्रसङ्गेनापरोक्षज्ञानस्य लक्षणत्वशङ्काया एवायोगेन 'अपरोक्षज्ञानं तु तल्लक्षणम्' इति तन्निरासायोगात् । न द्वितीयः । 'स्वतो दोषलयो दृष्ट्वा' इति प्रमाणोपन्यासविरोधात्, तत्रायत्नप्रयोज्यदोषलयस्यापरोक्षज्ञानजन्यत्वोक्तेरिति चेन्न । 'दृष्ट्वा' इत्यस्य 'प्रतिबन्धहीनदर्शनसाधनसमाधिपरिपाकं प्राप्य' इत्यर्थात् । तथा च समाधिपरिपाकवत एव लक्ष्यत्वान्न कोऽपि दोष इत्याहुः ॥

**गीताक्षरार्थस्तु** - योगारूढलक्षणमुच्यते– **यदा हीति** ॥ यदा हीन्द्रियार्थेषु शब्दादिविषयेषु कर्मसु च प्रयत्नं विनाऽपि नानुषज्जते । ननु कर्माननुषङ्गो नाम यदि कर्मस्वरूपत्यागस्तदा 'न चाक्रियः' इत्युक्तविरोधः इत्याशङ्क्य कर्माननुषङ्गो व्याख्यायते सर्वसङ्कल्पसंन्यासीति । नात्र ज्ञानिनः स्वरूपतः कर्माननुषङ्गोऽभिधीयते, किन्तु सर्वकर्मसु सङ्कल्पसंन्यास एव । अतो नोक्तदोषः । ननु च यदि सर्वकर्मसु सङ्कल्पसंन्यासी तथोक्तः तदा कर्मस्वरूपत्याग एव प्राप्नोति, स्वरूपत्यागे सङ्कल्पत्यागायोगादिति चेन्न । सङ्कल्पसंन्यासपदेन सङ्कल्पद्रव्यक्रियादिकं सर्वं भगवदधीनमिति सर्वस्य भगवदधीनताज्ञानस्यैवाभिप्रेतत्वात् । 'मयि सर्वाणि कर्माणि संन्यस्य' इत्यत्र संन्यासपदस्य भगवदधीनताज्ञानार्थताया उक्तत्वात् तदा योगारूढ उच्यते । सङ्कल्पादेः भगवदधीनताज्ञानेन कर्मस्वनासक्त्या अप्रयत्नेन शब्दादिविषयेष्वनासक्तत्वं योगारूढस्य लक्षणमिह विवक्षितमिति ॥४॥

**भावदीपिका (श्री.टि.)**– 'यदा हि' इति श्लोके 'योगारूढस्तदोच्यत' इति लक्षणोक्तेः स्पष्टत्वादाह– **स्फुटमपीति** ॥ भाष्ये 'योगारूढस्य' इत्यस्य 'सम्पूर्णोपायवतः' इत्यर्थः । नन्वपरोक्षज्ञानरूपकार्यवत्त्वमेव तस्य लक्षणं किं न स्यात्, किं लक्षणान्तरवचनेनेत्यतः सम्पूर्ण-समाधियोगानुष्ठानवति प्रारब्धप्रतिबन्धवशाद् अनुत्पन्नापरोक्षज्ञानिन्यव्याप्तत्वात्, नेदं लक्षणमित्या-शयेनाह– **अपरोक्षज्ञानं त्विति** ॥ योगारोहस्य ध्यानस्य । अत एवोक्तम् 'ऐहिकमप्रस्तुतप्रतिबन्धे' इति । **इदमिति** ॥ इन्द्रियविषयेष्वनुषङ्गाभवादिरूपं सम्पूर्णोपायवदपरपर्याययोगारूढलक्षणमित्यर्थः । **साधकेऽपीति** ॥ उपायं साधयितरीत्यर्थः । 'परमात्मानं दृष्ट्वा दोषलयो भवति' इत्यध्याहारे दर्शनभवनयोः पुरुषदोषकर्तृकत्वेन समानकर्तृकत्वाभावात् 'दृष्टा' इति क्त्वाप्रत्यययायोग इत्यत

उक्तम्– **आप्यत इति शेष इति** ॥ 'दोषलयः' इति शेषः । तथा च 'परमात्मानं दृष्ट्वा स्थितेन पुंसा दोषलय आप्यते' इत्युक्तदर्शन-आप्त्योरुभयोरपि पुरुषकर्तृकत्वेन युक्तं समानकर्तृकत्वमिति द्रष्टव्यम् । 'परमात्मानं दृष्ट्वा' इत्यस्य सम्पूर्णोपायवता योगारूढेन पुंसेत्यर्थः । **अनतिविप्रकर्षात्** तथोक्तिरित्यनुसन्धेयम् ।

ननु प्रयत्नं विना स्वभावसिद्धकामादिदोषलयस्य योगारूढलक्षणत्वेऽपि तदत्र 'यदा हि' इति श्लोके विवक्षितमिति कुतः ? येनातिव्याप्तिपरिहार इत्यत आह– **मुख्य एवेति** ॥ प्रयत्नसाध्य-तदसाध्यविषयाननुषङ्गयोर्मध्ये प्रयत्नासाध्याननुषङ्गस्यैव मुख्यत्वात्, मुख्यस्यैव ग्राह्यत्वादित्येतावान् वाक्यशेषः ॥ ४ ॥

**भावप्रकाशः (कृ.टि.)**– समानकर्तृकतासिद्ध्यर्थमाह– **आप्यत इति शेष इति** ॥ नन्वत्र किमपरोक्षज्ञानी लक्ष्य उत समाधिपरिपाकवान् । नाद्यः । लक्ष्यतावच्छेदकलक्षणयोरैक्यप्रसङ्गेना-परोक्षज्ञानस्य लक्षणत्वशङ्कया एवाभावे तन्निराकरणायोगात् । न द्वितीयः । स्वतो दोषलयो दृष्ट्वेति प्रमाणोपन्यासविरोधात् । तत्रायत्नसाध्यदोषलयस्यापरोक्षज्ञानजन्यत्वोक्तेरिति चेन्न । दृष्ट्वेत्यस्य दर्शनसाधनसमाधिपरिपाकं प्राप्येति वा धातूनामनेकार्थत्वेन सम्यक् समाधायेति वाऽर्थोपपत्तेरिति । **अत्रेति** ॥ 'यदा हि नेन्द्रियार्थेषु' इति गीतावाक्य इत्यर्थः ॥ ४ ॥

**उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥**

## भाष्यम्

**स च योगारोहः प्रयत्नेन कर्तव्य इत्याह– उद्धरेदित्यादिना ॥ ५ ॥**

भावप्रदीपिका (प.टी.)– नन्वेवं योगारोहस्य दुष्करत्वात्, मार्गान्तरेणापि सुख-सम्भवात्, किमनेन ? इत्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतारयति– **स चेति** ॥ ५ ॥

भावप्रकाशिका (न.टी.)– ननु योगनिरूपणावसरे कोयमात्मोद्धारः ? इत्याशङ्क्य, उत्तरश्लोकमवतार्य तात्पर्यकथनेन परिहरति– **स चेति** ॥ मोक्षसुखापेक्षया संसारसुखस्या-र्वागतिरूपत्वात् तत उद्धारहेतुर्योगोवश्यकर्तव्य इति भावः ॥ ५ ॥

श्लोकः ५

**प्रमेयदीपिका (ज.टी.)– नन्वेवं विध्युपयुक्तमुक्त्वा समाधियोगे विधेये किमर्थमात्मोद्धारकर्तव्यतोच्यते ? इत्यतोऽनया वाचोभङ्ग्या योग एव विधीयत इत्याह– स चेति ॥ यस्याधिकार्यादिकमुक्तं 'स एव च योगः' इति वक्तव्ये यदारोहग्रहणं कृतं तत् तेन तावत्पर्यन्तं योगः कर्तव्यः। न मध्य एव त्याज्य इति ज्ञापनार्थम् । प्रयत्नेन अभियोगेन ॥ ५ ॥**

**भावबोधः (र.टि.)– ॥ तावत्पर्यन्तमिति ।** योगारोहलक्षणापरोक्षज्ञानपर्यन्तं ध्यानलक्षणसमाधियोगः कार्य इत्यर्थः ॥ ५ ॥

**भावदीपः (रा.टि.)– ॥ अधिकार्यादिकमिति ॥** आदिपदेन फलपर्यन्तं कर्मानुष्ठानग्रहः ॥ **वाचोभङ्ग्येति ॥** उद्धरेत् इत्याद्युक्तरीत्येत्यर्थः ॥ तावत्पर्यन्तं सम्पूर्णोपायसिद्धिपर्यन्तम् ॥ इत्यपि **ग्राह्यमिति ॥** एतेन कस्य इत्येतत् किंविशेषणकस्येति व्याख्यातं भवति ॥ ५ ॥

**भावरत्नकोशः (सु.टि.)– ॥ विध्युपयुक्तम्** समाधिविध्युपयुक्तम् अधिकार्यादिकम् । **वाचोभङ्ग्या** वाचोरीत्या । अवसरसङ्गतिकथनरूपत्वं स एव इत्यस्य स्फुटयति– **यस्येति** ॥ समाधियोगस्येत्यर्थः । अधिकार्यादिकम् इत्यत्र आदिपदेन कारणलक्षणयोः समाधियोगाधिकारत्वनोक्तकर्मण आफलप्राप्तेरनुष्ठेयत्वस्य च सङ्ग्रहः । आरोहग्रहणम् इत्यनन्तरं तत् इति शेषः ॥ तेन योगिना । **तावत्पर्यन्तम्** योगारोहणापरोक्षज्ञानरूपकार्यपर्यन्तम् । ननु कर्तव्यपदेनैव प्रयत्नसाध्यत्वलाभात् प्रयत्नेन इति व्यर्थमित्यत आह– **अभियोगेनेति** ॥ अभियोग आग्रह इति सुधा । बहुश्रुतत्वादिना जातेन परिचयातिशयेनेत्यर्थः । अभियोगस्त्वाग्रहः इत्यमरव्याख्याने तथोक्तेः ॥५॥

**भावदीपिका (श्री.टि.)– ॥ विध्युपयुक्तमिति ॥** समाधियोगविधानोपयुक्तमित्यर्थः । **योग एवेति ॥** समाधियोग एवेत्यर्थः । **तावत्पर्यन्तमिति ॥** योगारोहलक्षणापरोक्षज्ञानपर्यन्तं ध्यानलक्षणसमाधियोगः कार्य इत्यर्थः । तथा चानेनावहननादिवत् असकृत् फलप्राप्तिपर्यन्तमनुष्ठेयमिति प्रश्नोत्तरं जातमिति द्रष्टव्यम् । **अभियोगेनेति ॥** आग्रहेणेत्यर्थः । आसक्तिविशेषेणेति यावत् ॥ ५ ॥

**भावप्रकाशः (कृ.टि.)– ॥ विध्युपयुक्तमिति ॥** अधिकार्यादिकमित्यर्थः । **वाचोभङ्ग्येति ॥** वाचोरीत्येत्यर्थः ॥ **अधिकार्यादिकमिति ॥** आदिपदेन कारणलक्षणयोः सङ्ग्रहः । योगारूढलक्षणोक्तौ योगलक्षणस्याप्युक्तप्रायत्वादिति बोध्यम् । **तावत्पर्यन्तमिति ।** योगारूढलक्षणापरोक्षज्ञानपर्यन्तं समाधिरूपयोगः कार्य इत्यर्थः ।

ननु कर्तव्य इत्यनेनैव प्रयत्नासाध्यत्वलाभात् प्रयत्नेनेति व्यर्थमित्यत आह– **अभियोगेनेति** ॥ अभियोगस्तु शपथ इति विश्वोक्तेः शपथेनेत्यर्थः । आदरातिशयेनेति यावत् । यद्वाऽभितः सर्वतः सर्वस्मिन् देशे शरीरेन्द्रियमनोभिर्वा भगवति योगेनेत्यर्थः ॥ ५ ॥

**बन्धुरात्माऽऽत्मनस्तस्य येनाऽत्मैवाऽत्मना जितः ।**
**अनात्मनस्तु शत्रुत्वे वर्तेताऽत्मैव शत्रुवत् ॥ ६ ॥**

## भाष्यम्

**कस्य बन्धुरात्मेति? आह– बन्धुरात्मेति ॥ आत्मा मनः । आत्मनः जीवस्य । आत्मना मनसा । आत्मानं जीवम् ॥**

भावप्रदीपिका (प.टी.)– आत्मैवात्मनो बन्धू रिपुश्चेत्युक्तम् । तदुभयमेकत्र विरुद्धम् । अतः कस्य बन्धुः ? कस्य रिपुः ? इत्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतारयति– **कस्येति** । 'बन्धुरात्माऽऽत्मनः' इत्यात्मशब्दौ व्याचष्टे– **आत्मेति** । 'उद्धरेदात्मनाऽऽत्मानं नात्मानम्' इत्यात्मशब्दत्रयार्थमाह– **आत्मनेति** । 'येनात्मैवात्मना जितः' इत्यस्यात्मशब्दद्वयस्यार्थमाह– **आत्मैवेति** ॥

प्रमेयदीपिका (ज.टी.)– आत्मैव हि इत्युक्तमेवोत्तरश्लोके किमिति कथ्यत इति मन्दाशङ्कानिरासार्थमाह– **कस्येति** ॥ 'किं विशेषणश्च' इत्यपि ग्राह्यम् । तस्यैव तमेव प्रति बन्धुत्वं रिपुत्वं च विरुद्धम् । तद् विशेषणभेदेन व्यवस्थाप्यम् । तथाच किंविशेषणस्यात्मनः किंविशेषणो वाऽत्मा बन्धू रिपुश्चेत्यर्थः । 'इति पृच्छायाम्' इति शेषः । आत्मा,आत्मनः इति पदद्वयम् ।

आत्मशब्दस्यानेकार्थत्वाद्व्याचष्टे– **आत्मेति** ॥ नन्वाद्यश्लोके स्वपर्याय एवात्मशब्दः प्रकृतः । तदुपपादके द्वितीये कथमन्योऽर्थ इत्यत आह– **आत्मनेति** ॥ अनयैव रीत्याऽद्यश्लोकोत्तरार्धगतात्मशब्दव्याख्यानं द्रष्टव्यम् ॥

भावबोधः (र.टि.)– ॥ **किंविशेषणश्चेति** । 'येनात्मैवात्मना जित' इति मनसोऽपि विशेषितत्वादिति भावः । इति **पृच्छायामिति** । अन्यथेत्यत आहेति स्यादिति भावः । अनयैवेति । 'आत्मा मन आत्मनो जीवस्येत्युक्तरीत्येत्यर्थः ॥

श्लोकः ६

**भावदीपः (रा.टि.)– ॥ अनयैवेति ॥** पूर्वार्धगताऽत्मपदद्वयव्याख्यानरीत्यैव जीवमनः-परत्वेन व्याख्यानं द्रष्टव्यमित्यर्थः ॥

**भावरत्नकोशः (सु.टि.)–** ननु 'येनात्मैवात्मना जितः' इति विशिष्टस्यैव तत्र बन्धुत्वा-द्युक्तेर्नोक्तमेवोच्यत इत्यत आह– **मन्देति ॥** बन्धुत्वेनोक्तस्यात्मनो रिपुत्वं घटयितुमाह– **किं-विशेषणश्चेत्यपि ग्राह्यमिति ॥** किं विशेषणं यस्यात्मन इति बहुव्रीहिणा पुंस्त्वम् । 'आत्मनो बन्धुः' इति प्रतिसम्बन्धिन उक्तत्वात् कथमेवमाकाङ्क्षेत्यत आह– **तस्यैवेति ॥** उक्ताशङ्काऽ-पनोदाय– **कस्येति ।** भाष्यार्थमाह– **किंविशेषणस्येति ॥** 'येनात्मैवात्मना जितः' इति गीतायां 'जीवेन बुद्ध्या हि यदा मनो जितम्' इत्युदाहरिष्यमाणप्रमाणे च वैशिष्ट्यस्यैव मनसो बन्धुत्वाव-गमादाह– **किंविशेषणो वेति ॥** 'बन्धू रिपुः' इत्यत्र 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः । प्रश्नोत्तररूपत्वे 'इत्यत आह' इति विन्यासः स्यादित्यतः 'इति' इत्यनूद्य शेषमाह– **इति पृच्छायामिति ॥**

> 'आत्माऽर्कचन्द्रवाताग्निजीवेषु परमात्मनि ।
> देहे यत्ने धृतौ कीर्तौ बुद्धौ मनसि च श्रुतः ॥

इति अभिधानादाह– **अनेकार्थत्वादिति ॥**

**आद्यश्लोके** 'उद्धरेत्' इत्याद्यश्लोके । उपपाद्योपपादकभावेनैकार्थ्याद् आद्यत्वद्वितीयत्वविवक्षा ज्ञेया । **स्वपर्याय एवेति ।** अन्यस्योद्धारविधिगोचरतायां अवसादनप्रसक्तेश्चाभावेन तस्मिन्निषेध-विषयतायाश्चायोगेन स्वशब्दपर्यायो जीववाचक एव वक्तव्यः । तथा च सङ्करः 'न ह्यन्यः स्वस्य कश्चिद्बन्धुः संसारनिमग्नस्य भवति' इत्यभापतेति भावः । **अन्यार्थः** मनोऽर्थकः ॥ **आत्मनेतीति ।** तथा च पूर्वश्लोकेऽपि मनसः प्रकृतत्वात् नोक्तानुपपत्तिरिति भाष्यभाव इति हृदयम् । उद्धारादौ हेतूक्तिपरे 'आत्मैव ह्यात्मनः' इत्याद्यश्लोकोत्तरार्धे जीव एवोच्यत इति कथमेवमुक्तिरित्यत आह– **अनयैवेति ॥** पूर्वार्धगतात्मशब्दद्वयव्याख्यानरीत्यैवेत्यर्थः । वक्ष्यति चात्मशब्दस्य मनोऽर्थत्वे मानमिति भावः ।

**भावदीपिका (श्री.टि.)– ॥ उत्तरश्लोके** 'बन्धुरात्मा' इति श्लोके । 'आत्मैव हि' इत्यत्रात्मन आत्मानं प्रति बन्धुत्वाद्युक्तौ 'कीदृशस्यात्मन आत्मा बन्धू रिपुश्च' इत्याकाङ्क्षायाम्

'बन्धुरात्मा' इत्युत्तरश्लोकः प्रवृत्त इति स्पष्टमेव । तत्र 'येनात्मैवात्मना जितः' इत्याद्युक्तेः । अतो 'मन्दाशङ्का' इत्युक्तम् ॥ **कस्येति** ॥ किंविशेषणवत इत्यर्थः । **किंविशेषणश्चेति** ॥ 'येनात्मैवात्मना जितः' इति मनसोऽपि विशेषितत्वादिति भावः ॥ इति **पृच्छायामिति** ॥ अन्यथा इत्यत आहेति स्यात्, नतु इत्याहेतीति भावः । **आद्यश्लोक इति** ॥ 'उद्धरेदात्मनाऽऽत्मानम्' इति श्लोक इत्यर्थः । **स्वपर्याय इति** ॥ स्वशब्दपर्याय इत्यर्थः । तथाच पूर्वश्लोके जीवपर्याय एवात्मशब्दः प्रकृतः, अतः 'आत्मा मनः' इति व्याख्यानमयुक्तमिति भावः । **आहेति** ॥ तत्रापि तृतीयान्तात्मशब्देन मन एव प्रकृतमस्तीत्याहेत्यर्थः ।

भावप्रकाशः (कृ.टि.)–उत्तरश्लोके विशिष्टस्यैव मनसो बन्धुत्वाद्युक्तेर्नोक्तमेवोच्यत इत्यत उक्तं– **मन्दाशङ्केति** ॥ येनात्मैवात्मना जित इति मनोविशेषणव्यावर्त्यां शङ्कामाह– **किंविशेषणश्चेत्यपीति** ॥ आत्मनो बन्धुरिति सम्बन्धिन उक्तेः तदाकाङ्क्षेत्यत आह– **तस्यैवेति** ॥ **किं विशेषणस्येति** ॥ जीवेन बुद्ध्या हीत्युदाहरिष्यमाणप्रमाणे बुद्ध्यादिबलविशिष्टस्यैव जितमनोबन्धुरित्यवगमादेवमुक्तमित्यवधेयम् ।

## भाष्यम्

**आत्मैव मनः । आत्मना बुद्ध्या जीवेनैव वा । सहि बुद्ध्या विजयति ॥ उक्तं च–**

**'मनः परं कारणमामनन्ति' (भाग. ११.२३.४३)**

**'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' (ब्रह्मबिन्दु.उ.२),**

**'उद्धरेन्मनसा जीवं न जीवमवसादयेत् ।**
**जीवस्य बन्धुः शत्रुश्च मन एव न संशयः',**

**'जीवेन बुद्ध्या हि यदा मनो जितं**
**तदा बन्धुः शत्रुरन्यत्र चास्य ।**
**ततो जयेद् बुद्धिबलो नरस्तद्**
**देवे च भक्त्या मधुकैटभारौ ॥' इत्यादि ब्रह्मवैवर्ते ॥**

श्लोकः ६

भावप्रदीपिका (प.टी.)– 'आत्मना' इति बुद्धिः कुतः ? इत्यत आह– **स हीति** । श्लोकार्थं प्रमाणैः स्थापयति– **उक्तं चेति** । 'अनात्मनः' इत्येतदविद्यमानात्मन इति प्रतीति-निरासाय व्याचष्टे– **अजित इति** । अजितमनस्कत्वेऽनात्मत्वप्रयोगः कथम्? इत्यत आह– **सदपीति** । अनुपकारिण्यविद्यमानताप्रयोगः क्व दृष्ट इत्यत आह– **सन्निति** । 'अनात्म'-शब्दार्थमुक्त्वा, 'अनात्मनस्तु शत्रुत्वे' इति योजयति– **तस्येति** ॥ ६ ॥

भावप्रकाशिका (न.टी.)– आद्यात्मशब्दौ पूर्वश्लोकस्थौ । अत्र स्वेनैव सात्मानमुद्धरे-दिति मायिनोक्तम् । तद्व्युदासाय मनसा जीवमुद्धरेदित्येतमर्थं वहुवाक्यसंवादेन स्थापयति– **उक्तं चेति** । तत्र न विद्यत आत्मा यस्यासावनात्मेति प्रतीतेः 'अनात्म'शब्दस्य भगव-द्विवक्षितार्थं तावदाह अनात्मन इति । अजितात्मन्यनात्मशब्दप्रवृत्तिं सदृष्टान्तं घटयति– **अजितमनस्कस्येत्यादिना** । एवम् 'अनात्म'शब्दार्थं घटयित्वा तदादेः श्लोकार्धस्यार्थमाह– **तस्येति** ॥ ६ ॥

प्रमेयदीपिका (ज.टी.)– येनात्मैवाऽत्मना जितः इत्यत्रात्मशब्दौ व्याचष्टे– **आत्मैवेति**॥ एवशब्दोपादानं व्याख्येयविवेकार्थम् । जीवेनैव इत्यवधारणं प्राधान्यज्ञापनार्थम् । यदाऽऽत्मशब्दो जीवे तदा कर्तरि तृतीया । यदा बुद्धौ तदा करण इति ज्ञापयन्नुपपादयति– **स हीति** ॥ विजयति विजयते । मन इति शेषः ॥ **'स्वेनैव'** इत्यादिव्याख्याननिरासार्थमुक्तेऽर्थे प्रमाणान्याह– **उक्तं चेति** ॥

भावबोधः (र.टि.)– ॥ **व्याख्येयविवेकार्थमिति** ॥ बन्धुरात्मेति निरवधारणात्मशब्दस्य मनःपरत्वेन व्याख्याततत्वात् अत्रावधारणाप्रयोगे पुनरुक्तिशङ्का स्यादिति व्याख्येयात्मपदविवेकार्थ-मित्यर्थः ॥ **प्राधान्येति** । बुद्ध्यपेक्षयेत्यर्थः । बुद्ध्येत्युक्तत्वाद् अन्ययोगव्यवच्छेदकत्वाद-सम्भवादित्यर्थः । **स्वेनैवेत्यादीति** । 'उद्धरेदात्मना' इत्याद्यात्मशब्दानामित्यर्थः ॥

भावदीपः (रा.टि.)– ॥ **व्याख्येयेति** ॥'एवं हि जीवेन' इत्येवकारो व्याख्याने व्यर्थ इत्यत आह– **प्राधान्येति** ॥ आत्मना इत्युक्तकरणापेक्षयेति भावः । 'विपराभ्यां जेः' (पा.सू.१.३.१९) इत्यात्मनेपदोक्तेराह– **विजयत इति** ॥ ६ ॥

वाक्यार्थप्रदीपः (पां.टि.)– ॥ **विजयति विजयते मन इति शेष इति** । विपराभ्यां

जेरिति विपरापूर्वात् जयतेरात्मनेपदं भवतीत्युक्तत्वाद्विपूर्वकस्य जयतेरात्मनेपदित्वात् विजयतीत्यस्यानुपपत्तिरिति भावः ॥

**भावरत्नकोशः (सु.टि.)**– ननु 'आत्मैव मन एव' इति वक्तव्यम् । तत्कथं मन इति? यदि स्फुटत्वादनुक्तिः, तर्हि 'आत्मा मनः' इत्येव युक्तमित्यत आह– **एवशब्देति** ॥ बहूनामात्मशब्दानां बुद्ध्युपारूढत्वात् 'येनात्मैवात्मना जितः' इत्यत्र विद्यमानमात्मपदं व्याख्येयमिति ज्ञापनार्थम् एवशब्दशिरस्कात्मपदं गृहीतम् । अन्यथा 'बन्धुरात्मा' इत्यात्मशब्दस्य मनोऽर्थतया व्याख्यातत्वात् पुनर्व्याख्यानं व्यर्थमिति शङ्का स्यादिति भावः ।

एवशब्दस्यान्ययोगव्यवच्छेदार्थत्वे 'बुद्ध्या' इति व्याख्यानमयुक्तमित्याशङ्क्याह– **प्राधान्येति** ॥ 'बुद्ध्यपेक्षया' इति शेषः । 'करणे तृतीया' इति वर्तते । 'कर्तृकरणयोस्तृतीया' इति स्मरणात् । इदं च 'सः' इति कर्तृवाचकपदेन 'बुद्ध्या' इति करणतृतीयान्तपदेन च ज्ञायत इति भावेनोक्तम्– **ज्ञापयन्निति** ॥ तथा च वक्ष्यते जीवेन बुद्ध्येति । 'विजयति' इति कथं परस्मैपदम् । 'विपराभ्यां जेः' इति विपूर्वस्य जयतेरात्मनेपदविधानादित्यत आह– **विजयति विजयत इति** ॥ महाभाष्ये 'षष्ठीयुक्तश्छन्दसि वा' इत्यत्र 'वा' इति योगविभागाश्रयणेन 'छन्दसि वा सर्वे विधयो भवन्ति' इत्युक्त्वा, परस्मैपदव्यत्ययः 'प्रतीपमन्य ऊर्मिः युध्यति', 'युध्यते' इति प्राप्ते' इत्युक्तत्वाद् युक्तं परस्मैपदम् । भाष्यस्य छन्दस्तुल्यत्वादिति भावः । 'चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदम्' इति वचनात्, 'व्यत्ययो बहुलम्' इति सूत्रे 'सुप्तिङुपग्रहलिङ्गनराणाम्' इति श्लोकं व्याकुर्वता हरदत्तेन परस्मैपदात्मनेपदयोः उपग्रहशब्दो वर्तते इत्युक्त्वा 'स ब्रह्मचारिणमिच्छते', 'इच्छति' इति प्राप्ते, 'ऊर्मिर्युध्यति' 'युध्यते' इति प्राप्त इति भाष्योक्तमेवोदाहृत्य व्यत्ययेन परस्मैपदमप्यस्तीति भावनाच्च अत्र परस्मैपदं नानुचितम् । अत एव व्यत्ययसूत्रमहाभाष्ये 'स च न मरति' 'म्रियते' इति प्राप्ते' इत्युक्तमित्यपि आहुः । 'ततो जयेद् बुद्धिबलो नरस्तन्मनः' इति प्रमाणानुसारेण 'विजयति' इत्यस्य कर्म पूरयति– **मन इतीति** ॥

नन्वेकस्यात्मशब्दस्य मनोबुद्ध्यात्मादिनानार्थत्वे न प्रमाणमस्ति । अतो 'येन' इत्यादौ 'येनात्मना स्वेनैवात्मलक्षणया आत्मा कार्यकारणसङ्घातो जितः' इति सङ्करोक्तिरीतिरेवाश्रयणीया, इत्याशङ्क्याह– **स्वेनैवेति । परं कारणम्** बन्धमोक्षयोः । **उद्धरेत्** ऊर्ध्वं हरेत् योगारूढताम् आपादयेत् । **अवसादयेत्** अधो नयेत् । मनस आत्मोद्धारे तदवसादे च कथं कारणत्वमित्यत

श्लोकः ६

उक्तम्– **जीवस्य बन्धुः शत्रुश्चेति** ॥ कथमेकस्यैव बन्धुत्वं शत्रुत्वं च विप्रतिषिद्धमित्यत उक्तम्– **बुद्ध्या जितं बन्धुः, अन्यत्र शत्रुरिति** ॥ बुद्धिः बलं यस्य स तथा, तत् मनः । न केवलं बुद्धिबलेन, मधुकैटभयोररौ देवे भगवति भक्त्या च इति प्रमाणानि स्फुटत्वादव्याख्यातानि ।

**भावदीपिका (श्री.टि.)– ॥ उत्तरार्धगतेति ॥** 'आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः' इत्यत्रापि आत्मनःजीवस्य, आत्मैव मन एव बन्धू रिपुश्चेत्यर्थो द्रष्टव्यः । **व्याख्येयविवेकार्थमिति** ॥ 'बन्धुरात्मा' इति निरवधारणात्मशब्दस्य मनःपरत्वेन पूर्वं व्याख्यातत्वात्, अत्रावधारणाग्रहणे व्याख्यातस्यैव पुनर्व्याख्यानं व्यर्थमिति शङ्का स्यात् । अतो 'येनात्मैव' इत्यत्रत्यात्मशब्दो व्याख्यायत इति व्याख्येयात्मपदविवेकार्थम् एवकारग्रहणमित्यर्थः ॥ **प्राधान्येति** ॥ बुद्ध्यपेक्षयेत्यर्थः । 'बुद्ध्या' इत्युक्तत्वादन्ययोगव्यवच्छेदकत्वं न सम्भवतीत्याशयः । **कर्तरीति** ॥ तथा चात्मना जीवेन कर्त्राऽऽत्मा जित इत्यर्थो द्रष्टव्यः । **करण इति** ॥ जीवेनात्मना बुद्ध्या करणभूतयाऽत्मा जित इत्यर्थो द्रष्टव्यः । 'कर्तृकरणयोस्तृतीया' इति स्मरणादिति भावः । 'विपराभ्यां जेः' इति सूत्रेण 'वि''पराम्' इत्युपसर्गाभ्यां परस्य जि जय इति धातोरात्मनेपदविधानादाह– **विजयत इति** ॥ 'चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदम्' इति वचनादिति भावः ॥ **विजयत इति** ॥ अभिभावयतीत्यर्थः, तिरस्करोतीति यावत् ।

'जयेर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः ।
उत्कर्षप्राप्तिराद्यार्थो द्वितीयेऽर्थे सकर्मकः ॥'

इति वचनेनाभिभवार्थकजिधातोः सकर्मकत्वादाह– **मन इति शेष इति** ॥ **स्वेनैवेत्यादीति** ॥ 'उद्धरेदात्मना' इत्याद्यात्मशब्दानामित्यर्थः । तेनात्मशब्दस्य स्वपर्यायत्वाङ्गीकारादिति भावः । न आत्मा अनात्मा, तस्यानात्मन इति नञ्समासः । न विद्यते आत्मा यस्य सोऽनात्मा, तस्यानात्मन इति बहुव्रीहिः ॥

**भावप्रकाशः (कृ.टि.)– ॥ व्याख्येयविवेकार्थमिति** ॥ आत्मैव आत्मना जितः इत्यत्रत्यमात्मपदं व्याख्येयमिति ज्ञापनार्थमिमित्यर्थः ॥ एवशब्दाभावे बन्धुरात्मा इत्यात्मशब्दस्य व्याख्यातत्वात् पुनर्व्याख्यानं व्यर्थमिति शङ्काप्रसङ्गादिति भावः ॥ बुद्ध्येत्युक्तत्वादेवशब्दस्य नान्यव्यवच्छेदकत्वमित्यत आह **प्राधान्येति** ॥ बुध्यपेक्षयेति शेषः ॥ ननु विजयत इति वक्तव्यम् । विपराभ्यां जेरित्यात्मनेपदत्वोक्तेः । तत्कथं परस्मैपदमित्यत आह– **विजयत इति** ॥ **स्वेनैवेत्यादीति** ॥ 'उद्धरेदात्मना' इत्याद्यात्मशब्दानामिति शेषः ।

# भाष्यम्

**अनात्मनः अजितात्मनः पुरुषस्य, अजितमनस्कस्य । सदपि मनोऽनुपकारीत्यनात्मा । सन्नपि भृत्यो न यस्य भृत्यपदे वर्तते स ह्यभृत्यः । तस्यात्मा मन एव शत्रुवत् शत्रुत्वे वर्तते ॥ ६ ॥**

प्रमेयदीपिका (ज.टी.)– अनात्मनः इति नञ्समासो वहुव्रीहिर्वा स्यात् । नाद्यः । आत्मनः आत्मान्यत्वानुपपत्तेः। आत्मान्तरादन्यत्वस्य च प्रकृतेऽनुपयोगात् । न द्वितीयः । आत्मशब्दस्य जीववाचित्वे वा मनोवाचित्वे वा संसारिणि तदभावस्यासम्भवादित्यत आह– **अनात्मन इति** ॥ वहुव्रीहिपरिग्रहसूचनाय पुरुषस्य इत्यन्यपदार्थो दर्शितः । अनात्मशब्दार्थं दर्शयितुमाह– **अजितेति** ॥

ननु अविद्यमान आत्मा यस्यासावनात्मा । तत्कथमुच्यते अजितात्मनः इति? तत्राह– **सदपीति** ॥ विद्यमानमपि मनः अजितम् अनुपकारि इति अविद्यमानसादृश्यादविद्यमानतामुपचर्य अजितात्मा अनात्मा उक्त इत्यर्थः । गौणप्रयोगे किं प्रयोजनमिति चेन्न । रूढोपचारे प्रयोजनानपेक्षणादिति भावेनाऽह– **सन्नपीति** ॥ भृत्यपदे सेवादौ । पदानां व्यवहितत्वात् अनात्मनः इत्यर्धं व्याचष्टे– **तस्येति** ॥ **तस्य** अजितमनस्कस्य । 'बन्धुरेव' इत्येवार्थः । **शत्रुवत्** प्रसिद्धशत्रुरिव । **शत्रुत्वे** अपकारित्वे ॥ ६ ॥

**भावबोधः** (र.टि.)– ॥ **आत्मान्यत्वानुपपत्तेरिति** ॥ प्राग्जीवस्यैव मनश्शत्रुकत्वोक्तेरित्यर्थः । **आत्मशब्दस्येति** ॥ अनात्मन इति पदान्तर्गतस्येत्यर्थः । **तदभावस्यासम्भवादिति** ॥ अन्यपदार्थस्य संसारिणः चिदचित्संवलितत्वरूपत्वेन जीववन्धुत्वेनोक्त एवेत्यर्थद्वयस्यापि सद्भावादिति भावः । **एवार्थ इति** । मन एवेत्येवशब्दस्यार्थान्तरासम्भवाद्वन्धुरेवेत्युक्तम् ॥ व्याख्येयात्मपदानुसारेण पुंलिङ्गम् । **वाक्यभेदेनेति** ॥ जितात्मनः प्रशान्तिरिति वाक्यभेदेनेत्यर्थः । **पूरयन्निति** ॥ 'हृदि' इत्येतदित्यर्थः । **कुर्वन्नित्युक्तमिति** ॥ वर्तमानार्थकलडादेशशत्रन्तप्रयोग इत्यर्थः । **वक्ष्यमाणान्वयमिति** ॥ 'योगी' इत्युक्त इत्युच्यते इति गीतान्वयमभिप्रेत्यैवम्भूतो योगानुष्ठाता योगसम्पूर्ण इति भाष्ये वक्ष्यमाणान्वयमपेक्ष्येत्यर्थः । **क्रमोल्लङ्घनमिति** ॥ 'युक्त इत्युच्यते योगी' इति गीतापाठक्रमोल्लङ्घनमित्यर्थः । **विरुद्धार्थयोरिति** ॥ इनेः क्तस्य च वर्तमानत्वातीतत्वार्थकत्वेन विरुद्धत्वात् तदन्तर्योगी युक्त इत्येतयोः कथमेकार्थवाचित्वमित्यर्थः ॥

श्लोकः ६

**भावरत्नकोशः (सु.टि.)**– आत्मनोऽन्यो अनात्मा, अनश्व इति यथा इति, अत्रापि वर्तिपदार्थ आत्मा किं स्वात्मैव विवक्षित आहोस्विज्जीवमात्रमिति विकल्पं हृदि निधायाद्यं दूषयति– **नाद्य इति** ॥ द्वितीयं दूषयति– **आत्मान्तरादिति** ॥ अविद्यमान आत्मा यस्मिन् यस्य वा सः अनात्मा इति बहुव्रीहिपक्षं दूषयति– **न द्वितीय इति** ॥ **आत्मशब्दस्य** अनात्मपदान्तर्गतस्य । **तदभावस्य** आत्माभावस्य । **असम्भवादिति** ॥ चिदचित्संवलितस्यैव वस्तुनः संसारित्वादिति भावः । यद्वक्ष्यति 'सुहृन्मित्र' इत्यत्र 'चेतनाचेतनपिण्डे जीवशब्दस्य प्रयोगात्' इति । 'पुरुषस्य' इति कस्य व्याख्यानम् ? इत्यतस्तद्भावमाह– **बहुव्रीहीति** ॥ बहुव्रीहिपक्षे जीववाचित्वं मनोवाचित्वं वा न सम्भवतीति दूषितमित्याशङ्क्य मनोवाचित्वम् अत्राभिसंहितमिति भाष्यमवतारयति– **अनात्मशब्दार्थमिति** ॥ **सत्** निर्दुष्टमित्युक्तौ 'अनुपकारि' इति व्याहतमित्यत आह– **विद्यमानमपीति** ॥ अनुपकारित्वं च तस्य विशेषणावच्छिन्नस्यैवेति भावेन विशेषणमाह– **अजितमिति** ॥ 'उपचर्य' इति ल्यप्, गौर्णी वृत्तिमाश्रित्येत्यर्थः । **प्रयोजनानपेक्षणादिति** । चित्रलिखितसिंहादौ सिंहशब्दप्रयोगस्येवेति भावः । 'स हि अभृत्यः' इति विद्यमानोऽपि भृत्यो न सेवादौ उपकारे वर्तत इत्यविद्यमानसादृश्यात् अविद्यमान इत्युपचर्य 'असेवकभृत्यः अभृत्यो ह्युच्यते' इति भाष्यार्थ उक्तप्रायत्वादनुक्तः ।

'आत्मनः' इत्यस्य परामर्शः **तस्येति** । तदर्थमाह– **अजितमनस्कस्येति** ॥ एवशब्दग्रहणाभिप्रायमाह– **बन्धुरेवेतीति** ॥ यो बन्धुत्वेनोक्त आत्मा स एवेत्येवकारार्थ इत्यर्थः । 'तत्र तस्येव' इति सप्तमीषष्ठीसमर्थाद् वतिप्रत्यय इत्यङ्गीकारे प्रकृतानन्वयात्, प्रथमान्ताद् वतिरिति भावेन व्याचष्टे– **शत्रुवत् प्रसिद्धशत्रुरिवेति** ॥ तथा च विष्णुतत्त्वनिर्णयटीकायाम् । 'तत्र तस्येव' इति लक्षणस्य प्रायिकत्वेनाभियुक्तैर्व्याख्यातत्वाद् 'घटवत्' इति युज्यत इति । केचित्तु 'शत्रुवत्' इति फलितार्थप्रदर्शनम् । 'शत्रुणा तुल्यं वर्तते' इत्येव व्युत्पत्तिः । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययसम्भवात् । अत एव 'स्थानिवदादेशः' इति सूत्रे 'स्थानिना तुल्यं वर्तत इति स्थानिवत्' इति व्याख्यातं वृत्तावित्याहुः । ननु शत्रुः शातयिता । तत्कथमात्मा शत्रुः ? तथात्वे च कथं वतिरित्याशङ्क्य, अत्र शत्रुत्वम् अनुपकारित्वसादृश्यादेव ज्ञातव्यमिति भावेनाह शत्रुत्वे अपकारित्व इति ॥ ६ ॥

**गीताश्लोकद्वयाक्षरार्थस्तु** यस्याधिकार्यादिकमुक्तं स एव योगः अभियोगेन कर्तव्य इत्युच्यते उद्धरेदिति । प्रकरणाद् ध्यानयोगाधिकारित्वेनोक्तः पुरुषः आत्मना मनसा आत्मानम् स्वात्मानं

जीवम् उद्धरेत् ऊर्ध्वं हरेत् योगमारोहयेत् । आत्मानं जीवं नावसादयेत् नाधः पातयेत् । हि यस्मात् आत्मा मन एवात्मनो जीवस्य बन्धुः, आत्मैव मन एव रिपुरात्मनः ॥ ५ ॥

तस्यैव तमेव प्रति बन्धुत्वं रिपुत्वं च विरुद्धमिति, तद् विशेषणभेदेन व्यवस्थाप्यते । ततश्च किंविशेषणस्यात्मनः किंविशेषणो वाऽऽत्मा बन्धू रिपुश्चेति पृच्छायाम् उच्यते बन्धुरिति । येन आत्मना जीवेन बुद्ध्या करणेन आत्मा मनो जितः विषयेभ्य आहृत्य वशीकृतम्, तस्यात्मनो जीवस्य आत्मा मनो बन्धुरेव उपकार्येव । अनात्मनः अजितमनस्कस्य तु पुरुषस्य आत्मा मन एव यो बन्धुत्वेनोक्तः स एव शत्रुवत् प्रसिद्धशत्रुरिव शत्रुत्वे अपकारित्वे वर्तेत वर्तत इति जानीयात् इति ॥ ६ ॥

**भावदीपिका (श्री.टि.)–** ॥ **आत्मान्यत्वानुपपत्तेरिति** ॥ प्राग् जीवस्यैव मनःशत्रुकत्वोक्तेः, इदानीं मनःशत्रुकत्वेनोच्यमानस्यानात्मनो जीवत्वावश्यम्भावात्, तस्य च स्वान्यत्वमनुपपन्नमिति भावः । नन्वात्मान्तरादन्यत्वेन अनात्मत्वमुपपन्नमिति चेन्न । प्रयोजनाभावे तत्कथनस्य प्रकृतासङ्गतत्वादित्याह– **आत्मान्तराद् अन्यत्वस्य चेति** ॥ **आत्मशब्दस्येति** ॥ 'अनात्मनः' इति पदान्तर्गतस्येत्यर्थः । **संसारिणीति** ॥ 'न विद्यते आत्मा यस्य' इत्यत्रान्यपदार्थभूतेऽस्य संसारिणि जीवचैतन्यवत्त्वस्य, मनोयुक्तत्वस्य च सत्त्वेन जीवमनसोरभावस्यासम्भवादित्यर्थः । एतदुपपादनायैव **'संसारिणि'** इत्युक्तम् ॥ **अन्यपदार्थ इति** ॥ अन्यपदार्थप्रधानो बहुव्रीहिरिति भावः ॥ **आहेति** ॥ आत्मशब्देन मनोऽभिप्रेतमित्याहेत्यर्थः । **तत्कथमिति** ॥ अजितत्वं नञर्थो न भवतीति भावः । 'अजितम्' इत्यनन्तरं 'चेत्' इति शेषः । **अविद्यमानसादृश्यादिति** ॥ अनुपकारित्वरूपगुणेन सादृश्यादित्यर्थः । **अजितात्माऽनात्मेति** ॥ 'योऽजितात्मा स अनात्मा' इत्युक्त इत्यर्थः । एवशब्दस्यार्थान्तरासम्भवादाह– **बन्धुरेवेत्येवार्थ इति** ॥ बन्धुत्वेनोक्त एवेत्यर्थः । व्याख्येयात्मानुसारेण 'बन्धुः' इति पुल्लिङ्गप्रयोग इति ज्ञेयम् । दृष्टान्तदार्ष्टान्तिकयोः समानविभक्तिकतायास्तन्त्रत्वाद् आत्मा मनःशत्रोरिव शत्राविव शत्रुत्वे वर्तत इति षष्ठ्यर्थे सप्तम्यर्थे वा वत्यङ्गीकारेऽर्थासङ्गतेः, 'तत्र तस्येव' इति सूत्रस्य प्रायिकत्वमङ्गीकृत्य प्रथमान्तादयं वतिरित्याशयेनाह– **शत्रुरिवेति** ॥ ६ ॥

**भावप्रकाशः (कृ.टि.)–** ॥ **आत्मन्यत्वानुपपत्तेरिति** ॥ प्राग् जीवस्यैव मनःशत्रुकत्वोक्तिरिदानीं मनःशत्रुकत्वेनोच्यमानस्यानात्मनो जीवत्वावश्यम्भावाज्जीवान्यत्वानुपपत्तेरित्यर्थः ।

श्लोकः ७,८

**आत्मशब्दस्येति** ॥ अनात्मपदान्तर्गतस्येति शेषः । **असम्भवादिति** ॥ चिदचित्संवलितवस्तुन एव संसारित्वादिति भावः । ननु तथापि कया वृत्त्या नञोऽजितत्वमर्थ इत्यत आह– **विद्यमानमपीति** ॥ **एवार्थ इति** ॥ यो बन्धुत्वेनोक्तः स एवेत्येवार्थ इत्यर्थः । अर्थान्तरसम्भवादिति भावः । **शत्रुरिवेति** ॥ फलितार्थकथनमेतत् । विग्रहस्तु शत्रुणा तुल्य इति बोद्धव्यः । 'तेन तुल्यं क्रिया चेद्वति'रिति वतिप्रत्ययविधानादिति मन्तव्यम् । ननु शत्रुवदिति शत्र्वन्यत्वस्य सूचितत्वात् कथं शत्रुत्व इत्युक्तमित्यत आह– **अपकारित्व इति** ॥ ६ ॥

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।**
**शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥**

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।**
**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥**

## भाष्यम्

जितात्मनः फलमाह– **जितात्मन इति** ॥ जितात्मा हि प्रशान्तो भवति । न तस्य मनः प्रायो विषयेषु गच्छति । तदा च परमात्मा सम्यगाहितः । हृदि सन्निहितो भवति । स अपरोक्षज्ञानी भवतीत्यर्थः ॥

भावप्रदीपिका (प.टी.)– नन्वेवं जितं मनो यदि बन्धुः, तर्ह्यपि किं फलम् ? इत्याशङ्क्य, उत्तरत्वेनोत्तरार्धमवतारयति– **जितात्मन इति** । जितात्मत्वेन कथं ज्ञानम् ? इत्यत आह– **जितात्मेति** । तदा चेति प्रशान्तत्वे । हृदये परमात्मनः स्थितिः सर्वसमेत्यत उक्तम्– **सम्यगिति** । तदेव विवृणोति– **अपरोक्षेति** ।

भावप्रकाशिका (न.टी.)– मनो जित्वा तेन स्वात्मानमुद्धरेदित्युक्तम् । तत्रात्मोद्धारः कः ? इत्याकाङ्क्षायां प्रकृतयोगारोह एवेति भावेनोत्तरार्धमवतार्य व्याचष्टे– **जितात्मनः फलमिति** । पदद्वयं हेतुहेतुमद्भावेन योजयति– **जितात्मा हीति** । 'प्रशान्त'शब्दो विषयोपरतिमाचष्ट इत्याह– **न तस्येति** । विषयोपरते च मनसि किम् ? इत्याकाङ्क्षायामाह– **तदा चेति** । सदा सन्निहितत्वात् तदा को विशेष इत्यत आह– **अपरोक्षेति** ॥

**प्रमेयदीपिका (ज.टी.)– योगो विहितः ।** तत्किं जितात्मनः इत्यनेनोच्यते? आह– **जितात्मन इति ॥** 'उपकारी हि बन्धुरुच्यते । तत्र जितं मनः कमुपकारं करोति । येन बन्धुः स्यात्? आत्मोद्धारं करोतीति चेत् । 'स एव च क इत्याशङ्क्य' इति शेषः । जितात्मनः फले वक्तव्ये प्रशान्तस्य इत्यनुवादः किमर्थः ? इत्यत आह– **जितात्मा हीति ॥** वाक्यभेदेनेदमेत्र फलकथनमिति भावः ॥

ननु जितात्मत्वमेव प्रशान्तत्वम् । तत् कथं तत्फलं स्यादित्यत आह– **नेति ॥** तस्य जितात्मनः । **'स्वत एव'** इति शेषः । तर्हि निराकाङ्क्षत्वादुत्तरं **वाक्यं** व्यर्थमित्यतः परमफलं दर्शयितुं तदिति भावेन न्यूनमध्याहारेण पूरयन् व्याचष्टे– **तदा चेति ॥** प्रशान्तत्वे सति परमात्मा सर्वेषां हृदि सन्निहित एव । तत्कुतः प्रशान्तस्य विशेषः? इत्यतः 'सम्यक्'-पदसूचितार्थं विवृणोति– **अपरोक्षेति ॥** योगारूढ इत्यर्थः ॥

**भावदीपः (रा.टि.)– ॥ योगो विहित इति ॥** वशीकृतमनस्कत्वं हि समाधिरूप-योगोपायत्वात् योगः इत्युच्यते। स च 'उद्धरेत्' इत्यादिना विहित इत्यर्थः ॥ **वाक्यभेदेनेति ॥** जितात्मनः प्रशान्तिः, प्रशान्तस्य परमात्मा इत्येवमिति भावः । योगारोहः प्रयत्नेन कर्तव्य इत्यादि सम्बन्धः ॥

**भावरत्नकोशः (सु.टि.)– ॥ योगो विहित इति ।** ज्ञानान्तरङ्गसमाधियोगः 'उद्धरेत्' इत्यादिना कर्तव्यत्वेनोक्त इत्यर्थः । नायं 'प्रशान्तस्य' इत्यनुवादः, किन्तु जितात्मनः फलाभिधान-रूपमेव । न चैवं षष्ठ्यनुपपत्तिः इत्याशङ्क्याह– **वाक्यभेदेनेति ॥** उक्तरीत्या जितात्मा हि प्रशान्तः विषयोपरतिमान् भवति । प्रशान्तस्य च परमात्मा समाहित इति वाक्यभेदेन युक्तं फलकथनरूपत्वमस्य वाक्यस्येति भावेन 'जितात्मा हि प्रशान्तो भवति' इत्यभाषतेत्यर्थः । **तत्** प्रशान्तत्वम् । **तत्फलम्** जितात्मत्वफलम् । फलफलिभावस्य भेदगर्भत्वादिति भावः । 'जितात्मनः' इत्यत्र मनसो जयो नाम वशीकरणम् । वशीकृतं च मनः स्वत एव प्रायो विषयेषु न गच्छतीति मनोजयस्य विषयालग्नत्वरूपविषयोपरतिं प्रति हेतुत्वमत्राभिप्रेतमिति युक्त एव फलफलिभाव इति भावः । **उत्तरं वाक्यं** 'परमात्मा समाहितः' इति पादः । **अध्याहारेण** 'हृदि' इत्यन्वयप्रतियोगिसमर्पकपदस्य ॥

श्लोकः ७,८

'दा'प्रत्ययस्य काले अनुशासनेन 'प्रशान्तिकाले' इति वक्तव्ये तत्फलितप्रदर्शनमिदम् **प्रशान्तत्वे सतीति** ॥ यथाश्रुतार्थग्रहणे योगारूढप्रकरणविरोधः, 'योगसम्पूर्ण उच्यते' इत्युपरितन-भाष्यविरोधश्च इत्यतो व्याचष्टे– **योगारूढ इति** ॥ सम्पूर्णयोगसिद्धिमान् भवतीत्यर्थः ।

**भावदीपिका (श्री.टि.)– ॥ योग इति** ॥ समाधियोग इत्यर्थः । **स एव क इति** ॥ आत्मोद्धार एव कीदृश इत्यर्थः ॥ **वाक्यभेदेनेति** ॥ 'जितात्मनः प्रशान्तिर्भवति' इत्येकं वाक्यम्, 'जितात्मनः प्रशान्तस्य' इत्याद्यपरं वाक्यमिति वाक्यभेदेनेत्यर्थः ॥ **तत्फलमिति** ॥ मनोजयफल-मित्यर्थः । एतादृशप्रशान्तत्वस्य साधकेऽपि सत्त्वादाह– **स्वत एवेति शेष इति** ॥ अनायासेनेत्यर्थः । अनेन 'प्रसादो नाम स्वतोऽपि प्रायो विषयागतिः' इति प्राचीनव्याख्यान-विसंवादोऽपि परिहृत इति ध्येयम् । **निराकाङ्क्षत्वादिति** ॥ 'जितात्मा प्रशान्तो भवति' इति वाक्येनैवाकाङ्क्षायाः पूर्णत्वात्, 'जितात्मनः प्रशान्तस्य' इत्यादि उत्तरं वाक्यं द्वितीयं वाक्यं व्यर्थमित्यर्थः । **परमफलमिति** ॥ जितात्मनः प्रशान्तिव्यतिरिक्तं ध्यानपाकापरपर्याययोगारोहरूपं परमफलमित्यर्थः ॥ **न्यूनमिति** ॥ 'कुत्राहितः' इत्याकाङ्क्षापूरकस्याधिकरणवाचिनः पदस्याभावेन न्यूनत्वादित्यर्थः । **पूरयन्निति** ॥ अधिकरणवाचि 'हृदि' इति पदं पूरयन्नित्यर्थः ॥ **योगारूढ इति** ॥ अनेनैव न्यायेन 'अपरोक्षज्ञानिनो लक्षणं स्पष्टयति' इत्यत्रापि 'योगारूढस्य लक्षणं स्पष्टयति' इत्येवार्थो वर्णनीयः । अत्रापरोक्षसमाध्योरनतिविप्रकर्षात्, तथोक्तिरिति पूर्वोक्तमनु-सन्धेयम् ॥

**भावप्रकाशः (कृ.टि.)– ॥ वाक्यभेदेनेति** ॥ जितात्मा हि प्रशान्तो भवतीति वाक्य-भेदेनेत्यर्थः । **अध्याहरेणेति** । हृदीत्यध्याहारेणेत्यर्थः ॥ प्रसिद्धार्थग्रहणे योगारूढप्रकरणविरोध इत्यत आह– **योगारूढ इत्यर्थ इति** ॥

## भाष्यम्

**अपरोक्षज्ञानिनो लक्षणं स्पष्टयति– शीतोष्णेत्यादिना ॥ शीतोष्णादिषु कूटस्थः । ज्ञानविज्ञानतृप्तात्मा, विजितेन्द्रियः इति कूटस्थत्वे हेतुः । विज्ञानं विशेषज्ञानम् । अपरोक्षज्ञानं वा ॥**

भावप्रदीपिका (प.टी.)– इन्द्रियार्थाननुषङ्गमात्रं यज्ज्ञानिलक्षणं पूर्वमुक्तम्, तत्सुपुस्पा-

दावतिव्याप्तमित्याशङ्क्य, उत्तरत्वेनोत्तरं सार्धमवतारयति– **अपरोक्षेति** । 'शीतोष्ण...' इत्यादिसप्तम्याः केनान्वयः ? इत्यत आह– **शीतेति** । सुपुप्त्यादावतिव्याप्तिं परिहर्तुमाह– **ज्ञानेति** । सुप्तादेः पूर्वोक्तलक्षणसद्भावेऽपि न तेन ज्ञानविज्ञानतृप्तात्मत्वादिकारणमित्यर्थः । ज्ञानाद्विशेषज्ञानस्य भेदं सप्रमाणकमाह– **विज्ञानमिति** । सामान्यैः साधारणजनैः । नित्यत्वादिवाचिकूटस्थशब्दस्य कथमत्रान्वयः इत्यत आह– **कूटस्थ इति** । कथं 'कूटस्थ' शब्दो निर्विकारवाचकः ? इत्यत आह– **कूटवदिति** । किं तत्कूटम् ? इति तत्राह कूटमिति । 'युक्त इत्युच्यते' 'योगी' इत्यनयोरर्थभेदमाह– **योगीति** । कथं योगं कुर्वन् योगसम्पूर्णः ? इत्यत आह– **एवमिति** ॥ ७,८ ॥

भावप्रकाशिका (न.टी.)– कथं तमितरे त्ववगच्छन्ति ? इत्याकाङ्क्षायामाह– **अपरोक्षज्ञानिन इति** । 'यदा हि नेन्द्रियार्थेषु' इत्यादिनोक्तत्वादत्र स्पष्टयति इत्युच्यते । व्यवहितानामपि पदानां योग्यतयाऽन्वयं दर्शयति– **शीतोष्णादिष्वित्यादिना** । ज्ञानाद्विज्ञानस्य भेदं वक्तुं विज्ञानशब्दार्थं विभज्य सप्रमाणकमाह– **विज्ञानमित्यादिना** । श्रवणात् इत्यादिना ज्ञानमप्युक्तमिति सूचयितुं तच्च इति चशब्दः । सामान्यैः साधारणजनैरित्यर्थः । नित्यत्वादिवाचिनः कूटस्थशब्दस्यात्रानन्वयमाशङ्क्य, तस्यात्र विवक्षितार्थमुक्त्वा तं च घटयति– **कूटस्थ इत्यादिना** । युक्तयोगिशब्दयोरेकार्थत्वमाशङ्क्य परिहरति– **योगीति** ।

ननु योगं कुर्वन्नेव कथं योगसम्पूर्ण उच्यते ? इत्यत आह– **एवम्भूत इति** । योगफलस्य भगवद्दर्शनस्य प्राप्तत्वात् पुनर्योगमाचरन्नपि योगसम्पूर्ण उच्यत इत्यर्थः ॥ ७.८ ॥

प्रमेयदीपिका (ज.टी.)– यदा हि ' (६.५) इति योगारूढस्य लक्षणमुक्तम् । तत्किमर्थं पुनरुच्यत इत्यत आह– **अपरोक्षेति** ॥ सार्धश्लोकद्वयग्रहणायादिपदम् । अत्र सप्तम्या अन्वयो न दृश्यते । अत आह– **शीतेति** ॥

अत्र भास्करः अन्वयमपश्यन् परमात्मा समाहितः इति सम्प्रदायागतं पाठं विसृज्य 'परात्मसु समा मतिः' इति पाठान्तरं प्रकल्प्य 'समा मतिः' इति तु आवर्त्य सप्तम्या अन्वयमुक्त्वा, पूर्वपाठेऽन्वयाभावः' इत्यवादीत् । तदनेनापहस्तितं भवति । कृत्रिमेऽपि पाठे सुहृत् ' (६.९) इत्यादिकम् आत्मौपम्येन' (६.३२) इत्यादिकं च पुनरुक्तं स्यात् ॥

श्लोकः ७,८

**ननु यः शीतोष्णादिषु कूटस्थस्तस्य ज्ञानविज्ञानतृप्तमनस्त्वं विजितेन्द्रियत्वं** चार्थात् **सिद्धमेव । तत्किमर्थं पुनरुच्यते? इत्यत आह– ज्ञानेति ॥ प्रत्येकमन्वयादेकवचनम् ॥**

**ननु शिल्पादिविषया बुद्धिर्विज्ञानम् । 'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः' (अमर.१.५-६) इत्यभिधानात् । तत्कथं विज्ञानेन तृप्तात्माऽयं स्यत्? इत्यत आह– विज्ञानमिति ॥ अनेन सामान्यज्ञानं परोक्षज्ञानं वा ज्ञानमिति सूचितम् ॥**

**भावदीपः (रा.टि.)**– भाष्यानुरोधादाह – **योगारूढ इत्यर्थ इति ॥** समाधिसम्पन्न इत्यर्थः ॥ **आत्मौपम्येनेति ॥** अत्रैवाध्यायेऽग्रे आत्मोपम्येन सर्वत्र समं पश्यति योऽर्जुन इति वक्ष्यमाणं चेत्यर्थः ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ननु 'ज्ञानविज्ञानतृप्तात्मा विजितेन्द्रियः' इति कूटस्थत्वे हेतुरिति वाच्यम् । तत्कथमेकवचनम् इत्यतः ज्ञानविज्ञानतृप्तात्मेति कूटस्थत्वे हेतुरिति विजितेन्द्रिय इति कूटस्थत्वे हेतुरिति प्रत्येकमन्वयादेकवचनमुपपद्यत इत्याह– **प्रत्येकमन्वयादेकवचनमिति ॥**

**भावरत्नकोशः (सु.टि.)**– ॥ **लक्षणं** विनाऽपि प्रयत्नं विषयाननुषङ्गित्वम् । अनेनैव 'अपरोक्षज्ञानिनः' इति भाष्यमपि 'योगारूढस्य' इति व्याख्यातं भवति । तथा च न्यायदीपिका 'योगारूढलक्षणं प्रपञ्च्यते' इति । **सार्धश्लोकद्वयेति ।** 'शीतोष्ण' इत्यादि 'समबुद्धिर्विशिष्यते' इत्यन्तं सार्धश्लोकद्वयम्, तद्ग्रहणाय भाष्ये 'शीतोष्णेत्यादिना' इत्यादिपदं प्रयुक्तमित्यर्थः । अत्र 'शीतोष्ण' इत्यर्थे । **अनेन** 'शीतोष्णादिषु कूटस्थः' इति सप्तम्यन्वयप्रदर्शनेन **अपहस्तितं** वामेन हस्तेन नुन्नमित्यर्थः । 'अपहसितम्' इत्यपि पाठः । सम्प्रदायगतपाठेन साम्याभावप्रदर्शनाय स्वयं परपाठे दूषणान्तरमाह– **कृत्रिमेति ॥ पुनरुक्तमिति ।** तत्रोभयत्रापि 'परात्मसु समा मतिः' इति परोत्प्रेक्षितार्थस्यैवाभिधानादिति भावः । न केवलमन्वयादर्शनं पुरुषदोषः, किन्तु पुनरुक्तत्वम् अर्थदोषश्चेति चशब्दः 'पुनरुक्तं च' इत्यत्रापि संयोज्य व्याख्यातव्यः ।

आत्मशब्दो मनोऽर्थ इति भावेनोक्तम्– **तृप्तमनस्त्वमिति ॥** ज्ञानविज्ञानतृप्तमनस्त्वस्य विजितेन्द्रियत्वस्य च हेतुत्वे 'हेतू' इति वक्तव्ये कथं 'कूटस्थत्वे हेतुः' इत्येकवचनमित्यत आह– **प्रत्येकमिति ॥** ज्ञानविज्ञानतृप्तात्मत्वात् कूटस्थः, विजितेन्द्रियत्वात् कूटस्थ इति प्रत्येकमन्वया-भ्युपगमाद् एकवचनं युक्तमित्यनेन हेत्वर्थगर्भं विशेषणद्वयमित्युक्तं भवति । 'शिल्पादि' इत्यादि-

शब्देन शास्त्रपरिग्रहः । अत्रामरवचनं संवादयति– **मोक्षे धीरिति** ॥ मोक्षफलिका धीः ज्ञानम्, अन्यफलिकाशिल्पे शास्त्रे च या धीः सा विज्ञानमित्यभिधानार्थः । **अयं** योगारूढः । **अनेन** 'विज्ञानम्' इत्यादिभाष्येण ।

**भावदीपिका (श्री.टि.)– ॥ अन्वयमिति** ॥ 'शीतोष्ण' इति श्लोके 'शीतोष्णसुखदुःखेषु', 'मानापमानयोः' इति सप्तम्या अन्वयमित्यर्थः । **पूर्वपाठ इति** ॥ 'परमात्मा समाहितः' इति पाठाङ्गीकारे 'शीतोष्ण' इति श्लोके सप्तम्या अन्वयाभावः । 'समाहितः' इत्यस्यानुवृत्त्यङ्गीकारेऽपि 'शीतोष्णादिषु समाहितः' इत्यर्थासम्भवादिति भावः । **अनेनेति** ॥ 'शीतोष्णादिषु कूटस्थः' इति कूटस्थपदेन सप्तम्या अन्वयप्रदर्शनेनापहस्तितमित्यर्थः । **पुनरुक्तमिति** ॥ 'सुहृन्मित्र' इति श्लोकेन 'आत्मौपम्ये'ति च श्लोकेनोच्यमानस्य सर्वत्र समबुद्धित्वस्य 'परामात्मसमा मतिः' इत्यनेनैव लब्धत्वादिति भावः ॥ भाष्ये 'कूटस्थत्वे' इत्यस्य 'शीतोष्णादिषु कूटस्थत्वे' इत्यर्थो द्रष्टव्यः ।

ननु 'हेतुः' इत्येकवचनमयुक्तम् । 'हेतू' इति वक्तव्यत्वादित्यत आह– **प्रत्येकमिति** ॥ 'शिल्पादि' इत्यत्रादिपदेन व्याकरणाद्यङ्गसङ्ग्रहः । कुत इत्यत आह– **मोक्षे धीरिति** ॥ मोक्षे हेतुभूता या श्रवणमननजन्या धीः सा ज्ञानम् इत्युच्यते । अन्यत्र मोक्षहेतुश्रवणादेरन्यत्र-व्याकरणाद्यङ्गविषये या धीः सा विज्ञानम् । शिल्पशास्त्रयोः शिल्पशब्देन तज्ज्ञानं ग्राह्यम्, शास्त्रशब्देन वैष्णवदर्शनम् । तथा च शिल्पशास्त्रयोर्विज्ञानशब्दः प्रवर्तत इत्येवं 'श्रवणात्' इति वक्ष्यमाणप्रमाणानुसारेण योज्यम् । यद्वा शिल्पशास्त्रमेव ग्राह्यम् । तथा च शिल्पवैष्णवशास्त्रयो-र्विषये या धीः सा विज्ञानमित्युच्यत इत्यर्थः । **तत्कथमिति** ॥ शिल्पशास्त्रादिबुद्ध्या तृप्तात्मा कथं स्यादित्यर्थः ।

**अनेनेति** ॥ विज्ञानशब्दस्य विशेषज्ञानाद्यर्थकत्वकथनेनेत्यर्थः । **प्रसिद्धेति** ॥ शिलपादि-विषयकबुद्धेर्विज्ञानशब्दवाच्यत्वरूपोऽप्यर्थोऽङ्गीक्रियते, 'विश्वकर्मा मयश्चैव विज्ञानकुशलावुभौ' इत्यादिप्रयोगेषु । परन्तु 'ज्ञानविज्ञानतृप्तात्मा' इत्यत्र प्रकृते सोऽर्थो नाङ्गीक्रियत इति भावः ॥

**भावप्रकाशः (कृ.टि.)– ॥ पुनरुक्तमिति** ॥ परेण सुहृदित्यादेरात्मौपम्येनेत्यादेश्च परात्मसु समा मतिरित्येतदर्थत्वेन व्याख्यानादिति भावः । **मोक्षे धीरिति** ॥ मोक्षफलिका धीः ज्ञानम् । अन्यफलिका शिल्पे शास्त्रे च या धीः सा विज्ञानमित्यर्थः ॥

श्लोकः ७,८

## भाष्यम्

तच्चोक्तम्

'सामान्यैर्ये त्वविज्ञेया विशेषा मम गोचराः ।
देवादीनां तु तज्ज्ञानं विज्ञानमिति कार्तितम् ॥' इति ।

'श्रवणान्मननाच्चैव यज्ज्ञानमुपजायते ।
तज्ज्ञानं दर्शनं विष्णोर्विज्ञानं शम्भुरब्रवीत् '॥

'विज्ञानं ज्ञानमङ्गादेर्विशिष्टं दर्शनं तथा ॥' इत्यादि ।

**कूटस्थः निर्विकारः । कूटवत् स्थित इति व्युत्पत्तेः । कूटम् आकाशः । 'कूटं खं विदलं व्योम सन्धिराकाश उच्यते' इत्यभिधानात् । योगी योगं कुर्वन् । युक्तो योगसम्पूर्णः । एवम्भूतो योगानुष्ठाता योगसम्पूर्ण** उच्यते **इत्यर्थः ॥ ७,८ ॥**

प्रमेयदीपिका (ज.टी.)– कुत एतदित्यत आह– **तच्चेति** ॥ प्रसिद्धाभिधानार्थोऽप्यङ्गीक्रियत इति चशब्दः । सामान्यैः साधारणैः पुरुषैः । सामान्यविषयं तु ज्ञानमित्यपि द्रष्टव्यम् । तदेव ज्ञानमिति सम्बन्धः । अङ्गादेः व्याकरणादेः शिल्पस्य च । विशिष्टं दर्शनं वैष्णवं शास्त्रम् । कूटस्थशब्दो नित्यादिपर्यायः । तेन कथमन्वयः सप्तम्याः? इत्यत आह– **कूटस्थ इति** ॥ तत्कथम्? इत्यत आह– **कूटवदिति** ॥ 'सुपि स्थः'(पा.सू.३.२.४) इति वचनात् कूटशब्दोऽनृतवाद्यादिवाची । तत्परिग्रहे निर्विकारत्वं न लभ्यत इत्यत आह– **कूटमिति**॥ एतैः शब्दैः आकाश उच्यते इत्यर्थः ॥

'युक्तो' 'योगी' इति पुनरुक्तिरिति मन्दाशङ्कानिरासार्थमाह– **योगीति** ॥ इनेरस्त्यर्थत्वात् कुर्वन् इत्युक्तम् । निष्ठाया भूतार्थत्वात् सम्पूर्णः इति । वक्ष्यमाणान्वयापेक्षया क्रमोल्लङ्घनम् । तर्हि विरुद्धार्थयोः कथं सामानाधिकरण्यम्? इत्यत आह– **एवम्भूत इति** ॥ 'धातुसम्बन्धे प्रत्ययाः' इति ह्युक्तम् ॥

**भावबोधः (र.टि.)**– एवम्भूत इति भाष्येण कथं विरोधपरिहार इत्यत्राह– **धातुसम्बन्ध इति** ॥ एकस्यैव धात्वर्थसम्बन्धमात्र एव विरुद्धार्थकप्रत्ययाः धातोर्भवन्ति । नतु तत्प्रत्ययार्थ-समानकालीनताऽपि विवक्षिता । अत एव महाभाष्ये सोमयाज्यस्य पुत्रो भवितेत्युदाहरणमुक्तम् । तथाचेनिप्रत्ययक्तप्रत्ययार्थयोः वर्तमानत्वातीतात्वयोरेककालीनत्वाभावेऽपि धात्वर्थसम्बन्धमात्रेण तयोरुत्पत्तौ 'योगी युक्तः' इत्येतयोः सामानाधिकरण्यमुपपद्यत इति भावः ॥ ७,८ ॥

**भावदीपः (रा.टि.)**– ॥ **इति वचनादिति** ॥ सुवन्त उपपदे तिष्ठतः कप्रत्ययो भवतीति पाणिनिवचनादित्यर्थः ॥ कूटपदे उपपदे 'स्था' इत्यस्य कप्रत्यये 'आतो लोप इटि च' (पा.सू.६.४.६४) इत्याकारलोपे रूपमिति भावः ॥ **इनेरिति** ॥ योगो अस्मिन्नस्तीत्यर्थे 'तदस्यास्त्यस्मिन्' इत्यनुवर्त्य 'अत इनि ठनौ' (पा.सू.५.२.११५) इति सूत्रे इनिप्रत्यय-विधानादिति भावः । **निष्ठाया इति** ॥ युक्त इति श्रुतक्तप्रत्ययस्येत्यर्थः ॥ ननु युक्तपदयोगपदयोः गीतापाठक्रमविपरीतक्रमेण व्याख्याने किं बीजमित्यत आह- **वक्ष्यमाणेति** ॥ एवंभूत इत्यादि-नोत्तरवाक्ये गीतापदानां वक्ष्यमाणान्वयापेक्षयेत्यर्थः ॥ **तर्हीति** ॥ युक्तयोगिपदयोः अतीतवर्तमानार्थकत्वे, 'योगं कुर्वन्, योगसम्पूर्णः' इति वर्तमानातीतकालीनयोः सामानाधि-करण्यं विरुद्धयोः कथमित्यर्थः ॥

यद्यपि 'धातुसम्बन्धे प्रत्ययाः' (पा.सू.३.४.१) इति तृतीयान्त्यपादीयसूत्रे धातुशब्दो पदार्थपर इत्युपेत्य 'प्रातिपदिकार्थधात्वर्थयोः विशेषणविशेष्यभावेन सम्बन्धे अभिमते सति वर्तमानकालअतीतकालसम्बन्धेऽभिमते सति, यथाकालोक्ताः प्रत्ययाः साधवो भवन्तीत्यर्थ-मुक्त्वा 'सोमयाजी अस्य पुत्रो भविता' इत्युदाहृतं वृत्तौ ॥ न चात्र धात्वर्थयोः सम्बन्धोऽस्ति । किन्तु 'योगी युक्तः' इति प्रातिपदिकार्थधात्वर्थयोरेव । तथाऽपि 'प्रत्ययः' (पा.सू.३.१.१) 'परश्च' (पा.सू.३.१.२) इति प्रत्ययाधिकारे पुनरत्र प्रत्ययग्रहणं धात्वधिकारविहिता अधात्वधिकारविहिता अपि प्रत्ययास्तद्धिताः धात्वर्थसम्बन्धे कालभेदे साधने साधवो यथा स्युः' इत्युक्त्वा 'गोमानासीत्' गोमान् भविता इत्यपि वृत्तावुदाहृतत्वाद् इहापि युक्त इति यजिधात्वर्थसम्बन्धाद् वर्तमानातीतकालयोः सामानाधिकरण्यं युक्तमिति भावः॥ ७,८ ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ॥ **सुपि स्थ इति वचनादिति** ॥ सुपि उपपदे तिष्ठतेर्धातोः कप्रत्ययो भवतीति सूत्रार्थः । अत्र सुपि इति न सप्तम्येकवचनग्रहणम् । किं नाम प्रत्याहारस्यैव सुप्तिङन्तम् । सुप आत्मनः क्यच् । सुपो धातुप्रातिपदिकयोः । 'अव्ययादाप्सुपः' इत्यादौ

श्लोकः ७,८

प्रत्याहारस्यैव प्रसिद्धत्वात् । ततश्च कूटवत्तिष्ठतीति तिष्ठतेः सुपि स्थ इति कप्रत्यये आतो लोप इटि चेत्याकार लोपे 'धात्वादेः षः स 'इति सूत्रेण सकारे जाते कूटस्थ इति रूपसिद्धिरिति भावः । **युक्तोपयोगीति पुनरुक्तिरिति मन्दाशङ्कानिरासार्थमिति** । युक्त इत्युच्यते योगी इत्यत्र प्रमाणकरणं प्रमाणमिति व्यवहर्तव्यमित्यादाविव विधीयमानव्यवहारापेक्षया पौनरुक्त्याद्यभाव इत्यभिप्रायेण मन्दाशङ्केत्युक्तम् ॥ नचैवं तावतैव पौनरुक्त्यशङ्कापरिहारसम्भवात् परिहारान्तरोक्तिरयुक्तेति वाच्यम् । तत्परिहारस्य स्पष्टत्वात् । मन्दपदेन ज्ञापितत्वाच्च तस्मिन् सत्यपि परिहारान्तरोक्ति-सम्भवात् ।

एवम्भूत इति भाष्येण कथं विरोधपरिहार इत्यत आह– **धातुसम्बन्ध इति** ॥ अत्र च धात्वर्थे उपचरितवृत्तिः धातुशब्दो न तु मुख्यार्थः । तथासति स्वार्थाभिधानव्यग्रयोः धात्वोः परस्परेण सम्बन्धाभावप्रसङ्गात् । ततश्च धात्वर्थानां सम्बन्धो विशेषणविशेष्यभावो धातुसम्बन्धः, तस्मिन् सति अयथाकालोक्तप्रत्ययाः यस्मिन् काले विहिताः ततोऽन्यत्रापि प्रयुक्ताः साधवो भवन्तीति सूत्रार्थः । अग्नीषोमयाज्यस्य पुत्रो भवितेत्यत्र आग्नीषोमयाजीत्येष शब्दो जनितेत्यनेन अभि-सम्बध्यमानः साधुर्भवति । स्वयमपि भविष्यत्कालेनाभिसम्बध्यमानः स्वकालपरित्यागेन भविष्य-त्कालः सम्बध्यते । अयं धात्वर्थः पुत्रोऽस्य जनिता स चाग्निष्टोमेन यष्टेति । अत्र च यदि भूतकाल एव णिनिरवतिष्ठते तदा यागस्य भविष्यत्वावगमेन प्राप्नोतीत्ययमारम्भः । न चात्र विपर्ययः कस्मान्न स्यात् । भविष्यत्कालो भूतकालेनाभिसम्बन्ध्यमानः स्वकालपरित्यागेन भूते साधुर्भवति । ततश्च अग्निष्टोमयाज्यस्य पुत्रो जात इत्ययं वाक्यार्थ इति वाच्यम् । उभयोः स्वस्वकालमात्रनिष्ठयोः असम्बन्धे विशेषणविशेष्यभावानुपपत्त्या सम्बन्धोपपादकत्वेन स्वकालपरित्यागेन अन्यतरेणा-न्यतरानुसरणस्यावश्यकत्वे तिङ्वाच्यार्थस्य विशेष्यत्वेन प्रधानत्वादितरस्य च तद्विशेषणत्वात् अप्रधानस्य च प्रधानानुवर्तित्वात् प्रधानानुरोधेन गुणस्यैव कालपरित्यागोपपत्तेः ।

अत्र प्रत्ययग्रहणे अनुवर्तमाने पुनः प्रत्ययग्रहणम् अधात्वधिकारविहिताः तद्धितप्रत्यया अपि धातुसम्बन्धे सति कालभेदेऽपि साधवो यथा स्युरिति ज्ञापनार्थम् । अन्यथा हि प्रकृतानां धातु-प्रत्ययानामेव ग्रहणं स्यात् । प्रत्ययग्रहणात् सर्वपरिग्रहात् तद्धितानामपि कालभेदे साधुत्वसिद्धिः । तथाहि । गोमानासीत्, गोमान् भवितेत्यत्र हि तदस्यास्त्यस्मिन्निति मतुप्प्रत्ययो वर्तमानसता-विशिष्टेन प्रकृत्यर्थेन विशिष्टेऽर्थे विहितः । धातुसम्बन्धे तु प्रकृत्यर्थस्य भूतभविष्यत्वेऽपि

श्लोकः ७,८

साधुर्भवति । ततश्चायमर्थः । गावोऽस्य भवितारो गोमान् भवितेति । ततश्च पुनः प्रत्ययग्रहणेन प्रातिपदिकार्थयोगमात्रेण तद्धिताभ्यनुज्ञानात् गोमानासीदित्यादेरिव योगी युक्त इत्यस्योपपत्तिरिति भावः ।

अत्र वदन्ति । अग्निष्टोमयाज्यस्य पुत्रो भवितेत्यादौ विशेषणस्याग्निष्टोमयाजीत्यस्य गुणत्वेन प्रधानीभूतविशेष्यकालानुरोधित्वात् सोम्यपुत्रो भविता । यः सोमेन यष्टेत्यर्थोपपत्त्या सामानाधिकरण्योपपत्तावपि प्रकृतो युक्तो योगीत्यनयोः विशेषणविशेष्यभावे उभयोरप्येकप्रकृतिकत्वेन प्रत्ययद्वयस्य गुणप्रधानन्यायेन एककालार्थत्वे पुनरुक्तिरेव । तद्वयम् भिन्नकालार्थत्वविरुद्धार्थत्वयोः सामानाधिकरण्यानुपपत्तिरेव । अङ्गीकृत्य चैतदुक्तम् । वस्तुतस्तु । अग्निष्टोमयाजीति भूत एव णिनिः । जनितेत्येतत् सम्बन्धात् केवलं व्यपदेशस्य भावित्वप्रतीतिरस्य सूत्रस्य शाकटायनोक्तिवत्? ततश्च भाविव्यपदेशविज्ञानात् विशेषणस्य कालान्यत्वं वाक्यार्थवशादसत्यपि सूत्रारम्भे प्रत्येष्यते । अवशञ्च स्वकाल एव प्रत्ययविधिरेष्टव्यः । अन्यथा ?भाविकृत्यमासीदित्यत्र भाविशब्दस्य भूतकालत्वे भाव्यासीच्छब्दयोः पर्यायत्वाद्युगपत् प्रयोगत्वाभावप्रसङ्गात् । तस्मात् यदेतावन्तं कालं भावितयास्थितं कृत्यं तदिदानीमासीदित्येव तत्रार्थः । गोमानासीदित्यत्र देवदत्तस्य विद्यमानत्वेऽपि गोमद्रूपस्यातीतत्वात् भूतप्रत्ययः । ..तत्रार्थागवामपि अतीतत्वं प्रतीयते गोमच्छब्दस्तु स्वमहिम्ना वर्तमानसत्ताविशिष्टमेव प्रकृत्यर्थमाहेति नानेन सूत्रेण प्रयाजनमिति प्रत्याख्यातसूत्रस्य कथं ? सम्मिततया उपन्यास इत्यादीति । ..द्विषोमित्र इति योऽयं शतृप्रत्ययः । तत्प्रयोगे विकल्पेन प्रतिषेधो वक्तव्य इत्यर्थः ।

न लोकेति सौत्रनिषेधस्य नित्यत्वे तादृशकात्यायननामनवकाशात् निषेधस्यानित्यत्वमवगम्यत इति भावः । एतत्त्वनवलोकेति सूत्रस्य षष्ठीमात्र निषेधकत्वमभ्युपत्योक्तम् । वस्तुतस्तु । कर्तृकर्मणोः कृतीति प्राप्तकृद्योगषष्ठ्येवात्र निषिद्ध्यते । न शेषषष्ठ्यपि । अत एवोक्तं वृत्तिकृता । कर्तृकर्मणोः कृतीति प्राप्तषष्ठीप्रतिषिद्ध्यत इति ।

उक्तञ्च पदमञ्जर्यामपि । अत्रोदाहरणेषु सर्वत्र कारकषष्ठ्याः प्रतिषेधः । शेषषष्ठी तु भवत्येव ? कुर्वन् ओदनस्य पचन् । अपां पेरु?सिनरकस्य ?जिष्णत्वोगुणैरित्यादि । तथा च प्रकृते कारकषष्ठ्याः निषेधेऽपि कर्मणोऽपि कर्मत्वाविवक्षया शेषत्वविवक्षयामानुरध्येत पितुः स्मरनीत्यादाविव

श्लोकः ७,८

शेषषष्ठ्या अप्रत्युक्तत्वात् । अत एव षष्ठीमात्रानिषषधे उक्तप्रतिषेधेकमेर्भाषायामप्रतिषेधः । अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः द्विषःशतुर्वचमित्यादिकात्यायनवचनानर्थक्यमिति निरस्तम् । शेषविवक्षया चोरस्य द्विषन् इति कर्मत्वविवक्षया च चोरन् द्विषन्निति उभयथाऽपि निष्पत्तौ तत्प्रत्याख्यानस्येष्टत्वादिति ध्येयम् । तच्छीलादौ तस्य विहितत्वादिति । आकेस्तच्छीलतद्धर्म-तत्साधुकारिष्वित्यतः तच्छीलादिष्वित्यनुवृत्तेरिति भावः ।

**भावरत्नकोशः (सु.टि.)– ॥ प्रसिद्धाभिधानार्थः** 'मोक्षे' इत्याद्युदाहृताभिधानोक्तार्थोऽपि । 'विज्ञानं ज्ञानमङ्गादेः' इति वक्ष्यमाणप्रमाणानुसारेण शिल्पशास्त्रजनितधियो विज्ञानशब्दार्थत्वे दोषाभावादिति भावः । अनल्पबोधविषयं चेदं वचनमिति मन्तव्यम् । प्राचीनटीकायां तु 'न केवलं विज्ञानं ज्ञानं चोक्तमिति समुच्चयाय चशब्दः' इत्युक्तम् । 'साधारणं तु सामान्यम्' इत्यमरवचना-दाह– **सामान्यैः साधारणैरिति** ॥ बहुभिरविज्ञेयत्वे असत्त्वमेव स्यात् इति शङ्कानिरासाय 'मम शम्भोर्देवादीनां च ये गोचराः' इत्युक्तम् । तज्ज्ञानं तेषां विशेषाणां ज्ञानं विज्ञानमिति कार्तित-मिति । शिष्टभाष्यार्थस्यातिरोहितत्वात् तत्र वक्तव्यमाह– **सामान्यविषयं त्विति** ॥ केचित्तु ये मम भगवतो विशेषाः सामान्यैरविज्ञेयाः देवादीनामेव गोचरास्तद् ज्ञानं विज्ञानमिति भाष्यं व्याचक्षते । 'चैव' इत्यत्रैवशब्दस्य तज्ज्ञानं दर्शनम् इत्यत्रत्येन 'तत्' इत्यनेनान्वय इत्याह– **तदेवेति** ॥ 'अङ्गादेः' इत्यत्राङ्गशब्देन व्याकरणादिषडङ्गानि, आदिपदेन शिल्पशास्त्रं च गृह्यत इत्याह– **अङ्गादेरिति** ॥ **वैष्णवं** विष्णुमाहात्म्यवर्णनपरं शास्त्रं तथा विज्ञानमित्यन्वयः । **नित्यादिपर्याय इति** । नित्यमूलपुरुषकैतवस्थादिपर्याय इत्यर्थः । 'एकरूपतया तु यः कालव्यापी स कूटस्थः' इत्यमराभिधानात्, 'कूटस्थगणनायाम्' इत्यादिप्रयोगात् 'कूटस्थे ख्यातः' इत्यमरव्याख्यानादा-वुदाहरणाच्चेति आहुः ।

तर्हि 'कूटस्थितः' इति स्यादित्यत आह– **सुपि स्थ इति** ॥ सुबन्ते कूटशब्द उपपदे स्थाधातोः कप्रत्ययो भवतीति सूत्रात् तिष्ठतेः कप्रत्यये 'कूटस्थः' इति मूले रूपम् । तदर्थनिर्विकारत्वं व्युत्पत्तिकथनेन विशदयितुं भाष्ये 'कूटवत् स्थितः' इत्युक्तम् । तत्र 'गत्यर्था-कर्मक' इत्यादिना कर्तरि क्तप्रत्यय इति भावः । तथा चामरव्याख्याने भट्टः 'कूटवत्तिष्ठतीति कूटस्थः', 'सुपि स्थः' इति कः' इति । **अनृतवायादीति** ।

'मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ।
अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ॥'

इत्यमरे कूटशब्दस्यानृतकैतवाद्यर्थत्वाभिधानात्, 'कूटसाक्षी', 'कूटयोधी' इत्यादौ 'अनृतं वदन् साक्षी', 'कैतवं कुर्वन् योद्धा' इत्यर्थप्रतीतेश्चानृतवादी कैतवादिकारी वा तद्वाच्य इति वक्तव्यम् । तथा सति 'तद्वत्तिष्ठति' इति व्युत्पत्तौ निर्विकारत्वं न लभ्यत इत्यर्थः ।

**एतैरिति** । कूटं खं विदलं व्योम सन्धिः इति 'एतैः शब्दैः' इति शेषोक्तिः । तथा च केशवोऽपि–

'कूटोऽस्त्री पुञ्जमायाऽघेष्वद्रिशृङ्गे शरान्तरे ।
आयोधनेऽनृते दम्भे व्योम्नि निश्चलयन्त्रयोः ॥ इति ।

निष्ठेन्योर्भिन्नार्थकत्वात् कथमाशङ्केत्यत उक्तम्– **मन्देति** ॥ ननु वर्तमानार्थकलडादेशशत्रन्तेन 'कुर्वन्' इत्यनेन, अतथाभूतस्य 'योगी' इत्यस्य कथं व्याख्यानमित्यत आह– **इनेरस्त्यर्थत्वादिति** ॥ 'तदस्यास्ति' इत्यधिकृत्य 'इनिठनौ' इति इनेर्विधानात्, 'अस्ति' इत्यत्र कालस्य विवक्षितत्वाद् युक्तं 'कुर्वन्' इत्यनेन इनेर्व्याख्यानमिति भावः । **निष्ठाया इति** । 'युक्तः' इत्यत्र निष्ठासंज्ञकस्य क्तप्रत्ययस्येत्यर्थः । 'भूते' इत्यधिकारादिति भावः । ननु युक्तयोगिपदयोर्गीतापाठक्रमं व्यत्यस्य व्याख्याने किं बीजमित्यत आह– **वक्ष्यमाणेति** ॥ 'एवम्भूतः' इत्यनुपदमेव वक्ष्यमाणेत्यर्थः । **विरुद्धार्थयोरिति** । इनिक्तप्रत्यययोः वर्तमानत्वअतीतत्वार्थकत्वेन विरुद्धार्थत्वात् तदवरुद्धयोः 'योगी', 'युक्तः' इत्येतयोरपि विरुद्धार्थत्वमिति भावः ।

एवमपि कथं विरोधपरिहार इत्यत आह– **धातुसम्बन्ध इति** ॥ धात्वर्थयोः सम्बन्धो धातुसम्बन्धः, तस्मिन् सति अयथाकालोक्ता अपि प्रत्ययाः साधवो भवन्ति । 'अग्निष्टोमयाजी अस्य पुत्रो जनिता', 'कृतः कटः श्वो भविता', 'भाविकृत्यमासीत्' इति सूत्रार्थोदाहरणे उक्तः 'अग्निष्टोमयाजी' इत्यत्र भूतकालः 'जनिता' इति भविष्यत्कालेन सम्बध्यते । एवं सम्बध्यमानः साधुर्भवतीत्युपपाद्य, 'प्रत्ययः', 'परश्च' इत्यतः प्रत्ययग्रहणानुवृत्तावपि पुनरत्र सूत्रे 'प्रत्ययग्रहणमधात्वधिकारविहिता अपि प्रत्ययास्तद्धिता धातुसम्बन्धे सति कालभेदे साधवो यथा स्युरिति

श्लोकः ७,८
'गोमानासीत्', 'गोमान् भवति' इति वृत्तावुक्तत्वादिह 'युक्त इति' इत्यर्थः । प्रत्यययुक्त-युजिधात्वर्थसम्बन्धे योगप्रातिपादकात् उत्पन्नस्य वर्तमानार्थकस्य इतिप्रत्ययस्यापि साधुत्वमिति युक्तं 'योगी युक्तः' इति वर्तमानातीतार्थकयोः सामानाधिकरण्यमिति भावः ॥ ७.८ ॥

**भावदीपिका (श्री.टि.)**– ॥ **साधारणैरिति** ॥ तथा चायं प्रमाणार्थः । सामान्यैः साधारणैः पुरुषैर्ये त्वविज्ञेयाः विशेषाः तर्हि ते नाप्रामाणिका इति भावेनोक्तम्– **मम गोचरा इति** ॥ मज्ज्ञानविषयीभूताः, तद्विषयकं ज्ञानं तद्विज्ञानमिति कीर्तितम् । एतादृशं विज्ञानं केषामपि नास्तीत्यप्रामाणिकमिति शङ्कापरिहाराय 'देवादीनाम्' इत्युक्तम् । एतादृशं च विज्ञानं देवादीना-मस्तीत्यर्थः । पुनर्ज्ञानविज्ञानयोर्विवेकं दर्शयति– **श्रवणादित्यादिना** ॥ श्रवणान्मननाच्च यज्ज्ञान-मुपजायते तदेव ज्ञानमित्युच्यते, विष्णोर्दर्शनम् अपरोक्षज्ञानं यत् तद् विज्ञानमिति शम्भुरब्रवीत् । प्रसिद्धाभिधानार्थोऽप्यङ्गीक्रियत इत्युक्तम्, चशब्देन तद्दर्शयति– **विज्ञानमिति** ॥ तथाऽङ्गादेरङ्गस्य व्याकरणादेः, आदिपदेन शिल्पस्य च यज्ज्ञानं तद् विज्ञानम्, तथा विशिष्टम् इतरशास्त्रविलक्षणं यद्दर्शनं वैष्णवशास्त्रं तदपि विज्ञानमित्युच्यत इति ॥ **कूटवदिति** ॥ 'तत्र तस्येव' इत्यस्य प्रायिकत्वात् प्रथमान्तात् कूटशब्दादत्र वतिरिति द्रष्टव्यम् । **नित्यादिपर्याय इति** ॥

ननु कूटशब्दोपपदात् 'ष्ठा गतिनिवृत्तौ' इति धातोः कप्रत्यये, 'लशक्वतद्धिते' इति ककारलोपे, 'आतो लोप इटि च' इति धात्वाकारलोपे, 'धात्वादेः षः सः' इति धातोरादिभूतस्य षस्य सत्वे च सति 'कूटस्थः' इति भवति । तत्र कप्रत्ययः कथम्? 'आतोऽनुपसर्गे कः' इति सूत्रेण आदन्ताद्धातोः कर्मण्युपपदे सति कप्रत्ययविधानात्, 'गोदः' 'कम्बलदः' इत्युदाहृतत्वाच्च । **प्रकृते च वचनादिति** ॥ पाणिनिवचनादित्यर्थः । अत्र 'आतोऽनुपसर्गे कः' इति पूर्वसूत्रात् 'कः' इत्यनुवर्तते । तथा च सुबन्ते उपपदे ष्ठादातोः कप्रत्ययः स्यादिति सूत्रार्थः । प्रकृते च षष्ठ्यन्तस्य कूटशब्दस्योपपदस्य सत्त्वाद्युक्तः कप्रत्यय इति भावः ।

नन्वत्र 'ष्टुना ष्टुः' इति सूत्रेण ष्टुत्वेन भाव्यम् । तथा ह्यत्र सूत्रे 'स्तोः श्चुना श्चुः' इति पूर्वसूत्रात् 'स्तोः' इत्यनुवर्तते । तथा च स्तोःसकारतवर्गयोः, ष्टुना षकारटवर्गाभ्यां योगे ष्टुःषकारटवर्गौ स्तः । अत्र च षकारटवर्गाभ्यां योगः पूर्वत्र परत्र वा विवक्षितः । यथोक्तम्– 'ष्टौ परे' इति सप्तमीमकृत्वा 'ष्टुना' इति तृतीयाकरणस्य गतिं कथयता वृत्तिकारेण

'अकृत्वा सप्तमीमेतां तृतीयामकरोन्मुनिः ।
तस्मात्पूर्वेण सम्बन्धः सन्निकर्षः परेण वा ॥' इति ।

यथा 'षण्णां पूरणः षष्ठः' इत्यत्र 'षष् थ' इति स्थिते, तवर्गस्थस्य थस्य पूर्वं षकारेण योगोऽस्तीति, तस्य टवर्गान्तर्गते ठकारे जाते 'षष् ठ षष्ठ' इति भवति । एवमिहापि 'स्थित्वा' इत्यत्र षकारस्य हि सकारो जातोऽस्ति । तथा च थकाररूपतवर्गस्य पूर्वं षकारेण योगोऽस्तीति ष्टुत्वे टवर्गान्तर्गते ठकारे जाते 'कूटष्ठ' इति स्यादिति चेदुच्यते । अत्र हि 'षकारटवर्गाभ्यां योगे' इति तवर्गस्य टवर्गभवने पूर्वषकारस्य निमित्तत्वेनोक्तत्वात्, अत्र निमित्तभूतस्य षस्य सकारस्य जातत्वेन निमित्ताभावात्, 'निमित्ताभावे च नैमित्तिकस्याप्यभावः' इति न्यायेन षनिमित्तकं ष्टुत्वमपि न जातमिति टवर्गप्रकृतिस्तवर्ग एवोर्वरित इति 'कूटस्थ' इति युक्तमिति द्रष्टव्यम् ॥ **कूटशब्द इति** ॥ 'कूटाख्याऽनृतयन्त्रायोघनमायोत्तरेषु च' इत्यनेकार्थमञ्जर्यामभिधानादिति भावः ।

क्तप्रत्यय-इनिप्रत्ययाभ्यामेव स्पष्टं भिन्नार्थताप्रतिभासनात् 'मन्दाशङ्का' इत्युक्तम् ॥ **इनेरिति** ॥ 'तदस्यास्त्यस्मिन्निति मतुप्' इति मतुवर्थस्येनेरित्यर्थः । **कुर्वन्नित्युक्तमिति** ॥ वर्तमानार्थकलडादेशभूतशत्रन्तप्रयोग इत्यर्थः । **निष्ठाया इति** ॥ 'क्तक्तवतू निष्ठा' इति वचनाद् 'युक्तः' इत्यत्रत्यस्य क्तप्रत्ययस्येत्यर्थः ॥ ननु गीतानुसारेणादौ युक्तपदं व्याख्याय, पश्चाद् 'योगी' इति पदं व्याख्येयम् । तत्कुतः क्रमोल्लङ्घनमित्यत आह– **वक्ष्यमाणेति** ॥ 'एवम्भूतो योगानुष्ठाता योगसम्पूर्ण उच्यते' इत्यनेनोत्तरत्र वक्ष्यमाणयोगीतागतयोः योगियुक्तपदयोरन्वयः, तमपेक्ष्यादौ व्याख्यानकाले क्रमोल्लङ्घनं कृतमित्यर्थः । **विरुद्धार्थयोरिति** ॥ इनेः क्तस्य च वर्तमानत्वातीतत्वार्थकत्वेन विरुद्धार्थत्वात्, तदन्तयोः 'योगी' 'युक्तः' इत्येतयोः कथमेकार्थवाचित्वमित्यर्थः ॥

ननु 'एवम्भूतः' इति भाष्येण विरोधपरिहारः कथं जातः ? इत्यत आह– **धातुसम्बन्धे प्रत्यया इति ह्युक्तमिति** ॥ 'पाणिनिना' इति शेषः । एकस्यैव धात्वर्थसम्बन्धमात्र एव विरुद्धार्थकप्रत्यया धातोर्भवन्ति, न तु तत्प्रत्ययार्थसमानकालतापि विवक्षिता । अत एव महाभाष्ये सोमयोजी अस्य पुत्रो भविता' इत्युदाहृतम् । तत्र यथा वर्तमानत्वभविष्यत्त्वार्थकयोः णिनि-लुट्प्रत्यययोरेककालीनत्वाभावेऽपि धात्वर्थसम्बन्धमात्रेण तयोरुत्पत्तिमङ्गीकृत्य 'सोमयाजी भविता' इति सामानाधिकरण्येन विशेषणविशेष्यभावः, एवमिहापि 'योगी', 'युक्तः' इति इनिप्रत्ययक्त-प्रत्ययार्थयोः वर्तमानत्व-अतीतत्वयोः एककालीनत्वाभावेऽपि धात्वर्थसम्बन्धमात्रेण तयोरुत्पत्ति-मङ्गीकृत्य, 'योगी' युक्तः' इत्येतयोः सामानाधिकरण्येन विशेषविशेष्यभाव उपपद्यत इति भावः ॥ तथा च प्रत्ययार्थो न विवक्षित इति हृदयम् ॥ ७,८ ॥

श्लोकः ७,८

**भावप्रकाशः (कृ.टि.)– भाष्ये देवादीनां त्विति** ।। तज्ज्ञानं विशेषाणां ज्ञानं विज्ञानमिति कीर्तितम् । तच्च देवादीनामेवेत्यर्थ इत्यर्थः । अन्ये तु ये मम विशेषाः सामान्यैरविज्ञेया देवादीनामेव गोचराः तज्ज्ञानं विज्ञानमिति कीर्तितमिति एकवाक्यतया योजयन्ति । अङ्गशब्दार्थो **व्याकरणादेरिति** ।। आदिपदार्थः **शिल्पस्येति** ।। **नित्यादिपर्याय इति** ।। आदिपदेन महालक्ष्मीग्रहणम् । एकरूपतया तु यः । कालव्यापी स कूटस्थ इत्यमरोक्तेः । कूटस्थोऽक्षर उच्यत इति प्रयोगाच्चेति भावः । कथं रूपनिष्पत्तिरित्यत आह– **सुपिस्थ इति वचनादिति** ।। सुपिस्थ इति सूत्रे विभक्तेन सुपीत्यनेन सुप्युपपदे आदन्तात् कः स्यादित्येतदर्थकेन कूटशब्दे उपपदे स्थाधातोः कप्रत्यय इत्यर्थः । न च स्थ इतिसूत्रखण्डेन प्रत्ययः किं न स्यादिति वाच्यम् । तथात्वे भावार्थत्वप्राप्त्या कर्त्रर्थत्वायोगात् । यथोक्तम् आरम्भसामर्थ्याद्भाव इति । **अनृतवाद्यादिवाचीति** ।।

'कूटं यन्त्रेऽनृते राशौ निश्चले लोहमुद्गरे ।

मायाद्रिशृङ्गयोः स्वस्थे सीरावयवदण्डयोः ।

पुरद्वारे च शंसन्ती'ति कोशात् कूटशब्दोऽनृतादिवाची । ततोऽर्श आद्यचि अनृतवादी यन्त्रधर इत्याद्यर्थवाचीत्यर्थः । प्रत्ययार्थभेदान्न पुनरुक्तिरित्यत उक्तम्– **मन्देति** ।। ननु वर्तमानार्थलडादेशशत्रन्तेन कुर्वन्नित्यनेनातथाभूतस्य योगीत्यस्य कथं व्याख्यानमित्यत आह– **इनेरस्त्यर्थत्वादिति** ।। तदस्यास्त्यस्मिन्नित्यधिकृत्य 'अत इनिठनौ' इति निरुक्तः । अस्तीत्यत्र च पुरुषवचने अविवक्षिते कालस्तु विवक्षित एव । तथैव काशिकोक्तेः । तथा चेनेरपि वर्तमानार्थत्वाद्युक्तं कुर्वन्नित्यनेन व्याख्यानमित्यर्थः ।

ननु पाठक्रमाद्युक्त इति व्याख्याय योगीति व्याख्येयम् । तत्कुतो व्यत्यास इत्यत आह– **वक्ष्यमाणान्वयेति** ।। एवम्भूतो योगानुष्ठातेत्यादिना वक्ष्यमाणेत्यर्थः । **विरुद्धार्थयोरिति** ।। इनिक्तप्रत्ययोर्वर्तमानत्वातीतत्वार्थकत्वेन विरुद्धार्थकत्वात् तदन्तयोर्योगी युक्त इत्येतयोरपि विरुद्धार्थत्वमिति वोध्यम् ।

नन्वेवमपि कथं विरोधपरिहार इत्यत आह– **धातुसम्बन्ध इति** ।। धात्वर्थयोः सम्बन्धे यत्र काले प्रत्यया उक्ताः । ततोन्यत्रापि स्युरिति सूत्रार्थः । यथा वसन्ददर्शेति । अत्र वासदर्शनयोर्धात्वर्थयोः सम्बन्धः । **ततो वसन्निति वर्तमाने लट्** । ददर्शेति भूतार्थलिडन्तोक्तदर्शनस्यातीतत्वेन

तत्सम्बन्धिवासस्याप्यतीतत्वात् । किन्तु भूते लिट् । एवम्भूतार्थक्तप्रत्ययान्तयुक्तपदोक्तयोगसम्बन्धे वर्तमानार्थेनिप्रत्ययस्य भूतार्थत्वम् । तेन न विरोध इति भावः । नच योगी इतीनेस्तद्धितत्वात् तस्य न सुबन्तप्रकृतिकत्वात् कथं प्रकृतधात्वर्थयोः सम्बन्ध इति वाच्यम् । यथोपविश्यासनं युञ्ज्यादित्यत्र युजिधातोरनुष्ठानार्थत्वम् । तथा योगी इति योगशब्दान्तर्गतयुजिधातोरप्यनुष्ठानार्थत्वेन प्रकृतेऽपि धात्वर्थसम्बन्धोपपत्तेः । न च क्तप्रत्ययानुरोधेनेर्भूतार्थत्वं कुतः वैपरीत्यं किं न स्यादिति वाच्यम् । लक्ष्यपरस्य विशेष्यतया प्राधान्येन तद्वशेन लक्षणस्य नेतव्यत्वात् । न चोक्तसूत्रेण कृतैवं विधानमिति वाच्यम् । तद्धितानामपि तथा विधानमिति काशिकादावुक्तत्वादिति ॥ ७,८ ॥

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥**

## भाष्यम्

**स एव च सर्वस्माद्विशिष्यते साधुपापादिषु समबुद्धिः । जीवचितः परमात्मनः सर्वस्य तन्निमित्तकत्वस्य च सर्वत्रैकरूप्येण ॥ चिद्रूपा एव हि जीवाः । विशेषस्त्वन्तःकरणकृतः । सर्वेषां साधुत्वादिकं सर्वमीश्वरकृतमेव । स्वतो न किञ्चिदपि ॥**

भावप्रदीपिका (प.टी.)– 'सुहृत्' इति श्लोकं व्याचष्टे– **स एवेति** । सुहृदादीनां विषमत्वात् कथं तेषु समबुद्धिः ? इत्यत आह– **जीवेति** । नन्वीश्वरस्य सर्वत्र साम्यं, जीवस्य तु कथं साम्यम्, विशेषदर्शनादेव ? इत्यत आह– **चिद्रूपा इति** । देवादीनां सुखादिविशेषः स्वरूपान्तःकरणकृतः । दैत्यादीनां दुःखादिविशेषः तत्स्वरूपान्तःकरणकृतः । देवादीनां दुःखादिविशेषो बाह्यान्तःकरणहेतुकः । दैत्यादीनां सुखादिविशेषोऽपि बाह्यान्तःकरणकः । मिश्राणां मिश्रता स्वरूपान्तःकरणकृता । अन्यतराधिक्यं बाह्यान्तःकरणकृतम् । स्वरूपान्तःकरणं नाम जीवोपाधिः । तस्य च शुद्ध्यशुद्धिमिश्रताभेदात् नानारूपतापादकत्वं च लक्षलक्षस्यैव प्रतिविम्ब...चलनकारणता । विम्बस्याचलत्वेऽपि चिद्रूपत्वे सत्त्वप्रतीतिप्रवृत्तिमात्रमुपहितम् । तावन्मात्रत्वेन कचिद्विशेषः । सर्वोपाधीनां द्रव्यमात्रप्रतिफलनकारणत्वनियमनदर्शनाद्विशेषमात्रापादकत्वाच्चेति । तर्हि चिद्रूपत्वसाधुत्वादिनेश्वरस्थमिति प्रतिविम्व-

विशेषस्योपाध्यधीनत्वात् स्वरूपस्य स्वतस्त्वादित्यत आह– **सर्वेषां चेति** । स्वतः इति जीवतद्रूपाद्यधीने ।

भावप्रकाशिका (न.टी.)– 'सुहृत्' इत्यादेः श्लोकस्य सङ्गतिं प्रतिपाद्यं च सङ्ग्रहेणाह– **स एवेति** । एवम्भूत योगी यदि साधुपापादिषु वक्ष्यमाणप्रकारेण समबुद्धिस्तर्हि स न केवलं योगसम्पूर्ण उच्यते, किन्तु सर्वजनसमूहाद्विशिष्टश्च भवतीत्यर्थः । अत्र विष्णुमुपासतस्तद्योगस्य योगिन एकान्ततः साहाय्यकारणात् साधवः सुराः । नियमेन तत्प्रतिकूलाः पापा एवासुराः । अनियमेन कादाचित्कसुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुत्वात् मिश्रा एव नराः । नरोत्त-मान्ताः सुरेषु, नराधमान्ता असुरेषु । ननु यद्येतेषु साधुपापादिषु समत्वं स्यात् तर्ह्येव तज्ज्ञान्यधिकः स्यात् । तदेव कुतः ? इत्यत आह– **जीवचित इति** । ननु भवतु परमात्मनः साधुपापादिषु सर्वेष्वेकरूपत्वं सर्वगुणसम्पूर्णत्वात् सर्वदोपविवर्जितत्वाच्च । 'निर्दोषं हि समं ब्रह्म' इत्युक्तत्वात् । जीवचैतन्यस्य साधुत्वादिविशेषदर्शनात् कथं सर्वत्रैकरूपवत्त्वम् ? इत्यत आह– **चिद्रूपा इति** । असुरादेः पापत्वादिविशेषः कश्चिन्नित्यान्तःकरणकृत इति भावः । नन्वसुरादेः पापत्वादिविशेषस्यान्तःकरणकृतत्वे कथं तस्य जीवविशेषस्य सर्वस्य परमात्म-निमित्तत्वमुक्तम् ? इत्यत आह– **सर्वेषामिति** । साधुत्वादिकं सर्वं सर्वेषां न स्वाधीनम्, नाप्यसुरादिपापत्वाद्यन्तः करणाधीनम् । कस्यापीश्वरप्रेरणां विना स्वतोऽकिञ्चित्करत्वात् । ईश्वरस्तु स्वत एव तत्सर्वं करोतीत्यर्थः ॥

प्रमेयदीपिका (ज.टी.)– मध्ये लक्ष्यस्योक्तत्वात् सुहृत् इत्यादिकं न योगारूढलक्षण-मिति प्रतीतिनिरासायाह– **स एवेति** ॥ साधुपापादिषु समबुद्धिश्च सः योगारूढ एवेति न, किन्तु सर्वस्मात् अयोगिवर्गाद् विशिष्यत इत्येतद्वक्तुं पृथगन्वय इति भावः । साधुत्वं धर्मित्वम् । पापत्वं पापवत्त्वं च नियतम्, नतु सुहृत्त्वादिवदव्यवस्थितमित्यतः 'सुहृदादिषु' इत्यनुक्त्वा 'साधुपापादिषु' इत्युक्तम् । समबुद्धित्वं नाम पूजादिसाम्यम्' इत्यन्यथाप्रतीति-निरासाय आह– **जीवचित इति** ॥

'एष चेतनया युक्तो जीव इत्यभिधीयते' (भाग.४.२९.७६) इति चेतनाचेतनपिण्डे जीवशब्दप्रयोगात् 'चितः' इत्युक्तम् । सुहृदादिचैतन्यस्य तथा सर्वत्र सुहृदादिषु स्थितस्य परमात्मनः । एवं सर्वत्र सुहृदादिषु स्थितस्य सुहृत्त्वादेः परमात्मनिमित्तकत्वस्य चैकरूप्येण

श्लोकः ९

कारणेन तद्दर्शी समबुद्धिरित्यर्थः । तत्राऽद्यं प्रकारं विवृणोति– **चिद्रूपा एवेति** ॥ मनुष्येषु यत् 'एकमेकं प्रति सुहृत्' इत्यादि तन्न जीवस्वभावान्तर्गतम् । किन्तु चिद्रूपत्वादिकमेवेत्यर्थः । तर्हि सुहृत्त्वादिधर्मः किमात्मकः? इत्यत आह– **विशेषस्त्विति** ॥ अन्तःकरणोपादानको बाह्यधर्मः ॥

एतदुक्तं भवति । मुक्तावप्यवशिष्यमाणं यज्जीवरूपं तत् 'त्रिविधाः जीवसङ्घाः' इत्यादि प्रमाणाद्विषममेव । किन्तु देहेन्द्रियान्तःकरणधर्मैर्यद् वैषम्यं तत्तत्स्वरूप एव आरोप्य विषमबुद्धित्वं योगारूढस्य नास्तीति । द्वितीयः प्रकारः स्फुटः । तृतीयं विवृणोति– **सर्वेषामिति** ॥ स्वतः स्वातन्त्र्येण ॥

**भावबोधः (र.टि.)**– ॥ **मध्ये लक्ष्यस्येति** ॥ 'युक्त इत्युच्यते योगी' इत्यनेनेत्यर्थः । **पृथगन्वय इति** ॥ अन्ते लक्ष्याभिधानेनैकान्वये लक्षणफलव्यावृत्तिकथनपरस्य विशिष्यत इत्यस्यापि लक्षणवचनत्वं ज्ञायेत । तन्मा विज्ञायीति मध्ये लक्ष्योक्त्या पृथगन्वय इति भावः । ननु सदसन्मिश्रभेदेन जीवचितोऽनेकविधत्वात् कथमेकरूप्येण योगारूढः पश्येतेत्यतस्तात्पर्यमाह– **एतदुक्तं भवतीति** ॥ ९ ॥

**भावदीपः (रा.टि.)**– ॥ **मध्ये लक्ष्यस्येति** ॥ **'शीतोष्ण'** इत्यादिना अपरोक्षज्ञानिलक्षणस्पष्टीकरणमध्ये एवम्भूतो योगानुष्ठानयुक्तो योगसम्पूर्णोऽपरोक्षज्ञानीति युक्तपदेन लक्ष्यस्योक्तत्वादित्यर्थः । समबुद्धिरित्यन्तभाष्यभावार्थमाह– **साध्विति** ॥ **पृथगन्वय इति** ॥ सुहृदादिषु समबुद्धिः योगारूढ एव न, किन्तु सर्वस्माद्विशिष्यते चेत्येवं गीतायां पृथगन्वय इत्यर्थः॥ **धर्मित्वं** धर्मवत्त्वं सर्वत्र इत्येतत् परमात्मपदेनान्विततया व्याख्याय, सर्वस्येत्यनेनाप्यन्विततया अर्थमाह– **एवमित्यादिना** ॥ **इत्यादीति** ॥ एकैकं प्रति मित्रम्. एकैकं प्रत्यरिरित्यादि यत् सुहृत्वादिकं तन्न जीवस्वभावान्तर्गतमित्यर्थः ॥ अस्फुटत्वात् 'जीवचितः' इत्यादि भाष्यार्थं निष्कृष्याऽह– **एतदुक्तमिति** ॥ **त्रिविधा इति** ॥ 'त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः' इति भारततात्पर्योक्तप्रमाणादित्यर्थः ॥ **यद्वैषम्यमिति** ॥ सुहृत्वमित्रत्वादिरूपमित्यर्थः ॥ **द्वितीय इति** ॥ सर्वत्र परमात्मनः साम्यरूपेणेति द्वितीयः प्रकार इत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **मध्य इति** ॥ 'शीतोष्णसुखदुःखेषु मानावमानयोश्च कूटस्थः' इति 'साधुपापादिषु समबुद्धिः' इत्युक्तयोर्मध्ये 'युक्त इत्युच्यते योगी' इत्यत्रेत्यर्थः । एवचशब्द-

श्लोकः ९

योरन्वयं दर्शयन् 'सः' इत्यस्यार्थमाह– **साधुपापादिष्विति** ॥ **योगारूढ एवेति** ॥ 'सुहृत्' इत्यादिवाक्यमपि योगारूढलक्षणकथनपरमेवेति यावत् । तर्हि मध्ये लक्ष्योक्तेः किं प्रयोजनमिति पृच्छति– **किन्त्विति** ॥ भाष्यभावोक्तया तत्रोत्तरमाह– **सर्वस्मादिति** ॥ **पृथगन्वय इति** ॥ सुहृदादिवाक्येऽपि योगारूढ एव लक्ष्यते, युक्त इत्युच्यते योगी' इति 'समबुद्धिर्विशिष्यते' इति च गीतायां पृथगन्वयाभिधानं तु योगानारूढजनात् विशिष्टश्च योगारूढ इति महद्वैलक्षण्यं ज्ञापयितुं कृतमित्यर्थः । ननु भाष्ये 'सुहृन्मित्र' इत्यादिगीतानुसारेण 'सुहृदादिषु समबुद्धिः' इति वक्तव्ये 'साधुपापादिषु' इत्युत्तरार्धग्रहणं किमिति कृतम् ? इत्यतस्तत्प्रयोजनं वक्तुमाह– **साधुत्वं धर्मित्वमिति** ॥ धर्मवत्त्वम्, पुण्यवत्त्वमित्यर्थः । पापशब्दोऽत्र मत्वर्थीयार्शआद्यच्प्रत्ययान्त इति भावेन व्याचष्टे– **पापत्वं पापवत्त्वमिति** ॥

केचित्तु साधुशब्दसन्निहितः पापशब्दः क्रूरवचनः । 'पापस्तु कुत्सिते क्रूरे त्रिषु क्लीबं तु दुष्कृते' इति केशवाभिधानात्, क्रौर्यं चात्र पापत्वं विवक्षितमित्याशयेनैवमुक्तमित्याहुः ।

**नियतमिति** ॥ धर्मवान् पापवांश्च पुमान् सर्वान् प्रति पुण्यवान् पापवानेवेति व्यवस्थितमित्यर्थः । इत्यतः इति जिज्ञापयिषितत्वात् । 'जीवस्य' इत्येव किमिति नोक्तमित्यत आह– **एष इति** ॥ योगारूढलक्षणोक्तिप्रस्तावे 'जीवचितः परमात्मनः' इत्यादि प्रकृतासङ्गतं किमुच्यत इत्यतस्तत्सङ्गमयितुमाह– **सुहृदादीति** ॥ चशब्दस्यात्राप्यन्वये समुच्चयः सिद्ध्यतीति भावेनोक्तं– **तथेति** ॥ 'सर्वत्र' इत्यनुवादः, 'सुहृदादिषु' इति व्याख्या । 'स्थितस्य' इति शेषोक्तिः । 'सर्वत्र' इत्यस्यावृत्तिमभिप्रेत्योक्तम्– **एवमिति** ॥ 'सर्वस्य' इत्यनूद्यार्थमाह– **सर्वस्य सुहृत्त्वादेरिति** ॥ 'तन्निमित्तकत्वस्य' इत्यत्र तच्छब्दः परमात्मार्थः, बहुव्रीहिश्च समास इति भावेनाह **परमात्मनिमित्तकत्वस्येति** । 'ऐकरूप्येण' इति तृतीया हेतावित्याह– **कारणेनेति** ॥ 'तद्दर्शी समबुद्धिः' इति वदन् सुहृदादिचैतन्यस्य परमात्मनः सुहृत्त्वादेर्भगवदधीनत्वस्य चैकरूप्यं पश्यन् 'समबुद्धिः' इत्युच्यत इति गीतार्थ इत्यभिप्रैति । **आद्यप्रकारं** सुहृदादिचैतन्यस्य एकरूपेण दर्शनप्रकारम् ।

विष्णुमुपासीनस्य योगिन एकान्ततः साधुकरणात् साधवः सुराः, नियमेन तत्प्रातिकूल्यापादनात् पापा एवासुराः, अनियमेन कादाचित्कसुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुत्वकत्वात् मिश्रा एव नरा इति प्राचीनटीकायां साधुत्वादेः व्यवस्थापितत्वाद् अव्यवस्थितसुहृत्त्वादिमनुष्योत्तमविषयं

भाष्यमित्याशयेन तदर्थमाह– **मनुष्येष्विति** ॥ मानुषोत्तमेष्वित्यर्थः । 'इत्यादि' इत्यनन्तरं वेदनव्यवहारभाजनं सुहृत्त्वादीति योज्यम् । **जीवस्य स्वभावान्तर्गतं** जीवात्यन्ताभिन्नधर्मः । 'चिद्रूपत्वादिकम्' इत्यत्रादिपदेन भगवदधीनत्वग्रहः । मन्युष्येषु चिद्रूपत्वं भगवदधीनत्वं च, देवेषु साधुस्वरूपत्वम्, दैत्येषु दोषस्वरूपत्वम् आदिपदग्राह्यमिति एके । अरित्वादिदोषवर्जितत्वं सुहृत्त्वादिगुणवर्जितत्वं चादिपदार्थ इति अन्ये । सुहृत्त्वादेर्जीवस्वभावानन्तर्गतत्वम् उपपादयितु-मुक्तम् **बाह्यधर्म इति** ॥ तदेव कुत इत्यत उक्तम्– **अन्तःकरणोपादानक इति** ॥ ननु साधुपाप-मिश्रभेदेन जीवचितां विषमत्वस्य प्रमाणप्रसिद्धत्वात्, तत्र साम्यदर्शित्वे योगारूढो मिथ्यामतिमानेव स्यात् ? इत्यतो भाष्यभावमाह– **एतदुक्तमिति** ॥ 'मुक्तौ' इत्यत्र मुक्तिर्लिङ्गभङ्गः । स च मुक्तियोग्यानां देवादीनाम्, तमोयोग्यानां दैत्यादीनामेव, न तु नित्यसंसारिणाम् । 'मानुषा मध्यमा ये तु सृतियोग्याः सदैव हि' इत्यादिवचनात् । अतस्तदुभयापेक्षयैव 'मुक्तावशिष्यमाणम्' इत्युक्तम् । 'त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः' इति निर्णयोदाहृतप्रमाणे मुक्तियोग्याः, नित्यसंसारिणः, तमोयोग्याश्च देवादिपदैर्विवक्षिताः ।

एवं विषमेषु साम्यदर्शने भ्रान्तत्वं स्यात् इति पृच्छति– **किन्त्विति** ॥ उत्तरमाह– **देहेति** ॥ 'आरोप्य' इत्यनन्तरं यद्विषमोऽयमिति लोकोऽवबुद्ध्यते तथाविधमिति योज्यम् । **नास्तीति** । अतो न तस्य भ्रान्तत्वप्रसङ्ग इति भावः । प्राचीनटीकाभावप्रदीपिकयोस्तु केवलचिद्रूपाणां देवादीनां सुखदुःखादिविशेषः किंनिबन्धन इत्याशङ्क्योक्तं– **विशेषस्त्वन्तःकरणकृत इति** ॥ देवादीनां सुखादिविशेषः स्वरूपान्तःकरणकृतः, दैत्यादीनां दुःखादिविशेषस्तत्स्वरूपान्तःकरणनिमित्तः । देवादीनां दुःखादिविशेषो बाह्यान्तःकरणहेतुकः, दैत्यादीनां सुखादिविशेषोऽपि बाह्यान्तःकरणकः, मिश्राणां मिश्रतः स्वरूपान्तःकरणकृतान्यतराधिक्यं बाह्यान्तःकरणकृतम् । स्वरूपान्तःकरणं नाम जीवोपाधिः । तस्य च शुद्ध्यशुद्धिमिश्रताभेदात् नानारूपतापादकत्वम् इत्यादिरूपेण विशेष-स्त्वन्तःकरणकृत इति भाष्यं व्याख्यातम् । द्वितीयः प्रकारः सर्वत्र स्थितः परमात्मैकरूपः इति **द्वितीयः प्रकारः । तृतीयं** सुहृत्त्वादेरीश्वरायत्तत्वम् इति तृतीयं प्रकारमिति विपरिणामेनान्वयः । 'स्वभावतः' इतिं प्रतीतिं निरसितुं व्याचष्टे– **स्वतः स्वातन्त्र्येणेति** ॥ परानपेक्षतयेत्यर्थः ॥

**भावदीपिका (श्री.टि.)**– ॥ **मध्ये लक्ष्यस्येति** ॥ 'शीतोष्ण' इत्यादिलक्षणमुक्त्वा 'सुहृत्' इत्यादि चोक्त्वा, अन्ते 'युक्त इत्युच्यते योगी' इति लक्ष्यं वाच्यम् । तद्विहाय 'शीतोष्ण' इति

श्लोकः ९

लक्षणमुक्त्वा, अनन्तरं मध्ये लक्ष्यमभिधाय, पुनः 'सुहृत्' इत्याद्युक्तौ तस्य लक्षणपरत्वाभावः प्रतीयत एवेत्यर्थः। 'स एव च' इत्यत्रत्यचकारस्य भिन्नक्रमेणान्वय इत्याशयेनाह– **साधुपापादिष्विति** ॥ 'तथा च' 'यः युक्त इत्युच्यते स योगारूढः, साधुपापादिषु समबुद्धिश्च' इत्येव न, किन्तु' इत्येवमन्वयो द्रष्टव्यः। विशिष्यते इतरव्यावृत्तिरूपवैलक्षण्यवानित्यर्थः ॥ **पृथगन्वय** इति ॥ अन्त्ये लक्ष्याभिधानेनैकान्वये लक्षणफलव्यावृत्तिकथनपरस्य 'विशिष्यते' इत्यस्यापि लक्षणवचनत्वं विज्ञायेत, तन्मा विज्ञायि इति मध्ये लक्ष्योक्त्या पृथगन्वयो द्रष्टव्य इति भावः।

'सुहृदादिषु' इत्यनुक्त्वा 'साधुपापादिषु' इत्युक्तौ बीजमाह– **साधुत्वमिति** ॥ धर्मित्वम् सद्धर्मवत्त्वं मोक्षयोग्यत्वमिति यावत्। एवं पापवत्त्वं दुर्जनत्वं तमोयोग्यत्वमिति यावत् ॥ **नियतमिति** ॥ स्वरूपानुबन्धीत्यर्थः। **अव्यवस्थितमिति** ॥ सज्जन एव केनचिन्निमित्तविशेषेणारिर्भवति, तथा दुर्जन एव केनचिन्निमित्तविशेषेण सुहृद्भवतीति सुहृत्त्वादिकं सज्जनत्वादिवन्न स्वरूपानुबन्धीत्यर्थः। **एष इति** ॥ देह इत्यर्थः। चतुर्थस्कन्धवचनमिदम्। चेतनाचेतनपिण्डे चिदचित्संवलिते वस्तुनीत्यर्थः। **चित इत्युक्तमिति** ॥ तच्च स्वरूपान्तर्गतमित्याशयः। जीवचित इत्यस्यार्थः **सुहृदादिचैतन्यस्येति** ॥ 'ऐकरूप्येण' इत्यन्वययः। 'परमात्मनः' इत्यस्यापि 'ऐकरूप्येण' इत्यन्वयः। **तद्दर्शी** उक्तप्रकारेणैकरूप्यदर्शी। आद्यं प्रकारं सुहृदादिचैतन्यस्यैकरूप्यप्रकारम्। **विवृणोतीति** ॥ सुहृदादिसर्वचैतन्यस्यानन्दरूपत्वादिनैकरूप्यायोगादिति भावः। **तत्** सुहृत्त्वादि। **बाह्यधर्मः** स्वरूपाननुबन्धीत्यर्थः।

अत्र केचित्स्वयूथ्याः 'मुक्ताववशिष्यमाणम्' इत्येतदनुसारात् मिश्राणामपि लिङ्गभङ्गमङ्गीकृत्य सुखदुःखाविर्भावरूपा मुक्तिरस्तीत्यादि वर्णयन्ति। तन्न। तेषां मुक्त्यङ्गीकारे नित्यसंसारित्वप्रसिद्धद्विविरोधात्।

'सृतियोग्याः सदैव हि' 'चोष्कूयते विश इन्द्रो मनुष्यान्',

'नित्यावर्तास्तु मध्यमाः', 'त्रिदिवनिरयभूगोचरान्नित्यबद्धान्'

'मुक्तिश्च द्विविधा मता'

इत्यादिनिरवकाशबहुप्रमाणविरोधाच्च। सज्जनानां विरजास्नानेन, इतरेषां च वायुगदाप्रहारेण लिङ्गभङ्गस्य प्रमाणोक्तत्वेन मिश्राणां लिङ्गभङ्गस्याप्यप्रामाणिकस्य कल्प्यत्वाच्च। इदं तु वाक्यं

द्विविधमुक्तियोग्यसदसज्जीवसाहचर्यात् मिश्रेषु छत्रिन्यायेनोपचारिततया व्याख्येयम् । **एवम्** एवंजातीयके सर्वत्र द्रष्टव्यमिति सम्प्रदायविदः ।

**त्रिविधा इति ॥**

'त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः ।
तत्र देवा मुक्तियोग्या मानुषेषूत्तमास्तथा ॥
मध्यमा मानुषा ये तु सृतियोग्याः सदैव हि ।
अधमा निरयायैव दानवास्तु तमोलयाः ॥'

इति महाभारततात्पर्यनिर्णयोदाहृतभविष्यत्पर्ववचनादित्यर्थः । आदिपदात् 'स्वभावतस्त्रिधा जीवाः' इत्यादिगीतातात्पर्योदाहृतवचनं ग्राह्यम् । **विषमम्** अनेकरूपम् । तर्हि विशेषः कीदृश इति पृच्छति– **किन्त्विति ॥** उत्तरमाह– **देहेति ॥ वैषम्यम्** सुहृदादिरूपम् । **स्वरूप एवारोप्येति ॥** स्वरूपानुबन्धित्वेत्यर्थः । **विषमबुद्धित्वमिति ॥** स्वरूपत एवायं मुक्तियोग्य इत्यादिरूपं लोकानामस्ति, तदस्य योगारूढस्य नास्तीत्यर्थः । **द्वितीय इति ॥** सुहृदादिषु स्थितस्य परमात्मन एकरूपत्वप्रकारः । **स्फुट इति ॥** 'विद्याविनय' इत्येतच्छलोकलापनिकासमये भगवत्पादैः पूर्वमेव विवृतोऽस्तीति, अत्र न विवृत इत्यर्थः । **तृतीयं** सुहृदादिषु स्थितस्य सुहृत्त्वदेः परमात्मनिमित्त-कत्वस्यैकरूप्यप्रकारमित्यर्थः ।

**भावप्रकाशः (कृ.टि.)**– ननु लक्षणफलव्यावृत्तिमुक्त्वा लक्षणाभिधानमयुक्तम् । कारणोक्त्य-नन्तरं फलोक्तेर्न्याय्यत्वादित्याशङ्कां परिहरन् मध्ये लक्ष्योक्तेः फलमाह– **साधुपापादिष्विति ॥ पृथगन्वय इति ॥** मध्ये लक्ष्योक्त्या पृथगन्वय इत्यर्थः । अन्यथा अन्ते लक्ष्योक्तौ व्यावृत्तिपरस्य विशिष्यत इत्यस्यालक्षणवचनत्वं विज्ञायेतेति भावः । **नियतमिति ॥** यो धर्मी स सर्वान् प्रत्यपि धर्म्येवेत्यादिरूपेण व्यवस्थितमित्यर्थः । **अव्यवस्थितमिति ।** एकं प्रति सुहृद एवान्यं प्रत्यरित्वमित्यादिरूपेणाव्यवस्थितमित्यर्थः ।

नन्वेवशब्देन सुहृत्वादिकं व्यावर्तितम् । तन्न युक्तम् । चिद्विशिष्टदेहस्य सुहृदादित्वेन चितोपि तत्प्राप्तेरित्यत आह– **मनुष्येष्विति ॥ जीवस्वभावान्तर्गतमिति ॥** जीवात्यन्ताभिन्नमित्यर्थः ॥ **चिद्रूपत्वादिकमिति ॥** आदिपदेन वक्ष्यमाणप्रमाणोक्तसर्वदोषवर्जितत्वसङ्ग्रहः । ननु सदसन्मिश्र-

श्लोकः ९

भेदेन जीवचितः अनेकरूपत्वात् तदैकरूप्यदर्शित्वे योगारूढस्य भ्रान्तत्वं स्यादित्यत आह एतदुक्तं **भवतीति** ॥ तथाच वैषम्यभ्रान्त्या समबुद्धित्वमिति भावः ॥**द्वितीयः प्रकार इति** ॥ सर्वत्र स्थितः परमात्मैकरूप इति द्वितीयः प्रकार इत्यर्थः ॥

स्वभावत इति प्रतीतिं निरस्यति– **स्वतन्त्रेणेति** ॥ **प्रकारद्वयेनेति** ॥ चिद्रूपा इति सर्वं चेश्वर इति चोक्तप्रकारद्वयेनेत्यर्थः । **न तु देवादिष्वित्युक्तस्येति** ॥ उक्तस्य नतु विवादिष्वित्यपवादमाहेति योजना । **तु शब्दोऽवधारण इति** ॥ 'तुशब्दस्तु विशेषे स्यात् स्वसिद्धान्तेऽवधारणे' इत्यभिधानादिति भावः । **वक्ष्यमाणेति** ॥ गुणदोषावित्यादिवक्ष्यमाणेत्यर्थः । **तथाचोक्तमिति** ॥ इदं च तात्पर्यनिर्णयमनुसृत्योक्तम् । तत्र कामशब्देन तदभिमानिकालनेमिग्रहणात् । तेनासुरस्यारित्वे कथमियं सम्मतिरुक्तेत्यपास्तम् ।

## भाष्यम्

**उक्तं चैतत् सर्वम् –**

**'स्वतः सर्वेऽपि चिद्रूपाः सर्वदोषविवर्जिताः ।**
**जीवास्तेषां तु ये दोषास्त उपाधिकृता मताः ॥**
**सर्वं चेश्वरतस्तेषां न किञ्चित् स्वत एव तु ।**
**समा एवं ह्यतः सर्वे वैषम्यं भ्रान्तिसम्भवम् ॥**
**एवं समा नृजीवास्तु विशेषो देवतादिषु ।**
**स्वाभाविकस्तु नियमादत एव सनातनः ॥**
**असुरादेस्तथा दोषा नित्याः स्वाभाविका अपि ।**
**गुणदोषौ मानवानां नित्यौ स्वाभाविकौ मतौ ॥**
**गुणैकमात्ररूपास्तु देवा एव सदा मताः ॥' इति ब्राह्मे ।**

भावप्रदीपिका (प.टी.)– तत्रैव प्रमाणमाह– **उक्तं चेति** । वैषम्यं भ्रान्तिसम्भवम् इति कथितान्तःकरणनिमित्ततां विना, औपाधिकोऽपि नानित्य इत्यर्थः । तमेव विशेषं दर्शयति– **असुरादेरिति** ।

श्लोकः ९

भावप्रकाशिका (न.टी.)– तत्र प्रमाणमाह– **उक्तं चेति** । विम्वभूतस्य भगवतः चिद्रूपत्वनिर्दोषत्वाभ्यां तत्प्रतिविम्वभूतसर्वजीवानां स्वतस्तदुभयं प्राप्तम् । तत्रासुरादीनां दोषास्तेषां सर्वदोषात्मकनित्यान्तःकरणोपाधिकृताः । अनौपाधिकत्वविवक्षयैव सर्वजीव-चिद्रूपत्वनिर्दोषत्वयोः स्वतस्त्वम् । स्वातन्त्र्यविविक्षयाऽत्र तदपि भगवदायत्तमित्याह– **सर्वं चेति** । अतः इत्युक्तप्रकारद्वयेन समा एव सर्वजीवाः । उक्तनिमित्तद्वयं विना यद्वैषम्यं तद्भ्रान्त्यैव प्रतीयत इत्यर्थः । एवं तावद् असुरादिपापत्वादिविशेषाणाम् आन्तरान्तःकरण-निबन्धनत्वेनौपाधिकत्वात्, स्वतो निर्दोषचिद्रूपत्वेन सर्वजीवसाम्यात्, तद्बुद्धिः समबुद्धि-रित्युक्तम् ।

अधुनाऽन्तरोपाधीनां जीवाभेदाभिप्रायेण तन्निवन्धनानामपि विशेषाणां स्वाभाविकत्व-मेवास्तु । तथाऽप्यर्युदसीनत्वादीनां कादाचित्कत्वादीनां वाह्यान्तःकरणकृतत्वेन औपाधि-कत्वात् स्वतः सर्वनरोत्तमजीवसाम्यात् तद्बुद्धिः समबुद्धिरस्त्विवति भावेनाह **एवं समा इति ।** अस्मिन् पक्षे चिद्रूपा एव हि इति नरोत्तमा एव । तेषां भगवद्भागवतारित्वादिविशेषो वाह्यान्तःकरणकृत इत्यपि ज्ञातव्यम् । देवतादिषु देवतासृष्ट्यादिषु यो महानवान्तरश्च विशेषः, स तु स्वाभाविकः न बाह्यान्तःकरणकृतः । तथाऽप्यसौ अत एव परब्रह्मत एवेत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– अत्र प्रमाणमाह– **उक्तं चेति** ॥ स्वतः स्वरूपेण । दोषैः अरित्वादिभिः । एवं 'सुहृत्त्वादिगुणैः' इत्यपि ग्राह्यम् । आगन्तुकधर्मा न स्वरूपान्तर्गता इत्यर्थः । किं तर्हि? इत्यत आह– **तेषां त्विति** ॥ दोषाः, गुणाश्च । उपाधिः अन्तः-करणादिः। सर्वं सुहृत्त्वादिकम् । अत एव प्रकारद्वयेन यदनात्मधर्मानात्मस्वन्तर्भाव्य वैषम्यम्, यच्च क्वचित् परमेश्वरानधीनरूपत्वं तद् भ्रान्तिप्रतीतम् । 'योगे प्रवर्तमानं प्रति यत् सुहृत्त्वादिकं तन्मनुष्येष्वेव स्वरूपवैषम्यकारणं न भवति । न तु देवादिषु' इत्युक्त-स्यापवादमाह– **एवमिति** ॥ तुशब्दोऽवधारणे । अवधारणार्थं विवृणोति– **विशेष इति** ॥ विशेषो योगिनं प्रति सुहृत्त्वादिः । तदेव प्रपञ्चयति– **असुरादेरिति** ॥ तथाशब्दो वक्ष्यमाणसमुच्चये । दोषाः योगिनं प्रत्यरित्वाद्याः । तथा चोक्तम्– **'विद्धयेनमिह वैरिणम्'**इति । गुणदोषौ सुहृत्त्वारित्वादी अनागन्तुकौ । 'गुणैः' सुहृत्त्वादिभिः 'एकमात्रं' गुणैकमात्रम् । तथा च श्रुतिः 'यथा ह वै बहवः पशवः' (वृ.उ.३.५.४.१०) इत्यादिका ॥

श्लोकः ९

**भावदीपः (रा.टि.)– ॥ अतः** इत्यनुवादः, **प्रकारद्वयेन** इति व्याख्या ॥ **तृतीयमिति ॥** सुहृत्वादेरीश्वरायत्तत्वप्रकारमित्यर्थः ॥ स्वतश्चिद्रूपत्वसुहृत्वादिगुणदोषराहित्यरूपद्वयेन समा इत्यर्थः ॥ **वक्ष्यमाणेति ॥** 'गुणदोषौ मानुषाणाम्' इति वक्ष्यमाणेत्यर्थः ॥ 'मनुष्याणाम्' इत्यस्य नित्यसंसारिणामित्यर्थः ॥ **एवमिति ॥** 'कामाद्यभिमानिनमसुरं वैरिणं विद्धि' इति तृतीये गीतायामुक्तमित्यर्थः ॥ 'यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्ति' इति काण्वश्रुतिर्वा ॥ 'आत्मैवेदमग्रे' इति चतुर्थब्राह्मणे ज्ञानिनो देवप्रियकृत्वोक्तेः देवानां ज्ञानिनः प्रति गौणैकमात्ररूपत्वं प्राप्तमिति भावः ॥

**भावरत्नकोशः (सु.टि.)–** 'स्वातन्त्र्येण' इति प्रतीतिं निवारयितुमुक्तम्– **स्वरूपेणेति ॥** तृतीयार्थे तसिरिति भावः । 'सर्वैर्दोषैर्विवर्जिताः सर्वदोषविवर्जिताः' इति प्रमाणे विग्रहस्थस्य 'दोषैः' इत्यस्यार्थमाह– **दोषैररित्वादिभिरिति ॥** उपरितनप्रमाणानुसारेण गीतासङ्गतये दोषपद-मुपलक्षणमित्याह– **एवं सुहृत्त्वादिगुणैरिति ॥** दोषगुणशून्यत्वे निस्स्वरूपत्वं स्यात् इत्यतोऽभि-प्रायमाह– **आगन्तुका इति ॥** 'अन्तःकरणादिः' इत्यत्रादिशब्देन देहेन्द्रियं च गृह्यते । स्वतः 'स्वातन्त्र्येण' इति व्याख्यातप्रायम् । 'अतः' इत्यनुवादः, 'एवं प्रकारद्वयेन' इति व्याख्या। 'स्वतश्चिद्रूपाः सुहृत्त्वारित्वादिगुणदोषवर्जिताः' इति, 'सर्वं चेश्वरतः' इत्युक्तप्रकारद्वयेनेत्यर्थः । 'वैषम्यं भ्रान्तिसम्भवम्' इत्यत्र वैषम्यस्वरूपं दर्शयन् भ्रान्तिः सम्भवः उत्पादिका यस्य तत् तथोक्तम् इत्युक्तभ्रान्तिसम्भवत्वं च व्याख्याति– **यदनात्मेति ॥** अन्तर्भाव्य बोध्यमानम् । **मनुष्येष्वेव** मनुष्योत्तमजीवेष्वेव । 'न तु देवादिषु इत्युक्तस्य' इत्यत्र 'स्वतः सर्वेऽपि चिद्रूपाः' इत्यादिना 'भ्रान्तिसम्भवम्' इत्यन्तेनोक्तस्य 'न तु देवादिषु' इत्यपवादमाहेति योजना । 'नृजीवाः' इति भाष्यस्य मनुष्योत्तमजीवा इत्यर्थः । तथा च प्राचीनटीका 'चिद्रूपा एव नरोत्तमा एव । तेषां भगवद्भागवतारित्वादिविशेषो बाह्यान्तःकरणकृत इत्यादि ज्ञातव्य'मिति ।

'तुशब्दस्तु विशेषे स्यात् स्वसिद्धान्तेऽवधारणे' इत्यभिधानादाह– **तुशब्द इति ॥** प्रकरणाभिप्रेतं विशेषमाह– **योगिन इति ॥** अनेन 'देवतादिषु तु सुहृत्त्वादिरूपो विशेषः स्वाभाविकः नागन्तुकः, अत एव नियमात् सदातनः नित्यः स्वरूपान्तर्गतः' इति भाष्यार्थ उक्तो भवति । 'देवतादिषु' इत्यत्र ऋषिपितृचक्रवर्तिनामिव, आदिपदेन तत्प्रतियोगिदैत्यरक्षः-पिशाचमर्त्याधमानां नित्यसंसारिणामपि ग्रहणसम्भवेन तद्धर्मारित्वादेरनागन्तुकत्वस्योक्तत्वात्

पुनरुक्तिरिति शङ्कां परिहर्तुमाह– **तदेवेति** ॥ अरित्वसुहृत्त्वादेरनागन्तुकत्वमेवेत्यर्थः । **वक्ष्यमाणेति** । 'गुणदोषौ मनुष्याणाम्' इत्यादिना वक्ष्यमाणानां मनुष्याणां देवानां च समुच्चये तथाशब्दो वर्तत इत्यर्थः । आदिशब्दस्तु रक्षःपिशाचाद्यर्थ इति न तेन तल्लाभ इति भावः । योगारूढं प्रत्यरित्वम् असुरादेरस्तीत्यत्र सम्मतिमाह– **यथोक्तमिति** ॥ 'काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्' इति तृतीये गीतायां वैरिपदेन असुरादेररित्वादिकमुक्तमित्यर्थः । एतद्वाक्यगतकामशब्दस्तात्पर्यनिर्णये 'तत्र कामः कालनेमिः' इति तत्र कामाभिमानिकालनेम्यसुरार्थतया व्याख्यात इति युक्तं तस्योक्तार्थे सम्मतित्वमिति भावः ।

**सुहृत्त्वेति** । सुहृत्त्वादिः गुणः, अरित्वादिः दोष इत्यर्थः । भाष्ये मनुष्याणां नित्यसंसारिणामित्यर्थः । 'स्वाभविकौ' इत्यस्यार्थः– **अनागन्तुकाविति** ॥ तेन 'स्वभावशब्दान्निवृत्तेऽर्थे ठक्, उत्पाद्यत्वे निवृत्तिः स्यात्, नित्यत्वनियमात् कथमेतत् ' इति चोद्यं परिहृतम् । निवृत्तत्वं प्रयोज्यत्वं विवक्षितमिति तात्पर्यात् । 'गुणैक' इत्यत्र कर्मधारयाभिप्राये एकशब्दस्य 'पूर्वकालैक' इति स्मरणात् पूर्वनिपातः स्यात् सुहृत्त्वादिनानागुणसम्पत्तेर्वक्तव्यतया असम्भवदुक्तिकत्वं च इत्यतस्तृतीयासमासोऽभिमतोऽत्रेति भावेनाह **गुणैः सुहृत्वादिभिरिति** । 'मात्रं कात्स्न्र्येऽवधारणे' इत्यभिधानात्, एकमात्रम् एकमेव गुणैरत्यन्ताभिन्नमेव रूपं येषां ते गुणैकमात्ररूपा इत्येवं भाष्यार्थात्र काप्यनुपपत्तिरिति भावः । इत्यादिकेति । 'यथाह वै बहवः पशवो मनुष्यं भुज्युः, एवमेकैकः पुरुषो देवान् भुनक्ति' इत्येवंरूपा काण्वश्रुतिरित्यर्थः । अत्र 'भुज्युः', 'भुनक्ति' इति पदद्वयम् अन्तर्भावितणिजन्तम् । तथा च यथा गोः पुरुषभोजकत्वात् तत्प्रियत्वम्, तथा ज्ञानिनो देवभोजकत्वात् तत्प्रियत्वम् इत्यावेदनाद् देवानां योगिनं प्रति सुहृत्त्वादिकं युक्तमिति भावः ।

**भावदीपिका (श्री.टि.)**– भाष्ये 'उक्तं चैतत्सर्वम्' इत्यत्र अद्वितीयमेव सर्वशब्देन ग्राह्यम् । दुर्जनाभिप्रायेणाह– **एवमिति** ॥ सुहृत्त्वादिगुणैर्विवर्जिता इत्यर्थः । **आगन्तुका इति** ॥ 'अरित्वसुहृत्त्वादयः' इति शेषः । **किं तर्हीति** ॥ यदि न स्वरूपान्तर्गतास्तर्हि कथम्भूता इत्यर्थः । 'आगन्तुकाः' इत्युक्तमिति चेत्, सत्यम् । तदेवागन्तुकत्वं कथमिति प्रश्नाशयो द्रष्टव्यः । एवं 'सुहृत्त्वादिगुणैरित्यपि ग्राह्यम्' इत्युक्तत्वात्, तदनुसारेणाह– **गुणाश्चेति** ॥ 'स्वत एव तु' इत्यत्रत्यैवकारस्य 'समा एव ह्यतः' इत्यत्रत्यातःशब्देन सम्बन्ध इत्याशयेनाह– **अत एवेति** ॥ **प्रकारद्वयेनेति** ॥ सर्वेषां चिद्रूपत्वेनैव साम्यम्, सुहृत्त्वादिकं त्वौपाधिकमेवेत्येकः प्रकारः । तस्य च सुहृत्त्वादेरीश्वरनियतत्वम् अपरः प्रकार इति प्रकारद्वयेनेत्यर्थः ।

श्लोकः ९

आद्ये प्रकारे 'वैषम्यं भ्रान्तिसम्भवम्' इत्येतद् व्याचष्टे– **यदनात्मेति** ॥ देहान्तः-करणोपाधिकान् सुहृत्त्वादीन् । आत्मस्वन्तर्भाव्य आत्मस्वरूपत्वकोटौ निक्षिप्य । वैषम्यं सुहृत्त्वादीनां स्वरूपत्वम् । द्वितीये प्रकारे 'वैषम्यम्' इत्येतद् व्याचष्टे– **यद्येति** ॥ क्वचित् सुहृत्त्वादौ । **उक्तस्यापवादमाहेति** ॥ सर्वेऽपि चिद्रूपाः, तत्रानात्मधर्मानात्मस्वन्तर्भाव्य यद् वैषम्यं तद् भ्रान्तिसम्भवम् इत्युक्तस्यापवादमाहेत्यर्थः । अपवादप्रकारविवरणम्– **योगे प्रवर्तमानं प्रतीत्यादि** ॥ यत्सुहृत्त्वादिकम् 'मनुष्येषु' इति शेषः । स्वरूपवैषम्यकारणं स्वरूपतारतम्य-ज्ञापकम् । **न भवतीति** ॥ निमित्तविशेषेण दुर्जनादेरेव सुहृत्त्वादिप्राप्तेरित्यर्थः ।

समीचीनक्षेत्रादावधिकारी योगाभ्यासे प्रवर्तते, तत्र स्वभावतो दुष्टाश्चेत् प्रतिबन्धं कुर्वन्ति । तदा तैः सह सुहृद्भावं कृत्वा स्वकार्यं सम्पादयति । तदा योगे प्रवर्तमानं प्रति मनुष्ये यत्सुहृत्त्वं योगिना क्रियमाणं तेषु यत्सुहृत्त्वमिति यावत् तत् तेषु स्वरूपोत्तमताज्ञाकं न भवतीति भावः । **नन्विति** ॥ योगिनं प्रति देवादिषु यत्सुहृत्त्वादिकम्, योगिना तेषु क्रियमाणं सुहृत्त्वादिकमिति यावत् तत् तेषु स्वरूपवैषम्यकारणं न भवतीति न, तु किन्तु भवत्येवेत्यर्थः । 'इत्यपवादमाह' इत्यन्वयः । **अवधारण इति** ॥ 'नृजीवा एव समाः' इत्यवधारण इत्यर्थः । अवधारणार्तं व्यावृत्ति-रूपम् । **योगिनं प्रतीति** ॥ योगिना क्रियमाणदेवतादिषु सुहृत्त्वादिकमिति यावदित्यर्थः । 'सुहृत्त्वादिः' इत्यत्रादिपदेन मित्रत्वबन्धुत्वग्रहणम् ।

**वक्ष्यमाणेति** ॥ 'गुणदोषौ मानवानाम्' इति वक्ष्यमाणेत्यर्थः । तथा च न केवलम् असुरादेर्दोषा नित्याः, किन्तु मानवानां गुणदोषौ च नित्याविति परस्परसमुच्चयार्थ इत्याशयः । **योगिनं प्रतीति** ॥ योगिना क्रियमाणमसुरेषु अरित्वादिकमिति यावत् । 'अरित्वाद्याः' इत्यत्राद्य-पदेनापकारित्वद्वेष्यत्वादिग्रहणम् । ननु योगिनं प्रत्यरित्वम् असुराणामप्रामाणिकमित्यत आह– **तथा चेति** ॥ 'तत्र कामः कालनेमिः' इति तात्पर्ये कामाभिमानिनः कालनेमेः योगिनं प्रति वैरित्वमुक्तमस्तीत्यवधेयम् । एकमात्रशब्दः केवलार्थः । दैत्यारित्वमपि तेषां गुण एवेति द्रष्टव्यम् ।

असुरनिष्ठारित्वादिदोषाणां स्वाभाविकत्वे प्रमाणमाह– **तथा चेति** ॥ 'तत्र कामः कालनेमिः' इति वचनात् । अत्र कामाभिमानिकालनेमिनामकासुरस्य वैरित्वोक्त्या योगिनं प्रत्यरित्वं तस्य स्वाभाविकमिति ज्ञायते । 'वैषम्यं भ्रान्तिसम्भवम्' इत्येतत् सुहृदादौ विद्यमानस्य सुहृत्त्वादेरीश्वरा-

नधीनत्वज्ञानं भ्रान्तिसम्भवमिति व्याख्यातम्, तत्कुतः। प्रमैव किं न स्यादित्यत अव्याकृत-ब्राह्मणस्थं बृहदारण्यकवाक्यं प्रमाणयति– **यथा ह वै बहवः पशव इत्यादिकेति** ॥ 'यथा ह वै बहवः पशवो मनुष्यं भुज्युः, एवमेकैकः पुरुषो देवान् भुनक्ति, एकस्मिन्नेव पशौ आदीयमाने प्रियं भवति किमु बहुषु, तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः' इत्यन्तं वाक्यम् इत्यादिका' इत्यादिपदेन ग्राह्यम् । अत्र 'तत्त्वज्ञानी देवानां प्रियः, भगवदितरदेवादिसमस्तप्रपञ्चस्य भगवद-नधीनत्ववेत्ता मनुष्यो देवानामप्रियः' इत्युक्तत्वात् सुहृत्त्वादेर्भगवदधीनत्वज्ञानं भ्रान्तिरित्यवगम्यत इति द्रष्टव्यम् । अक्षरार्थस्तु भाष्यभावबोधाभ्यामवगन्तव्यः ॥

**भावप्रकाशः (कृ.टि.)–** ननु स्वाभाविकत्वं स्वभावनिर्वृतत्वं न च नित्यसंसारिषु गुण-दोषयोः तत्सम्भवति । तयोस्तत्स्वरूपत्वादित्यतः स्वाभाविकावित्येतद्व्याचष्टे– **अनागन्तुका-विति** ॥ देवत्वादेर्ब्रह्मसाक्षात्काराद्यनन्तरमेव प्राप्तेः देवादौ सुहृत्वादेर्विशिष्टस्वभावनिर्वृतत्वं सम्भवतीति न तत्र स्वाभाविकत्वं व्याख्यातम् । नचैवं नित्यसंसारित्वम् । तस्यानादित्वादिति । गुणैकेत्यस्य कर्मधारयत्वे पूर्वनिपातप्रसङ्गात् तृतीयातत्पुरुषमाह– **गुणैरिति** ॥ **एकमात्रम्** अभिन्नम् ॥ **इत्यादिकेति** ॥ यथा ह वै बहवः पशवो मनुष्यं भुज्युरेवमेकैकः पुरुषो देवान् भुनक्तीत्यादि-केत्यर्थः । भुज्युरित्यन्तर्णितण्यर्थम् । एवं **भुनक्तीत्यपि** ॥ तथा च यथा गोः पुरुषभोजकत्वात् तत्प्रियत्वं तथा ज्ञानिनो देवभोजकत्वात् तत्प्रियत्वमिति श्रुतावुक्तत्वात् देवानां सुहृत्वादिकं युक्तमिति भावः । **साधारणार्थस्येति** ॥ तुल्यपर्यायस्येत्यर्थः । **समे यजतीति** । अन्यथा सर्वनामत्वात् समस्मिन्निति स्यादिति भावः । उपलक्षणं चैतत् । यथासङ्ख्यमनुदेशः समाना-मित्युदाहार्यम् ।

## भाष्यम्

**न तु साधुपापादीनां पूजादिसाम्यम् । तत्र दोषस्मृतेः ।**

**'समानां विषमा पूजा विषमानां समा तथा ।**
**क्रियते येन देवोऽपि स्वपदाद् भ्रश्यते पुमान् ॥' इति ब्राह्मे ।**

**'वित्तं बन्धुर्वयः कर्म विद्या चैव तु पञ्चमी ।**
**एतानि मान्यस्थानानि गरीयो ह्युत्तरोत्तरम् ॥' इति मानवे (मनु.२.१३६) ।**

श्लोकः ९

भावप्रदीपिका (प.टी.)– नन्वेवं साम्यं चेदस्ति, तर्हि साम्येन पूजादिकमपि किं न स्यात् ? इत्यत आह– **न त्विति** । न केवलं पूजासाम्यं निषिद्धम्, किन्तु वैषम्येन पूजादि विहितं चेत्याह – **वित्तमिति** । फलपर्यालोचनयाऽपि पूजा विषमा, बुद्धिः समा कार्येत्याह– **गुणेति** । विषमपूजा वैषम्यं ददाति । तस्यैवार्थः उत्तमत्वमिति । या समा दृष्टिः सा विदुःख-रूपं जनयतीति । साम्यं प्रकारान्तरेण सप्रमाणकमाह– **सुहृदादिष्विति** ॥

भावप्रकाशिका (न.टी.)– ननु समत्वात् साधुपापादिचेतनानाम्, तान् समत्वेन जानतः सर्वनराधिक्यं फलं चेत्, समत्वेनैव हेतुना तान् साम्येन नमतः पूजयतोऽपि तत्फलं किं न स्यादित्याशङ्क्याह– **न त्विति** । साधुपापादिरूपवैषम्यस्याप्युपपादितत्वात्, विषमान् समत्वेन पूजयतो दोषस्मृतेरित्यर्थः । गुणानुसारेण पूजाविधानाच्च, न सत्यपि साम्ये पूजादि-साम्यमित्याह– **वित्तमिति** । फलपर्यालोचनयाऽपि पूजादृष्टी विषमे स्यातामिति भावेनाह **गुणानुसारिणीमिति** । या पूजा विषमा, सा वैषम्यमुत्तमत्वं ददाति । या दृष्टिः समा सा तत्साम्यं दुःखाभावसाम्यं जनयतीत्यर्थः । साम्यं प्रकारान्तरेण सप्रमाणकं व्याचष्टे– **सुहृदिति** । अतोऽपि न सर्वभूतेषु पूजादिसाम्यमिति भावः ।

प्रमेयदीपिका (ज.टी.)– 'सुहृत्' इत्यादि श्लोकस्य प्रतीत एवार्थः किं न स्यात्? इत्यत आह– **न त्विति** ॥ सर्वशब्दपर्यायस्य समशब्दस्यैव सर्वनामसञ्ज्ञा न साधारणार्थस्य । समे देशे यजति इति यथा ॥ तथा न केवलं समपूजायां दोषः । किन्तु विषमपूजाविधानं चास्तीत्याह– **वित्तमिति** ॥ बन्धुः इति बन्धुत्वम् । मान्यानि च तानि स्थानानि च । वित्तादिशब्दैः तद्वन्त उपलक्ष्यन्ते ॥

भावदीपः (रा.टि.)– ॥ **प्रतीत एवार्थ इति** ॥ साम्येन पूजादिरूपोऽर्थ इत्यर्थः ॥ ननु स्मृतौ समानाम् इति कथं 'सर्वादीनि सर्वनामानि' (पा.सू.१.१.२७) इति स्मृतौ सर्वादिगणे समशब्दं पठित्वा सर्वनामसञ्ज्ञाविधानेन 'आमि सर्वनाम्नः सुट्' (पा.सू.७.१.५२) इति सुडागमे सर्वेषामितिवत् समेषामिति भाव्यमित्यत आह– **सर्वशब्दपर्यायस्येति** ॥ 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यादेरर्थानुवादः– **समे देश इति** ॥ अन्यथा समस्मिन्निति स्यादिति भावः ॥

श्लोकः ९

**वाक्यार्थप्रदीपः (पां.टि.)**– तत्रैव सम्प्रतिपन्नं दृष्टान्तमाह– **समे देशे यजतीति यथेति ॥** उपलक्षणमेतत् । 'यथासङ्ख्यमनुदेशः समानाम्'इत्यादिकमप्युदाहर्तव्यम् ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **प्रतीत एवार्थः** समवुद्धित्वं नाम पूजादिसाम्यमेवेत्यापातप्रतीत एवार्थः । भाष्ये 'तत्र' इत्यस्य साधुपापादिपूजासाम्ये, आदिपदोक्ते स्तुत्यभिवन्दनादौ चेत्यर्थः । ननु स्मृतौ 'समानाम्' इति कथम् । यावता असौ सर्वनामगणे पठितः । अतस्तस्माद् 'आमि सर्वनाम्नः सुट्' इति सुडागमे एत्वे षत्वे च 'समेषाम्' इत्येव षष्ठीवहुवचने साधुः, 'सर्वेषाम्' इति यथेत्यत आह– **सर्वशब्देति ॥ साधारणार्थस्य** तुल्यार्थस्य । तथा च आधुनिकः 'समः सर्वपर्यायः । तुल्यपर्यायस्तु नेह गृह्यते । 'यथासङ्ख्यमनुदेशः समानाम्' इति ज्ञापकात् । 'नभन्तामन्यके समे' इति श्रुतेः' इति । साधारणार्थस्य न सर्वनामत्वम्' इत्येतदुदाहृत्य दर्शयति– **समे देशे यजतीति यथेति ॥** अन्यथा तत्रापि 'इतः', 'समस्मिन्' इत्यादाविव सर्वनामकार्यं दृश्येतेति भावः । भेदलक्षणे समे 'दर्शपूर्णमासाभ्यां यजेत' इति मीमांसकोदाहृतवाक्यस्याय-मर्थतोऽनुवाद इति स्वामिनः ।

ननु 'वित्तम्' इत्यादिस्मृतौ साधुपापादीनां पूजासाम्ये न कोऽपि दोषो दृश्यत इति प्रकृतासङ्गतिरित्यतः सङ्गतिमाह– **न केवलमिति ॥** पूर्वं पश्चाच्च धर्माणामेवोपादानात्, तेषां च धर्मत्वेनैव प्रेषणमान्यस्थानपदेनान्वयवोधदशायां बन्धुशब्दार्थस्य धर्मिणो धर्मत्वेनान्वयप्रतियोगित्वा-योगेन वैरूप्यमापद्यते । तथैकरूप्ये सम्भवति न स्वरसमित्यतो व्याचष्टे– **बन्धुरिति बन्धुत्व-मिति ॥** बन्धुशब्देन धर्मधर्मिभावसम्बन्धेन तद्धर्मो बन्धुत्वं लक्ष्यत इति न वैरूप्यमिति भावः । ननु 'मान्यस्थानानि' इत्यत्र षष्ठीतत्पुरुषाभ्युपगमे मान्यशब्दो भावे कर्मणि वा ण्यत्प्रत्ययान्तः, स्थानशब्दश्च 'निग्रहस्थानम्', 'क्लेशस्थानम्' इत्यादाविव निमित्तवाची स्यात् तदा 'पूजा-निमित्तानि', 'पूज्यनिमित्तानि' इति वाऽर्थः स्यात् । स्थानशब्दस्याधिकरणार्थत्वे 'पूजाऽधि-करणानि', 'पूज्याधिकरणानि' इति वाऽर्थः स्यात् । सर्वत्र च विषमपूजाविधायकत्वाभावाद् विषमपूजाविधानं चास्तीत्यर्थे असङ्गतोऽयं श्लोक आपद्यते । एतेन 'बहुव्रीहिः द्वन्द्वो वा समासोऽस्तु' इति प्रत्युक्तम् । असङ्गतेरेवेत्यत आह– **मान्यानि च तानि स्थानानीति ॥**

नोक्तसमासेषु कोऽप्यत्रेष्यते, येन प्रकृतासङ्गतिः स्यात् । किन्तु कर्मधारय एव, स्थान-शब्दोऽधिकरणार्थः, मान्यशब्दश्च 'मान पूजायाम्' इति धातोः 'ऋहलोर्ण्यत्' इति विहितण्य-

श्लोकः ९

त्प्रत्ययान्तः । ण्यत्प्रत्ययश्च 'प्रैषातिसर्गप्राप्तकालेषु कृत्याः' इति, 'तयोरेव कृत्यक्तखलर्थाः' इति च प्रैषशब्दितविधौ कर्मणि च विहित इत्यतोऽत्रोभयार्थः । तथा च प्रैषशब्दितविधिगोचरमाननकर्माणीत्यर्थे प्रत्ययेनाभिहिते विषमपूजाविधानं लभ्यत इति न श्लोकोदाहरणमसङ्गतम् । अत एव 'वित्तबन्धुधर्मजातिविद्यावयांसि मान्यानि', 'परबलीयांसि' इति गौतमधर्मसूत्रे 'पूजयितव्यानि' इत्यर्थकं 'मान्यानि' इतिपदं प्रयुक्तमिति भावः । ननु वित्तादीनां धर्माणां पूजनीयत्वायोगात् कथमेवं व्याख्यानमित्यत आह– **वित्तादिशब्दैरिति** ।। वित्तबन्धुवयः कर्मविद्याशब्दैरित्यर्थः । तथा चोक्तम् उक्तगौतमसूत्रव्याख्यायां मिताक्षर्यां 'वित्तादीनां साक्षान्मान्यत्वासत्त्वात् तद्वन्तो मान्याः' इति ।

नन्वेवं सति बन्धुपदस्य लक्षितलक्षणेति प्राप्तम् । न च तद्युक्तम् । तस्य वचनवृत्त्यैव मान्यतायाः सम्भवेनानुपपत्त्यभावात्, लक्षितलक्षणाश्रयणस्यातीव जघन्यत्वाच्चेति चेत् । उच्यते । 'गरीयो यद्यदुत्तरम्' इत्यत्र यच्छब्देन प्रकृतपरामर्शिना बन्धुत्वत्वेन वेषेण बन्धुत्वमनूद्य तस्य पूर्वस्माद्गरीयस्त्वं विधीयत इति वक्तव्यम् । उद्देश्यतावच्छेदकेन रूपेणोपस्थित एव धर्मिणि विधीयमानान्वयप्रतीतिनियमात् । बन्धुत्वत्वेन बन्धुत्वानुवादश्च तथाविधपुरोवादसापेक्ष इति तदर्थं बन्धुपदस्य बन्धुत्वे लक्षणायां वक्तव्यायाम्, तत्राप्युक्तरीत्याऽन्वयानुपपत्तौ तत्रापि लक्षणा, 'शीतोष्णसुखदुःखदाः' इत्यत्र शीतोष्णपदयोरिव न्यायप्राप्तत्वात् स्वीकार्यैवेति ।।

एतेन 'बन्धुर्मान्यः' इत्यन्वयेऽनुपपत्त्यभावाद्, अन्वयानुपपत्तेरेव सिद्धान्ते लक्षणाबीजत्वात् कथमत्र बन्धुपदेन बन्धुत्वलक्षणेति निरस्तम् । 'छत्रिणो गच्छन्ति', 'यष्टीः प्रवेशय', 'काकेभ्यो दधि रक्ष्यताम्' इत्यादावन्वयानुपपत्तेरभावेन तत्र लक्षणाऽभावप्रसङ्गात् । यदि च तत्र प्रकरणादिना 'गच्छन्ति' इत्यस्य एकसार्थवाहित्वेन छत्र्यछत्रिगमनम् अर्थः, 'प्रवेशय' इत्यस्य भोजनप्रयोजनकप्रवेशनमर्थः, 'रक्ष्यताम्' इत्यस्य दध्युपघातकमात्राद् रक्षणमर्थ इत्यवगतत्वेन अस्त्येवान्वयानुपपत्तिरिति मतम्, तर्ह्यत्रापि बन्धुपदस्य सदृशन्यायेन याज्ञवल्क्यश्रुत्युक्तनिमित्तत्वनिर्वाहाय धर्मार्थकत्वावगमे बन्धुत्वरूपधर्मस्य मान्यत्वानुपपत्तिरस्तीति समम् ।

अत एव 'विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम्' इति याज्ञवल्क्यस्मृतौ विद्यादिसमकक्ष्यतया तृतीयाविभक्तया बन्धोर्मान्यतां प्रति निमित्तत्वं प्रतीयते । तच्च बन्धोर्मान्यत्वेन, मान्यतायां निमित्तत्वायोगाद् अयुक्तमित्याशङ्क्य तद्व्याख्यात्रा 'बन्धुः इति बन्धुत्वमत्र ग्राह्यम् । एतैर्युक्ताः क्रमेण मान्याः पूजनीयाः' इत्युक्तम् । केचित्तु 'मान्यस्थानानि' इत्यत्र मान्यशब्दो भावप्रधानः,

स्थानशब्दश्च 'क्लेशस्थानसहस्राणि दुःखस्थानशतानि च' इत्यादाविव निमित्तार्थकः, 'मान्यतायां निमित्तानि' इत्यर्थः सम्पद्यते । तत्र वन्धोर्मान्यत्वेन, मान्यतां प्रति निमित्तत्वाभावाद् वन्धुशब्दो वन्धुत्वलक्षक इत्याह– **वन्धुरिति वन्धुत्वमिति** ॥ एवं वित्तादिग्रहणस्वारस्येन मान्यस्थानशब्दे तत्पुरुषसमासमभिप्रेत्य बन्धुशब्दो व्याख्यातः । अधुना वन्धुशब्दस्वारस्येन कर्मधारयसमास इति विग्रहमाह– **मान्यानि च तानि स्थानानि चेति** ॥ पूज्यस्थलानीत्यर्थः । अत्र पक्षे वित्तादेः पूज्यतानिमित्तत्वेन स्वयं पूज्यत्वायोगादाह– **वित्तादिशब्दैरिति** ॥ वन्धुशब्दव्यतिरिक्तैर्वित्तवय-आदिशब्दैरित्यर्थः । तथा च पक्षान्तरत्वद्योतको वाशब्दोऽत्राध्याहार्यः । यथाश्रुतार्थत्वे वन्धुशब्दस्य वन्धुत्वपरोक्त्ययोगादिति व्याचक्षते ।

अनेन वित्तवान् आढ्यः, बन्धुत्ववान् स्वजनः, वयस्वान् वयसाधिकः, कर्मवान् यथोक्तकारी, विद्यावान् प्राप्ताध्यात्मज्ञानः एतादृशा अनेतादृशैः मान्याः । मान्यस्थानपदम् अनितरसाधारण-द्योतनाय परस्परसमवाये परं गरीयः । वित्तवतो वन्धुर्मान्यः, उभाभ्यां कर्मवान् इत्यादीति स्मृतिर्व्याख्याता भवति ।

ननु स्मृतिव्याख्याता तु बन्धुः कुलम्, कर्म यज्ञदानादि मान्यस्थानानि मन्यमानः पूजा-स्थानानि निमित्तानि, एतेषु यद्यदुत्तरं तत्तत् पूर्वस्मात् पूर्वस्मात् गरीयो मान्यस्थानमिति व्याख्यातवान्, स स्थूलदृश्वा । 'मान्यानि' इति गौतमसूत्रे, 'मान्याः' इति याज्ञवल्क्यस्मृतौ च मान्यत्वस्य विधेयत्वावगमात् । 'पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च । यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥' इत्युत्तरस्मृतिवचने 'मानार्हः मान्यः' इत्येव स्फुटमवभासेन, 'मान्यशब्दो मानार्थः' इति व्याख्यानस्याकुशलत्वाच्चेति टीकाकारीयमेव व्याख्यानं युक्तमिति ।

**भावदीपिका (श्री.टि.)**– ननु 'समानाम्' इति कथम्? सर्वविश्वसमसमेत्यादीनां 'सर्वादीनि सर्वनामानि' इति सर्वनामसञ्ज्ञायाम् 'आमि सर्वनाम्नः सुट्' इति सूत्रेण अवर्णान्तात् सर्वनाम्नः समशब्दात् परस्यामः सुडागमे, टित्त्वात् आदौ जाते 'समस् आम्' इति जाते, 'बहुवचने झल्येत्' झालादौ बहुवचने सुपि परे अतोऽङ्गस्य एकारः स्यात्, इति गकारस्थाकारस्य एत्वे, सस्य षत्वे च, 'समेषाम्' इति स्यादित्यत आह– **सर्वशब्देति** ॥ सामस्त्यार्थकस्येत्यर्थः । **साधारणार्थस्येति** ॥ साधारणार्थकसमशब्दस्येत्यर्थः । अत्रोदाहरणमाह– **सम इति** ॥ औन्नत्यनिम्नताशून्ये समाने स्थल इत्यर्थः । तथा च सर्वनामसञ्ज्ञाया अविवक्षितत्वात्

श्लोकः ९

'समस्मिन्' इति न जातमिति भावः । **वन्धुत्वमिति** ॥ धर्मिग्रहणे वित्तवयःकर्मविद्यारूप-धर्मप्रायपाठविरोधः स्यादिति भावः ॥ 'मान्यानां स्थानानि' इत्यन्यथा प्रतीतेराह– **मान्यानि चेति** ॥ वित्तबन्धुत्वादेर्धर्मस्य मान्यस्थानत्वाभावादाह– **वित्तादीति** ॥

**भावप्रकाशः (कृ.टि.)**– ननु पूर्वं पश्चाच्च धर्माणामेवोक्तत्वात् बन्धुरित्यस्य प्रायपाठविरोध इत्यत आह– **बन्धुत्वमिति** ॥ यद्वा गरीयो यद्यदुत्तरमित्युत्तरवाक्ये परामर्शार्थं बन्धुपदेन विशिष्टवैशिष्ट्यावगाहिबोध एवोत्पाद्यः । तदर्थं बन्धुपदेन बन्धुत्वं लक्ष्यत इत्यत आह– **बन्धुरिति** ॥ **बन्धुत्वमिति** । ननु मान्यस्थानानीत्यत्र षष्ठीतत्पुरुषो वा बहुव्रीहिर्वा द्वन्द्वो वा । आद्येऽपि मान्यशब्दो भावे कर्मणि वा ण्यप्रत्ययान्तः । तत्र यदि स्थानशब्दो निग्रहस्थानमितिवन्निमित्तवाची तदा पूजानिमित्तानीति वा पूज्यनिमित्तानीति वाऽर्थः स्यात् । एवं स्थानशब्दस्याधिकरणार्थत्वेऽपि पूजाधिकरणानीति वा पूज्याधिकरणानीति वाऽर्थः स्यात् । सर्वत्र विषमपूजाविधायकत्वाभावा-दसङ्गतोऽयं श्लोकः स्यात् । एतेन बहुव्रीहिद्वन्द्वपक्षावपि निरस्तौ । प्रकृतासङ्गतत्वादित्यत आह– **मान्यानि च तानीति** ॥ तथा च स्थानशब्दोऽधिकरणार्थः । मान्यशब्दस्तु कर्मणि ण्यप्रत्ययान्तो ण्यप्रत्ययश्च कृत्यप्रत्ययत्वाद्विधायकश्च भवतीति श्लोकोदाहरणं सङ्गतमिति भावः ॥

केचित्तु मान्यस्थानानीति मान्यशब्दो भावप्रधानः । तत्पुरुषश्च समासः । एवञ्च वन्धोः पूजा-निमित्तत्वाभावाद् भावप्रधानो बन्धुशब्द इत्याह– **बन्धुत्वमिति** ॥ एवं वित्तादिग्रहणस्वारस्यार्थं **मान्यस्थानानीति** । तत्पुरुषमभिप्रेत्य बन्धुशब्दो व्याख्यातः । अधुना बन्धुशब्दस्वारस्याय कर्मधारयमाह– **मान्यानि च तानीति** ॥ अस्मिंश्च पक्षे वित्तादिशब्दैरित्यग्रिमवाक्यं बन्धुशब्द-व्यतिरिक्तैरिति व्याख्येयमित्याहुः ।

ननु मान्यत्वं पूज्यत्वम् । न च वित्तादीनां तदस्ति । विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रम-मित्युक्तत्वेन तेषां पूजाप्रयोजकत्वादित्यत आह– **वित्तादिशब्दैरिति** ॥ एवं सति बन्धुपदस्य लक्षितलक्षणेति प्राप्तम् । न च तद्युक्तम् । वचनवृत्त्यैवाभिप्रेतार्थलाभादिति चेत् । उच्यते । गरीयो यद्यदुत्तरमित्यत्र बन्धुत्वेन रूपेण बन्धुत्वमनूद्य तस्य गरीयस्त्वं विधीयत इति वक्तव्यम् । उद्देश्यता-वच्छेदकरूपेणोपस्थित एव धर्मिणि विधेयान्वयप्रतीतिनियमात् । बन्धुत्वत्वेन बन्धुत्वानुवादश्च तथाविधपुरोवादपूर्वकः । तदर्थलक्षितलक्षणा युक्तैव । एवञ्च विशिष्टवैशिष्ट्यावगाहि बोधोदयान्न कश्चिद्दोषः ।

## भाष्यम्

**'गुणानुसारिणीं पूजां समां दृष्टिं च यो नरः ।**
**सर्वभूतेषु कुरुते तस्य विष्णुः प्रसीदति ॥**
**वैषम्यमुत्तमत्वं तु ददाति नरसञ्चयात् ।**
**पूजा या विषमा दृष्टिः समा साम्यं विदुःखजम् ॥' इति ब्रह्मवैवर्ते ।**

**सुहृदादिषु शास्त्रोक्तपूजादिकृतिरन्यूनानधिका या सापि समता । तदप्याहुः–**

**'यथा सुहृत्सु कर्तव्यं पितृशत्रुसुतेषु च ।**
**तथा करोति पूजादि समबुद्धिः स उच्यते ॥' इति गारुडे ।**

प्रमेयदीपिका (ज.टी.)– दृष्टिरेवोक्तप्रकारत्रयेण समा कार्या, पूजा तु विषमैवेत्यत्र प्रमाणान्तरमाह– **गुणेति** ॥ या विषमा पूजा सा वैषम्यम् । तस्यैव व्याख्यानम् उत्तमत्त्वम् । साम्यं ददाति विदुःखत्वनिमित्तम् । समबुद्धित्वं प्रकारान्तरेण व्याचष्टे– **सुहृदादिष्विति** ॥ एतन्न योगारूढविषयमिति तत्रैव नोक्तम् । न हि योगारूढो लौकिकेष्वरिष्वपकारं करोति ॥

भावदीपः (रा.टि.)– ॥ उक्तप्रकारत्रयेणेति ॥ जीवचितः स्वतो निर्दोषत्वारित्वादि-धर्माणामन्तःकरणौपाधिकत्वे ईशायत्तत्वादिप्रकारेणेत्यर्थः ॥ पुराणे पूजा या विषमा इत्यत्र 'पूजायाः' इत्यस्य षष्ठ्यन्तभ्रमं निरस्यन् योजनामाह– **या विषमा पूजेति** ॥ सा इति शेषोक्तिः ॥ **प्रकारान्तरेणेति** ॥ यत् सुहृत्वादिकं यथा शास्त्रं सुहृदादिषु उपकारा-पकारानुष्ठातृत्वरूपप्रकारान्तरेणेत्यर्थः ॥

भावरत्नकोशः (सु.टि.)– ॥ **उक्तप्रकारेणेति** ॥ सुहृत्त्वारित्वादिधर्माणाम् अन्तःकर-णोपाधित्वेशायत्तत्वादिरूपोक्तप्रकारेणेत्यर्थः । सर्वभूतेषु सुहृत्त्वादिरूपेष्विति भाष्यार्थः । 'पूजाया विषमा दृष्टिः' इत्येतत् षष्ठीभ्रमं निरस्यन्नन्वयं दर्शयन् व्याचष्टे– **या विषमा पूजेति** ॥ 'वैषम्यम् ददाति' इत्युक्तम् । वैषम्यस्य दोषत्वेन गुणाद्यनुसारिपूजाफलत्वायोगात् इत्यत आह– **तस्यैवेति** ॥ उत्तमत्वम् 'इति' शेषः । नरसञ्चयात् पामरनिवहात् इति भाष्यार्थः । या तु दृष्टिरुक्तप्रकारेण समा सा साम्यम्, इत्यस्य अनुवृत्तेन 'ददाति' इत्यनेनान्वय इत्याह– ददातीति ॥ 'विदुःखजम्'

इत्यस्य तात्पर्यम् **विदुःखत्वनिमित्तमिति । प्रकारान्तरेणेति** । सुहृदादिषु, 'महतां बहुमानेन दीनानामनुकम्पया । मैत्र्या चैवात्मतुल्येषु' इति, 'गुरुदेवप्रतीपानां विमुखः', 'यः प्रशंस्यान्न प्रशंसेत् निन्द्यो येन न निन्द्यते' इत्यादिशास्त्रोक्तपूजानिन्दादिकृतिरापादनीयेत्येवं प्रकारान्तरेणेत्यर्थः । नन्वेवं व्याख्यानं 'न तु साधुपापादीनां पूजादिसाम्यम्' इत्यतः पूर्वमेव कस्मान्न कृतम् ? औचित्यात् इत्यत आह– **एतदिति** ॥ प्रकारान्तरेण व्याख्यानमित्यर्थः । कुतो योगारूढविषयत्वं नास्ति ? इत्यतस्तदुपपादयति– **न हीति** ॥ 'हि'शब्दो हेतौ । अतो न योगारूढविषयम्, किन्तु योगार्थिविषयमिति भावेनात्रैतदुक्तमित्यभिसन्धिः ।

**भावदीपिका (श्री.टि.)**– ॥ **उक्तप्रकारत्रयेण** 'जीवचितः' इत्युक्तप्रकारेण, 'वैषम्यं ददाति' इति भाष्येणान्वयः । तस्यैव वैषम्यस्यैव । तथा चायं प्रमाणार्थः गुणानुसारिर्णी पूजाम् उक्तप्रकारत्रयेण समां दृष्टिं सर्वभूतेषु यो नरः कुरुते, तस्य विष्णुः प्रसीदति । न केवलं विष्णुप्रसादः फलम्, किन्तु तदतिरिक्तं चास्तीत्युच्यते– **वैषम्यमिति** ॥ यच्छब्दश्रवणात् तच्छब्दाध्याहारः । तथा च या विषमा पूजा सा नरसञ्चयात् नरसमूहात् पूजकस्य वैषम्यम् इतरापेक्षया वैलक्षण्यं ददाति । 'तं यथा यथोपासते' इत्यादिश्रुतेः ।

ननु 'गोमहिष्योर्वैषम्यमस्ति' इत्युक्ते गवि महिष्यपेक्षयोत्तमत्वरूपम्, महिष्यां चाधमत्वरूपं वैषम्यं यथा प्रतीयते, तथेह 'वैषम्यं ददाति' इत्युक्ते किम् इररापेक्षयोत्तमत्वम् अधमत्वरूपं वेति शङ्कायां तस्य वैषम्यस्य व्याख्यानं क्रियते 'नरसञ्चयादुत्तमत्वं ददाति' इति । तथा या समा दृष्टिः सा विदुःखं दुःखाभावो जायते यस्मात् तद् विदुःखजं विदुःखत्वनिमित्तं यत्साम्यं तदस्य द्रष्टुर्ददाति, साम्यप्राप्तौ दुःखाभावप्रसिद्धेरिति ।

ननु 'सुहृदादिषु' इति समबुद्धित्वव्याख्यानं समबुद्धित्वव्याख्यानप्रकरण एव, न तु 'साधुपापादीनाम्' इत्यतः पूर्वमेव, इत्यत आह– **एतदिति** ॥ एतत् समबुद्धित्वव्याख्यानं 'सुहृदादिषु' इत्यादिना क्रियमाणमित्यर्थः । पूर्वतनं तु योगारूढविषयम्, इदं तु सर्वसाधारणम् । अतस्तत्रैव नोक्तमित्याशयः । तथा चास्मिन् पक्षे 'युक्त इत्युत्यते योगी' इति लक्ष्योक्त्या योगारूढलक्षणनिरूपणं समाप्तम् । 'सुहृत्' इत्यादिना तु 'साम्यबुद्धिः सर्वेषामपेक्षिता' इति प्रसङ्गादुच्यत इत्यवधेयम् ।

नन्वेतत् कुतो न योगारूढविषयम् । सोऽपि सुहृत्सु शास्त्रोक्तपूजां करोत्येवेति चेत्, तत्राह– न हीति ॥ अत एव भाष्ये 'सुहृदादिषु' इति 'पूजादि' इति चादिपदं प्रयुक्तमिति भावः । ननु सोऽप्यान्तरेषु कामादिरूपादिषु वधादिरूपापकारं करोत्येवेत्यत उक्तम्– **लौकिकेष्विति** ॥ बाह्येष्वित्यर्थः । 'सुहृदादिषु' इति भाष्यस्य सुहृदादिषु न न्यूनाधिका, योग्यताऽनुसारिणी या शास्त्रोक्तपूजादिकृतिः साऽपि साम्यशब्दार्थत्वेन सम्मता, न केवलं 'जीवचितः' इत्याद्युक्तरूपे-त्यर्थः । 'यथा' इति प्रमाणस्य सुहृत्सु पूजादि यथा कर्तव्यम्, पितृशत्रुसुतेषु 'यथा कर्तव्यम्' इति वर्तते, यथा तदनुसारेण यः करोति स समबुद्धिरुच्यत इत्यर्थः ।

## भाष्यम्

**प्रत्युपकारनिरपेक्षयोपकारकृत् सुहृत् । क्लेशस्थानं निरूप्यं यो रक्षां करोति स मित्रम् । अरिः वधादिकर्ता । कर्तव्ये उपकारे अपकारे च य उदास्ते स उदासीनः । कर्तव्यमुभयमपि यः करोति स मध्यमः । अवासितकृत् द्वेष्यः । आह चैतत्–**

**'द्वेष्योऽवासितकृत् , कार्यमात्रकारी तु मध्यमः ।**
**प्रियकृत् प्रियो, निरूप्याऽपि क्लेशं य परिरक्षति ।**
**स मित्रम्, उपकारं त्वनपेक्ष्योपकारकृत् ।**
**यस्ततः स सुहृत् प्रोक्तः शत्रुश्चापि वधादिकृत् इति ॥ ९ ॥**

भावप्रदीपिका (प.टी.)– सुहृदादिशब्दार्थान् सप्रमाणकमाह– **प्रत्युपकारेति** । अवासितम् अप्रियम् । ततः उपकृतात् ॥

भावप्रकाशिका (न.टी.)– सुहृदादिपदार्थं सप्रमाणकमाह– **प्रत्युपकारेत्यादिना** । अवासितम् अनभिप्रेतम् ॥ ९ ॥

प्रमेयदीपिका (ज.टी.)– सुहृन्मित्रशब्दयोः, अरिद्वेष्यशब्दयोः, उदासीनमध्यस्थशब्द-योश्चार्थभेदो न प्रतीयते । अत आह – **प्रत्युपकारेति** ॥ निरपेक्षया अनपेक्षया । अवासितम् अप्रियम् । ततः उपक्रियमाणात् ॥ ९ ॥

श्लोकः ९

**भावदीपः (रा.टि.)**– यस्ततः इत्यत्र ततःशब्दार्थः – **तत उपक्रियमाणादिति** ॥ ९ ॥

**भावरत्नकोशः (सु.टि.)**– 'निर् निश्चयनिषेधयोः' इति कोशात् 'निर्' इत्यस्य निषेधार्थत्वमत्र विवक्षितमिति भावेनोक्तम्– **अनपेक्ष्येति** ॥ अर्थाभावेऽव्ययीभावसमासाभ्युपगमे अमादेशप्रसङ्गेन 'निर्मक्षिकम्' इत्यत्रेव 'निरपेक्षम्' इति स्यात् इत्याशङ्क्य 'निर्गता अपेक्षा निरपेक्षा' इति प्रादिसमास एवायम्, भावप्रधानकबोधश्च लक्षणयेति भावेन 'अनपेक्षया' इति व्याख्यातमिति केचित् । 'वाञ्छा इच्छा अस्य सञ्जाता' इत्यर्थे 'तदस्य सञ्जातं तारकादिभ्य इतच्' इति तद्धित इतच्प्रत्ययः । 'अस्य' इति षष्ठ्यर्थश्च कर्मत्वमिति भावेन 'अवाञ्छितम्' इत्येतदनूद्य व्याचष्टे– **अवाञ्छितमप्रियमिति** ॥ तथा च तात्पर्यम् 'द्वेष्यस्त्वप्रियमात्रकृत्' इति । अवासितम् अनभिमतम् इति तु प्राचीनटीका । केचित्तु इहापि 'अवासितम्' इति पठित्वा, 'वासितं सुरभीकृतम्' इति विश्वकोशः । तथाऽपि 'सुरभीकृतं प्रियं भवति' इत्युपचारेणैवं व्याख्यातमित्याहुः ।

**कार्यमात्रकारी** कर्तव्यम् उपकारमपकारं च कुर्वन्निति यावत् । 'प्रियकृत् प्रियो निरूप्यापि' इत्यत्र एकाक्षराधिक्येऽपि छन्दोभङ्गो न शङ्कनीयः । 'न वा एकेनाक्षरेण छन्दांसि वियन्ति' इति निगमात् । 'प्रियकृत् प्रियः' इति प्रियशब्दार्थकथनं प्रसङ्गादिति द्रष्टव्यम् । 'प्रिय उपकर्ता, प्रियो बन्धुः' इति बन्धुस्वरूपनिरूपणम् । तथा च रामानुजभाष्यम् 'जन्मत एव हितैषिणो बन्धव इति' इति केचित् । 'उपकारं तु अनपेक्ष्य' इत्यत्र विवक्षाऽभावात् सन्ध्यभावः, 'विवक्षातः सन्धिर्भवति' इति हि प्रसिद्धिः । यद्वक्ष्यति सप्तमे 'पदसन्धेः विवक्षाधीनत्वादसन्धिर्न दोषः' इति । 'यस्ततः स सुहृत्प्रोक्तः' इत्यत्र 'ततः' शब्दमनूद्यार्थमाह– **तत उपक्रियमाणदिति** ॥ 'देवदत्तो यज्ञदत्त-स्योपकर्ता' इत्यत्र देवदत्त उपकर्ता, स तु सुहृत्प्रोक्त इत्यन्वय इति भावः । भाष्ये 'शत्रुश्च' इत्यत्र चशब्दस्तुशब्दार्थः । वधादिकृत्तु शत्रुः अरिः । अपिशब्दः सुहृदादिसमुच्चयार्थ इत्यर्थो द्रष्टव्यः ॥९॥

**गीताश्लोकत्रयाक्षरार्थस्तु** 'वशीकृतं मनो बन्धुः' इत्युक्तम् । उपकारी हि बन्धुरुच्यते । जितं च मनः कमुपकारं करोति ? येन बन्धुः स्यात् । आत्मोद्धारं करोतीति चेत्, स एव कः ? इत्याशङ्क्य जितात्मनः फलमुच्यते जितात्मन इति । वशीकृतमनस्कस्य प्रशान्तिर्भवतीति मनो-वशीकरणविषयोपरतिलक्षणप्रशान्त्योः हेतुहेतुमद्भावप्रतिपादकमेकं वाक्यम् । ततः प्रशान्तस्य स्वत एव मनसा विषयेष्वनासङ्गवतः परमात्मा सम्यक् हृद्याहित इत्यपरं वाक्यं द्रष्टव्यम् । परमात्मा

सर्वेषां हृदये सन्निहित एव, तत्कुतः प्रशान्तस्य विशेषः ? इत्यतः 'सम्' इत्युक्तम् । अपरोक्ष-विषयो भवति । प्रशान्तो योगारूढो भवतीति यावत् । एवं च जित आत्मा प्रशान्तिलक्षणमुपकारं कुर्वन् वन्धुरित्युच्यत इति विभावितं भवति ।

योगारूढस्य 'यदा हि नेन्द्रियार्थेषु' इति यल्लक्षणमुक्तम्, तदेव स्पष्टीक्रियते शीतोष्णेत्यादिना सार्धश्लोकद्वयेन । शीतोष्णादिद्वन्द्वेषु तथा मानावमानयोः कूटस्थः निर्विकारः उत्सेकानुत्सेकरूप-विकारहीन इत्यत्र 'ज्ञानविज्ञानतृप्तात्मा विजितेन्द्रियः' इति हेतुद्वयम् । ज्ञानं सामान्यज्ञानं परोक्षज्ञानं वा, विज्ञानं विशेषज्ञानम् अपरोक्षज्ञानं वा, ताभ्यां तृप्तः सन्तुष्ट आत्मा मनो यस्य स तथा । विजितानि इन्द्रियाणि येन स तथोक्तः । यतोऽतः कूटस्थ इति । समानि असारत्वेन लोष्ठाश्मकाञ्चनानि यस्य स समलोष्ठाश्मकाञ्चनः, योगी योगं कुर्वन्, युक्तो योगसम्पूर्ण उच्यते । एवम्भूतो योगानुष्ठाता योगसम्पूर्णो भवतीति भावः ॥ ७-८ ॥

स एव च सुहृदादिषु समबुद्धिः सर्वस्माद् अयोगिवर्गाद् विशिष्यते । प्रत्युपकारानपेक्षया उपकारकृत् सुहृत्, स्वयमेव तस्य क्लेशस्थानं निरूप्योपकारकर्ता मित्रम्, अरिः वधादिकर्ता, कर्तव्ये उपकारे य उदास्ते स उदासीनः, कर्तव्यमुभयमपि यः करोति स मध्यस्थः, अप्रियकृत् द्वेष्यः, बन्धुः देहसम्बन्धी, साधवः धर्मिणः पापाः पापवन्तः, एतेषु सुहृदादिषु सुहृदादिचैतन्यस्य, सुहृदादिषु स्थितस्य परमात्मनः, सुहृदादिषु स्थितस्य सुहृत्त्वादेः परमात्मनिमित्तत्वस्य च ऐक्यरूप्येण कारणेन तद्दर्शी समबुद्धिः अयोगिनो विशिष्ट इति ॥ ९ ॥

**भावदीपिका (श्री.टि.)**– 'नितराम् अपेक्षया' इत्यन्यथाप्रतीतेराह– **अनपेक्षयेति** ॥ यद्वा ननु 'अपेक्षाया अभावो निरपेक्षम्' इति स्यात्, निर्मक्षिकमितिवत् । अत आह– **अनपेक्षयेति** ॥ तथा च नार्थाभावेऽव्ययमिदम्, किन्तु नञ्समास इत्याशयः । भाष्ये 'कर्तव्यम्' इत्यस्य तत्तत्काले कर्तव्यत्वेन प्रसक्तमुपकारमपकारं चेत्युभयमपि यः करोति स मध्यस्थ इत्यर्थः । यद्वोभयमपि कर्तव्यमिति ज्ञात्वा तदुभयं यः करोतीत्यर्थः ॥ **तत उपक्रियमाणादिति** ॥ तथा च उपक्रियमाणात् पुरुषात् उपकारमनपेक्ष्योपकारकृद् यः स सुहृदित्यन्वयो द्रष्टव्यः । भाष्ये– **कार्यमात्रेति** ॥ उपकारापकाररूपसमस्तकार्यकारीत्यर्थः । न चात्र 'तत्कृतानुकृत् मध्यस्थः' इति तात्पर्यविरोधः, तस्य व्याख्यानान्तरत्वादिति ध्येयम् ॥ ९ ॥

श्लोकः १०

भावप्रकाशः (कृ.टि.)– ॥ **तस्यैव व्याख्यानमिति** ॥ अनेन वैषम्यमिति द्वितीयान्तमिति सूचितम् । साम्यमित्येतद्ददातीत्यनेनानुवृत्तेन सम्बध्यत इत्याह– **साम्यं ददातीति** ॥ समबुद्धिः स उच्यत इत्यत्र तच्छब्दश्रवणात् करोतीत्यतः परं यच्छब्दमध्याहरति– **करोति य इति** ॥

नन्वर्थाभावेऽव्ययीभावत्वेऽमादेशप्रसङ्गेन निरपेक्षयेत्यनुपपन्नमित्याशङ्क्य निर्गता अपेक्षा निरपेक्षेति प्रादिसमासोऽयम् । अभावप्रधानकबोधश्च लक्षणयेति भावेन व्याख्याति– **अनपेक्षयेति** ॥ **अवासितमप्रियमिति** ॥ यद्यपि वासितं सुरभीकृतमिति विश्वकोशः । तथाऽपि सुरभीकृतं प्रियं भवतीत्युपचारेणैवं व्याख्यातम् ॥ ९ ॥

**योगी युञ्जीत सततमात्मानं रहसि स्थितः ।**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥**

## भाष्यम्

**समाधियोगप्रकारमाह– योगी युञ्जीत इत्यादिना ॥ (युञ्जीत) समाधियोगयुक्तं कुर्यात् । आत्मानं मनः ॥ १० ॥**

भावप्रदीपिका (प.टी.)– उत्तरप्रघट्टकमवतारयति– **समाधीति** । योगी युञ्जीत इति व्याचष्टे– **युञ्जीतेति** ॥ १० ॥

भावप्रकाशिका (न.टी.)– अत्यन्तं सुखमश्नुते इत्येतदन्तं प्रघट्टकमवतारयति– **समाधीति** । प्राधान्यत एतेषु श्लोकेषु योगप्रकार एवोच्यते । तत्फलादि चान्यत् तदर्थमेव ॥ १० ॥

प्रमेयदीपिका (ज.टी.)– ननु 'उद्धरेत्' (६-५) इत्यनेनैव योगो विहितः । तत् किं पुनर्विधीयत इत्यत आह – **समाधीति** ॥ प्रकारकथनाय विध्यनुवाद इत्यर्थः ।'युञ्जीत'इति योगमात्रमुच्यते । तत् कथं समाधि इत्युक्तमित्यत आह– **युञ्जीतेति** ॥ सामान्यशब्दोऽपि प्रकरणाद्विशेषेऽवतिष्ठत इत्यर्थः ॥ आत्मशब्दस्यात्र विवक्षितमर्थमाह– **आत्मानमिति** ॥१०॥

भावरत्नकोशः (सु.टि.)– ॥ कथनायेति ॥ रहःस्थित्याद्यङ्गकलापकथनायेत्यर्थः ।

**प्रकरणादिति** । समाधियोगप्रकरणादित्यर्थः ॥ अत एव 'समाधियोगमाह' इत्यध्यायगम-निकाभाष्यमिति भावः ॥

आ – अध्यायपरिसमाप्तेर्योगप्रघट्टकस्यायमक्षरार्थः 'उद्धरत्' इति विहित एव योग इत्थम्भावकथनाय पुनरनूद्यते– **योगी युञ्जीतेति** ॥ ज्ञानोपायमनुतिष्ठन् आत्मानं मनो युञ्जीत समादध्यात् इति यत् तत् सततं निरन्तरं रहसि एकान्ते स्थितः एकाकी 'एकादाकिनच् असहाये' इत्याकिनच्प्रत्ययः । असहायः सङ्गशून्यः, यतचित्तात्मा यतौ नियमरूपेण तपआदिना संयतौ चित्तात्मानौ अन्तःकरणदेहौ यस्य स तथोक्तः, निराशीः वीततृष्णः अपरिग्रहः अपरिग्रहशब्दोप-लक्षित-अहिंसा-असत्य-अस्तेय-ब्रह्मचर्यादिशास्त्रोक्तधर्मवान्, समादध्यादिति विध्यनुवादेन प्रकारकथनं द्रष्टव्यम् ॥ १० ॥

**भावदीपिका (श्री.टि.)**– ननु प्रकारे वक्तव्ये विध्यनुवादो व्यर्थ इत्यत आह– **प्रकारेति** ॥ 'युञ्जीत' इति यत् तत् 'एकाकी' इत्यादिप्रकारेणेति प्रकारकथनाय विध्यनुवाद इत्यर्थः । **सामान्यशब्दोऽपीति** ॥ 'युञ्जीत' इति सामान्यतो योगोक्तिपरोऽपीत्यर्थः । **प्रकरणेति** ॥ समाधियोगप्रकरणेत्यर्थः ॥ १० ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **प्रकारकथनायेति** । आसनाद्यङ्गकथनायेत्यर्थः । **प्रकरणा-दिति** । समाधिप्रकरणादित्यर्थः ॥ १० ॥

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।**
**नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् ॥ ११ ॥**

**भावरत्नकोशः (सु.टि.)**– एवं तत्रैव प्रकारान्तरमुच्यते **शुचौ देश इत्यादिना** । शुचौ मनः-प्रसादहेतुभूते देशे, तथाविधे काले, तथाविधायाम् अवस्थायामिति चोपलक्ष्यते । चेलाजिनकुशोत्तरं चेलं वस्त्रम्, अजिनं कृष्णव्याघ्रादिचर्म, कुशाः दर्भाः उत्तरे यस्मिन् तत् तथा, विपरीतोऽत्र क्रमः । चेलादीनामिति प्राञ्चः । न अत्युच्छ्रितम् अतीवोच्छ्रितम् अत्युच्छ्रितम्, नातिनीचं नाप्यतीव नीचम्, स्थिरम् अचलम्, आत्मन आसनं प्रतिष्ठाप्य ॥ ११ ॥

**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।**
**उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥**

श्लोकः १२

## भाष्यम्

**योगं समाधियोगं युञ्ज्यात् ॥ १२ ॥**

भावप्रदीपिका (प.टी.)– उपविश्यासने युञ्ज्याद्योगम् इत्यत्र योगशब्दार्थमाह– **योगमिति** ॥ १२ ॥

**प्रमेयदीपिका (ज.टी.)– 'उपविश्यासने' इत्यत्रापि योगशब्द एवमेव व्याख्येय इत्याह– योगमिति ॥ स्थानविवेकार्थं युञ्ज्यात् इत्युक्तम् । कुर्यादिति यावत् ॥ १२ ॥**

**भावबोधः (र.टि.)– ॥ स्थानविवेकार्थमिति ।** योगमिति पदस्यानन्तरं युञ्ज्यादिति पदस्य प्रयोगः कर्तव्य इति स्थानविवेकार्थमित्यर्थः । ननु तर्हि युञ्ज्यादित्यनेनैव योगं कुर्यादित्यर्थलाभात् योगमिति व्यर्थमित्यत आह– **कुर्यादिति यावदिति** ॥ १२ ॥

**भावदीपः (रा.टि.)–** योगशब्दार्थोक्तिपरं चेद्भाष्ये **युञ्ज्यात्** इत्यंशो न वाच्य इत्यत आह– **स्थानविवेकार्थमिति** ॥'उपविश्यासने युञ्ज्याद्योगम्' इत्यत्रत्ययोगशब्दार्थ इति ज्ञापयितुम् इत्यर्थः ॥ 'युञ्ज्यात्' इत्यत्र प्रत्ययमात्रं विवक्षितम् । अन्यथा पौनरुक्त्यापत्तेरिति भावेनाऽह– **कुर्यादिति यावदिति** ॥ १२ ॥

**भावरत्नकोशः (सु.टि.)– ॥ एवमेव** समाधियोगार्थत्वेनैव । योगशब्दार्थवर्णनमात्रेणार्थसिद्धेः 'युञ्ज्याद्' इत्यनुवादस्य किं प्रयोजनमित्यत आह– **स्थानविवेकार्थमिति** । 'योगमात्मविशुद्धये' इत्यत्र विद्यमानं योगपदमिह व्याख्येयमिति ज्ञापनार्थमित्यर्थः । निर्वाणादिपदार्थकथनेन स्थानविवेकसम्भवेऽपि अन्तरङ्गज्ञापकप्रदर्शनाय 'युञ्ज्यात्', 'युञ्जीत' इत्यन्वयः प्रादर्शीति भावः । ननु 'युञ्ज्यात्' इत्यनेनैव 'योगं कुर्यात्' इत्यर्थलाभात् 'योगम्' इति व्यर्थमित्याशङ्क्य 'तपस्तप्यते' इत्यादाविव प्रत्ययार्थमात्रं विवक्षितमिति भावेनाह **कुर्यादिति यावदिति** ॥ १२ ॥

तत्र तस्मिन्नासने उपविश्य यतचित्तेन्द्रियक्रियः उपरतान्तःकरणबाह्येन्द्रियव्यापारः सन् । क्षिप्तम्, मूढम्, विक्षिप्तम्, निरुद्धमेकाग्रम् इति चतस्रो वृत्तयः । तत्र समाध्यन्तरङ्गभूता चतुर्थी मनोवृत्तिर्निर्दिश्यते एकाग्रमितीति प्राञ्चः । एकाग्रं मनः कृत्वा आत्मविशुद्धये मनोमलशोधनाय योगं युञ्ज्यात् । सर्वात्मना चित्तनिरोधलक्षणं समाधियोगं कुर्यादिति यावत् ॥ १२ ॥

**भावदीपिका (श्री.टि.)– ॥ स्थानेति ॥** 'योगं समाधियोगम्' इत्येवोक्तौ 'युञ्जतो

योगमात्मनः' इत्युत्तरत्रापि योगशब्दश्रवणाद् व्याख्यानमिदमिति प्रतीतिः स्यात्, तथा चोत्तरत्र पुनस्तद्व्याख्यानं व्यर्थं स्यात् । अतस्तां निवारयितुम् 'उपविश्यासने युञ्ज्यात्' इत्यत्रत्ययोग-शब्दव्याख्यानमिदम् इति सूचनाय 'युञ्ज्यात्' इत्युक्तमित्यर्थः ॥ ननु तर्हि 'युञ्ज्यात्' इत्यनेनैव 'योगं कुर्यात्' इत्यर्थस्य लब्धत्वाद् 'योगम्' इति व्यर्थम्? इत्यतो 'युञ्ज्यात्' इत्यस्यार्थमाह– कुर्यादितीति ॥

**भावप्रकाशः (कृ.टि.)–** ॥ **स्थानविवेकार्थमिति** ॥ 'योगमात्मविशुद्धये' इति योगपद-मेवात्र व्याख्येयम् । न तु युञ्जतो योगमात्मन इति योगपदमिति ज्ञापनार्थमित्यर्थः । नच योगपद-व्याख्यानान्तरं शान्त्यादिपदव्याख्यानादेव तद्व्यावृत्तिर्ज्ञास्यत इति वाच्यम् । अन्तरङ्गज्ञापकाभावे सत्येव बहिरङ्गस्यानुसर्तव्यत्वादिति भावः । ननु 'युञ्ज्यात्' इत्यनेनैव योगं कुर्यादित्यर्थलाभाद् योगमिति व्यर्थमित्यत आह ॥ **कुर्यादिति यावदिति** ॥ १२ ॥

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥**

**भावरत्नकोशः (सु.टि.)–** कायो मध्यदेहश्च शिरश्च ग्रीवा च प्राण्यङ्गद्वन्द्वत्वात् एक-वद्भावः । समम् अचलं समत्वेनाचलत्वेन च धारयन् स्थिरः अवहितप्रयत्नो भूत्वा स्वं स्वकीयं नासिकाग्रं सम्प्रेक्ष्य दिशोऽनवलोकयंश्च ॥ १३ ॥

**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥**

**भावरत्नकोशः (सु.टि.)–** प्रशान्तात्मा स्वतो विषयेष्वप्रवृत्तमनाः, विगतभीः प्रमाद-आलस्यादियोगान्तरायभयहीनः ब्रह्मचारिव्रते ब्रह्मचर्ये इन्द्रियोपरतिगुरुशुश्रूषादिरूपे स्थितः तदनुष्ठाता मनःसंयम्य प्रत्याहृत्य मच्चित्तो मयि चित्तं यस्य सः, मद्ध्यानवान् मत्परः ममैकान्त्येन सर्वोत्तमत्वं जानन् युक्तः समाधिसम्पन्न आसीत ॥ १४ ॥

**युञ्जन्नेवं (एवं युञ्जन्)सदाऽऽत्मानं योगी नियतमानसः ।**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥**

## भाष्यम्

**निर्वाणपरमां शरीरत्यागोत्तरकालीनाम् ॥ १५ ॥**

भावप्रदीपिका (प.टी.)– निर्वाणपरमाम् इत्यत्र मोक्षोत्तमामित्यन्यथाप्रतीतिं वारयति– **आत्मनेति** ॥ १५ ॥

भावप्रकाशिका (न.टी.)– निर्वाणं बाणाभावः शरीरत्यागः, तत्परमात् तदुत्तरकालीना-दुत्तरकालतया वा । शान्तिर्मुक्तिः, साऽपि भगवत्संस्था । भगवदाश्रयतामाप्नोतीत्यर्थः ॥१५॥

प्रमेयदीपिका (ज.टी.)– ननु 'शान्तिः निर्वाणम्' इति मोक्षपर्यायौ । तत्कथं शान्ते-र्निर्वाणपरमत्वम्? इत्यत आह– **निर्वाणेति** ॥ उपशान्तेर्योगकारणत्वाद्योगफलत्वमनुपपन्नम् ॥ १५ ॥

भावदीपः (रा.टि.)– नन्वत्र शान्तिपदस्य विषयेषु मनसोऽप्रवृत्तिरूपशान्तिरर्थः कुतो नेत्यत आह – **उपशान्तेरिति** ॥ १५ ॥

भावरत्नकोशः (सु.टि.)– 'शान्तिर्मोक्षोऽथ निर्वाणम्' इत्युक्तेराह **मोक्षपर्यायाविति** । भाष्ये प्राचीनटीकारीत्या निर्वाणशब्दस्य देहाभावः = शरीरत्यागोऽर्थः । 'कायो बाणं शरीरं च' इति द्वितीय अभिधानाद्, निरो निषेधार्थत्वाद् बवयोरभेदाश्रयणाद् । तस्मात् परमा उत्तरकालीना ताम्, शान्तिं गच्छतीति विशेषणमहिम्ना परमुक्तिरत्र शान्तिपदेन ग्राह्या, न पुनर्मुक्तिशब्दगौणार्थो जीवन्मुक्तिमात्रमिति भावेनाह **न जीवन्मुक्तिमात्रमितीति** । **अर्थः** तात्पर्यार्थः । 'निर्वाणपरमां मोक्षकाष्ठां शान्तिम् उपरतिम्' इति सङ्करीत्याऽत्र शान्तिशब्द उपशान्त्यर्थकः कस्मान्न स्यादित्यत आह– **उपशान्तेरिति** ॥ उपरतिशब्दितायाः स्वतोऽपि प्रायो विषयागतेरित्यर्थः । 'प्रशान्तस्य परमात्मा समाहितः' इत्यत्र तयोः कार्यकारणभावाभिधानादाह– **योगकारणत्वादिति** ॥

उक्तप्रकारेणानुष्ठितस्य फलमुच्यते **युञ्जन्नेवमिति** । 'एवम्' इत्यस्य किञ्चिद्विवरणम् नियत-मानस इति । नियतमानसत्वादिप्रकारेण सदा आत्मानं मनो भगवति युञ्जन् युञ्जानः, आत्मानं भगवन्तं युञ्जन् ध्यायन्निति वा, योगी निर्वाणपरमां शरीरत्यागोत्तरकालीनां मत्संस्थां मयि स्थितिरूपां शान्तिम् अधिगच्छति प्राप्नोति ॥ १५ ॥

**भावदीपिका** (श्री.टि.)–भाष्ये निर्वाणशब्दतात्पर्यम्– **शरीरत्यागेति** ।। 'परे उत्तरकाले मीयते' इति निर्वचनमभिप्रेत्य परमशब्दतात्पर्यम् 'उत्तरकालीनम्' इतीति द्रष्टव्यम् ।। **न जीवन्मुक्तीति** ।। 'शान्तिमधिगच्छति' इत्युक्ते जीवन्मुक्तेरपि मोक्षपर्यायशान्तिशब्देन प्राप्त्या, 'तामधिगच्छति' इत्युक्तं स्यात्, तदर्थमिदं विशेषणमिति भावः । जीवन्मुक्तौ तु शरीरस्य सत्त्वेन तस्याः निर्वाणपरमत्वाभावादिति द्रष्टव्यम् । ननु शान्तिशब्देनेन्द्रियोपशान्तिर्गृह्यते, न मोक्षः, येन जीवन्मुक्तिनिरासाय 'निर्वाणपरमाम्' इति विशेषणं युक्तं स्यादित्यत आह– **उपशान्तेरिति** ।। विषयेभ्य इन्द्रियाणामुपशान्तेरित्यर्थः । अतो न शान्तिशब्देन तद्ग्रहणं युक्तमिति भावः ।। १५ ।।

**भावप्रकाशः** (कृ.टि.)– ।। **मोक्षपर्यायाविति** ।। शान्तिर्मोक्षोऽथ निर्वाणमित्युक्तेरिति भावः । ननु निर्वाणपरमामिति विशेषणं व्यर्थमित्याशङ्क्य आह– **न जीवन्मुक्तीति** ।। न जीवन्मुक्तिमात्रं प्राप्नोतीति ज्ञापयितुमेतद्विशेषणमित्यर्थः । एतच्च विशेषणोपादानसामर्थ्यादेव लभ्यत इति ज्ञातव्यम् । ननु शान्तिपदेनोपशान्तिरेवोच्यतामित्यत आह– **उपशान्तेरिति** ।। स्वत एव प्रायो मनसो विषयागतेरित्यर्थः । **योगकारणत्वादिति** ।। प्रशान्तस्य परमात्मा समाहित इति तयोः कार्यकारणभावोक्तेरिति भावः ।। १५ ।।

**नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ।। १६ ।।**

## भाष्यम्

**अनशनादिनिषेधोऽशक्तस्य । उक्तं हि–**

**'निद्राशनभयश्वासचेष्टातन्द्यादिवर्जनम् ।**
**कृत्वाऽऽनिमीलिताक्षस्तु शक्तो ध्यायन् प्रसीदति ।।'**

**इति नारदीये ।। १६ ।।**

भावप्रकाशिका (न.टी.)– 'नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः । जाग्रतो नैव च ' इत्येतदशक्तविषयमित्येतत् सप्रमाणकमाह– **अनशनेति** ।। १६ ।।

श्लोकः १८

**प्रमेयदीपिका** (ज.टी.)– न चैकान्तमनश्नतः, जाग्रतो नैव च इति युञ्जानस्यानशन-जागरणनिषेधः क्रियते । 'स सर्वविषयः' इति प्रतीतिनिरासायार्थमाह– **अनशनादीति** ॥ कुतः? इत्यतः शक्तस्य तद्विधानादित्याह– **उक्तं हीति** ॥ आनिमीलिताक्षः ईषन्निमीलिताक्षः । शक्तस्तु इति सम्बन्धः ॥ १६ ॥

**भावरत्नकोशः** (सु.टि.)– ॥ युञ्जानस्य योगं कुर्वाणस्य । **तद्विधानात्** अनशनादि-विधानात् । 'निमीलिताक्षः' इति पदच्छेदे 'सम्प्रेक्ष्य नासिकाग्रं स्वम्' इति गीताविरोधः स्यात्, इत्यतो विवक्षितं पदं दर्शयन् तदर्थमाह– **आनिमीलिताक्ष इति** ॥ 'ईषदर्थे क्रियायोगे आङं विद्याद्' इति वचनादाह– **ईषदिति** ॥

आहारादिनियमाभावे योगसम्पत्तिर्न, सति तु तस्मिन् साऽस्तीति योगिन इत्थम्भावान्तरं नात्यश्नत इत्यादिश्लोकद्वयेनोच्यते । अत्यश्नतः अधिकं भुञ्जानस्य इन्द्रियोत्सेकापत्तेरिति भावः । एकान्तम् अत्यन्तं श्रमादेरवर्जनीयत्वादिति भावः । 'अतिस्वप्नशीलस्य' इत्यत्र स्वप्नशब्देन निद्रा ग्राह्या । 'जाग्रतः' इत्यत्रापि 'एकान्तम्' इत्यन्वेति । अत्राशनजागरणादिनिषेधो अशक्तविषय इति भाष्ये व्यक्तम् ॥ १६ ॥

**भावप्रकाशः** (कृ.टि.)– 'निमीलिताक्ष' इति योजनायां 'सम्प्रेक्ष्य नासिकाग्र'मिति गीताविरोध इत्यत आह– **आनिमीलिताक्ष इति** ॥ १६ ॥

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥**

## भाष्यम्

**युक्ताहारविहारस्य सोपायाहारादेः । यावता श्रमाद्यभावो भवति तावदाहारादेरित्यर्थः ॥ १७ ॥**

भावप्रकाशिका (न.टी.)– 'युक्तः' इत्यादिपदमनूद्य तस्य प्रातीतिकार्थं तावदाह– **सोपायेति** । आहरणमाहारो भोजनम् । तस्योपायसाहित्यं नाम किम् ? इत्याकाङ्क्षायां तस्यैव पदस्य तात्पर्यार्थमाह– **यावतेति** ॥ 'योगो भवति दुःखहा' इत्युच्यमानत्वाच्छ्रमाद्यभावस्तत्रैवोपाय इति भावः ॥ १७ ॥

श्लोकः १७

**प्रमेयदीपिका (ज.टी.)**– आहारादीनां केन युक्तत्वम्? इत्यत आह– **युक्तेति** ॥ उपायः समाधिः । **समाधिर्हि धात्वर्थः । तद्वत्ता च प्रत्ययार्थः । अत सोपायः** इत्युक्तम् । आहारादेः सोपायत्वं **नाम कीदृशमित्यत आह– यावतेति** ॥ आदिपदेनेन्द्रियोत्सेकाऽलस्यादेः सङ्ग्रहः । उपायेन **साहित्यं नाम तदविरोधित्वम्** । तच्चैवम्भूतमित्यर्थः ॥ १७ ॥

**भावबोधः (र.टि.)**– ॥ **धात्वर्थ इति** ॥ युक्त इत्यत्र युजेर्धातोः समाधिलक्षणोपाय इत्यर्थः । **प्रत्ययार्थ इति** । क्तप्रत्ययार्थ इत्यर्थः ॥ १७ ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ॥ **धात्वर्थ इति** ॥ युक्त इत्यत्र समाधिलक्षण उपायो युजधातोरर्थ इत्यर्थः ॥ **प्रत्ययार्थ इति** ॥ क्तप्रत्ययार्थ इत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)**– 'युज समाधौ' इति धातोर्निष्ठायां युक्तशब्दो निष्पन्न इत्यभिप्रेत्य भाष्यं घटयन् प्रकृतिप्रत्यययोरर्थमाह– **समाधिर्हीति** ॥ निष्ठाप्रत्ययस्य 'गत्यर्थाकर्मक' इत्यादिना कर्त्राद्यर्थे विधानेऽपि, फलितमभिप्रेत्योक्तं– **तद्वत्ता चेति** ॥ आदिपदेन 'श्रमादि' इत्यत्रत्यादि-पदेन । **एवम्भूतमिति** । श्रमोत्सेकालस्यानापादकत्वरूपमित्यर्थः । 'योगो भवति दुःखहा' इति विशेषणात् 'श्रमाद्यभावः' इत्युक्तमिति प्राचीनटीका ॥

युक्ताहारविहारस्य युक्तौ योगोपेतौ योगाविरुद्धौ आहारविहारौ अशनसञ्चारौ यस्य स तथोक्तः । तस्य यावता श्रम-इन्द्रियोत्सेक-आलस्यादियोगविरोध्यभावो भवति, तावदाहारादिरिति यावत् । कर्मसु कार्येषु स्वप्नावबोधौ निद्राजागरणे दुःखहा सांसारिकदुःखानि हन्तीति तथायोगः समाधियोगो भवति ॥ १७ ॥

**भावदीपिका (श्री.टि.)**– 'समाधिसाहित्यरूपं सोपायत्वं युक्तशब्दार्थः' इत्येतदुपपादयति– **समाधिर्हीति** ॥ **धात्वर्थः** युजधात्वर्थः । 'युज समाधौ' इति धातोरित्यर्थः ॥ **तद्वत्ता** समाधिमत्ता । **प्रत्ययार्थः** कर्तरि प्राप्तक्तप्रत्ययार्थः । 'युज्' अस्मात् कर्तरि क्तप्रत्यये ककारलोपे 'चोः कुः' इति जकारस्य गकारे 'खरि च' इति गकारस्य ककाररूपे चरि 'युक्तः' इति रूपं द्रष्टव्यम् । **अत इति** ॥ समाधिमत्त्वस्य युक्तशब्दार्थत्वादित्यर्थः । इन्द्रियाणां विषयेषु लोलुपता इन्द्रियोत्सेक-शब्दार्थः । **उपायेन** समाधिना । **तदविरोधित्वं** समाध्यविरोधित्वम् । **एवम्भूतमिति** ॥ श्रमाद्य-भावसम्पादकम् आहारादिकमेव समाध्यविरोधीत्यर्थः ॥ १७ ॥

श्लोकः २०

**भावप्रकाशः (कृ.टि.)**– ॥ **धात्वर्थ इति** ॥ 'युज समाधौ' इत्युक्तेर्युजिधात्वर्थ इत्यर्थः । **तद्वत्ता च प्रत्ययार्थ इति** । यद्यपि गत्यर्थाकर्मकेति कर्तरि क्तप्रत्यविधानात् कर्ता प्रत्ययार्थ इति वक्तव्यम् । तथाऽपि फलितमभिप्रेत्य तद्वत्तेत्युक्तम् ॥ १७ ॥

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥**

## भाष्यम्

**आत्मनि भगवति ॥ १८ ॥**

भावप्रकाशिका (न.टी.)– 'यदा विनियतं चित्तमात्मन्येवावतिष्ठते' इत्यत्र स्वात्मन्येवेति यो वक्ति स वक्तव्यः । किं तस्य जीवत्वध्यानं मुक्तिसाधनं ब्रह्मत्वध्यानं वा । नाद्यः, स्वानधीनत्वान्मुक्तेः । नेतरः, विपरीतध्यानस्यानर्थहेतुत्वात् । तदेतन्मनसि निधायाह– **आत्मनीत्यादि** ॥ १८ ॥

प्रमेयदीपिका (ज.टी.)– 'आत्मन्येवावतिष्ठते' इत्यत्र 'स्वस्मिन्नेव' इति प्रतीतिनिरासायाह– **आत्मनीति** ॥ अन्यथा'ज्ञात्वा माम्' (५-२९) इत्यादिविरोधः ॥ १८ ॥

**भावदीपः (रा.टि.)**– ॥ **अन्यथेति** ॥ जीवार्थत्वे 'ज्ञात्वा मां शान्तिमृच्छति' (५.२९) इति पञ्चमान्तगीतोक्तिविरोध इत्यर्थः ॥ १८ ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **इति प्रतीतीति** । तथा च सङ्करः 'आत्मन्येवावतिष्ठते केवले स्वात्मनि स्थितिं लभते' इति । अत्र दूषणमाह– **अन्यथेति** । जीवार्थकत्वे । आदिपदेन 'मामेव ये प्रपद्यन्ते' 'मामेवैष्यस्यसंशयम्' इत्यादेः सङ्ग्रहः । **विरोधः** 'स्यादिति भावः' इति शेषः । प्राचीनटीकायां तु 'आत्मनि स्वात्मनि' इति यो वक्ति स वक्तव्यः, किं तस्य जीवत्वध्यानं मुक्तिसाधनम्, ब्रह्मत्वध्यानं वा । नाद्यः । स्वानधीनत्वान्मुक्तेः । नेतरः । विपरीतध्यानस्यानर्थहेतुत्वादिति भावेन स्वयमात्मशब्दार्थमाह 'आत्मनि भगवति' इति व्याख्यातम् ॥

योगसम्पूर्तिस्वरूपमुच्यते यदेत्याद्यनेकश्लोकैः । विनियतं विशेषेण विषयेभ्यः प्रत्याहृतं

चित्तम् आत्मनि भगवति एवावतिष्ठते तदेकतानं भवति, सर्वकामेभ्यो निस्पृहश्च यदा, तदा युक्तो योगसम्पूर्तिमान् इत्युच्यत इति योगपूर्तेः कालविशेष उक्तः ॥ १८ ॥

भावदीपिका (श्री.टि.)– ॥ अन्यथेति ॥ तथात्वे स्वस्यैव ध्येयत्वप्राप्त्या 'भोक्तारं यज्ञतपसाम्' इत्यत्र 'ज्ञात्वा माम्' इति स्वस्यैव यद् ध्येयत्वमुक्तम्, तद्विरोधः स्यादित्यर्थः ॥ १८ ॥

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥**

## भाष्यम्

**आत्मनः योगं भगवद्विषयं योगम् ॥ १९ ॥**

भावप्रदीपिका (प.टी.)– युञ्जतो योगमात्मनः इत्येतद्व्याचष्टे –**आत्मन इति** ॥१९॥

भावप्रकाशिका (न.टी.)– युञ्जतो योगमात्मनः इत्यत्रात्मा भगवान् । तस्य योगसम्बन्धश्च विषयविषयिभाव इत्याह– **आत्मन इति** । आत्मा जीवश्चेत्, स किं योगस्य विषयः ? आश्रयो वा ? आद्ये पूर्वोक्तदोषः । द्वितीये, आत्मशब्दो व्यर्थ इति भावः ॥ १९ ॥

प्रमेयदीपिका (ज.टी.)– युञ्जतो योगमात्मनः इत्यत्राऽत्मशब्दस्य षष्ठ्याश्च विवक्षितमर्थमाह– **आत्मन इति** ॥ 'योगिन आत्मनः' इत्यन्वयनिरासाय योगम् इत्युक्तम् । अन्यथा वैयर्थ्यात् ॥ १९ ॥

भावरत्नकोशः (सु.टि.)– ॥ **विवक्षितम्** आत्मप्रातिपदिकस्य भगवानर्थः, विभक्तेश्च विषयविषयिभावः सम्बन्धोऽर्थ इति विवक्षितमर्थम् । **इत्यन्वयेति** । तथा च सङ्करः 'योगिनः आत्मनः समाधिमनुतिष्ठतः स्वात्मनः' इति । अत्र दूषणमाह– **अन्यथेति** । 'योगिन आत्मनः' इत्यन्वयाभ्युपगमे आत्मशब्दवैयर्थ्यम्, योगिन आत्मत्वाव्यभिचारादित्यर्थः । प्राचीनटीकायाम् 'आत्मशब्दार्थो जीवश्चेत् स किं योगस्य विषय आश्रयो वा । आद्ये तस्य मुक्त्यर्थत्वेन स्वानधीनत्वान्मुक्तेरित्युक्तदोषः । द्वितीये आत्मशब्दो व्यर्थ इति भाव इति' इदं भाष्यं व्याख्यातम् ॥

श्लोकः २१

अथ तद्वतोऽवस्थितिरुच्यते– **यथेति** ।। निवातस्थः वातवर्जिते देशे स्थितः दीपः यथा नेङ्गते न चलति सा उपमीयते अनेनेत्युपमा दृष्टान्तः । 'सा वैश्वदैव्यामिक्षा' इत्यादाविव विधेयापेक्षया 'सा' इति स्त्रीलिङ्गम् । कस्येत्यत उक्तम्– योगिनः यतचित्तस्य आत्मनो भगवतः सम्बन्धिनं योगं भगवद्विषयकं समाधिं युञ्जतः कुर्वत इति ।। १९ ।।

**भावदीपिका (श्री.टि.)**– ।। अन्यथेति ।। योगिन आत्मन इत्यनङ्गीकार इत्यर्थः ।। १९ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **अन्यथेति** ।। योगिन आत्मन इत्यन्वये आत्मशब्दवैयर्थ्यं स्यात् । **योगिन** आत्मत्वाव्यभिचारादित्यर्थः ।। १९ ।।

**यत्रोपरमते चित्तं निरुद्धं योगसेवया ।**
**यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ।। २० ।।**

## भाष्यम्

**आत्मना मनसा । आत्मनि देहे । आत्मानं भगवन्तं पश्यन् ।। २० ।।**

भावप्रदीपिका (प.टी.)– यत्र चैवात्मना इत्यात्मशब्दत्रयार्थमाह – **आत्मनेति** ।।२०।।

भावप्रकाशिका (न.टी.)– 'यत्र चैवात्मना' इत्यर्धगतात्मशब्दत्रितयार्थानाह **आत्मनेत्यादिना** । न चात्र 'आत्मानम्' इत्यत्र जीवपरमात्मैक्यं प्रतीयते, नापि युज्यते पूर्वोक्तदोषात् । अत्र केनचिद्भगवतश्चतुर्भुजाद्याकारध्याने 'समं काय..' इत्यादिप्रकरणविरोध इत्युक्तम् । तदसत् । समं कायशिरोग्रीवं धारयताऽपि साकारध्यानाविरोधात् । सकलैश्वर्ययुक्तब्रह्मस्वरूपाकारस्य द्वितीयाध्याये समर्थितत्वान्न कश्चिद्दोषः ।। २० ।।

**प्रमेयदीपिका** (ज.टी.)– यत्र चैवाऽऽत्मना इत्यत्र पदत्रयं व्याख्याति – **आत्मनेति** ।। अन्वयापेक्षया व्युत्क्रमः। पश्यन् इति स्थानविवेकार्थमुक्तम् ।। २० ।।

**भावबोधः (र.टि.)**– ।। **स्थानविवेकार्थमिति** ।। 'यत्र चैव' इति वाक्यगत'आत्मना' इति तृतीयान्तपदव्याख्यानानन्तरं द्वितीयान्तसप्तम्यन्तपदयोर्व्युत्क्रमेण व्याख्याने आत्मन्येव वशं नयेत्,

युञ्जन्नेवं सदात्मानमित्युत्तरवाक्यगतात्मशब्दव्याख्यानमिति विज्ञायेत । तन्मा विज्ञायीति 'पश्यन्' इति पदसमभिव्याहृतद्वितीयान्तसप्तम्यन्तयोरेवात्मपदयोरिति व्याख्यानमिति स्थानविवेकार्थमित्यर्थः ॥ २० ॥

**भावदीपः (रा.टि.)– ॥ व्युत्क्रमः ॥** गीताक्रमव्यत्यासो भाष्यक्रम इत्यर्थः ॥ 'पश्यन्' इति पदार्थे विगानाभावेन व्याख्यानाकरणाद् भाष्ये तदनुवादो व्यर्थ इत्यत आह– **स्थानेति ॥** पश्यन् इत्यत्र कर्मतया श्रुताऽत्मपदस्य भगवन्तम् इति व्याख्येति ज्ञापनार्थमित्यर्थः ॥ २० ॥

**भावरत्नकोशः (सु.टि.)– ॥ पदत्रयम्** 'आत्मना' 'आत्मानम्' 'आत्मनि' इति पदत्रयम् । ननु 'आत्मानम्' इति द्वितीयान्तं व्याख्याय 'आत्मनि' इति सप्तम्यन्तं व्याख्येयम् । गीतानुसारात् । तत्किमिति व्युत्क्रमेण व्याख्यातमित्यत आह– **अन्वयापेक्षयेति** ॥ 'आत्मन्यात्मानम्' इत्यन्वय-प्रदर्शनार्थमित्यर्थः । ननु 'पश्यन्' इति पदस्य विगानाभावाद् अव्याख्येयस्याप्यनुवादः किमर्थमित्यत आह– **स्थानेति** ॥ 'यत्र चैवात्मना' इति तृतीयान्तपदव्याख्यानानन्तरं द्वितीयान्तसप्तम्यन्तयो-र्व्युत्क्रमेण व्याख्यानप्रस्तावाद् 'आत्मन्येव वशं नयेत्' 'युञ्जन्नेवं सदाऽऽत्मानम्' इत्युत्तरवाक्य-गतात्मशब्दयोर्व्याख्यानमेतदिति प्रतीतिः स्यात् । तद्व्यावर्तनेन प्रदेशविशेषज्ञापनार्थमित्यर्थः ॥

किञ्च योगसेवया योगाभ्यासेन निरुद्धं चित्तं यत्र समाधौ उपरमते अन्यत्र उपरतव्यापारं भवति, यत्र च समाधियोगे आत्मना मनसा आत्मनि देहे आत्मानं भगवन्तं पश्यन् तुष्यति तोषं प्राप्नोति ॥ २० ॥

**भावदीपिका (श्री.टि.)– ॥ पदत्रयमिति ॥** तृतीयान्तं, सप्तम्यन्तं, द्वितीयान्तं चात्मपद-मित्यर्थः । ननु गीतानुसारेण तृतीयान्तात्मशब्दव्याख्यानानन्तरं द्वितीयान्तात्मशब्दं व्याख्याय, अनन्तरं सप्तम्यन्तात्मशब्दो व्याख्येयः । तत्कुतो व्युत्क्रमेण व्याख्यातमित्यत आह– **अन्वयेति ॥** **आत्मना** आत्मनि आत्मानं पश्ययन्नित्यन्वयस्य विवक्षितत्वेन तदपेक्षयैवं व्युत्क्रमेण व्याख्यानमिति भावः । **स्थानेति** ॥ 'आत्मन्येव वशं नयेत्' इत्यत्रत्यसप्तम्यन्तात्मशब्दव्याख्यानमिदं नेति सूचयितुं व्याख्येयात्मशब्दस्थानविवेकाय 'पश्यन्' इत्युक्तमित्यर्थः ॥ २० ॥

**भावप्रकाशः (कृ.टि.)– ॥ स्थानविवेकार्थमिति ॥** 'यत्र चैवात्मना' इति तृतीयान्तपद-व्याख्यानान्तरं द्वितीयान्तसप्तम्यन्तयोः व्युत्क्रमेण व्याख्यानकरणात् 'आत्मन्येव वशं नयेत्'

श्लोकः २३
'युञ्जन्नेवं सदाऽत्मानम्' इत्युत्तरवाक्यगतात्मशब्दयोर्व्याख्यानमिति प्रतीतिः स्यात् । तद्व्यावृत्त्यर्थ-मित्यर्थः ॥ २० ॥

**सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥**

## भाष्यम्

**तत्त्वतः भगवद्रूपात् ॥ २१ ॥**

भावप्रदीपिका (प.टी.)– तत्त्वतः इति यथार्थत इत्याशङ्कां निराकर्तुं व्याचष्टे– **तत्त्वत इति** ॥ २१ ॥

भावप्रकाशिका (न.टी.)– **'स्वस्य तद्रूपत्वान्न चलति'** इत्युक्तेऽध्याहारस्य दोषः । सर्वप्रमाणविरोधश्च । अतो यत्र समाधौ स्थितो विषयभूतभगवद्रूपान्न चलतीत्येवार्थ इत्याह– **तत्त्वत इति ॥**

'अतीतानागते काले यत्तादृशमुदीर्यते ।
कथञ्चिदन्यथा नेयात् तत् तत्त्वं तत्त्वतो विदुः'

इति वचनात् तत्त्वं हि भगवद्रूपम् ॥

प्रमेयदीपिका (ज.टी.)– तत्वतः तद्भावात् ब्रह्मत्वात् इति प्रमाणविरुद्धं व्याख्यानं व्यावर्तयितुमाह– **तत्वत इति ॥**

**भावरत्नकोशः (सु.टि.)**– ॥ तस्य भावः तत्त्वम्, तस्मात् तद्भावात् । तच्छब्दश्च 'ॐ तत्सदिति निर्देशो ब्रह्मणः' इति शास्त्राद् ब्रह्मार्थ इति परभावं हृदि कृत्वाऽऽह **तत्त्वत इति** ॥ **व्याख्यानमिति** ॥ तथा च सङ्करः 'आत्मस्वरूपे स्थितः, तत्त्वतः तत्त्वस्वरूपाद् ब्रह्मत्वात् न प्रच्यवते' इति । **प्रमाणविरुद्धम्** इति हेत्वर्थगर्भं विशेषणम् । सर्वश्रुतिस्मृतीतिहासपुराण-विरुद्धत्वादित्यर्थः । तत्त्वशब्दस्येश्वरार्थकत्वं 'तत्त्वं चिदचिदीशेषु स्वरूपे निश्चयार्थयोः' इति प्रसिद्धाभिधानसिद्धमिति 'भगवद्रूपात्' इत्युक्तमिति भावः । तथा च प्राचीनटीका

'अतीतेऽनागते काले यत्तादृशमुदीर्यते ।
कथञ्चिदन्यथा नेयात् तत्तत्त्वं तत्त्वतो विदुः ॥'

इति वचनात् तत्त्वं हि भगवद्रूपमिति ।

यत्र समाधौ स्थितः बुद्धिग्राह्यमनुभववेद्यम् अतीन्द्रियम् इन्द्रियाग्राह्यम्, अत्यन्तमेव भवतीति आत्यन्तिकं तत्र शास्त्रप्रसिद्धं सुखं वेत्ति अनुभवति । यत्र च योगे स्थितो यं योगी तत्त्वतः तस्य भावस्तत्त्वम्,

'अतीतेऽनागते काले यत्तादृशमुदीर्यते ।
कथञ्चिदन्यथा नेयात् तत्तत्त्वं तद्विदो विदुः ॥'

इति वचनात् भगवद्रूपात् न चलतीति यत् ॥ २१ ॥

**भावदीपिका (श्री.टि.)**– ॥ तत्त्वत इति ॥ तस्य भावस्तत्त्वम्, तस्मात् तत्त्वत इत्यर्थमभिप्रेत्य 'तद्भावात्' इत्युक्तम्, तस्याप्यर्थमाह– **ब्रह्मत्वादिति** ॥ न चलतीत्यर्थः ॥ २१,२२ ॥

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।**
**यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥ २२ ॥**

भावरत्नकोशः (सु.टि.)– यं च योगं लब्ध्वा ततोऽधिकं लाभं न मन्यते, यस्मिंश्च योगे स्थितो गुरूणां गुरुणा प्रबलेनापि दुःखेन दुःखहेतुना न विचाल्यते ॥ २२ ॥

**तं विद्याद् दुःखसंयोगवियोगं योगसञ्ज्ञितम् ।**
**स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥**

## भाष्यम्

**दुःखसंयोगो येन वियुज्यते स दुःखसंयोगवियोगः । न केवलमुत्पन्नं दुःखं (वि)नाशयति, उत्पत्तिमेव निवारयतीति दर्शयति– संयोगशब्देन । निश्चयेन योक्तव्यः योक्तव्य एव बुभूषुणेत्यर्थः ॥ २३ ॥**

श्लोकः २३

भावप्रदीपिका (प.टी.)– 'अभ्यासे दुःखसंयोगः पश्चाद्वियोगः' इति प्रतीतिनिरासाय 'दुःखसंयोगवियोग'पदं व्याचष्टे – **दुःखेति** । दुःखनिवारकत्वमात्राभिप्राये 'संयोग'शब्दो व्यर्थ इत्यत आह– **न केवलमिति** । न ज्ञानपूर्वकं योक्तव्यमिति शङ्कानिरासाय 'स निश्चयेन' इत्येतद्व्याचष्टे निश्चयेनेति ॥ २३ ॥

भावप्रकाशिका (न.टी.)– ननु दुःखसंयोगः तद्वियोगश्चात्मनः परमार्थतो न सम्भवतः । अतोऽत्र विपरीतलक्षणाश्रयणेन दुःखसंयोगवियोगम् आत्मानं योगसञ्ज्ञितं विद्यादिति कश्चित् । तन्न । जीवस्य दुःखसंयोगो येन भगवता तद्विषयेण वा योगेन वियुज्यते सः दुःखसंयोगवियोग इति जीवपरमात्मनोर्भेदेनैव मुख्यार्थे सम्भवति विपरीतलक्षणाश्रयणायोगादिति भावेनैतत्पदं व्याचष्टे– **दुःखेति** । ननु दुःखसंयोगः तद्वियोगश्चात्मनो न स्त इति विपरीतलक्षणाश्रयणमेव सूचयति संयोगशब्दः । अन्यथा दुःखवियोगमित्येतावताऽलम्, किं संयोगेनेत्यत आह– न **केवलमिति** । युक्तदुःखसंयोगेन वियुज्यते इत्येतावदेव न, किंतु तदुपरिष्टात् दुःखं न संयुज्यत इत्यर्थः । यतोऽयमात्यन्तिकं सुखमापादयति दुःखं चोत्पत्स्यमानमपि निवारयति । अतो दुःखासंस्पृष्टात्यन्तिकसुखरूपात्माऽत्र । स चेच्छुनाऽनुष्ठेय एव योग इति प्रकृतात्युपयोगित्वेन 'निश्चय'पदार्थमाह– **निश्चयेनेति** ॥ २३ ॥

प्रमेयदीपिका (ज.टी.)– ननु दुःखसम्बन्धस्य वियोगो ध्वंसः । स कथं योगः स्यात् ? इत्यत आह– **दुःखेति** ॥ करणेऽपि घञः स्मरणात् । एवं तर्हि दुःखवियोगमित्येव वक्तव्यम् । किं संयोगशब्देन? इत्यत आह– **न केवलमिति** ॥ वियोगशब्दो निवारणे वर्तत इति भावः । एतच्च पदाधिक्यादेव लभ्यते । नान्यथा ॥

ननु स निश्चयेन योक्तव्यः इति पुनर्विधानं किमर्थम्? निश्चयेन इत्यादिविशेषविधानार्थमिति चेन्न । महाफले सन्देहात् प्रवृत्त्यभावेन 'निश्चयेन' इत्यस्य वैयर्थ्यादित्यत आह– **निश्चयेनेति** ॥ अयोगव्यवच्छेदे निश्चयशब्द इत्यर्थः। कुत्रायोगो व्यवच्छिद्यत इत्यत उक्तम्– **बुभूषुणेति** ॥ मुमुक्षुणेत्यर्थः ॥ २३ ॥

भावदीपः (रा.टि.)– ॥ **करणेऽपि घञः स्मरणादिति** ॥ 'अकर्तरि च कारके सञ्ज्ञा-याम्' (पा.सू.३.३.१९) इत्यनेनेति भावः । कथमेतल्लाभः? शब्दार्थत्वादित्यत आह– एतच्चेति ॥

संयोगपदप्रयोगान्यथानुपपत्त्येत्यर्थः । **पुनर्विधानमिति** ।। उद्धरेदित्यनेन विधानात् पुनःशब्दः ।। **अयोगव्यवच्छेदेति** ।। असम्बन्धव्यवच्छेदो योगशब्दितसमाधिरूपोपायस्येत्यर्थः ।। २३ ।।

**वाक्यार्थप्रदीपः (पां.टि.)**– ।। **करणे घञः स्मरणादिति** ।। वियुज्यते अनेनेति करणे घञि गुगन्तलघूपदस्येति गुणे वियोगशब्दनिष्पत्तिरिति भावः ।।

**भावरत्नकोशः (सु.टि.)**– येन' इति श्रवणादाह– **करण इति** ।। 'अकर्तरि च कारके संज्ञायाम्' इति कर्तृभिन्नकारकमात्रेऽपि घञ्प्रत्ययविधानात् 'येन' इति युज्यत इति भावः । **निवारणे वर्तते** निवारके वर्तत इति यावत् । निवारयतीति करणे कर्त्रर्थकाख्यातप्रयोगस्येदं भावकथनम् । कथमेतल्लभ्यत इत्यत आह– **एतच्चेति** ।। उत्पत्तिमेव निवारयतीत्येतत् । **पदाधिक्यात्** संयोगपदाधिक्यात् । 'शब्दाधिक्यादर्थाधिक्यमिति न्यायादिति भावः' इति सुधीन्द्रश्रीमच्चरणाः । **निश्चयेनेत्यस्येति** । महाफलरूपे मोक्षतत्साधनादौ प्रवर्तमानः प्रेक्षावान् निश्चयेनैव प्रवर्तते, न तु कृष्यादाविव सन्देहेनेति, 'निश्चयेन' इत्यस्य वैयर्थ्यमेवेति भावः । कृतचोद्यनिरासायाह– **अयोगेति** ।। योगस्यासम्बन्धव्यवच्छेद इत्यर्थः । ननु बुभूषुशब्देन ऐहिकपुरुषार्थकामः प्रतीयते, तत्र च प्रकृतानानुगुण्यमित्यत आह– **मुमुक्षुणेति** ।। मोक्षीभवितुमिच्छुरपि बुभूषुरेवेति नासङ्गतिरिति भावः ।। २३ ।।

तम् एवंविधं दुःखसंयोगवियोगं दुःखस्य संयोगः सम्बन्धः, वियुज्यत अनेनेति वियोगो वियोजकः, दुःखसंयोगस्य वियोगो दुःखसंयोगवियोगः, तं तथोक्तं योगसंज्ञितं योग इति संज्ञयोक्तं विद्यात् विजानीयात् । 'दुःखवियोगम्' इत्येव वक्तव्ये संयोगशब्दः न केवलमुत्पन्नं दुःखं नाशयति, किन्तूत्पत्तिमेव निवारयतीत्यर्थविशेषप्रतिपत्त्यर्थः । योगे गुणान्तरं विधातुमुच्यते स इति । स योगो निर्विण्णचेतसा विषयविरक्तमानसेन निश्चयेन योक्तव्यः अवश्यं कर्तव्य एव । मुमुक्षोर्ध्यानायोगव्यवच्छेदार्थोऽयं निश्चयशब्द इति तद्विधानार्थमिदं वचनम् ।। २३ ।।

**भावदीपिका (श्री.टि.)**– ननु कथमयमर्थो लभ्यत इत्यत आह– **करणेऽपीति** ।। 'वियुज्यतेऽनेन' इति वियोग इत्यर्थः । तथा च विपूर्वकात् 'युजिर् योगे' इत्यस्मात् 'हलश्च' इति सूत्रेण हलन्तेभ्यो धातुभ्यः करणेऽधिकरणे च सञ्ज्ञायां घञ्प्रत्ययविधानात्, प्रकृते च वियोगशब्दस्य निवारणार्थकत्वेन सञ्ज्ञात्वात् करणे घञ्प्रत्यये, अकारमात्रं विहाय सर्वस्यापि लोपे,

उकारस्य ओकाररूपे गुणे, 'चजोः कु घिण्ण्यतोः' इति जकारस्य गकाररूपे कुत्वे प्रत्ययाकार मिलिते सति 'वियोग' इति करणे घञन्तः शब्दो द्रष्टव्यः। ननु वियोगशब्दस्य निवारणार्थकत्वाभावेन 'निवारयति' इति कथं वियोगशब्दार्थकथनम्? इत्यत आह– **वियोगशब्द इति** ॥ ननु दुःखोत्पत्तिप्रतिबन्धकत्वरूपोऽर्थः संयोगशब्देन कथं लभ्यते? इत्यत आह– **एतच्चेति** ॥ **पदेति** ॥ संयोगपदेत्यर्थः। 'व्यर्थं सत् किञ्चिज्ज्ञापयति' इति न्यायादि भावः। **अयोगेति** ॥ योक्तव्यत्वायोग इत्यर्थः। **बुभूषुणेति** ॥ तथा च बुभूषौ योक्तव्यत्वायोगो व्यवच्छिद्यत इत्युक्तं भवतीति द्रष्टव्यम्। अत्र सर्वत्राप्यनतिविप्रकर्षाभिप्रायेणापराक्षज्ञानिन एव विवक्षितत्वात्, तस्य च ज्ञानेच्छुत्वरूपबुभूषुत्वाभावादाह– **मुमुक्षणेति** ॥ तथा च बोधशब्देन तत्साध्यो मोक्षो लक्ष्यत इति भावः ॥२३॥

**भावप्रकाशः (कृ.टि.)**– ॥ **करणेऽपीति** ॥ अकर्तरि च कारके सञ्ज्ञायामिति कर्तृभिन्नकारकमात्रे घञो विधानादिति भावः। ननु विपूर्वो युजिर्नाशे प्रसिद्धः। तत्कथं निवारयतीत्युक्तमित्यत आह– **वियोगशब्द इति** ॥ विपूर्वो युजिरित्यर्थः। ननु तर्हि निरकरणार्थवियोगशब्देनैव विवक्षितार्थलाभात् संयोगपदं व्यर्थमित्यत आह– **एतच्चेति** ॥ निराकरणार्थत्वमित्यर्थः। व्यर्थं सत् किञ्चित् ज्ञापयतीति न्यायादति भावः। **पदाधिक्यादिति** ॥ संयोगपदाधिक्यादित्यर्थः। ननु यो योगी भवितुमिच्छुः तत्र योगस्यायोग एवास्ति। कथं तद्व्यवच्छेदक इत्यत आह– **मुमुक्षुणेत्यर्थ** इति ॥ २३ ॥

**सङ्कल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥**

## भाष्यम्

**सर्वान् सर्वविषयान् । अशेषतः एकैकविषयोऽपि कामः स्वल्पः कादाचित्कोऽपि न कर्तव्य इत्यर्थः । मनसैव नियन्तुं शक्यते नान्येनेत्येवशब्दः ॥**

भावप्रदीपिका (प.टी.)– 'सर्व' शब्दागतार्थतया 'अशेष' पदार्थमाह– **सर्वानिति** । मनोव्यतिरिक्तेनापीन्द्रियनियमने दोपाभावात् किमर्थं 'मनसैव' इत्यधारणम् ? इत्यत आह– **मनसैवेति** ॥ २४ ॥

**भावप्रकाशिका (न.टी.)**– 'सर्व-अशेष' शब्दयोरर्थभेदमाह– **सर्वानित्यादिना** ॥ नन्वन्येनापीन्द्रियग्रामनियमने को दोषः, येन 'मनसैव' इत्यवधार्यते ? इत्याशङ्क्यान्येन नियन्तुमशक्यत्वादेवावधार्यते नान्यदोषेणेत्याह– **मनसैवेति** ॥ २४ ॥

**प्रमेयदीपिका (ज.टी.)**– 'सर्वान्' 'अशेषतः' इत्येतयोस्तात्पर्यमाह– **सर्वानिति** ॥ 'कामः स्वल्पः कादाचित्कोऽपी'ति मूलपाठः । नन्विन्द्रियग्रामनियमनमेवावश्यकम् । नतु करणनियमः । **कथमुच्यते मनसैवेन्द्रियग्रामम् इति** । तत्राह– **मनसैवेति** ॥ स्वरूपकथनमेतदिति भावः । इति **'ज्ञापयितुम्'** इति शेषः ॥ २४ ॥

**भावदीपः (रा.टि.)**– ॥ **इति मूलपाठ इति** ॥ 'कामः सङ्कल्पः' इत्यद्यतनकोशगतपाठो लेखककृत इत्युक्तं भवति ॥ २४ ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **इति मूलपाठ इति** । क्वचित्कोशेषु 'कामः सङ्कल्पः कादाचित्कः' इति परिदृश्यमानः पाठः कृत्रिम इत्यर्थः । **इन्द्रियग्रामेति** । श्रोत्रादीन्द्रियसमुदायेत्यर्थः । **करणनियमः** 'मनसैव, न त्वन्येन करणेन' इति नियमनकरणनियम इति सुधीन्द्रतीर्थश्रीमच्चरणाः । 'इति' इति भाष्यपदमनूद्यातःपरं शेषमाह– **इतीति** । **एतत्** मनसैवेत्यवधारणम् ॥

किञ्च सङ्कल्पप्रभवान् 'एतदर्थमिदं कुर्याम्' इति सङ्कल्पः प्रभवः उत्पादको येषां ते तथोक्ताः तान् सर्वान् सर्वविषयान् कामान् अशेषतः निःशेषतः, एकविषयोऽपि कामः स्वल्पः कादाचित्कोऽपि न कर्तव्य इति वक्तुम् इदम्, त्यक्त्वा, इन्द्रियग्रामं श्रोत्रादीन्द्रियसमुदायं समन्ततः सर्वतः विषयेभ्यः मनसैव नियम्य, इन्द्रियग्रामो मनसैव नियन्तुं शक्यते, नान्येनेति स्वरूपकथनाय एवशब्दः ॥ २४ ॥

**भावदीपिका (श्री.टि.)**– ॥ **तात्पर्यमाहेति** ॥ सर्वशब्दस्य सङ्कोचोऽपि युक्तः, नाशेषशब्दस्यावशेषनिवारकस्य । अत एव 'विषयोऽपि' इत्यनेनाशेषपदतात्पर्यकथनं युक्तमित्यवधेयम् । 'कामः सङ्कल्पः' इति पाठः प्रामादिक इत्याह– **काम इति** ॥ **नन्विति** ॥ येन 'मनसैव' इति मनोरूपं करणं नियम्यत इत्यर्थः ॥ २४ ॥

श्लोकः २५

**भावप्रकाशः** (कृ.टि.)– क्वचित्पुस्तके कामः सङ्कल्प इति मूलपाठो दृश्यते । सोऽपपाठ इत्याह– कामः स्वल्प इति ॥ २४ ॥

**शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।**
**आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ २५ ॥**

## भाष्यम्

**बुद्धेः कारणत्वं मनोनिग्रहे, आत्मरमणे च ॥ २५ ॥**

भावप्रदीपिका (प.टी.)– बुद्ध्येन्द्रियग्रामनियमनं कुतो न ? इत्यत आह– **बुद्धेरिति** । अनेन 'शनैः शनैरुपरमेत्' इति व्याख्यातं भवति । 'उपरमेत्' विषयेभ्यः, परमात्मन उप समीपे रमेत् इति च ॥ २५ ॥

भावप्रकाशिका (न.टी.)– ननु बुद्धेरपीन्द्रियग्रामनियमनसम्भवात् कथं 'मनसैव' इत्यवधार्यत इत्यत आह– **बुद्धेरिति** ॥ 'आत्मसंस्थम्' इत्यादिना मनोनिग्रह उच्यते । 'शनैः' इत्यादिनाऽऽत्मरमणं च । 'उप' समीप आत्मनो रमेतेति ॥ २५ ॥

प्रमेयदीपिका (ज.टी.)– शनैः शनैरुपरमेद् बुद्ध्या इति बुद्धेरपीन्द्रियग्रामनियमने कारणत्वस्य वक्ष्यमाणत्वात् कथमेतदित्यत आह– **बुद्धेरिति** ॥ अनेन उपरमेत् इत्यस्यार्थद्वयमुक्तं भवति ॥ २५ ॥

भावदीपः (रा.टि.)– ॥ अर्थद्वयमिति ॥ विषयेभ्यः व्यावर्तनरूप एकोऽर्थः भगवति रमणरूपोऽन्योऽर्थ इत्यर्थद्वयमित्यर्थः ॥ २५ ॥

भावरत्नकोशः (सु.टि.)– ॥ **अनेन** बुद्धेः कारणत्वं मनोनिग्रहे आत्मरमणे चेति भाष्येण । **अर्थद्वयमिति** । 'साधको विषयेभ्यो निवर्तेत' इत्येकः, 'उप समीपे आत्मनो रमेत' इत्यन्य इत्यर्थद्वयमित्यर्थः । प्राचीनटीकायां तु 'आत्मसंस्थं मनः' इति मनोनिग्रह उच्यते । 'शनैश्शनैः' इत्यादिना उप समीपे आत्मनो रमेत इत्यात्मरमणं चेत्युक्तम् । अनेन 'शनैः' इत्यत्र बुद्धेर्मनोनिग्रहादिकारणत्वमेवोच्यते, नेन्द्रियग्रामनियमनकरणत्वम्, तत्तु मनस एवेति नोक्तनियमभङ्ग इति विभावितं भवति ॥

धृतिगृहीतया धैर्यवशीकृतया बुद्ध्या शनैः शनैरुपरमेत् उपरतो भवेत् विषयेभ्यो मनो निवर्तयेदिति यावत् । आत्मनः समीपे रमेतेति वा । एवं बुद्ध्या आत्मसंस्थं भगवद्विषयं मनः कृत्वा आत्मनोऽन्यत् किञ्चिदपि न चिन्तयेत् ॥ २५ ॥

भावदीपिका (श्री.टि.)– ॥ एतदिति ॥ 'मनसैव' इति कथमुक्तमित्यर्थः । अर्थद्वयमिति ॥ 'मनसैवेन्द्रियग्रामं विनियम्य' इत्युक्तेः तत्र मनोनिग्रह एव कथं स्यादिति शङ्कायामुच्यते– शनैरिति ॥ धृतिगृहीतया बुद्ध्या शनैःशनैः उपरमेत् विषयेभ्यो मनस उपरमं कुर्यात्, तदनन्तरम् उप आत्मसमीपं रमेत् रतं कुर्यादित्यर्थद्वयमुक्तं भवतीत्यर्थः ॥ २५ ॥

**यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥**

## भाष्यम्

**यतो यतः यत्रयत्र । 'यतो यतो धावति' इत्यादिप्रयोगात् । आत्मन्येव वशं नयेत् आत्मविषय एव वशीकुर्यादित्यर्थः ॥ २६ ॥**

भावप्रदीपिका (प.टी.)– 'यतो यत इन्द्रियादिन्द्रियात्' इति प्रतीतिं निराकर्तुं 'यतो यतो निश्चरति' इति व्याचष्टे– **यत इति** । यत्र यत्र विषये ॥ २६ ॥

भावप्रकाशिका (न.टी.)– सर्वेन्द्रियनिरोधेऽपि मनोऽनिर्गमनाद्यतो यत इन्द्रियाणि निश्चरतीति न व्याख्येयम् । किं तर्हि ? इत्यत आह– **यतो यत इति** । मनस आत्मविषयत्वस्यैव प्रस्तुतत्वात् तथैव व्याख्येयम् । न वृथा सप्तमीभङ्गेनात्मवशत्वमात्रमर्थ इति भावेनाह– **आत्मनीति** ॥ २६ ॥

प्रमेयदीपिका (ज.टी.)– 'यतो यतः श्रोत्रादेः' इति प्रतीतिनिरासायाह– **यत इति** ॥ शब्दादावित्यर्थः । कुतः सप्तम्यर्थे तसिर्लभ्यत इत्यत आह– **यत इति** ॥ तथाचोक्तं 'आद्यादिभ्य उपसङ्ख्यानम्' इति । अन्यथा द्वारमात्रनियमे स्मरणस्य को निवारयिता । षष्ठ्या ह्यत्र भाव्यं सप्तमी तु कथम्? इत्यत आह– **आत्मनीति** ॥ २६ ॥

श्लोकः २६

**भावबोध: (र.टि.)**– ॥ **अन्यथा द्वारमात्रविरोध इति** ॥ 'यतो यत' इत्यस्य श्रोत्रादे-रित्यर्थकत्वे शब्दादिविषयप्रत्यक्षोत्पत्तिनिवारणार्थं मनोनिस्सरणद्वारभूतश्रोत्रादिमात्रनिरोधेऽपि अन्तर्मनःकरणकविषयस्मरणं को निवारयितेत्यर्थः । यत्र यत्र विषये इत्यर्थकत्वे तु विषयविषयक-ज्ञानमात्रं निवारितं भवतीति भावः ॥ २६ ॥

**भावदीपः (रा.टि.)**– ॥ **यत इतीति** ॥ 'यतो यतो धावति दैवचोदितं मनः' इति भागवते दशमस्कन्धाद्याध्याये प्रयोगादिति भाष्यार्थः ॥ **आद्यादिभ्य इति** ॥ 'प्रतियोगे पञ्चम्यास्तसिः' इति सूत्रे आद्यादिशब्देभ्यः 'सर्वविभक्त्यर्थे तसेरुपसङ्ख्यानम्' इति वार्तिककृतोक्तमित्यर्थः ॥ ननु 'यतो यतो यस्माद् यस्मात्, श्रोत्रादिद्वारा मनो निर्गच्छति ततो ततो द्वाराणि नियम्येत्यर्थः कुतो न? इत्यत आह– **अन्यथेति** ॥ द्वारार्थत्व इत्यर्थः॥ **स्मरणस्येति** ॥ शब्दस्पर्शादिविषयस्मरण-स्येत्यर्थः । स्वात्मार्थत्वमात्मपदं मत्वा शङ्कते– **पष्ठ्या ह्यत्रेति** ॥ २६ ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ॥ **कुतः सप्तम्यर्थे तसिरिति** ॥ प्रतियोगेपञ्चम्यास्तसिल् इति सूत्रे पञ्चम्यन्तादेव तसेर्विधानादित्यर्थः ॥ तथाचोक्तमिति ॥ प्रतियोगे पञ्चम्यास्तसिरिति सूत्रे कार्यापनेनेति शेषः ॥ तद्वाक्यान्युदाहरति–**आद्यादिभ्य उपसङ्ख्यानमिति** ॥ आदिमध्यपार्श्व-पृष्टादिभ्य उपसङ्ख्यानमिति वार्तिकस्यायं सङ्ग्रहः ।तथाच सप्तम्यन्तेभ्य आद्यादिशब्देभ्यः तसेः कात्यायनेनैव विहितत्वात् युक्तः सप्तम्यन्तादपि तसिरिति ॥ नचैतन्निर्मूलत्वादुपेक्ष्यम् ॥ तस्यादित उदात्तमर्धह्रस्वमित्यस्यैव तन्मूलत्वात् ॥ नचाद्यादित्वाभावात् कथं यच्छब्दात् तदुपपत्तिरिति वाच्यम् । वृत्तिकृता तस्याकृतिगणत्वोक्तेरदोष इति ध्येयम् ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **इति प्रतीतीति** । 'ततस्ततः' इति तावत्पञ्चम्यन्तम्, 'नियम्य' इति श्रवणात् । अतस्तत्प्रतियोगिभूतं 'यतो यतः' इत्यपि पञ्चम्यन्तमेवेति 'श्रोत्रादेः' इति व्याख्येयमेव' इति प्रतीतीत्यर्थः । 'यतो यतो धावति दैवचोदितं मनः' इति दशम-स्कन्धाद्याध्याये प्रयोगादिति भाष्यार्थः । प्रयोगोऽप्यनुशासनमूल एव वक्तव्य इति, किं तदनु-शासनमित्यत आह– **तथा चेति** ॥ 'प्रतियोगे पञ्चम्यास्तसिः' इति सूत्रे 'आद्यादिभ्य उप-सङ्ख्यानम्' इति सर्वविभक्त्यर्थे तसिरस्तीति कात्यायनेनोक्तमित्यर्थः । ननु यतः यस्मात् श्रोत्रादीन्द्रियद्वारा निर्गच्छति ततो द्वारान् नियम्येति प्रतीतार्थः किं न स्यादित्यत आह–

श्लोकः २६

**अन्यथेति** ।। प्रतीतार्थत्वे मनोनिस्सरणद्वारभूतश्रोत्रादीन्द्रियमात्रनियमे सम्पन्नेऽपि मनसो विषयात् नियमनानापत्त्या तत्करणकशब्दादिविषयस्मरणस्य कः प्रतीकारः? तद्भावे च,

'कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ।।'

इत्युक्तदोष इति भावः । 'आत्मन्येव वशं नयेद् आत्मवश्यताम् आपादयेत्' इति सङ्कर-व्याख्यान इव आत्मशब्दस्य स्वात्मार्थत्वे षष्ठीविभक्तिः स्यात् ? इति शङ्क ते **षष्ठ्या हीति** । आधाराधेयभावाभावेन सम्बन्धमात्रं वक्तव्यम्, आत्मनो वशम् इति प्रतीतेः, तत्र च 'षष्ठी शेषे' इति षष्ठीविभक्तिरेव युक्तेति शङ्कि तुर्हृदयम् । **आत्मनीतीति** । विषयार्था चात्र सप्तमीविभक्तिरिति न परव्याख्यान इव क्लेशाश्रयणमिति भावः ।।

मध्ये व्युत्थितं चेत् मनः, तदा तत्प्रत्याहारेण वशीकुर्यादित्युच्यते यतो यत इति । आद्यादिभ्य उपसङ्ख्यानात् सप्तम्यर्थे तसिः । यत्र यत्र शब्दादौ विषये स्वतः चञ्चलं मनो अस्थिरं सत् निश्चरति प्रवर्तत इति यावत् । ततस्ततो विषयात् एतत् मनो नियम्य प्रत्याहृत्य आत्मन्येव वशं नयेत् आत्मविषय एव वशीकुर्यात् ।। २६ ।।

**भावदीपिका (श्री.टि.)– ।। श्रोत्रादेः** सकाशात् । **यत इतीति** ।। 'यतो यतो धावति तत्र तत्र सुदर्शनं दुष्प्रसहं ददर्श' इति नवमस्कन्धे प्रयोगादित्यर्थः ।। दुर्वासा यत्र यत्र धावति तत्र तत्राम्बरीषसंरक्षणाय भगवदादिष्टं सुदर्शनं पृष्ठतः प्राद्रवन् ददर्शेति तदर्थः । अतो 'यतः' इत्यस्य पञ्चम्यर्थत्वे 'तत्र तत्र' इत्यस्यायुक्तत्वापत्तेरिति भावः । भाष्ये 'इत्यादि' इत्यादिपदात् ।

'यतो यतोऽसौ प्रहरन् परश्वधो मनोऽनिलौजाः परचक्रसूदनः ।
ततस्ततश्छिन्नभुजोरुकन्धरा निपेतुरुर्व्यां हतसूतवाहनाः ।'

इति नवमस्कन्धगतं वाक्यं द्रष्टव्यम् । **आद्यादिभ्य इति** ।। आद्यादिभ्यः शब्देभ्यः सप्तम्यादि-विभक्त्यन्तेभ्यस्तसिर्भवतीति वार्तिकार्थः । 'आदौ' इति 'आदितः', 'मध्ये' इधति 'मध्यतः' इत्याद्युदाहरणम् । 'आकृतिगणश्चयम्' इति काशिकायामुक्तत्वात् प्रकृतेऽपि 'यस्मिन् इति यतः' इत्यर्थो द्रष्टव्यः । केचित्तु आद्यादिभ्यःप्रथमादिसर्वविभक्तिभ्यस्तसेरुपसङ्ख्यानं कार्यम्, तसेः सार्वविभक्तिकत्वादित्यर्थ इत्याहुः ।।

श्लोकः २७,२८

**अन्यथेति** ।। 'यतो यतः' इत्यस्य 'श्रोत्रादेः' इति पञ्चम्यर्थत्वाङ्गीकारे शब्दादिविषयकानुभवोत्पत्तिनिवारणार्थं मनोनिःसरणद्वारभूतश्रोत्रादिमात्रनिरोधलाभेऽपि अन्तर्मनःकरणकशब्दादिविषयस्मरणं को वारयिता । तथा च ध्यानासम्भवः । 'यत्र यत्र विये' इत्यर्थकत्वाङ्गीकारे तु शब्दादिविषयकज्ञानमात्रनिवारणलाभेन तत्स्मरणस्यापि निवारणलाभाद् ध्यानोपपत्तिरिति भावः ।। **आहेति** ।। 'विषयसप्तमी' इत्याहेत्यर्थः ।। २६ ।।

**भावप्रकाशः** (कृ.टि.)– ननु यतो यतः श्रोत्रादेरिति प्रतीत एवार्थः किं न स्यादित्यत आह– **अन्यथाद्वारमात्रेति** ।। मनोनिःसरणद्वारभूतश्रोत्रादिमात्रेत्यर्थः । **को निवारयितेति** । मनोनियमनाभावात् तत्करणकविषयस्मरणं स्यादेवेत्यर्थः । यत्र यत्रेत्यर्थोक्तौ च विप्रियज्ञानमात्रमेव निरस्तं भवतीति भावः । **षष्ठ्या ह्यत्र भाव्यमिति** ।। आत्ममनसोर्नाधाराधेयभावः, किन्तु सम्बन्ध एव । मन आत्मनो वशमिति प्रतीतेः । तत्र च 'षष्ठी शेषे' इति षष्ठ्येव युक्तेत्यर्थः ।। २६ ।।

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ।। २७ ।।**

**भावरत्नकोशः** (सु.टि.)– उक्तयोगफलमुच्यते प्रशान्तेति । प्रकर्षेण शान्तं स्वतो विषयेष्वप्रवृत्तं मनो यस्य तं तथोक्तम् । शान्तरजसं विगतरजोदोषम्, अत एव अकल्मषं कामक्रोधादिदोषहीनम्, ब्रह्मभूतं ब्रह्मणि भूतं स्थितम्, योगिनं समाधिमन्तम् उत्तमं सुखमुपैति ध्यानयोगवान् उत्तमं सुखं प्राप्नोति इति श्रुत्यादौ प्रसिद्धमिति हिशब्दः ।। २७ ।।

**एवं युञ्जन् सदाऽऽत्मानं योगी विगतकल्मषः ।**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ।। २८ ।।**

## भाष्यम्

**पूर्वश्लोकोक्तं प्रपञ्चयति– एवं युञ्जन्निति ।। २८ ।।**

**भावप्रकाशिका** (न.टी.)– ननु योगिनः सुखावाप्तिरुच्यते 'प्रशान्तमनसम्' इति श्लोके तदुत्तरश्लोके च । अतः को विशेषोऽनयोः ? इत्यत आह– **पूर्वेति** ।। २७,२८ ।।

श्लोकः २९

**प्रमेयदीपिका (ज.टी.)– प्रशान्तमनसम् इत्युक्तमेव पुनः कस्मादुच्यते? इत्यत आह– पूर्वेति ॥ २८ ॥**

भावदीपः (रा.टि.)– ॥ उक्तमेवेति ॥ 'सुखमात्यन्तिकम्'इत्यादिश्लोकोक्तमेवेत्यर्थः । अथवा युञ्जन्नेवं सदाऽऽत्मानम् इत्यादिश्लोकोक्तमेवेत्यर्थः ॥ २७ ॥

भावरत्नकोशः (सु.टि.)– भाष्ये पूर्वशब्देन कः श्लोको ग्राह्य इत्यतस्तं दर्शयति– **प्रशान्तमनसमितीति** ॥ योगिना सुखं किमायासेन प्राप्यते , कीदृशं च तत् इति शङ्कामपनुदता पूर्वश्लोकोक्तमेव प्रपञ्च्यते **एवं युञ्जन्निति** । उक्तदिशा आत्मानं मनो युञ्जन् भगवति युञ्जानः, भगवन्तं ध्यायन्निति वा, विगतकल्मषः वीतरागादिदोषः सुखेन अक्लेशेन ब्रह्मसंस्पर्शं भगवत्संसर्गाभिव्यक्तम् अत्यन्तम् अतिशयितं सुखमश्नुते प्राप्नोति ॥ २८ ॥

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥**

## भाष्यम्

**ध्येयमाह– सर्वभूतस्थमिति ॥ सर्वभूतस्थमात्मानं परमेश्वरम् । सर्वभूतानि च आत्मनि परमेश्वरे । तं च परमेश्वरं ब्रह्मतृणादावैश्वर्यादिना साम्येन पश्यति । तच्चोक्तम्–**

**'आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ।**
**अपश्यत् सर्वभूतानि भगवत्यपि चाऽत्मनि ॥' (भाग.३.२९-४७) इति**

**'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' इति च ॥ २९ ॥**

भावप्रदीपिका (प.टी.)– पूर्वश्लोके 'प्रशान्तमनसम्' इति ध्यानस्य ध्येयसापेक्षत्वात्, तत्प्रदर्शनपरतयोत्तरश्लोकमवतार्य व्याचष्टे– **ध्येयमिति** । अत्रोच्यमान आत्मा जीवः किं न स्यात् ? इत्यत आह– **तच्चेति** ॥ २९ ॥

श्लोकः २९.

**भावप्रकाशिका (न.टी.)**– भवत्वयं समाधियोगप्रकारः सफलः । अत्र किं ध्येयम् ? इत्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे– **ध्येयमिति** । यं सर्वभूतानामन्तर्यामिणं यस्मिन्नितराणि ब्रह्मादिस्थावरान्तानि भूतान्याश्रितानि योगयुक्तात्मानः पश्यन्ति, स परमात्मैवेत्यत्र प्रमाणमाह– **तच्चेति** । सर्वान्तर्यामित्वेन सर्वगुणपूर्णत्वेन सर्वत्र साम्यं च परमेश्वरस्यैवेति गीतास्वेव सिद्धमित्याह– **सममिति** । एवमात्मशब्दस्य परममुख्यार्थपरमात्मपरत्वे सम्भवति, न वृथा सर्वभूतस्थं स्वमात्मानमिति मुख्यमात्रजीवपरत्वं कल्पनीयम् । न हि जीवस्य युगपत् सर्वभूतस्तथा । तस्योत्क्रान्त्यादिभिरणुत्वस्य साधितत्वात् । न च तदणुत्वस्यौपाधिकत्वे प्रमाणमस्ति । अत एवासौ न सर्वभूताश्रयः । सर्वभूतानि चात्मन्येकत्वं गतानीत्यश्रुतकल्पनं च तत्पक्षं इत्यलं विस्तरेण ॥ २९ ॥

**प्रमेयदीपिका (ज.टी.)**– 'एवं युञ्जन्' इति योगप्रकरणस्य फलकथनेनोपसंहृतत्वात् किमुत्तरेण ? इत्यत आह– **ध्येयमिति** ॥ ननु 'मच्चित्तो युक्तः' इत्यादिना ध्येयमुक्तमेव । सत्यम् । तथाऽप्युत्तमाधिकारिणां ध्येयमनेनोच्यत इत्यदोषः । 'आत्मानं स्वात्मानम्' इत्यादि प्रतीतिपराकरणार्थमाह– **सर्वेति** ॥ कुतोऽयमर्थ इत्यतः पुराणसमाख्यानादित्याह– **तच्चेति** ॥ सर्वत्र समदर्शनः इत्यस्योक्तार्थतां गीतासम्मत्याा उपपादयति– **सममिति** ॥

**भावरत्नकोशः (सु.टि.)**– ॥ फलकथनेन 'अत्यन्तं सुखमश्नुते' इत्युत्तमसुखानुभवकथनेन । **मच्चित्त इति** । 'मनः संयम्य मच्चित्तो युक्त आसीत' इत्यत्र मद्विषयकध्यानवान् योगसम्पन्न आसीतेति भगवानेव ध्येय इत्युक्तमेवेत्यर्थः । **'इत्यादि'** इत्यत्र 'स्वात्मनि सर्वभूतानि' इति प्रतीतिः, 'सर्वत्र स्थावरादिब्रह्मान्तेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं यस्य स सर्वत्र समदर्शनः' इति प्रतीतिश्चादिशब्देन ग्राह्या ॥

'योगी युञ्जीत' इत्यादिना 'अत्यन्तं सुखमश्नुते' इत्यन्तेन ग्रन्थेन फलकथनेन योगप्रकरणं समापितम् । अथ ध्येयमुच्यते **सर्वभूतस्थमिति** । 'भोक्तारम्' इति पञ्चमे, 'मच्चितो युक्त आसीत' इत्यत्र ध्येयोक्तावपि, अत्राप्युत्तमाधिकारिणा मनोध्येयमुच्यत इति विवेकः । तिष्ठतेः 'सुपि स्थः' इति कप्रत्ययः । सर्वेषु भूतेषु स्थितम् आत्मानं परमेश्वरम् सर्वभूतानि चात्मनि परमेश्वरे योगयुक्त आत्मा मनो यस्य स तथा, सर्वत्र तृणादिब्रह्मान्तेषु वस्तुषु विद्यमानेषु समम् ऐश्वर्यादिना साम्यावगाहि दर्शनं यस्य स सर्वत्र समदर्शनः सन् ईक्षते पश्यति ॥ २९ ॥

श्लोकः ३०

भावदीपिका (श्री.टि.)– ॥ तथाऽप्युत्तमेति ॥ तत्र त्ववतारोपासकानामधिकारिणां मनुष्योत्तमानामेव ध्येयमुक्तम् । 'मच्चित्तः' इत्यवतारोपास्तिकथनादिति भावः । उक्तार्थतां 'ब्रह्म-तृणादौ' इत्यादिनोक्तार्थताम् ॥ २९ ॥

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥**

## भाष्यम्

**फलमाह– यो मामिति ॥ तस्याहं न प्रणश्यामि इति । सर्वदा योगक्षेमवहः स्यामित्यर्थः । स च मे न प्रणश्यति सर्वदा मद्भक्तो भवति । सत्यपि स्वामिन्यरक्षत्यनाथः । एवं भृत्येऽप्यभजत्यभृत्य इति हि प्रसिद्धिः । उक्तं च**

**'सर्वदा सर्वभूतेषु समं मां यः प्रपश्यति ।**
**अचला तस्य भक्तिस्स्यात् योगक्षेमं वहाम्यहम्' इति गारुडे ॥ ३० ॥**

भावप्रदीपिका (प.टी.)– नन्वेवं सर्वगतत्वेन परमात्मोपासने किं फलम् ? इत्यत उत्तरश्लोकमवतारयति– **फलमिति** । एवं भृत्येऽपि 'अभजति' इति शेषः । व्यतिरेक-दृष्टान्तोऽयम् ॥ ३० ॥

भावप्रकाशिका (न.टी.)– 'आत्म'शब्दोक्तं भगवन्तमेवास्मच्छब्देन परामृश्य तज्ज्ञानिनः फलाभिधानाच्च पूर्वोक्त आत्मा भगवानेवेत्यभिप्रायेणोत्तरं श्लोकमवतार्य व्याचष्टे– **फलमिति** । ननु सतामेव कार्यविशेषाकारित्वेनासत्वव्यवहारः क्व दृष्टः ? येन विद्वद्भगवतोरेव परस्परं प्रत्यनाशित्वं स्यादित्यत आह– **सत्यपीति** । भृत्येऽपि 'अभजति' इति शेषः । न केवलं दृष्टान्तमात्रेणैतदुपपादितमित्याह– **उक्तं चेति** । न च तस्याहं न परोक्षीभवामि, स च मे न परोक्षीभवतीति व्याख्येयम् । देशकालादिभिरविलुप्तावबोधात्मकत्वात् भगवतः को परोक्षीभवति, तमृते सर्वेषामिति, तद्रूपत्वात् सोऽपि न कस्यापि परोक्षीभवेदिति विशेष-प्रतिषेधानुपपत्तेः ॥ ३० ॥

श्लोकः ३०

**प्रमेयदीपिका** (ज.टी.)– किञ्चैतदर्थानुवादेन फलप्रतिपादकमुत्तरवाक्यमप्यस्य भगवद्विषयत्वं ज्ञापयतीति भावेनाऽह– **फलमिति** ॥ अस्य 'ध्यानविषयस्य' इति शेषः ॥ ननु भगवान्, तद्ध्यायी च सर्वान् प्रति नित्यौ । तत्कथमेतत् ? इत्यत आह– **तस्येति** ॥ कथमयमर्थो लभ्यते? इत्यत आह– **सत्यपीति** ॥ अविद्यमाननाथोऽयमिति भृत्ये प्रसिद्धिः । एवं सत्यपि भृत्येऽभजति 'अविद्यमानभृत्योऽयम्' इति स्वामिनि प्रसिद्धिः ॥ एतदुक्तं भवति । विद्यमानस्यापि स्वयोग्यव्यापाराकरणसादृश्यादुपचारेण अविद्यमानता । प्रकृते तु तथात्वाभावात् न प्रणश्यामीत्यादि । रूढोपचारश्चायम् । अतो न प्रयोजनान्वेषणमिति ॥ अत्र पुराणसम्मतिमाह– **उक्तं चेति** ॥ ३० ॥

**भावदीपः** (रा.टि.)– ॥ **तथात्वाभावादिति** ॥ अरक्षणाभजनयोरभावात् न प्रणश्यामि इत्याद्युक्तिः गीतायामित्यर्थः ॥

**भावरत्नकोशः** (सु.टि.)– ॥ **अस्य** 'सर्वभूतस्थमात्मानम्' इत्यत्रात्मशब्दस्य । 'अस्य' इत्यस्य विवरणम्– **ध्यानविशेषस्येति** । सर्वभूतस्थत्वादिप्रकारकस्येत्यर्थः । **कथमेतदिति** । अप्रणाशो ध्वंसाप्रतियोगित्वं नित्यत्वं सर्वान् प्रत्यस्तीति 'तस्याहम्', 'स च मे' इति भगवतो योगिनश्च परस्परं नित्यत्ववचनं कथमित्यर्थः । 'अरक्षति' इत्यस्य प्रतियोगिभूतं शेषमाह– **अभजतीति** । 'स्वामिनि' इत्येतदत्राप्यनुकृष्यत इति भावेनोक्तं– **स्वामिनीति** । 'कया वृत्त्याऽयमर्थो लभ्यते' इति कृतचोद्ये कः परिहारः उक्त इत्यत आह– **एतदुक्तं भवतीति** । **सादृश्यादिति** । अनेन 'प्रणश्यामि' इत्यादेर्गौणी वृत्तिरिति विभावितं भवति । **तथात्वाभावात्** अरक्षणकर्तृत्व-अभजनकर्तृत्वयोरभावात् । प्रसिद्धिपदोपादानलब्धमर्थमाह– **रूढेति** । अत्र 'न प्रणश्यामि' इत्यस्य 'योगक्षेमवहो भवामि' इत्यर्थकत्वेन केवलमेव तत् लोकन्यायगम्यम्, पुराणे कथितं चेति भाष्ये चशब्द इति प्राचीनटीका ॥

सर्वभूतस्थत्वादिप्रकारकध्यानविशेषस्य फलमुच्यते– **यो मामिति** । यो ध्यानयोगी सर्वत्र ब्रह्मादितृणान्तेषु समं मां यः पश्यति मयि च सर्वं ब्रह्मादि जगत् पश्यति, तस्याहं न प्रणश्यामि सर्वदा योगक्षेमवहः स्याम्, स च मे न प्रणश्यति सर्वदा मद्भक्तो भवति ॥ ३० ॥

**भावदीपिका** (श्री.टि.)– ॥ **ध्यानविशेषस्येति** ॥ उत्तमाधिकारिभिः क्रियमाणस्योक्तध्यानविशेषस्येत्यर्थः ॥ **सर्वान् प्रतीति** ॥ तथा च 'तस्य' 'मे' इत्यनुपपन्नमित्यर्थः ।

**विद्यमानस्यापीति** ॥ स्वामिनो भृत्यस्य वेत्यर्थः । **स्वयोग्येत्यादि** ॥ स्वयोग्यव्यापाराकरण-रूपादविद्यमानतासादृश्यादित्यर्थः । अविद्यमानता अविद्यमानता व्यवहार इत्यर्थः । **तथात्वाभावा-दिति** ॥ स्वयोग्यव्यापाराकरणाभावादित्यर्थः । भगवान् स्वयोग्यव्यापारं योगक्षेमाख्यं करोति । अयं न योगारूढः स्वयोग्यव्यापारं भगवद्भक्त्यादिरूपं करोति इति अविद्यमानतासादृश्याभावात् 'न प्रणश्यामि' इत्याद्युपपन्नमिति भावः । उपचारप्रयोगे किं प्रयोजनमित्यत आह– **रूढेति** ॥ अत एव 'सत्यपि' इत्यादिलौकिकोदाहरणं प्रदर्शितमिति ध्येयम् ॥ ३० ॥

भावप्रकाशः (कृ.टि.)– नन्वेतावता शब्दस्य का वृत्तिरुक्तेत्यत आह– एतदुक्तं भवतीति ॥ **न प्रणश्यामीत्यादीति** । अनेन प्रणश्यामीत्यादेः गौणीवृत्तिरिति सूचितम् ॥ ३० ॥

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥**

## भाष्यम्

**एतदेव स्पष्टयति– सर्वभूतस्थितमिति ॥ एकत्वमास्थितः सर्वत्र एक एवेश्वर इति स्थितः । सर्वप्रकारेण वर्तमानोऽपि मय्येव वर्तते । एवमपरोक्षं पश्यतो ज्ञानफलं नियतमित्यर्थः । तथाऽपि प्रायो नाधर्मं करोति । कुर्वतस्तु महच्चेत् दुःखसूचकं भवतीत्युक्तं पुरस्तात्। आह च–**

**'कदाचिदपि नाधर्मे बुद्धिर्विष्णुदृशां भवेत् ।**
**प्रमादात्तु कृतं पापं स्वल्पं भस्मीभविष्यति ।**

**आदिराजैस्तथा देवैर्ऋषिभिः क्रियते कियत् ।**
**बाहुल्यात् कर्मणस्तेषां दुःखसूचकमेव तत् ॥' इति ॥ ३१ ॥**

भावप्रदीपिका (प.टी.)– ननु तृतीयाध्याये ज्ञानिनोऽपि कर्मविधानात् कथं यथेष्टाचरणं विधीयते ? इत्यत आह– **एवमिति** । ननु विकर्मणा मोक्षविरोधाभावे किमिति न ज्ञानिनो विकर्म कुर्युः ? इत्यत आह– **तथाऽपीति** । कियदिति महदित्यर्थः ॥ ३१ ॥

श्लोकः ३१

भावप्रकाशिका (न.टी.)– उत्तरेण स्पष्ट्यमानत्वादप्ययमेव श्लोकद्वयार्थ इति भावेनाह **एतदेवेति**। तथा हि। 'सर्वत्र समदर्शनः' इत्यत्र यत्समशब्दोक्तमेकत्वं सर्वभूतस्थितानां तदत्र स्पष्ट्यते 'एकत्वमास्थितः' इति। तच्चैकत्वं 'माम्' इत्युक्त्या भगवद्रूपाणामेवेत्यवगम्यते। न तु जीवपरमात्मनोः, तत्प्रापकाभावात्। (तथा)'तस्याहं न प्रणश्यामि' इति यत् सदा योगक्षेमवहत्वं भगवता प्रतिज्ञातम्, तत् (एव) स्पष्ट्यते 'स योगी मयि वर्तते' इत्यनेन। ननु यथेष्टचरणस्य ज्ञानपादे निरस्तत्वात् कथं यथेष्टचारिणो योगक्षेमं वहति भगवान्? इत्यत आह– **एवमिति**। यथेष्टचरणस्य विधिरेव निषिद्धस्तत्र। ज्ञानफलस्य मुक्तेर्नियतत्वेनानुमतिमात्रं तु तत्राप्युक्तमिति भावः॥

ननु यथेष्टचारिणोऽपि ज्ञानफलं नियतं चेत् सर्वेऽप्यधर्मं कुर्युरित्याशङ्का। नायं दोषः। न ह्यसावधर्मं प्रायः करिष्यति। प्रमादकृतं तु स्वल्पं भस्मीभविष्यति। महदपि प्रारब्धदुःखसूचनेन कृतार्थं भवतीत्येतत् सप्रमाणकमाह– **तथाऽपीति**। अपि महदप्यानन्दमीषत् ह्रासयति, न मुक्तिं प्रतिबध्नातीति भावः॥ ३१॥

प्रमेयदीपिका (ज.टी.)– यो माम् इत्युक्तमेव पुनः किमर्थमुच्यत इत्यत आह– **एतदेवेति**॥ 'एकत्वमास्थितः' इत्यस्यान्यथप्रतीतिनिरासार्थमर्थमाह– **एकत्वमिति**॥ 'मयि वा मद्विकारे वा वर्तमानोऽपि' इत्यपव्याख्याननिरासार्थमाह– **सर्वेति**॥ न्यायेन वाऽन्यायेन वेत्यर्थः। अपव्याख्याने थाल्प्रत्ययो न युक्त इति भावः। 'भगवन्तं भजतोऽधर्माचरणं सर्वथाऽप्यकिञ्चित्करम्' इति प्रतीतिनिरासायाह– **एवमिति**॥ 'अधर्माचरणेऽपि' इति शेषः। ज्ञानफलं मोक्षः। आनन्दह्रासादिकं तु वियत एवेति भावः॥

ननु ज्ञानिनो मोक्ष एवापेक्षितः। सोऽधर्माचरणेऽपि न प्रतिबद्ध्यते इति चेत् तत् किमधर्मं करोतीत्यत आह– **तथाऽपीति**॥ सर्वथाऽप्यकरणे सर्वथा वर्तमानोऽपि इत्युक्तमयुक्तमित्यत उक्तम्– **प्राय इति**॥ एतेन 'न हीदृशस्य यथेष्टचेष्टता सम्भवति' इति परकीयमस्मव्याख्यानदूषणमपि निरस्तं भवति॥

प्रारब्धवशेन कदाचित्तथाभावदर्शनात्। कुतो न करोति? इत्यत आह– **कुर्वतस्त्विति**॥ अत्र प्रमाणमाह– **आह चेति**॥ कियत् 'महत्' इति शेषः। कर्मणः प्रारब्धस्य बाहुल्यात् प्राबल्यात्। लोके प्रवृत्तिकर्मणो बाहुल्येन चित्तविक्षेपादिति वा॥ ३१॥

श्लोकः ३१

**भावदीपः (रा.टि.)– ॥ थाल् प्रत्यय इति** ॥ 'प्रकारवचने थाल्' इति पाणिन्युक्त्या अप्रकारार्थत्वादिति भावः ॥ **किमिति** ॥ अधर्मं करोति किमिति योजना ॥ **यथेष्टचेष्टेति** ॥ यथेष्टप्रवृत्तिमत्तेत्यर्थः ॥ **तथाभावदर्शनादिति** ॥ अजामिलादाविति योज्यम् । भाष्ये पुरस्तात् इत्यस्य तृतीये'नैव तस्य कृतेनार्थः' इति श्लोकभाष्ये 'ईषत् प्रारब्धम् अनर्थसूचकं च तद्भवति । महच्चेद् वृत्रहत्यादिवत्' इत्यनेनेत्यर्थः ॥ ३१ ॥

**वाक्यार्थप्रदीपः (पां.टि.)– ॥ थाल् प्रत्ययो नयुक्त इतीति** ॥ तस्याप्रकारवाचित्वादिति भावः ॥ **तृतीयया अप्राधान्येनेति** ॥ सहयुक्ते अप्रधाने तृतीयया विधानादिति भावः ॥ **द्विपः शतुर्वा वचनमिति** ॥

**भावरत्नकोशः (सु.टि.)– ॥ यो मामित्युक्तमेवेति** । प्राचीनटीकायां तु 'सर्वभूतस्थम्' इत्यादिश्लोकद्वयोक्तमेव स्पष्ट्यते 'तथा हीति' । 'सर्वत्र समदर्शनः' इत्युक्तं समदर्शनमेव 'एकत्वमास्थितः' इति स्पष्टीक्रियते । अत्रोक्तम् **एकत्वम्** एकत्वरूपत्वं भगवद्रूपाणां युक्तम् । जीवपरमात्मनोस्तत्प्रापकाभावात् । तथा 'तस्याहं न प्रणश्यामि' इति यत् सदा योगक्षेमवहत्वं भगवता पूर्वमुक्तं तदेव स्पष्ट्यते 'स योगी मयि वर्तते' इत्यनेन' इत्युक्तम् । **अन्यथाप्रतीतीति** । 'आत्मैकत्वदर्शी' इति सङ्करोक्तप्रतीतीत्यर्थः । 'सर्वथा' इत्यस्य परोक्तार्थानुवादः– **मयि वा मद्विकारे वेति । थाल्प्रत्यय इति** । 'प्रकारवचने थाल्' इति तस्य प्रकारार्थ एवानुशासनेन 'मयि वा मद्विकारे वा' इत्यर्थे अननुशासनादिति भावः । एवं सर्वभूतस्थितत्वादिप्रकारेण भगवन्तम-परोक्षतया पश्यत इति भाष्यार्थः स्पष्ट इति, ततः शेषमाह– **अधर्मेति** ॥ ज्ञानफलं 'स योगी मयि वर्तते' इत्युक्तम् । किं तदित्यत आह– **मोक्ष इति** ॥

ननु न्यायेनान्यायेन वा वर्तमानस्यापि यदि ज्ञानफलं नियतम्, तर्हि ज्ञानपादे कथम् अन्यायाचरणप्रतिक्षेपः । कथं च तृतीयाध्याये ज्ञानिनोऽपि कर्मविधिरित्यत आह– **आनन्देति** ॥ तथा चोक्तम्–

'ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु ।
आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वाऽनुवर्धते ॥' इति ।

'सर्वभूतस्थम्' इति 'यो माम्' इति च श्लोकद्वयमुत्तमाधिकारिविषयम्, 'सर्वभूतस्थितम्' इति श्लोकस्तु ज्ञानिमात्रपर इति भावेन आनन्दह्रासोक्तिरिति वदन्ति ।

श्लोकः ३१

**किमिति** । अधर्मं करोति किमित्यन्वयः । यद्यपि न मोक्षप्रतिबन्धः, तथापीति भाष्यार्थः । **एतेन** 'प्रायः' इति पदोपादानेन । **यथेष्टचेष्टता** अन्यायाचरणम् । **तथाभावदर्शनात्** यथेष्टचेष्टता-दर्शनात् । **'पुरस्तात्'** इत्यस्य तृतीयाध्याये 'नैव तस्य कृतेनार्थः' इति श्लोकव्याख्याऽवसरे 'ईषत्प्रारब्धानर्थसूचकं तद्भवति, महच्चेत् वृत्रहत्यादिवत्' इत्यत्रेत्यर्थः । स्वल्पपापस्य भस्मी-भावाभिधानात् कियत्किमपीत्यनन्तरं प्रकृतोपयोगाय शेषमाह– **कियन्महदितीति** । 'राजाहः-सखिभ्यष्टच्' इति समासान्ते, 'आदिराजैः' इति युक्तं भाष्ये । 'कियत्' इत्युक्तेः 'बाहुल्यात्' इति व्याख्याति– **प्रावल्यादिति** । ज्ञानेनाप्यनाश्यत्वं प्राबल्यमिह विवक्षितम् । मुख्यार्थालाभानु-शयादाह– **लोकेति** ॥

'यो माम्' इत्युक्तमेव स्पष्टीकुर्वता ज्ञानिमात्रस्यात्रातिशय उच्यते– **सर्वभूतस्थितमिति** । सर्वभूतस्थितं माम् एकत्वमास्थितः 'सर्वत्रैक एवेश्वरः' इति जानन् सन्, भजति सेवते, स योगी सर्वथा सर्वप्रकारेण न्यायेनान्यायेन वा वर्तमानोऽपि मयि एव वर्तते अन्यायप्रवृत्तावपि ज्ञानिनो मोक्षो नियत एव । अधमाधिकारिषु त्वानन्दह्रासादिकं विद्यत एवेति तात्पर्यम् ॥ ३१ ॥

**भावदीपिका (श्री.टि.)**– 'सर्वथा' इत्यस्यार्थः– **मयि वा मद्विकारे वेति** ॥ मद्विकारे प्रपञ्चे देहादावित्यर्थः । **परव्याख्यान इति** ॥ अस्मन्मते थाल्प्रत्ययः सार्थकः, प्रकारार्थकत्वात् । 'प्रकारवचने थाल्' इति स्मरणात् । अत एव 'सर्वप्रकारेण' इत्युक्तम् । परव्याख्याने तु थाल्प्रत्ययो निरर्थक इत्यर्थः । **मोक्ष इति** ॥ लिङ्गदेहभङ्ग इत्यर्थः । एवमुत्तरत्रापि ज्ञेयम् ॥ **आनन्दह्रासादिकमिति** ॥ यथा चैतत् तथोक्तं प्राक् तृतीयाध्याय अस्माभिः । **तत्किमिति** ॥ तत् तर्हि नियमेनाधर्मं किं करोत्येवेति प्रश्नः । **अकरणे** 'अधर्मस्य' इति शेषः । **इत्युक्तमिति** ॥ सर्वप्रकारेण न्यायेन वाऽन्यायेन वेति व्याख्यातत्वात्, 'अन्यायेन' इति व्याख्यानं न युक्तमिति भावः ।

**अस्मद्व्याख्यानेति** ॥ 'सर्वथा' इत्यस्य 'सर्वप्रकारेण' इति व्याख्यानं न युक्तम् । ईदृशस्य भगवज्ज्ञानिनो यथेष्टचेष्टावत्ताया असम्भवात् । अतो 'मयि वा मद्विकारे वा' इत्येव व्याख्यानं युक्तमिति परकृतमस्मद्व्याख्यानदूषणमित्यर्थः । 'प्रायः' इत्यनेन कथं तन्निरस्तं भवतीत्यत आह– **प्रारब्धेति** ॥ **तथाभावेति** ॥ यथेष्टचेष्टतेत्यर्थः । भाष्ये **पुरस्तादिति** ॥ तृतीयाध्याय इत्यर्थः । भाष्ये 'स्वल्पं चेत्' इति शेषः । **महदिति शेष इति** ॥ तथा च कियन्महत् यावन्महत्क्रियते तावत्सर्वं

श्लोकः ३१

दुःखसूचकमेव भवति, सूचिते च तदैव चित्तखेद इत्यर्थः । **लोकप्रवृत्तीति** ॥ लोके या प्रवृत्तिस्तदापादकस्य कर्मण इत्यर्थः ॥ **चित्तेति** ॥ लोकैः क्रियमाणानि मैथुनादिकर्माणि दृष्ट्वा जातेन चित्तक्षोभेन स्वयमपि ज्ञानी तथा करोति, यथा सौभर्यादिरित्याशयः ॥ ३१ ॥

भावप्रकाशः (कृ.टि.)– ॥ **मद्विकार इति** ॥ भास्करमतेनेदम् । अन्यमते तु मद्विवर्त इत्यर्थः । **थाल्प्रत्यय इति** । 'प्रकारवचने थाल्' इति थालः प्रकारवाचित्वोक्तेरिति भावः । स्वल्पपापस्य भस्मीभावोक्तेराह– **महदिति शेष इति** ॥ ३१ ॥

## आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
## सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥

## भाष्यम्

**साम्यं प्रकारान्तरेण व्याचष्टे– आत्मौपम्येनेति ॥ ३२ ॥**

भावप्रदीपिका (प.टी.)– 'सर्वत्र समदर्शनः' इत्युक्तं समत्वम्, 'एकत्वमास्थितः' इत्यनेन स्पष्टितम् । तद्भगवदनुवृत्तिपु स्वसाम्यपरतयाऽपि व्याकुर्वन् श्लोकमवतारयति– **साम्यमिति** ॥ ३२ ॥

भावप्रकाशिका (न.टी.)– 'सर्वत्र समदर्शनः' इत्युक्तं समत्वम् 'एकत्वमास्थितम्' इत्यनेन सर्वगतभगवद्रूपाणां परस्परैक्यपरत्वेन व्याख्याय, भगवदनुवर्तिपु स्वसाम्यपरत्वेनापि व्याचष्ट इति भावेनोत्तरं श्लोकमवतारयति– **साम्यमिति** । ननु 'आत्मौपम्येन सर्वत्र' इति सर्वशब्दात्, हर्यधिष्ठानत्वसाम्याच, सर्वेष्वात्मौपम्यं किं न स्यात् ? मातृद्विण्मातुलादि-मान्यत्वहानवत् हरिद्विट्तदधिष्ठानादियाथात्म्यताहानादिति ब्रूमः ॥ ३२ ॥

प्रमेयदीपिका (ज.टी.)– 'सर्वत्र समदर्शनः' इत्यन्यथाव्याख्यानम् इतोऽप्यसदिति भावेनाऽह– **साम्यमिति** ॥ साम्यदर्शनम् । 'समदर्शनः' इत्युक्ते किं गोगवयादिवद् भवति साम्यदर्शनम् इत्याकाङ्क्षायाम् एकत्वमास्थितः इति स्वयमेव व्याख्यातम् । इदानीन्तु भगवदनुवर्तिविषयतयाऽपि व्याचष्ट इत्यर्थः ॥ ३२ ॥

श्लोकः ३२

**भावबोधः (र.टि.)– ॥ भगवदनुवृत्तिविषयतयाऽपीति ॥** अनेन 'आत्मौपम्येन सर्वत्र' इत्यत्र सर्वत्रेत्येतद्भगवद्भक्तेष्वेवेति व्याख्यातं भवति ॥ ३२ ॥

**भावदीपः (रा.टि.)– ॥ अन्यथाव्याख्यानमिति ॥ परात्मसु समा मतिः** इति पाठान्तरं प्रकल्प्य इत्यादिनोक्तं मयि तद्विकारेण वर्तमानोऽपि' इत्यपव्याख्यानम्, 'आत्मानं स्वात्मानम्' इत्यपव्याख्यानं वेत्यर्थः ॥ **इतोऽपीति** ॥ 'आत्मौपम्येन' इति पद्येनापीत्यर्थः ॥ साम्येन पूजादिरूपमित्यर्थः ॥ **स्वयमेवेति** ॥ कृष्णेनैवेत्यर्थः ॥ **भगवदनुवर्तीति** ॥ भगवद्भक्तविषय-तेत्यर्थः ॥ 'सर्वत्र' इत्यस्य विष्णुभक्तेष्वित्यर्थ इति भावः ॥ ३२ ॥

**भावरत्नकोशः (सु.टि.)– ॥ अन्यथा व्याख्यानमिति ।** 'सर्वत्र स्थावरादिब्रह्मान्तेषु समं निर्विशेषब्रह्मात्मैकत्वविषयं दर्शनं यस्य स तथा' इति सङ्करव्याख्यानमित्यर्थः । न केवलं 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' इति गीतावचनादित्यपिशब्दः । साम्यस्याशब्दरूपस्य कथं व्याख्यानमित्यत आह– **साम्यदर्शनमिति** । 'समदर्शनः' इति साम्यदर्शनप्रतिपादकं वाक्य-मित्यर्थः । ननु पूर्वमेकेन प्रकारेणाप्यव्याख्याततत्वात् कथं 'प्रकारान्तरेण' इत्युक्तमित्यत आह– **समदर्शन इत्युक्त इति ॥ एकत्वमास्थितः** सर्वत्रैक एवेश्वर इत्यास्थितः । **स्वयमेव** गीताऽऽ-चार्येणैव । **भगवदनुवर्तिविषयतयाऽपीति** । भगवद्भक्तिषु स्वसाम्यपरतयाऽपीत्यर्थः । तथाच 'विष्ण्वनुवर्तिषु स्ववत् स्नेहः कर्तव्यः' इति तात्पर्यानुसारिणी भगवदनुवर्तिषु स्वसाम्यपरत्वेनापि व्याचष्टे' इति प्राचीनटीका । 'भगवदनुवृत्तिविषयतया' इति पाठे भगवद्भक्तिविषयतयेत्यर्थः । तथा च 'सर्वत्र' इत्यस्य 'विष्णुभक्तेषु' इति पर्यवसितार्थ इति भाव इति व्याचक्षते ॥

'समदर्शनः' इत्युक्तम्, तत्र किं गोगवयादिवत् भगवति साम्यदर्शनमित्याकाङ्क्षायाम् 'एकत्व-मास्थितः' इति समदर्शनवचनं स्वयमेव व्याख्यातम् । इदानीं भगवदनुवर्तिविषयतयाऽपि तदेव व्याक्रियते **आत्मौपम्येनेति** । आत्मा स्वयमेवोपमा तद्भाव औपम्यम्, तेन यथा आत्मनः स्वस्य सुखमेव प्रियं दुःखं त्वप्रियमेव, तथाऽन्येषामपि भगवद्भक्तानाम् इत्येवं स्वसादृश्येन सुखं दुःखं च समं यः पश्यति सुखमेव भागवतेषु, न जात्वपि दुःखमिति वाञ्छतीति यावत्, स योगी परमो मतः ॥ ३२ ॥

**भावदीपिका (श्री.टि.)–** उत्तरत्र 'समं पश्यति' इति साम्यदर्शनस्यैव व्याख्यायमानत्वात्

'साम्यम्' इति कथमुक्तमित्यत आह– **साम्यदर्शनमिति** ॥ गोगवयादिवत् साम्यदर्शनम् गोगवयादिवत् जगता सादृश्यदर्शनमित्यर्थः । **भगवदनुवर्तीति** ॥ तथा च यः सर्वत्रभगवद्भक्तेषु सुखं वा यदि वा दुःखम् आत्मौपम्येन पश्यतितदीयदुःखादिकं स्वकीयदुःखादिवत् जानाति, स योगी परमो मत इत्यर्थो द्रष्टव्यः ॥ ३२ ॥

भावप्रकाशः (कृ.टि.)– ननु पूर्वमेकेन प्रकारेण गीताकृताऽव्याख्यातत्वात् कथं प्रकारान्तरेणेत्युक्तमित्यत आह– **समदर्शन इत्युक्त इति** ॥ **भगवदनुवर्तीति** ॥ अनेन सर्वत्रेति गीतापदं भगवदनुवर्तिपरमिति सूचितम् ॥ ३२ ॥

**अर्जुन उवाच–**

> **योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।**
> **एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥ ३३ ॥**

## भाष्यम्

**एतस्य योगस्य स्थिरां स्थितिं न पश्यामि । मनसः चञ्चलत्वात् ॥**

भावप्रदीपिका (प.टी.)– योगसाम्ययोरुभयोरपि प्रकृतत्वात् 'एतस्य' इति किं परामृश्यते ? इत्यत आह– **एतस्येति** ॥ 'चञ्चलत्वात्' इत्यत्र कस्य चञ्चलत्वमिति ? अत्राह– **मनस इति** ॥

भावप्रकाशिका (न.टी.)– 'योऽयम्' इत्यादिश्लोकत्रयार्थं समासतः सप्रमाणकमाह– **एतस्येत्यादिना** ॥

प्रमेयदीपिका (ज.टी.)– साम्यस्य योगस्य च प्रकृतत्वात् एतस्य इति कस्य परामर्श इति न ज्ञायते । अतस्तत्प्रदर्शनाय व्यवहितानां पदानामन्वयमाह– **एतस्येति** ॥ योगस्य प्राधान्येन, साम्यस्य तु तृतीययाऽप्राधान्येन प्रकृतत्वादिति भावः । 'चञ्चलत्वात्' इत्यस्यान्यो धर्मी न प्रतीयते। अतो योग एव सम्बद्ध्यते । तथाच साध्याविशिष्टतेत्यत आह– **मनस इति** ॥ एतच्चोत्तरवाक्यादवगम्यत इति भावः ॥ ३३ ॥

श्लोकः ३३

**भावदीपः (रा.टि.)–** ॥ **प्रकृतत्वादिति** ॥ पूर्वार्धेनेति भावः ॥ **साध्याविशिष्टतेति** ॥ 'स्थिरां स्थितिं न पश्यामि' इत्यस्य 'चञ्चलतां पश्यामि योगस्य' इत्यर्थपर्यवसानादिति भावः ॥ ३३ ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** ॥ **तृतीययाऽप्राधान्येनेति** ॥ सहयुक्ते अप्रधान इति सहार्थेन युक्तेऽप्रधाने तृतीयाया विधानादिति भावः ॥

**भावरत्नकोशः (सु.टि.)–** उभयोः प्रसक्तत्वाद्योगमात्रग्रहणं कथमित्यतो भाष्यकाराभिमतं हेतुमाह– **योगस्य प्राधान्येनेति** । प्रकृतत्वात् 'योऽयं योगस्त्वया प्रोक्तः साम्येन' इत्यर्थे 'पुत्रेण सहागतः पिता' इत्यत्रेव प्रथमया प्राधान्येन तृतीयया अप्राधान्येन च प्रकृतत्वादित्यर्थः । योगस्य धर्मित्वे को दोष इत्यत आह– **तथा चेति** । 'चञ्चलत्वात्' इति तावद्धेतुः । 'साधनत्वख्यापकविभक्त्यन्तं लिङ्गवचनं हेतुः' इति तल्लक्षणात् । योगश्च धर्मी पक्षः । तथा च 'योगो न स्थिरस्थितिमान् चञ्चलत्वात्' इत्यनुमाने साध्यस्येव हेतोरपि सन्देहावस्कन्दि-तत्वाविशेषात् सन्दिग्धासिद्धो हेतुः स्यादिति भावः । यद्वा धर्मी चञ्चलत्वरूपधर्मान्वय-प्रतियोगीत्यर्थः । शिष्टं पूर्ववत् । मनसोऽत्रान्वय इति कुतो विज्ञायत इत्यत आह– **एतच्चेति** । 'चञ्चलं हि मनः कृष्ण' इत्यर्जुनप्रश्नरूपोत्तरवाक्यादित्यर्थः । न च 'मनसश्चञ्चलत्वाद् योगो न स्थिरः' इति वैयधिकरण्यमापद्येतेति वाच्यम् । योगो न स्थिरः मनःकरणकत्वात्, मनसश्चञ्चल-त्वात् करणानुसारित्वात्कार्यस्य इत्यत्र तात्पर्यात् ॥

मनसश्चञ्चलत्वेन वायोरिव निग्रहानर्हत्वात् साम्येन योगस्य स्थिरस्थितिरसुसम्पादा इत्यर्जुनेन श्लोकद्वयेन शङ्कितमित्युच्यते– **अर्जुन उवाच । यो मामित्यादि** । हे मधुसूदन त्वया साम्येन भगवतः सर्वत्रैक्येन, भगवदनुवर्तिषु चात्मौपम्येन, योऽयं योगो भगवति मनःसमाधानरूपो ध्यानयोगः प्रोक्तः एतस्य योगस्य स्थिरां स्थितिं न पश्यामि । कुतः ? मनसः चञ्चलत्वात् ॥३३॥

**भावदीपिका (श्री.टि.)–** ॥ **प्राधान्येनेति** ॥ 'योऽयं योगः' इति प्रथमया प्राधान्येनेत्यर्थः । **प्रकृतत्वादिति** ॥ 'पूर्वार्धे' इति शेषः । **साध्याविशिष्टतेति** ॥ 'योगो न स्थिरस्थितिविषयः चञ्चलत्वात्' इति साध्याविशिष्टतेत्यर्थः । 'चञ्चलत्वात्' इत्यस्य 'अस्थिरत्वात्' इत्यर्थकत्वादिति भावः । **मनस इतीति** ॥ तथा च योगस्य स्थिरस्थित्यभावे मनसश्चञ्चलत्वं हेतुत्वेनाभिप्रेतमिति नोक्तदोष इत्यर्थः । व्यधिकरणत्वस्यास्मन्मेऽदूषणत्वादिति भावः । मनसश्चञ्चलत्वं च हेतुत्वेनाभि-

श्लोकः ३४,३५

प्रतमित्यत्र किं ज्ञापकम्? येनैवं व्याख्यायत इत्यत आह– **एतच्चेति** ॥ **उत्तरवाक्यादेवेति** ॥ 'चञ्चलं हि मनः कृष्ण' इत्युत्तरगीतावाक्यादेवेत्यर्थः ॥ ३३ ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **साध्याविशिष्टेति** । योगचञ्चलत्व-तदस्थिरत्वयोरभेदादिति भावः । **उत्तरवाक्यादिति** । 'चञ्चलं हि मनः' इति गीतावाक्यादित्यर्थः ॥ ३३ ॥

**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥**

**भावरत्नकोशः (सु.टि.)**– तदेव कुत इत्यत उक्तं– **चञ्चलं हीति** । सकलप्रमाणानुभव-सिद्धं तस्य चाञ्चल्यमिति द्योतयितुं हिशब्दः । प्रमाथि प्रमथनशीलं बलवत् विवेकेनाप्यजेयं दृढं विषयवासनाऽनुविद्धतया दुर्भेदम्, तस्य मनसो निग्रहं वायोरिव सुदुष्करं मन्ये इत्यर्जुनप्रश्नं स्वयमङ्गीकृत्य मनोनिग्रहोपायो भगवतोपदिश्यत इत्युच्यते **भगवानुवाच– असंशयमिति** । महाबाहो मनो दुर्निग्रहं स्वतः चलम् इत्यत्र असंशयम्, अर्थाभावेऽव्ययीभावः संशयाभावः । तथाऽपि अभ्यासेन विषयवैराग्येण च गृह्यते निगृह्यते । तुरेवार्थः ॥ ३४ ॥

**श्रीभगवानुवाच–**

**असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥**

## भाष्यम्

**उक्तं च–**

**'मनसश्चञ्चलत्वाद्धि स्थितिर्योगस्य वै स्थिरा ।**
**विनाभ्यासं न शक्या स्याद् वैराग्याद्वा न संशयः' इति व्यासयोगे**
**॥ ३४,३५ ॥**

भावप्रदीपिका (प.टी.)– एतच्छ्लोकार्थं समर्थयन्नुत्तरश्लोकं व्याचष्टे– **उक्तं चेति** ॥ ३५ ॥

श्लोकः ३६

प्रमेयदीपिका (ज.टी.)– अत्राऽगमं चाऽह– **उक्तं चेति** ॥ एतेन 'असंशयम्' इति परिहारवाक्यमपि व्याख्यातम् ॥

भावदीपः (रा.टि.)– ॥ **व्याख्यातमिति** ॥ 'अभ्यासेन वैराग्येण च विना दुर्ग्रहणं नास्त्यसंशयम्' इत्युक्त्या 'ताभ्यां लभ्यते' इत्यर्थस्यात्र प्रतीतेरिति भावः ॥ ३५ ॥

भावरत्नकोशः (सु.टि.)– ॥ **आगमे** 'अभ्यासं विना वैराग्यादिना योगस्य स्थिरा स्थितिर्न शक्या' इत्यन्वयः । 'आपादयितुम्' इति शेषः । 'मनसश्चञ्चलत्वाद्धि स्थितिर्योगस्य न स्थिरा' इत्येतावत एव प्रकृतोपयोगित्वेऽप्यधिकांशोदाहरणप्रयोजनं दर्शयति– एतेनेति । 'विना' इत्यर्धोदाहरणेनेत्यर्थः । न केवलं 'न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम्' इति प्रश्नवाक्यं पूर्वार्धेन व्याख्यातमिति अपिशब्दः ॥ ३४-३५ ॥

भावप्रकाशः (कृ.टि.)– ॥ **एतेनेति** ॥ विनाभ्यासादित्युत्तरार्धेनेत्यर्थः ॥ ३५ ॥

**असंयताऽत्मना योगो दुष्प्राप इति मे मतिः ।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥**

## भाष्यम्

**नच कदाचित् स्वयमेव मनो नियम्यते ।'शुभेच्छारहितानां च द्वेषिणां च रमापतौ । नास्तिकानां च वै पुंसां सदा मुक्तिर्न युज्यते' इति निषेधाद् ब्राह्मे ॥ ३६ ॥**

भावप्रदीपिका (प.टी.)– ननु किमभ्यासवैराग्याभ्याम् ? मत्तमातङ्गवन्मनसः स्वयमेवोपरमादित्याशङ्कां परिहर्तुमुत्तरश्लोकं तात्पर्यतः सप्रमाणकं व्याचष्टे– **नचेति** ॥ ३६ ॥

भावप्रकाशिका (न.टी.)– ननु कालतः स्वयमेव मनो नियम्यते । किं तत्राभ्यासेन ? वैराग्येण वा ? इत्यत आह– **नचेति** ॥ सदा इत्यस्यादितस्त्रिष्वपि सम्वन्धः । अनेन 'असंयत...' इति श्लोकस्य तात्पर्यमुक्तं भवति ॥ ३६ ॥

**प्रमेयदीपिका (ज.टी.)**– **'असंयत' इति श्लोको व्यर्थ इव प्रतीयते । तन्निवर्त्यामाशङ्कां सूचयंस्तात्पर्यमाह– नचेति ॥ 'यथा मत्तमातङ्गः स्वयमेव श्रान्तः शान्तो भवति तथा विषयैस्तृप्तं मनः कदाचित् स्वयमेव नियतं भवति । किमभ्यासादिना' इत्येतत् नैवेत्यर्थः । कुतः? इत्यत आह– शुभेति ॥ सदा इति पूर्वेण सम्बन्धः । अनेनात्र शुभेच्छादिकमप्युपलक्षितम् इति सूचितम् । मुक्तिबीजत्वात् मनोनियमनस्य मुक्तिरित्युक्तम् ॥ ३६ ॥**

**भावबोधः (र.टि.)**– ननु वैराग्यादिना विना मनो न नियम्यत इत्यत्र शुभेच्छादिरहितानां मुक्तिर्न जायत इति वचनं कथं प्रमाणमित्यत आह– **अनेनेति** ॥ **अत्र** 'अभ्यासेन' इति गीतावाक्ये । **मुक्तिबीजत्वादिति** । मुक्तिशब्देन तद्बीजमनोनियमनं लक्ष्यते । शुभेच्छादीनां साक्षान्मुक्तिहेतुत्वासम्भवादिति भावः ॥ ३६ ॥

**भावदीपः (रा.टि.)**– ॥ **अनेनात्र शुभेच्छादिकमप्युपलक्षितमिति** ॥ अत्र गीतायां 'वश्यात्मना तु यतता' इत्यनन्तरं 'शुभमिच्छता हरिद्वेषनास्तिक्याभ्यां हीनेन' इत्युपलक्षितमित्यर्थः । 'मनोनियमनं न जायते' इति वक्तव्ये 'मुक्तिर्न जायते' इत्युक्तिरयुक्तेत्यतः प्रकृतार्थसंवादाय मुक्तिपदेन मुक्तिहेतुर्मनोनियतिरेव ग्राह्येति भावेनाऽह– **मुक्तिबीजत्वादिति** ॥ ३६ ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **व्यर्थ इवेति** । **आपाततः** तथाप्रतीतेः 'इव' इत्युक्तम् । **मत्तमातङ्गः** मत्तगजः । 'अभ्यासादिना' इत्यत्रादिशब्देन वैराग्यग्रहः । **पूर्वेणेति** । सदा शुभेच्छारहितानाम्, सदा रमापतौ द्वेषिणाम्, सदा नास्तिकानामित्येवं पूर्वेण सम्बध्यत इत्यर्थः । अत्र 'वश्यात्मना तु यतता' इति गीतावाक्ये, सदाऽपि शुभेच्छा, सदा रमापतावद्वेषः, आस्तिकत्वं च योगावाप्तिं कामयमानस्य विशेषणान्यपेक्षितानि इति वश्यात्मपदेनोपलक्षितानि ज्ञातव्यानीति सूचितमित्यर्थः ।

'अभ्यासेन तु कौन्तेय' इति गीतावाक्ये अभ्यासवैराग्यपदाभ्यां शुभेच्छादिकं लक्षणीयमिति सूचितमिति अपरे । 'अभ्यासादिकं विना मनो नियन्तुं न शक्यते' इति प्रकृतेऽर्थे 'मुक्तिर्न जायते' इत्युक्तिः कथं प्रमाणमित्यतः अत्र मुक्तिशब्देन लक्षणया मनोनियमनमेव ग्राह्यम् इति भावेन लक्षणाबीजं शक्यसम्बन्धं दर्शयति– **मुक्तिबीजत्वादिति** ॥ 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इत्यादिशास्त्रादिति भावः ॥ ३६ ॥

यथा मत्तमातङ्गः स्वयमेव श्रान्तः शान्तो भवति, तथा विषयैस्तृप्तं मनः कदाचित् स्वयमेव नियतं भवति, किमभ्यासेन वैराग्येण चेत्यत उक्तम्– **असंयतात्मनेति** । असंयतात्मना अभ्यासवैराग्याभ्याम् अवशीकृतचित्तेन योगो दुष्प्रापः दुःसम्प्राप्यः, अप्राप्य इति, मे मतिः । उपायतः अभ्यासादिरूपात् वश्यात्मना अभ्यासवैराग्याभ्यां वशत्वमापादित आत्मा मनो यस्य तेन तु यतता यतमानेन अवाप्तुं शक्यः ॥ ३६ ॥

**भावदीपिका (श्री.टि.)**– ॥ **पूर्वेणेति** ॥ 'सदा शुभेच्छारहितानाम्, सदा रमापतौ द्वेषिणाम्, सदा नास्तिकानाम्' इति पूर्वेण सम्बन्ध इत्यर्थः । ननु 'अभ्यासादिना विना मनो न नियम्यते' इत्यत्र 'शुभेच्छारहितानां मुक्तिर्न जायते' इति वाक्यं कथं प्रमाणमित्यत आह– **अनेनेति** ॥ अत्र 'अभ्यासेन तु कौन्तेय' इति गीतावाक्ये । तथा चाभ्यासेन वैराग्येण शुभेच्छया रमापतौ स्नेहेन आस्तिक्यबुद्ध्या च मनो नियम्यत इति गीतायां ग्राह्यमिति भावः । तर्हि 'मनो-निग्रहो न जायते' इति वक्तव्ये, 'मुक्तिर्न जायते' इति कथमुक्तं प्रमाणमित्यत आह– **मुक्ति-वीजत्वादिति** ॥ शुभेच्छादीनां साक्षान्मुक्तिहेतुत्वासम्भवात् मुक्तिशब्देन तद्बीजं मनोनियमनं लक्ष्यत इति भावः । लक्षणाबीजसम्बन्धोपपादनाय 'मुक्तिवीजत्वात्' इत्युक्तमिति ध्येयम् ॥३६॥

**भावप्रकाशः (कृ.टि.)**– ॥ **अभ्यासादिनेति** ॥ आदिपदात् वैराग्यसङ्ग्रहः । **पूर्वेणेति** ॥ शुभेच्छारहितानामित्यादिनेत्यर्थः । **अत्रेति** ॥ 'अभ्यासेन तु कौन्तेय' इति गीतावाक्य इत्यर्थः । नन्वभ्यासादिकं विना मनो न नियम्यत इत्यत्र मुक्तिर्न जायत इत्युक्तिः कथं प्रमाणमित्यत आह– **मुक्तिवीजत्वादिति** ॥ ३६ ॥

**अर्जुन उवाच–**

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥**

## भाष्यम्

**अयतिः अप्रयत्नः ॥ ३७ ॥**

भावप्रदीपिका (प.टी.)– अयतिः इत्यचतुर्थाश्रमीति शङ्का मा भूदित्याह– **अयतिरिति** ॥

भावप्रकाशिका (न.टी.)– अयतिरप्रयत्नो न त्वसंन्यासीति भावः ॥ ३७ ॥

प्रमेयदीपिका (ज.टी.)– अचतुर्थाश्रमीति प्रतीतिनिरासाय आह– **अयतिरिति** ॥३७॥

भावरत्नकोशः (सु.टि.)– न विद्यते यतिः प्रयत्नो यस्य स तथोक्तः, 'यती प्रयत्ने' इति धातोरिति भाष्यभावः स्फुटत्वान्नोक्तः ॥

अभ्यासादिहीनस्य दशां पृच्छतीत्युच्यते **अर्जुन उवाच– अयतिरिति** ॥ अयतिः अप्रयत्नः, श्रद्धया 'अत्रोक्तमस्ति', 'अनेन मम प्रयोजनमस्ति' इत्येवंरूपबुद्ध्या उपेतः योगाच्चलितमानसः योगसंसिद्धिं ध्यानसम्पूर्तिं ध्यानफलं ज्ञानमिति यावत् । अप्राप्य हे कृष्ण कां गतिं गच्छति ॥३७॥

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८ ॥**

भावरत्नकोशः (सु.टि.)– उभयविभ्रष्टः ऐहिकामुष्मिकफलभोगविभ्रष्टः, स्वर्गाद्युपायात् ध्यानयोगाच्च विभ्रष्ट इति वा, अप्रतिष्ठः निराश्रयः ब्रह्मणः पथि ब्रह्मप्राप्त्युपाये विमूढः छिन्नाभ्रमिव वात्यया शकलीकृतमेघखण्ड इव नश्यति कच्चित् । दृष्टप्रश्ने 'कच्चित्' इत्यव्ययम् । 'कच्चित् कामप्रवेदने' इत्यमरोक्तेः ॥ ३८ ॥

**एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।**
**त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९ ॥**

भावरत्नकोशः (सु.टि.)– किं नश्यति नरकाद्यनर्थं प्राप्नोति, आहोस्विन्न नश्यतीति प्रश्नमूलम् एतत् संशयं त्वमेव विनाशयितुमर्हसीति स्पष्टम् उपपद्यते सम्भवति ॥ ३९ ॥

**श्रीभगवानुवाच–**

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।**
**न हि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥**

भावरत्नकोशः (सु.टि.)– एवं प्रश्ने तदुत्तरं भगवतोक्तम् इत्युच्यते **भगवानुवाच– पार्थे-त्यादिभिः सार्धैश्चतुर्भिः श्लोकैः** ॥ हे पार्थ ! इह लोके तस्य योगभ्रष्टस्यापि विनाशो दुर्गतिः

तिर्यगादिभावो न विद्यते नास्ति । अमुत्र विनाशो नरकाद्यनर्थो नैव विद्यते । कुत इत्यत उक्तम्– न हीति ॥ कल्याणकृत् ध्यानादिलक्षणकल्याणस्य कर्ता ॥ ४० ॥

**प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥**

भावरत्नकोशः (सु.टि.)– किं तर्हि तस्य भवति ? पुण्यकृताम् अश्वमेधादियाजिनाम्, । 'पुण्यकृतान्' इत्यपि पठन्ति । लोकान् प्राप्य तत्र लोकेषु शाश्वतीः नित्याः, वह्वीः, समाः संवत्सरान्, 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया, बहुषु संवत्सरेषु उषित्वा वसनमनुभूय शुचीनां यथोक्तकारिणां श्रीमतां भूतिमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥

**अथवा योगिनामेव कुले भवति धीमताम् ।**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥**

भावरत्नकोशः (सु.टि.)– धीमतां ज्ञानिनां योगिनामेव कुलेऽथवा भवति उत्पद्यते । अस्य फलत्वं घटयितुमुच्यते एतदिति । यदीदृशं जन्म इत्युक्तं विविधमपि जन्मेत्येतद् दुर्लभतरं दुःखलभ्यतरम् । हि प्रसिद्धम् ॥ ४२ ॥

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।**
**यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥**

भावरत्नकोशः (सु.टि.)– तत्र यथोक्तविशेषणे जन्मद्वये, पौर्वदेहिकं पूर्वदेहे भवं बुद्धिसंयोगं भगवति मनोनिवेशलक्षणं ध्यानं लभते । किञ्च ततो भूयः पूर्वकृतात् संस्काराद् बहुतरं संसिद्धौ योगसंसिद्धिविषये यतते ॥ ४३ ॥

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥**

## भाष्यम्

**योगस्य जिज्ञासुरपि, ज्ञातव्यो मया योग इति यस्यातीवेच्छा सोऽपि शब्दब्रह्म अतिवर्तते परं ब्रह्म प्राप्नोतीत्यर्थः ॥ ४४ ॥**

भावप्रदीपिका (प.टी.)– योगं समभ्यसतो मोक्षो भवतीति न चित्रम् । योगज्ञान-मिच्छतोऽपि मोक्षसम्भवादित्यभिप्रायेण 'जिज्ञासुरपि' इति व्याचष्टे– **योगस्येति** । शब्दब्रह्म विधिनिषेधादिरूपो वेदः ॥ ४४ ॥

भावप्रकाशिका (न.टी.)– न च योगमभ्यसन् ततो विभ्रष्टः तेनैवाभ्यासलेशेन योग-मासाद्याप्नोति भगवन्तमित्येतदाश्चर्यम् । ततोऽत्यन्तं योगज्ञानेच्छुरपि क्रमेणाप्नोति भगवन्त-मित्यभिप्रायेण (प्रवृत्तं) जिज्ञासुरपीति श्लोकं व्याचष्टे– **योगस्येति** । ज्ञातव्यः इत्यादिनाऽत्र ज्ञानेच्छुरेव जिज्ञासुः, न तु विचारकृदिति द्योतयति । ब्रह्मेशानादिसर्वशब्दार्थत्वात्, शब्दब्रह्म हिरण्यगर्भः । तं यदाऽतिवर्तते तदा परब्रह्मैव प्राप्नोतीत्यभिहितं भवति ॥ ४४ ॥

प्रमेयदीपिका (ज.टी.)– उप्रत्ययप्रयोगे 'न लोकाव्यय' (पा.सू.२.३.६९) इति षष्ठी-निषेधात् 'योगस्य स्वरूपम्' इत्यध्याहृत्य कश्चिद्व्याख्यातवान् । स श्रमो वृथैव । नञा निर्दिष्टमनित्यम् इत्यस्यानित्यत्वात् । अतः कात्यायनः 'द्विषः शतुर्वा वचनम्' (पा.सू.२.३.६९ वार्तिकम्) इत्याद्यवोचद् इत्यभिप्रेत्याह– **योगस्येति** ॥ 'ब्रह्मजिज्ञासा'(ब्र.सू.१.१.१) इत्यादाविव विचारार्थताशङ्कानिरासाय व्याचष्टे– **ज्ञातव्य इति** ॥ 'अतीव' इत्युप्रत्यय-स्यार्थः । 'सनाशंसभिक्ष उः' (पा.सू.३.३.६८) इति तच्छीलादौ तस्य विहितत्वात् । इच्छार्थे बाधकाभावादिति भावः ॥

'शब्दब्रह्मातिवर्तते' इत्येतद् 'वेदोक्तकर्मकारिभ्योऽतिरिच्यते' इति कश्चिद्व्याचष्टे । तदसत् । 'ततो याति परां गतिम्' (६-२२) इत्यस्यार्थस्य परामर्शादिति भावेनाऽह– **शब्देति** ॥ शब्द-ब्रह्मशब्देन वैदिकविधिनिषेधावत्रोच्येते । तदतिवर्तनं परब्रह्मप्राप्तस्यैवेत्यत एवमुक्तम् ॥ ४४ ॥

भावबोधः (र.टि.)– ॥ **द्विषः शतुरिति** ॥ तृनन्तशतृशब्दयोगेऽपि द्विष इति षष्ठीप्रयोग इति भावः ॥ ४४ ॥

श्लोकः ४४

**भावदीपः (रा.टि.)– ॥ अनित्यत्वादिति ॥** 'इकोऽचि विभक्तौ' (पा.सू.७.१.७३) इत्यत्राज्ग्रहणं 'हे वारि' इति सम्बुद्ध्यन्तवारिशब्दे नुमागमनिवृत्त्यर्थं क्रियते । 'इकोऽचि विभक्तौ' (पा.सू.) इत्येवोक्तौ च 'न लुमताङ्गस्य' (पा.सू.१.१.६३) इति सूत्रेण 'स्वमोर्नपुंसकात्' इति लुकि लुप्तविभक्तेरकार्यकरत्वेन विभक्तिपरत्वाभावेनैव नमुटो प्राप्तेः, 'व्यर्थं सदज्ग्रहणं 'न लुमताङ्गस्य'(पा.सू.१.१.६३) इति नञा निर्दिष्टस्यानित्यत्वं ज्ञापयति' इत्याहुः । स्वयं ज्ञापकान्तरमाह– **अत एवेति ॥** 'न लोकाव्ययनिष्ठा खलर्थतृनाम्' (पा.सू.२.३.६९) इति तृन्नन्तनिषेधस्यानित्यत्वादेव 'द्विष अप्रीतौ' (पा.धा.१०१३) इति धातोः शत्रन्तस्य योगे षष्ठीनिषेधो विकल्पेन भवति । 'चोरं द्विषन् चोरस्य द्विषन्' इति । 'न लोकाव्ययनिष्ठखलर्थतृनाम्' (पा.सू.२.३.६९) इति सूत्र एव वार्तिके वार्तिककृदवोचत् । अतो ज्ञायते 'न लोक' सूत्रनिषेधोऽनित्य इति भावः ॥ **तच्छीलादाविति ॥** 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' (पा.सू. ३.२.१३) इत्यधिकृत्य सन्नन्ताद् धातोः 'शंसु स्तुतौ' (पा.धा.७२८) इति धातोः, भिक्षशब्दाच्च उप्रत्ययविधानादित्यर्थः ॥ **परां गतिमितीति ॥** 'याति परां गतिमुत्तरश्लोकेन 'अशब्दं ब्रह्म' इत्यनेनोक्तार्थस्यापरामर्शादित्यर्थः ॥ ४४ ॥

**वाक्यार्थप्रदीपः (पां.टि.)– ॥ उप्रत्यययोगेति ॥** 'न लोकाव्ययनिष्ठा' इति षष्ठीनिषेधादिति । ल, उ, उक,अव्यय,निष्ठा, खलर्थ, तृन् इत्येतेषां प्रयोगे षष्ठीविभक्तिर्न भवतीति सूत्रार्थः । तथाच जिज्ञासुरित्युप्रत्ययान्तशब्दयोगात् योगस्येति षष्ठ्यनुपपन्नैवेति भावः ॥ अनित्यत्वे ज्ञापकमाह– **अत एवेति ॥** नया निर्दिष्टस्यानित्यत्वादेवेत्यर्थः ॥ **द्विषः शतुर्वा वचनमित्यादीति ॥** द्विषो मित्र इति योयं शतृप्रत्यय तत्प्रयोगे विकल्पेन प्रतिषेधो वक्तव्य इत्यर्थः । न लोकेति सौत्रनिषेधस्य नित्यत्वे तादृशकात्यायनीयनवकरहितनिषेधस्यानित्यत्वमवगम्यत इति भावः ॥ एतच्च न लोकेति सूत्रस्य षष्ठीमात्रनिषेधकत्वमभ्युपेत्योक्तम् । वस्तुतस्तु कर्तृकर्मणोः कृति इति प्राप्तकृद्योगषष्ठ्येवात्र निषिध्यते न शेषषष्ठ्यपि । अत एवोक्तं वृत्तिकृता । कर्तृकर्मणोः कृति इति प्राप्ता षष्ठी प्रतिषिध्यत इति । उक्तं च पदमञ्जर्यामपि । अत्रोदाहरणेषु सर्वत्र कारकषष्ठ्याः प्रतिषेधः । शेषषष्ठी तु भवत्येव । ब्राह्मणस्य कुर्वन् ओदनस्य पचन् । अपांपेरुरसिन एकस्य जिष्ण वो गुणैरित्यादि । तथाच प्रकृते कारकषष्ठ्याः निषेधेपि कर्मणोपि कर्मत्वाविवक्षया शेषत्वविवक्षया मानुरुध्येत । पितुः स्मरतीत्यादाविव शेषषष्ट्या अप्रत्यूहत्वात् । अत एव

षष्ठीमात्रनिषेधे उक्तप्रतिषेधे कर्मभाषायामप्रतिषेधः । अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः द्विषः शतुर्वा वचनमित्यादिकात्यायनवचनानर्थक्यमिति निरस्तम् । शेषविवक्षया चोरस्य द्विषन् इति कर्मत्वविवक्षया च चोरं द्विषन् इतिउभयथापि निष्पत्तौ प्रत्याख्यानस्येष्टत्वादिति ध्येयम् ॥ **तच्छीलादाविति** ॥ 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' (पा.सू.३.२.१३) इत्यतः तच्छीलादिष्वित्यनुवृत्तेरिति भावः ॥

**भावरत्नकोशः (सु.टि.)– ॥ उप्रत्ययेति ॥** जिज्ञासुशब्दस्य 'सनाशंसभिक्ष उः' इति विहितोप्रत्ययान्तत्वात् तद्योगे 'कटं चिकीर्षुः' इत्यादाविव द्वितीयैव स्यात्, न तु षष्ठीति । तद्घटनाय सङ्करः 'जिज्ञासुः योगस्य स्वरूपं ज्ञातुमिच्छन्' इति स्वरूपपदमध्याहृत्य व्याख्यातवानित्यर्थः । अनित्यत्वज्ञापकमाह– **अत एवेति** ॥ 'द्विष अप्रीतौ' इत्यतो 'द्विषोऽमित्रे' इति शतृप्रत्यये 'द्विषन्' इति रूपम् । तद्योगे विकल्पेन षष्ठीप्रतिषेध इति वार्तिकार्थः । 'न लोक' इति सूत्रे 'तृन्' इति प्रत्याहारस्य ग्रहणम् । 'तृन्' इति नेदं प्रत्ययग्रहणम् किं तर्हि प्रत्याहारग्रहणम् । 'लटः शतृ' इत्यतः प्रभृति आ तृनो नकारात्' इति भाष्यादावुक्तेः । तथा च द्विषः शतुरपि प्रत्याहारान्तःपातित्वेन तद्योगे नित्यं निषेधः प्राप्त एव । तत्र च विकल्पारम्भात् ज्ञापकात् 'न लोक' इति निषेधोऽनित्यः । ज्ञापकस्य सामान्यापेक्षत्वादिति भाव इति केचित् ।

स्वामिनस्तु 'न लुमता' इति निषेधस्य नित्यत्वे वारिशब्दे सम्बुद्धेर्लुकि तन्निमित्तनुमोऽप्राप्तेः 'इकोऽचि' इत्यच्ग्रहणं व्यर्थम् । न चान्यत्र हलादौ नुमभावार्थमिदम्, कृतेऽपि नुमि तल्लोपसम्भवात् । अतः 'इकोऽचि' इत्युक्तेरेवं ज्ञायते 'न लुमता' इत्यस्यानित्यत्वे सम्बुद्धेर्लुक्यपि प्रत्ययलक्षणत्वेन नुम् स्यात् । नच तल्लोपः शक्यः, 'न ङिसम्बुद्ध्योः' इति निषेधात् । अतस्तत्र नुमभावार्थम् अज्ग्रहणं कृतम् । तेन 'न लुमता' इति नञा निर्दिष्टो निषेधोऽनित्य इत्यतः पक्षे सम्बुद्धिनिमित्ते गुणे 'हे वारे' इति रूपमिति वैयाकरणैरेवोक्तत्वात्, 'न लोक' इति 'नञा निर्दिष्टोऽप्यनित्यः' इति भावेन 'अनित्यत्वात्' इत्युक्तम् ॥ अन्तरङ्गोपष्टम्भकमप्याह– **अत एवेति** ॥ उक्तनिषेधस्यानित्यत्वादेव 'चोरस्य द्विषन्', 'चोरं द्विषन्' इत्यत्र षष्ठीनिषेधो विकल्पितः कात्यायनेन इति उप्रत्ययान्तयोगेऽपि पाक्षिका षष्ठी युक्ता इत्यध्याहारश्रमो वृथैव परस्येति टीकाशय इति व्याख्यातवन्तः ।

श्लोकः ४४

**इत्यादाविवेति** ॥ 'अथातो ब्रह्मजिज्ञासा' 'जिज्ञासितं सुसम्पन्नम्' इत्यादौ जिज्ञासादिशब्दे यथा विचारार्थताऽस्ति, तथा जिज्ञासुशब्दे विचारार्थताशङ्कानिरासार्थमित्यर्थः । **ताच्छील्यादाविति** । 'आ क्वेः तच्छीलतद्धर्मतत्साधुकारिषु' इत्यधिकृत्य सन्नन्ताद्धातोः, 'शंसु स्तुतौ' इत्यस्माद्, भिक्षाशब्दाच्च उप्रत्ययो भवतीति ताच्छील्यादिविशिष्टकर्तरि उप्रत्ययस्य विहितत्वाद् 'अतीव' इत्यर्थभाषणं युक्तमिति भावः । 'ब्रह्मजिज्ञासा' इत्यादौ जिज्ञासाशब्दे अश्वकर्णमीमांसादिशब्द इव योगाभावाद् विचारे रूढिरभ्युपगता । जिज्ञासुशब्दे तु इच्छार्थकसन्प्रत्ययान्तत्वे बाधकाभावाद् योगज्ञानेच्छावानेवार्थ इति भावं प्राप्तशङ्कां निरसितुमाह– **इच्छार्थ** इति ॥

'शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलम् अतिवर्तते अपाकरिष्यति, किमुत बुद्ध्वा यो योगं तन्निष्ठोऽभ्यासं कुर्वन्' इति सङ्करभाष्यं तात्पर्यतोऽनुवदति **शब्दब्रह्मेति** । **अस्यार्थस्येति** । शब्दब्रह्मातिवृत्तिरूपस्यार्थस्य । 'ततो याति परां गतिम्' इत्यनेन परगतिशब्दितब्रह्माप्तिरूपत्वेनाभिधास्यमानत्वादित्यर्थः । ननु भवत्पक्षे शब्दब्रह्मातिवर्तनं कथं नाम ब्रह्मप्राप्तिः स्यादित्यत भाष्याशयमाह– **शब्दब्रह्मशब्देनेति** । अनन्तवर्णराशिरूपो वेदः शब्दब्रह्मशब्देनोच्यते, तत्प्रमाणकौ विधिनिषेधौ तेन लक्ष्येते । तदतिवर्तनं च परब्रह्मप्राप्तस्य सङ्गच्छते, नान्यस्य, इत्यन्यथाऽनुपपन्नार्थकथनपरं भाष्यमित्यर्थः ।

न च योगज्ञानेच्छामात्रेण कथं परब्रह्मप्राप्तिः ? तस्या भगवदपरोक्षमात्रसाध्यत्वस्य बहुप्रमाणप्रसिद्धत्वादिति वाच्यम् । योगस्य जिज्ञासुरपि भगवन्तं प्राप्नोति परम्परया, किमुत योगमभ्यस्यन्, इति कैमुत्याभिप्रायेण प्रवृत्तत्वात् । तदुक्तं प्राचीनटीकायाम् 'योगमभ्यस्यन् ततो विभ्रष्टः तेनैवाभ्यासलेशेन योगमासाद्याप्नोति भगवन्तमित्येतन्नाश्चर्यम् । यतोऽत्यन्तं योगज्ञानेच्छुरपि क्रमेणाप्नोति भगवन्तमित्यभिप्रायेण प्रवृत्तं 'जिज्ञासुरपि' इति श्लोकं व्याचष्टे' इति । प्राचीनटीकायां तु 'शब्दब्रह्म हिरण्यगर्भः, यदा च तमतिवर्तते तदा परब्रह्मैव प्राप्नोति, इत्यभिप्रायेणैवमभिहितम्' इत्युक्तम् ॥

कथं पूर्वाभ्यासेन पूर्वजन्मनि कृतोऽभ्यासः पूर्वाभ्यासः तेनैव, तेन बलवता अवशोऽपि स्वरसतया प्रवृत्तिप्रकर्षहीनोऽपि ध्यानयोगादौ ह्रियते प्रवर्त्यते । योगाच्चलितमानसस्य प्राप्य पुण्यकृतां लोकान् इत्यादिफलं कैमुत्येनाप्युच्यते **जिज्ञासुरपीति** । योगस्य योगं जिज्ञासुः 'ज्ञातव्यो

मया योगः' इति यस्यातीवेच्छाऽस्ति सोऽपि, 'शब्दब्रह्म'शब्देन वैदिकविधिनिषेधावत्र ग्राह्यौ। तदतिवर्तनं परं ब्रह्म प्राप्तस्यैव, नान्यस्येति जिज्ञासुमात्रस्यापि महाफलोक्तौ किमु कश्चित्कालं योगमनुष्ठातुरिति कैमुत्येनोक्तफलयोगोक्तिः ॥ ४४ ॥

**भावदीपिका (श्री.टि.)**– ॥ **न लोकेति** ॥ 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठी-निषेधात् जिज्ञासाशब्दस्यापि सन्नन्तत्वेन 'सनाशंसभिक्ष उः' इत्यनेनोप्रत्ययान्तत्वात्, तद्योगे 'योगस्य' इति षष्ठी न युक्तेति भावः। **इत्यस्येति** ॥ 'नञा निर्दिष्टमनित्यम्' इति वचनेन अस्य 'न लोक' इति सूत्रोक्तषष्ठीनिषेधस्यानित्यत्वादित्यर्थः। नञा निर्दिष्टस्यानित्यत्वे ज्ञापकमाह– **अत एवेति** ॥ नञा निर्दिष्टस्यानित्यत्वादेवेत्यर्थः। **कात्यायनः** वार्तिककारः। **द्विषः शतुर्वा वचनमिति** ॥ 'द्विष अप्रीतौ' इत्यस्माल्लादेशभूतशतृप्रत्यययोगे तत्कर्मणि षष्ठी विकल्पेन वाच्येत्यर्थः। आदिपदात् 'चोरस्य द्विषन्', 'चोरं द्विषन्' इत्युदाहरणं ग्राह्यम्। तथा च द्विष् अस्माल्लटि तस्य शत्रादेशे शकारऋवर्णयोर्लोपे, 'अत्' इति जाते, शतृप्रत्ययस्य उगित्त्वात् नुमागमे, संयोगान्ततकारलोपे 'द्विषन्' इति भवति। तथा च लस्य योगे 'न लोक' इति षष्ठ्या निषेधेऽपि, तद्योगे कात्यायनः षष्ठीं विहितवान्। तेन ज्ञायते 'नञा निर्दिष्टस्यानित्यत्वमिति' इति भावः।

यद्वा 'न लोक' इति तृन्नन्तशब्दयोगे षष्ठीनिषेधेऽपि 'द्विषः शतु' इत्यत्र तृन्नन्तशतृशब्दयोगे कात्यायनः षष्ठीं स्ववाक्येन प्रयुक्तवान्। तेन ज्ञायते 'नञा निर्दिष्टस्यानित्यत्वमिति' इति भावः। अत्र सर्वत्रापि गीतायां भाष्ये च योगशब्दो ध्यानयोगपरो मन्तव्यः। **विचारार्थतेति** ॥ ज्ञाने-च्छान्तर्णीतविचारलक्षणया, रूढ्या वा जिज्ञासाशब्दस्य विचारार्थकत्वेन 'योगस्य जिज्ञासुः-विचारयिता' इत्यर्थप्राप्तिशङ्का स्यादिति भावः। सन्नन्तजिज्ञासाशब्दस्य लक्षणया रूढ्या वा विचारार्थकत्वं कुत्र दृष्टमित्यत आह– **ब्रह्मजिज्ञासेति** ॥ **सनाशंसभिक्ष उरिति** ॥ सन्नन्ताच्छब्दात् आशंसेर्भिक्षेश्च उप्रत्ययः स्यात्, तच्छीलादाविति सूत्रार्थः। तथा च 'तच्छीलादौ' इत्यादिपदात् अतिशयरूपोऽप्यर्थो ग्राह्य इत्याशयः।

**इच्छार्थ इति** ॥ 'ब्रह्मजिज्ञासा' इत्यादौ तु 'यत्रानवसरः'इत्यादिप्रमाणबलेन कर्तव्य-पदाध्याहरस्य सिद्धतया, इच्छाया अविधेयत्वरूपं बाधकमस्तीति विचारलक्षणादि क्रियते। न

श्लोकः ४४

**इत्यादाविवेति ॥** 'अथातो ब्रह्मजिज्ञासा' 'जिज्ञासितं सुसम्पन्नम्' इत्यादौ जिज्ञासादिशब्दे यथा विचारार्थताऽस्ति, तथा जिज्ञासुशब्दे विचारार्थताशङ्कानिरासार्थमित्यर्थः । **ताच्छील्यादाविति ।** 'आ क्वेः तच्छीलतद्धर्मतत्साधुकारिषु' इत्यधिकृत्य सन्नन्ताद्धातोः, 'शंसु स्तुतौ' इत्यस्माद्, भिक्षाशब्दाच्च उप्रत्ययो भवतीति ताच्छील्यादिविशिष्टकर्तरि उप्रत्ययस्य विहितत्वाद् 'अतीव' इत्यर्थभाषणं युक्तमिति भावः । 'ब्रह्मजिज्ञासा' इत्यादौ जिज्ञासाशब्दे अश्वकर्णमीमांसादिशब्द इव योगाभावाद् विचारे रूढिरभ्युपगता । जिज्ञासुशब्दे तु इच्छार्थकसन्प्रत्ययान्तत्वे बाधकाभावाद् योगज्ञानेच्छावानेवार्थ इति भावं प्राप्तशङ्कां निरसितुमाह– **इच्छार्थ इति ॥**

'शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलम् अतिवर्तते अपाकरिष्यति, किमुत बुद्ध्वा यो योगं तन्निष्ठोऽभ्यासं कुर्वन्' इति सङ्करभाष्यं तात्पर्यतोऽनुवदति **शब्दब्रह्मेति । अस्यार्थस्येति ।** शब्दब्रह्मातिवृत्तिरूपस्यार्थस्य । 'ततो याति परां गतिम्' इत्यनेन परगतिशब्दितब्रह्माप्तिरूपत्वेनाभिधास्यमानत्वादित्यर्थः । ननु भवत्पक्षे शब्दब्रह्मातिवर्तनं कथं नाम ब्रह्मप्राप्तिः स्यादित्यत भाष्याशयमाह– **शब्दब्रह्मशब्देनेति ।** अनन्तवर्णराशिरूपो वेदः शब्दब्रह्मशब्देनोच्यते, तत्प्रमाणकौ विधिनिषेधौ तेन लक्ष्येते । तदतिवर्तनं च परब्रह्मप्राप्तस्य सङ्गच्छते, नान्यस्य, इत्यन्यथाऽनुपपन्नार्थकथनपरं भाष्यमित्यर्थः ।

न च योगज्ञानेच्छामात्रेण कथं परब्रह्मप्राप्तिः ? तस्या भगवदपरोक्षमात्रसाध्यत्वस्य बहुप्रमाणप्रसिद्धत्वादिति वाच्यम् । योगस्य जिज्ञासुरपि भगवन्तं प्राप्नोति परम्परया, किमुत योगमभ्यस्यन्, इति कैमुत्याभिप्रायेण प्रवृत्तत्वात् । तदुक्तं प्राचीनटीकायाम् 'योगमभ्यस्यन् ततो विभ्रष्टः तेनैवाभ्यासलेशेन योगमासाद्याप्नोति भगवन्तमित्येतन्नाश्चर्यम् । यतोऽत्यन्तं योगज्ञानेच्छुरपि क्रमेणाप्नोति भगवन्तमित्यभिप्रायेण प्रवृत्तं 'जिज्ञासुरपि' इति श्लोकं व्याचष्टे' इति । प्राचीनटीकायां तु 'शब्दब्रह्म हिरण्यगर्भः, यदा च तमतिवर्तते तदा परब्रह्मैव प्राप्नोति, इत्यभिप्रायेणैवमभिहितम्' इत्युक्तम् ॥

कथं पूर्वाभ्यासेन पूर्वजन्मनि कृतोऽभ्यासः पूर्वाभ्यासः तेनैव, तेन बलवता अवशोऽपि स्वरसतया प्रवृत्तिप्रकर्षहीनोऽपि ध्यानयोगादौ ह्रियते प्रवर्त्यते । योगाच्चलितमानसस्य प्राप्य पुण्यकृतां लोकान् इत्यादिफलं कैमुत्येनाप्युच्यते **जिज्ञासुरपीति ।** योगस्य योगं जिज्ञासुः 'ज्ञातव्यो

मया योगः' इति यस्यातीवेच्छाऽस्ति सोऽपि, 'शब्दब्रह्म'शब्देन वैदिकविधिनिषेधावत्र ग्राह्यौ। तदतिवर्तनं परं ब्रह्म प्राप्तस्यैव, नान्यस्येति जिज्ञासुमात्रस्यापि महाफलोक्तौ किमु कञ्चित्कालं योगमनुष्ठातुरिति कैमुत्येनोक्तफलयोगोक्तिः ॥ ४४ ॥

**भावदीपिका (श्री.टि.)**– ॥ **न लोकेति** ॥ 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठी-निषेधात् जिज्ञासाशब्दस्यापि सन्नन्तत्वेन 'सनाशंसभिक्ष उः' इत्यनेनोप्रत्ययान्तत्वात्, तद्योगे 'योगस्य' इति षष्ठी न युक्तेति भावः। **इत्यस्येति** ॥ 'नञा निर्दिष्टमनित्यम्' इति वचनेन अस्य 'न लोक' इति सूत्रोक्तषष्ठीनिषेधस्यानित्यत्वादित्यर्थः। नञा निर्दिष्टस्यानित्यत्वे ज्ञापकमाह– **अत एवेति** ॥ नञा निर्दिष्टस्यानित्यत्वादेवेत्यर्थः। **कात्यायनः** वार्तिककारः। **द्विषः शतुर्वा वचनमिति** ॥ 'द्विष अप्रीतौ' इत्यस्माल्लादेशभूतशतृप्रत्यययोगे तत्कर्मणि षष्ठी विकल्पेन वाच्येत्यर्थः। आदिपदात् 'चोरस्य द्विषन्', 'चोरं द्विषन्' इत्युदाहरणं ग्राह्यम्। तथा च द्विष् अस्माल्लटि तस्य शत्रादेशे शकारऋवर्णयोर्लोपे, 'अत्' इति जाते, शतृप्रत्ययस्य उगित्त्वात् नुमागमे, संयोगान्ततकारलोपे 'द्विषन्' इति भवति। तथा च लस्य योगे 'न लोक' इति षष्ठ्या निषेधेऽपि, तद्योगे कात्यायनः षष्ठीं विहितवान्। तेन ज्ञायते 'नञा निर्दिष्टस्यानित्यत्वमिति' इति भावः।

यद्वा 'न लोक' इति तृन्नन्तशब्दयोगे षष्ठीनिषेधेऽपि 'द्विषः शतु' इत्यत्र तृन्नन्तशतृशब्दयोगे कात्यायनः षष्ठीं स्ववाक्येन प्रयुक्तवान्। तेन ज्ञायते 'नञा निर्दिष्टस्यानित्यत्वमिति' इति भावः। अत्र सर्वत्रापि गीतायां भाष्ये च योगशब्दो ध्यानयोगपरो मन्तव्यः। **विचारार्थतेति** ॥ ज्ञाने-च्छान्तर्णीतविचारलक्षणया, रूढ्या वा जिज्ञासाशब्दस्य विचारार्थकत्वेन 'योगस्य जिज्ञासुः-विचारयिता' इत्यर्थप्राप्तिशङ्का स्यादिति भावः। सन्नन्तजिज्ञासाशब्दस्य लक्षणया रूढ्या वा विचारार्थकत्वं कुत्र दृष्टमित्यत आह– **ब्रह्मजिज्ञासेति** ॥ **सनाशंसभिक्ष उरिति** ॥ सन्नन्ताच्छब्दात् आशंसेर्भिक्षेश्च उप्रत्ययः स्यात्, तच्छीलादाविति सूत्रार्थः। तथा च 'तच्छीलादौ' इत्यादिपदात् अतिशयरूपोऽप्यर्थो ग्राह्य इत्याशयः।

**इच्छार्थ इति** ॥ 'ब्रह्मजिज्ञासा' इत्यादौ तु 'यत्रानवसरः'इत्यादिप्रमाणबलेन कर्तव्य-पदाध्याहरस्य सिद्धतया, इच्छाया अविधेयत्वरूपं बाधकमस्तीति विचारलक्षणादि क्रियते। न

चात्रेच्छार्थत्वे तथा बाधकमस्तीत्याशयः । **परामर्शादिति** ॥ 'शब्दब्रह्मातिवर्तते' इत्यनेनेत्यर्थः । परामर्शस्तु पूर्वोक्तस्येव वक्ष्यमाणस्यापि युक्तः । यथोक्तं शास्त्रदीपिकायाम् 'अथैष ज्योतिः' इति वाक्यविचारदशायाम् 'पूर्वोक्तस्य परामर्शः, वक्ष्यमाणस्य च क्वचित्' इति । यद्वा 'ततो याति' इति वाक्येन 'शब्दब्रह्म' इति वाक्योक्तार्थस्य परामर्शादित्यर्थः । **इत्यत एवमुक्तमिति** ॥ इत्याशयेन 'परं ब्रह्माप्नोति' इत्युक्तमित्यर्थः ॥ ४४ ॥

**भावप्रकाशः (कृ.टि.)**– 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' इति सूत्रेण क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययाः तच्छीलादिषु कर्तृषु बोद्धव्या इत्युक्तत्वात् । उप्रत्ययस्य च तन्मध्यपतितत्वादिति भावः । **अस्यार्थस्येति** ॥ शब्दब्रह्मातिवृत्तिरूपस्यार्थस्य 'ततो याति परां गति'मित्यनेन ब्रह्मप्राप्तिरूपत्वेनाभिधास्यमानत्वादिति भावः ॥ ४४ ॥

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥**

## भाष्यम्

**नैकजन्मनीत्याह– प्रयत्नादिति॥ जिज्ञासुर्ज्ञात्वा प्रयत्नं करोति । एवमनेकजन्मभिः संसिद्धोऽपरोक्षज्ञानी भूत्वा परां गतिं याति । आह च–**

**'अतीव श्रद्धया युक्तो जिज्ञासुर्विष्णुतत्परः ।**
**ज्ञात्वा ध्यात्वा तथा दृष्ट्वा जन्मभिर्बहुभिः पुमान् ।**
**विशेन्नारायणं देवं नान्यथा तु कथञ्चन' इति नारदीये ॥ ४५ ॥**

भावप्रदीपिका (प.टी.)– योगजिज्ञासूनामेव मोक्षश्चेत् किं योगेन ? तत्साध्यज्ञानेन च ? इत्याशङ्कोत्तरतयोत्तरश्लोकमवतार्य सप्रमाणकं व्याचष्टे– **नैकेति** ॥ ४५ ॥

भावप्रकाशिका (न.टी.)– न च योगजिज्ञासोरुक्तक्रमेण परब्रह्मावाप्तिः, तस्मिन्नेव जन्मनि ब्रह्मानवाप्त्या तदभावः शङ्कनीय इति भावेनोत्तरं श्लोकमवतार्य व्याचष्टे– **नैकेति** । 'संसिद्ध'पदव्याख्या अपरोक्षज्ञानी भूत्वा इति । योगजिज्ञासोरुक्तक्रमेण परब्रह्मावाप्तिं पुराणवाक्येन स्थापयति । अत आह– **चेति** ॥ ४५ ॥

श्लोकः ४५

**प्रमेयदीपिका (ज.टी.)**– योगजिज्ञासामात्रेण परब्रह्मप्राप्तिश्चेद् योगानुष्ठानवैयर्थ्यं स्यादित्यत एतदेवाशङ्क्य भगवतैवोत्तरं दत्तमित्याह– **नैकेति** ॥ न योगजिज्ञासामात्रेणेत्यभिप्रायः । अत्र योगजिज्ञासोः अपरामर्शात् कथं तद्विषयमेतत्? इत्यतोऽध्याहारेण व्याचष्टे– **जिज्ञासुरिति** ॥ ज्ञात्वा 'योगम्' इति शेषः । 'यातनानन्तरमनेकजन्मसंसिद्धः' इत्यन्यथाप्रतीतिनिरसाय आह– **एवमिति** ॥ योगे सम्पूर्णे संसिद्धेर्विलम्बे कारणाभावादिति भावः ॥ व्याख्यातार्थे पुराणसम्मतिमाह– **आह चेति** ॥ ४५ ॥

**भावरत्नकोशः (सु.टि.)**– 'योगानुष्ठानवैयर्थ्यम्' इति कृतचोद्यं भाष्यभावोक्त्या परिहरति– **न योगेति** ॥ 'योगजिज्ञासोः' इत्यत्रोक्तरीत्या षष्ठीति पक्षे, शेषषष्ठीति पक्षे च 'षष्ठी' इति समासः । 'योगं जिज्ञासुः' इति द्वितीयान्तत्वे 'अन्नबुभुक्षुः' इति भाष्यप्रयोग इव 'श्रितादिषु गमिगाम्यादीनाम्' इति वक्तव्यात् द्वितीयासमास इत्यप्याहुः । 'प्रयतनादधिकं यतमानो योगी अनेकेषु जन्मसु संसिद्धः सन्' इति सङ्करभाष्यं सङ्क्षेपेणानुवदति– **यतनानन्तरमिति** । अपव्याख्यां भाष्यभावोक्त्या प्रत्याख्याति– **योग इति** । **संसिद्धेः** अपरोक्षज्ञानस्य । व्याख्यातार्थे योगजिज्ञासोरपि प्रणाडिकया ब्रह्मप्राप्तिरस्तीत्यर्थे ॥

योगजिज्ञासामात्रेण परब्रह्मप्राप्तिश्चेत्, योगानुष्ठानवैयर्थ्यं स्यादित्यत उच्यते– **प्रयत्नादिति** । योगं जिज्ञासुः ज्ञात्वा प्रयत्नं करोति । 'प्रयत्नाद्यतमानः' इत्यस्य 'अधिकं प्रयत्नं कुर्वन्' इत्यर्थ इति एके । ततो यत्नाद् योगी ध्यानयोगसम्पन्नः संशुद्धकिल्बिषः निर्धूतपापः अनेकजन्मभिः संसिद्धो अपरोक्षज्ञानी भूत्वा, ततः अपरोक्षज्ञानात् परां गतिं याति । न जिज्ञासामात्रेण, इत्यभिप्रायः ॥ ४५ ॥

**भावदीपिका (श्री.टि.)**– ॥ **नैकजन्मनीति** ॥ भाष्यस्य 'शब्दब्रह्मातिवर्तते' इत्यन्वयः । ननु योगजिज्ञासामात्रेण परब्रह्मप्राप्तिश्चेत्, योगानुष्ठानवैयर्थ्यं स्यात् इत्येतदेवाशङ्क्य भगवता यद्युत्तरं दीयते, तर्हि 'न योगजिज्ञासामात्रेणेत्याह' इति भाष्यकारैर्वक्तव्यत्वेन 'नैकजन्मनीत्याह' इत्यसङ्गतं कथमुक्तमित्यतस्तदभिप्रायमाह– **न योगेति** ॥ अत्र 'प्रयत्नात्' इति वाक्ये । **अपरामर्शादिति** ॥ पूर्वश्लोके कर्तृत्वेनोक्तो योगजिज्ञासुः अत्र श्लोके कर्तृत्वेन न परामृश्यते, तत्परामर्शकशब्दाभावादिति भावः । **अध्याहारेणेति** ॥ 'प्रयत्नाद्यतमानस्तु' इत्यनुवादादिति

श्लोकः ४६,४७

भावः । अत्र प्रयत्नशब्देन श्रवणं मननं ध्यानं चोच्यते । **एवमितीति** ॥ एवमनेकजन्मभिः यज्जन्मनि योगजिज्ञासाप्रयत्नादिकं जातं तज्जनमारभ्यानेकजन्मभिः संसिद्ध इत्यर्थः । यतनानन्तरम् अनेकजन्मभिरित्यर्थः किं न स्यादित्यत आह– **योग इति** ॥ श्रवणमननरूपप्रयत्नेन ध्याने परिपूर्णे सतीत्यर्थः । **संसिद्धेः** अपरोक्षज्ञानस्य । भाष्योदाहृते प्रमाणे 'जिज्ञासुः' इत्यनन्तरं 'बहुभिर्जन्मभिर्ज्ञात्वा' इति योज्यम् । जिज्ञासाजन्मारभ्य बहुभिर्जन्मभिर्ज्ञात्वेत्यर्थः ॥ ४५ ॥

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥**

भावरत्नकोशः (सु.टि.)– योगः स्तूयते– **तपस्विभ्य इति** ॥ कृच्छ्रादिचारिभ्यः, ज्ञानिभ्यः योगज्ञानिभ्योऽपि, कर्मिभ्यः यज्ञादिकारिभ्योऽपि योगी ध्यानमनुतिष्ठन् अधिकः उत्तमः । तस्मात् एवं योगस्य तपआदिभ्य उत्तमत्वात् ॥ ४६ ॥

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥**

॥ ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे षष्ठोऽध्यायः ॥

## भाष्यम्

**ज्ञानिभ्यः योगज्ञानिभ्यः । तपस्विभ्यः कृच्छ्रादिचारिभ्यः ।उक्तं च**

**'कृच्छ्रादेरपि यज्ञादेर्ध्यानयोगो विशिष्यते ।**
**तत्रापि शेषश्रीब्रह्मशिवादिध्यानतो हरेः ॥**
**ध्यानं कोटिगुणं प्रोक्तमधिकं वा मुमुक्षुणाम्' इति गारुडे ।**

**'अज्ञात्वा ध्यायिनो ध्यानाज्ज्ञानमेव विशिष्यते ।**
**ज्ञात्वा ध्यानं ज्ञानमात्रात्, ध्यानादपि तु दर्शनम् ।**
**दर्शनादपि भक्तेश्च न किञ्चित् साधनाधिकम्' इति च नारदीये ॥४६-४७॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये षष्ठोऽध्यायः ॥ ६ ॥

श्लोकः ४६,४७

भावप्रदीपिका (प.टी.)– ज्ञानस्य योगसाध्यत्वात् कथं ततोऽधमत्वम् ? इत्यत आह– **ज्ञानिभ्य इति** । ननु ज्ञानस्यापि तपोरूपत्वात् कथं तपोधिकत्वं योगस्यैव ? इत्यत आह– **तपस्विभ्य इति** । उक्तार्थस्थापनपूर्वकमुत्तरश्लोकव्याख्यानाय पुराणवचनमुदाहरति– **उक्तं चेति** । अनेनायमर्थः सिद्ध्यति 'सर्वेषां योगिनां मध्ये यो मां विषयार्थी भजते स युक्ततरः । यस्तु मद्व्रतेनान्तरात्मना भजते स युक्ततमः' इति । ननु ज्ञानशब्देन भगवज्ज्ञानमेव किं न स्यात् ? कुतो योगज्ञानम् ? इत्यत आह– **अज्ञात्वेति** ।। ४६–४७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां श्रीपद्मनाभतीर्थभट्टारकविरचितयां श्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां षष्ठोध्यायः ।।

भावप्रकाशिका (न.टी.)– यत एवं योगज्ञानेच्छुरप्यन्ततः परमाप्नोति, अतः सर्वसाधनोत्तमत्वादवश्यानुष्ठेयो योग इति भावेनोत्तरं श्लोकं व्याचक्षाणः तद्विषयज्ञानादेव ध्यानयोगोऽधिकः, न परमात्मज्ञानादपीत्याह – **ज्ञानिभ्य इति** । ज्ञानानुसन्धानस्यैव मुख्यतपस्त्वाद्योगस्य च तदुत्तमत्वनियमासम्भवात् । अत्र कृच्छ्रादिचरणं तप इति भावेनाह– **तपस्विभ्य इति ।।**

ध्यानस्य कृच्छ्राद्युत्तमत्वमुत्तरश्लोकव्याख्याने गारुडपुराण इत्याह– **उक्तं चेति** । एतदुक्तं भवति । सर्वेषां योगिनां मध्ये यः श्रद्धावान् योगेन हरिं भजते अणिमादिफलगतेनाप्यन्तरात्मना स युक्ततरः । रमाविरिञ्चादिसर्वयोगिभ्यो हरिगतेनैवान्तरात्मना चेत् युक्ततम इति । ननु ध्यानयोगः परमात्मज्ञानादप्युत्तमः किं न स्यादित्यत आह– **अज्ञात्वेति** । तदेवं ज्ञानध्यानयोः परस्परोत्तमत्वात्, ध्यानयोगः स्वविषयज्ञानादेवाधिको न भगवज्ज्ञानात् परोक्षादपि । किं पुनरपरोक्षज्ञानात् भक्तितश्चेत्यर्थः । 'यो मां भजते स युक्ततमः' इति भक्तिर्हि सर्वसाधनाधिकत्वेनोच्यते ।। ४६, ४७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां षष्ठोऽध्यायः ।।

प्रमेयदीपिका (ज.टी.)– ननु ज्ञानं योगस्य फलम् । तत्कथं ज्ञानिभ्योऽप्यधिको मतः ? इत्यत आह– **ज्ञानिभ्य इति** ।। यद्यपि ज्ञानतपसा पूता इति ज्ञानमपि तपः । तथाऽपि तदतिरिक्तमेवात्र विवक्षितमित्याह– **तपस्विभ्य इति** ।। ब्रह्मज्ञानादाधिक्यस्यासम्भवाद्योग-

श्लोकः ४६,४७

ज्ञानाधिक्यस्य पृथगुक्तत्वादिति भावः । अत एव पूर्वं तद्व्याख्यातम् ॥ उक्तार्थमुपपादयन् श्लोकद्वयार्थं पुराणवाक्येनाऽह– **उक्तं चेति** ॥ मुमुक्षुणां मुमुक्षूणाम् । एतेन सर्वेषामपि योगिनां मध्ये यो मां भजते स युक्ततरो मतः । तत्रापि मद्गतेनान्तरात्मना यो भजते स युक्ततमो मतः इति व्याख्यातं भवति । ज्ञानिभ्योऽपि मतोऽधिक इत्येतद्योगज्ञानविषयमेव, न तद् ब्रह्मज्ञानविषयम् इत्येतत् पुराणवाक्येन स्थापयति– **अज्ञात्वेति** ॥ 'योगम्' इति शेषः । साधनाधिकं साधनेष्वधिकम् ॥ ४६,४७ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां श्रीजयतीर्थमुनिविरचितायां प्रमेयदीपिकायां षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

**भाववोधः (र.टि.)**– ॥ **अत एवेति** ॥ तपश्शब्दस्य योगज्ञानपरत्वप्रदर्शनार्थत्वादेवेत्यर्थः ॥ ४७ ॥

॥ इति श्रीमद्भगवद्गीताभाष्यटीकाभाववोधे षष्ठेऽध्यायः ॥

**भावदीपः (रा.टि.)**– ॥ **अत एवेति** ॥ 'तपस्विपदेन ज्ञानग्रहः' इति ज्ञापनार्थत्वादेव 'ज्ञानिभ्यः' इतिपदं पूर्वं व्याख्यातम् । अन्यथा पाठक्रमात् तपस्विपदमेव प्राग् व्याख्येयमिति भावः ॥ **योगमिति शेष इति** ॥ एतेन ज्ञानमेवेति ज्ञात्वेति च योगज्ञानविषयमेवेति दर्शितम् । कर्मधारयपक्षे अधिकसाधनमिति स्यादित्यत आह– **साधनेष्वधिकमिति** ॥ ४६,४७ ॥

॥ इति श्रीमद्गीताभाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते षष्ठोऽध्यायः ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ॥ **मुमुक्षुणामिति** ॥ 'छन्दस्युभयथा' इत्यतो नामि दीर्घत्वाभावो मूले युक्त इति भावः ॥

॥ इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसरणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यचरणानां निजशिष्यकेशवेन विरचिते व्याकरणस्पृष्टप्रमेयदीपिकावाक्यार्थप्रदीपे षष्ठोऽध्यायः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ 'तपस्विभ्यः' इत्यत्र तपःशब्देन ज्ञानस्यापि ग्रहणे दोष इति चेत्, किं योगस्य ब्रह्मज्ञानात् आधिक्यं वक्तव्यम्, योगज्ञानाद्वेति विकल्प्य आद्ये दोषमाह– **ब्रह्मेति** ॥ 'न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक्' इत्यादिशास्त्राद् ब्रह्मज्ञानाधिक्यस्य योगादौ

श्लोकः ४६,४७

क्वाप्यसम्भवादित्यर्थः । द्वितीय आह– **योगेति** ।। 'ज्ञानिभ्योऽपि मतोऽधिकः' इत्यनेन योगज्ञानाद् आधिक्यस्य योगे पृथगुक्तत्वेनात्रावक्तव्यत्वात्, तपःशब्देन कृच्छ्राद्येव ग्राह्यमिति भाव इत्यर्थः । अत **एवेति** । तपस्विशब्दगततपःशब्दस्य योगज्ञानपरत्वासम्भवादेव, 'तपस्विभ्यः' इति पद-व्याख्यानात् पूर्वं 'ज्ञानिभ्यः' इति पदं 'योगज्ञानिभ्यः' इति व्याख्यातम् । अन्यथा पाठक्रमात् तदेवादौ व्याख्येयं स्यादिति भावः ।

'तपस्विभ्यः कर्मिभ्यश्चाधिको योगी' इत्यस्य तात्पर्यवर्णनपरे 'कृच्छ्रादेः' इत्यर्धे तपःशब्देन कृच्छ्रादि, कर्मशब्देन यज्ञादि, योगशब्देन ध्यानयोगश्च ग्राह्य इति भावेनाह– **उक्तार्थमिति** । 'छन्दस्युभयथा' इति 'मुमुक्षुणाम्' इति पुराणे नामि दीर्घत्वं नाश्रितमिति भावेनाह– **मुमुक्षुणामिति** ।

**एतेन** 'तत्रापि शेषश्रीब्रह्मशिवादि' इति पुराणोदाहरणेन । **सर्वेषामिति** । श्रीब्रह्म-शेषादिसाधारण्येन ध्यानमात्रवन्तो ये युक्तशब्दिता योगिनस्तेषां सर्वेषां मध्य इत्यर्थः । 'माम्' इत्यनन्तरं भावप्रदीपिकारीत्या 'विषयार्थी' इति, प्राचीनटीकारीत्या 'अणिमादिफलकत्वे-नाप्यन्तरात्मना' इति वा संयोज्यम् । तेन युक्ततमादप्यवरत्वं सिद्ध्यति । तत्रापि युक्ततरवर्ग-मध्येऽपि **इत्येतदिति** । इत्यत्र विद्यमानं ज्ञानिशब्दप्रकृतिभूतं ज्ञानप्रातिपदिकमित्यर्थः । **योगमिति शेष इति** । अनेन 'योगं सम्यग्योगप्रकारमज्ञात्वा ध्यानवतः पुरुषस्य ध्यानात् ज्ञानं सम्यग्योग-प्रकारकं ज्ञानं विशिष्यते । ज्ञानमात्रं तु विशिष्यते । दर्शनं तु ध्यानादपि विशिष्यते' इति भाष्यं योजितं भवति ।

भाष्ये 'भज सेवायाम्' इति धातोः सेवारूपभक्तेः 'भजते' इत्यनेनैव लाभ इति 'भक्तेश्च' इत्युक्तम् । 'यस्मादधिकम्' इत्यधिकशब्दयोगे पञ्चमीवत्, अत्रापि 'साधनेभ्योऽधिकम्' इति विग्रहाश्रयणे 'दर्शनाच्चैव भक्तेश्च' इति पञ्चम्यनन्वय इत्यतो व्याचष्टे– **साधनेष्वधिकमिति** ।। 'तदस्मिन्नधिकम्' इति दर्शनादधिकशब्दयोगे सप्तमी चास्ति । सा च 'सप्तमी' योगविभागात् समस्यत इति भावः ।।

योगिनामप्यस्ति तारतम्यमित्युच्यते– **योगिनामिति** । सर्वेषामपि योगिनां मध्ये यः श्रद्धाशब्दितमद्भक्तिमान् सः एव युक्तो मतः । तत्रापि यो मां भजते स युक्ततरो मतः, तत्रापि

श्लोकः ४६,४७

मद्गतेनान्तरात्मना फलकामनां विना यो मां भजते स युक्ततमः अतिशयेनोत्तमो मे मम मतः 'मतिबुद्धिपूजार्थेभ्यश्च' इति षष्ठी ॥ ४७ ॥

स्वतन्त्रः कर्ताऽयं मुररिपुरहं कर्मसु परं
प्रतिच्छायारूपः किमपि च करोमि स्वविहितम् ।
इति प्राज्ञैर्ज्ञात्वा सकलसुकृतानि प्रतिदिनं
हरावेव न्यस्यन् प्रथित इह तु जड (न) इति सः ॥

मादृशस्स्वलनं नैव दोषः श्रीभाष्यटीकयोः ।
किन्तु तत्सेवनोद्युक्ता शोध्या मद्गीर्दयालुभिः ॥

आर्यस्वान्ताम्भोजहंसायमानौ संसाराम्भोराशिनावौ समानौ ।
भूयास्तां तौ भूतये भूरिमानौ वेदव्यासानन्दतीर्थाभिधानौ ॥

श्रीमद्गीताभाष्यटीकाश्रीषष्ठाध्यायसेवया ।
गुणिनः परितुष्यन्तु गुणग्रहणभूषणाः ॥

**॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सूरीन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रयतिविरचितायां भावरत्नकोशसमाख्यायां प्रमेयदीपिकाव्याख्यायां षष्ठोऽध्यायः ॥**

**भावदीपिका (श्री.टि.)– ॥ तत्कथमिति ॥** न हि फलवतः सकाशात् साधनवानधिक इति भावः । 'पूताः' इत्यनन्तरम् 'उक्तत्वेन' इति शेषः । ननु ज्ञानरूपमेव तपः कुतो न गृह्यत इति चेत्, तत्र प्रष्टव्यम्– किं ज्ञानशब्देन ब्रह्मापरोक्षज्ञानं गृहीत्वा तपस्विभ्यः ब्रह्मपरोक्षज्ञानिभ्यो ध्यानयोगी अधिक इत्यर्थो गृह्यते उत ज्ञानशब्देन योगज्ञानमात्रं गृहीत्वा तपस्विभ्यः योगज्ञानवद्भ्यो ध्यानयोगी अधिक इत्यर्थो गृह्यते । नाद्य इत्याह– **ब्रह्मज्ञानादिति ॥ असम्भवादिति ॥** ध्यानस्य ब्रह्मज्ञानाद् आधिक्यस्यास्भवेन तद्वतः सकाशात् ध्यानयोगिन आधिक्यं न सम्भवतीत्यर्थः । न द्वितीय इत्याह– **योगेति ॥** । योगज्ञानवतः सकाशाद् ध्यानयोगिन आधिक्यस्य 'ज्ञानिभ्योऽपि मतोऽधिकः' इत्यनेनोक्तत्वेन 'तपस्विभ्योऽधिको योगी' इत्यस्य पौनरुक्त्यप्रसङ्गादिति भावः । अत्रोपष्टम्भकमाह– **अत एवेति ॥** पौनरुक्त्यप्रसङ्गेन तपःशब्दस्य योगज्ञानपरत्वासम्भवप्रदर्शनार्थमेव पश्चादुक्तमपि 'ज्ञानिभ्यः' इति पदं 'तपस्विभ्यः' इत्यपेक्षया पूर्वं

व्याख्यातमित्यर्थः । अन्यथा क्रमोल्लङ्घने निमित्ताभावादिति भावः । **मुमुक्षुणामिति** ॥ नामि दीर्घाभावश्छान्दस इति भावः ॥

**'कृच्छ्रादेः'** इति प्रमाणस्यायमर्थः । कृच्छ्राद्यपेक्षया ध्यानयोगो विशिष्यते । तत्रापि ध्यानयोगेऽपि भगवद्भक्त एव कार्यार्थे शेषादिध्यानं करोति तद्ध्यानतः हरेर्ध्यानं मोक्षेतरफलकामनया क्रियमाणं कोटिगुणं प्रोक्तम् । मुमुक्षुणां मोक्षेतरफलकामनां विहाय केवलं मोक्षेच्छूनां यद् हरेर्ध्यानं तत् पूर्वोक्तकोटिगुणध्यानापेक्षया अधिकं वा अधिकमेवेति । यथोक्तं तात्पर्ये 'मद्भक्तोऽपि हि कार्यार्थी यो ध्यायेदन्यदेवताः' इत्यादि ॥

**एतेनेति** ॥ मद्भक्त एव यः कार्यार्थमन्यदेवताध्यानं करोति स युक्तो ध्यानी मे मत इत्यादौ ग्राह्यम् । सर्वेषामपि योगिनां मध्ये इतरफलकामनया यो मां भजते स मे युक्ततरो मत एतद्ध्यानस्यान्यदेवताध्यानात् कोटिगुणत्वात् । तत्रापि मद्भजकेष्वपि इतरकामनां त्यक्त्वा मोक्षेच्छया मद्गतेनान्तरात्मना यो मां भजते स मे युक्ततमो मतः । इतरकामनया क्रियमाण-हरिध्यानापेक्षयैतद्ध्यानस्याधिकत्वादित्यर्थः ।

**योगमितीति** ॥ तथा च योगापरपर्यायध्यानस्वरूपमज्ञात्वा ध्यायिनः ध्यानं कुर्वतो ध्यानात् ज्ञानं योगापरपर्यायध्यास्वरूपज्ञानमेव विशिष्यते । ज्ञानमात्रात् योगापरपर्यायध्यानस्वरूपज्ञान-मात्रात् ज्ञात्वा ध्यानं योगापरपर्यायध्यानस्वरूपं ज्ञात्वा तत्पूर्वकं क्रियमाणं ध्यानं विशिष्यत इत्यर्थो द्रष्टव्यः । 'साधनेभ्योऽधिकम्' इत्यर्थस्य प्रकृतानुपयोगात् तदनूद्य व्याचष्टे– **साधनाधिकमिति** ॥ ४६–४७ ॥

इति यदुवरगीताभाष्यटीकासु युक्ताऽऽशयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराट्छात्रचीर्णा समगमदयमध्यायोऽन्तमस्यां तु षष्ठः ॥

**॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां श्रीमद्भगवद्गीताभाष्यटीकाविवृतौ भावदीपिकाख्यायां षष्ठोऽध्यायः ॥**

**भावप्रकाशः (कृ.टि.)**– यदि 'ज्ञानतपसा पूता' इत्येतदनुसारेण 'तपस्विभ्य' इत्यत्र तपो ज्ञानं तदा ज्ञानाधिक्यमनेनोक्तं स्यात् । तत्र किं ब्रह्मज्ञानादाधिक्यं विवक्षितं योगज्ञानाद्वेति

श्लोकः ४६,४७

विकल्प्याद्यं दूषयति– **ब्रह्मज्ञानादिति** ।। द्वितीयं प्रत्याह– **योगेति** ।। **पृथगिति** ।। 'ज्ञानिभ्योऽपि मतोऽधिकः' इत्यनेनेत्यर्थः । **अत एवेति** ।। तपःशब्दस्य योगज्ञानपरत्वासम्भवप्रदर्शनार्थमेवेत्यर्थः ।

ननु नामीति दीर्घे ममुक्षूणामिति स्यादित्यत आह– **मुमुक्षुणामिति** ।। **एतेनेति** ।। तत्रापि शेषश्रीब्रह्मेत्याद्युक्तेनेत्यर्थः । **सर्वेषामपीति** ।। शेषादिसाधारण्येन ध्यानमात्रवन्तो योगिनः । तत्र ये विष्णुध्यायिनः ते युक्ततराः । तत्रापि मद्गतेनान्तरात्मना विशिष्टध्यानवन्तः ते युक्ततमा इत्यर्थः । यस्मादधिकमिति ज्ञापकाद् अधिकशब्दयोगे पञ्चमी इत्यभिप्रेत्य साधनेऽभ्योऽधिकमिति कृते दर्शनाच्चैव भक्तेश्चेति पञ्चम्यनन्वय इत्यत आह– **साधनेष्वधिकमिति** ।। तदस्मिन्नधिकमिति ज्ञापकाद् अधिकशब्दयोगे सप्तमी इति भावः ।। ४६,४७ ।।

**।। इति श्रीमत्तिरुमलाचार्यसुतकृष्णविरचितायां प्रमेयदीपिकाभावप्रकाशे षष्ठोऽध्यायः ।।**

## ॥ सप्तमोऽध्यायः ॥

**श्रीभगवानुवाच–**

**मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः ।**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥**

### भाष्यम्

**साधनं प्राधान्येनोक्तमतीतैरध्यायैः । उत्तरैस्तु षड्भिर्भगवन्माहात्म्यं प्राधान्येनाऽह । आसक्तमनाः अतीव स्नेहयुक्तमनाः । मदाश्रयः भगवानेव सर्वं मया कारयति, स एव च मे शरणम्, तस्मिन्नेवाहं स्थित इति स्थितः । असंशयम्, समग्रम् इति क्रियाविशेषणम् ॥ १ ॥**

भावप्रदीपिका (प.टी.)– पूर्वानुवादपूर्वकमुत्तराध्यायषट्कार्थमाह– **साधनमिति** । ननु साधनवचनानन्तरं भगवन्महिमोक्तौ का सङ्गतिः इत्याशङ्क्य, एतद्भगवतैव परिहृतमित्यभिप्रायेणाद्यश्लोकं व्याचष्टे– **आसक्तेति** । यो योगो भगवत्स्नेहपूर्वं क्रियते स एव ज्ञानाङ्गो नान्यः। भगवति स्नेहश्च तन्महिमोक्तौ भवति । अतः पूर्वं योगार्थमेव भगवन्महिमोच्यत इत्यर्थः । ननु सर्वेषामपि भगवदाश्रयत्वात् को विशेषो योगिनो विधीयत इत्यत आह– **मदाश्रय इति** । नन्वनन्तं भगवन्तं कथमर्जुनः समग्रं ज्ञास्यतीत्यत आह– **असंशयमिति** ॥ १ ॥

भावप्रकाशिका (न.टी.)– यदुक्तं विस्तरेणाद्यषट्के त्रिविधं कर्म यज्ञादिलक्षणं भगवदर्पितं सङ्गरहितम्, भगवज्ज्ञानम्, तत्सहितं ध्यानम्, तदपरोक्षज्ञानम्, तद्भक्तिश्चेति क्रमोन्नतं साधनजातं सङ्ग्रहेणापि तदन्तश्लोकद्वयेन, तद्भगवन्महिम्नि विशेषतः कथिते सिद्ध्यतीत्यधुना सोऽभिधीयत इति भावेनोत्तरषट्कार्थमाह– **साधनमिति** । आद्यश्लोकारूढैवेयं सङ्गतिरिति सूचयन् तं व्याख्यातुमुपक्रमते– **आसक्तेति** । तथाहि– यथा मन्माहात्म्येऽभिधीयमाने मय्यतीव स्नेहयुक्तमना भूत्वा कर्मयोगं समाधियोगं च युञ्जन् मां परोक्षमपरोक्षं च ज्ञास्यति तत्तद्योग्यः, तथा शृणूत्तरषट्कमिति । ननु किं भगवदाश्रयत्वं नाम ? तच्च योगिन

श्लोकः १

एवेत्यत्र को विशेषः? इत्यत आह– **मदाश्रय इति** । एतादृशभगवदाश्रयत्वे सर्वेषां विद्यमानेऽप्येतज्ज्ञानन्नेवास्थितो योगी नान्य इत्यर्थः । ननु यं ब्रह्माऽपि सर्वविशेषसहितं न पश्यति । कं कथमर्जुनः समग्रं पश्यतीत्यत आह– **असंशयमिति** । 'असंशयम्' इतिवत् 'समग्रम्' इत्यपि क्रियाविशेषणमेव । ततश्च तत्र योग्यज्ञानं यथा समग्रं भवति तथा मां ज्ञास्यसीत्यर्थः । उत्तरश्लोकेऽपि 'ते' तव योग्यं 'ज्ञानमशेषतः' इत्यर्थः ॥ १ ॥

प्रमेयदीपिका (ज.टी.)– ज्ञानसाधनादन्यदुत्तराध्यायप्रतिपाद्यं वक्तुं 'योगे त्विमां शृणु' (२.३९) इति प्रतिज्ञातमसमाप्य कथमर्थान्तरमुच्यते? इत्याशङ्कां तावत्परिहरति– **साधनमिति** ॥ 'ज्ञानस्य' इति शेषः । तत्र तत्र भगवन्महिम्नोऽपि वर्णितत्वेन प्राधान्येन इत्युक्तम् । प्राचुर्येणेत्यर्थः । 'उक्तम्' इत्यनेन प्रतिज्ञातसमाप्तिं सूचयति । तच्च प्रतिज्ञान्तरकरणादवगम्यते ॥

इदानीमुत्तरग्रन्थप्रतिपाद्यमाह– **उत्तरैस्त्विति** ॥ अध्यायैरिति वर्तते । अनेन ज्ञानविज्ञानशब्दौ ज्ञेयभगवन्माहात्म्यपराविति सूचितम् । अत्रापि कचित्साधनस्योक्तत्वात् प्राधान्येन इत्युक्तम् । सङ्गतिस्तु प्रथमश्लोक एवोक्ता । 'अनेन द्विविधेन योगेन यज्ज्ञातव्यं तच्छृणु' इत्युक्तत्वात् । 'आसक्तमनाः सम्बद्धमनाः' इति प्रतीतिनिरासायाह– **आसक्तेति** ॥ 'अतीव' इत्याङोऽर्थः । सम्बन्धमात्रस्य योगानङ्गत्वादिति भावः । भगवदाश्रयत्वं सर्वसाधारणं कथं योगिनो विशेषणम्? इत्यत आह– **मदाश्रय इति** ॥ शरणं रक्षकः । इति स्थित इति जानन्निति यावत् ॥

'असंशयं समग्रम्' इत्युभयं भगवद्विशेषणत्वेन भास्करो व्याख्यातवान् 'संशयरहितं समग्रं कृत्स्नं माम्' इति । अपरस्तु 'समग्रम्' इत्येव,'समग्रं समस्तं विभूतिबलशक्त्यैश्वर्यादिगुणसम्पन्नं मां संशयमन्तरेण' इति । तन्निरासार्थमाह– **असंशयमिति** ॥ तव समग्रं यथा भवति तथेत्यर्थः । नहि भगवतः संशयराहित्यमिदानीं वक्तव्यम् । नच भगवान् समग्रो अन्येन केनचिच्छक्यो ज्ञातुम् । 'स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वम्'(१०.१५) इति वक्ष्यमाणत्वादिति भावः ॥ १ ॥

भावबोधः (र.टि.)– ननु भगवन्महिमज्ञानार्थमेव योगस्य वर्णितत्वात् कथं प्राधान्येनेत्युक्तमित्यत आह– **प्राचुर्येणेति** ॥ बहुलग्रन्थेनेत्यर्थः । **द्विविधेनेति** ॥ अनेन 'योग'मित्यस्य प्रागुक्त-

कर्मसमाधिरूपोभययोगपरत्वमित्युक्तं भवति । ननु 'शरणं गृहरक्षित्रोः' इत्यभिधानात् शरणशब्दस्य गृहरूपाश्रयार्थत्वे 'तस्मिन्' इत्युत्तरवाक्यं पुनरुक्तं स्यादित्यतो व्याचष्टे– **रक्षक इति** ।। ननु 'भगवान्' इत्यादिनोक्तस्य ज्ञान एव प्रकारत्वम् । न स्थितावित्यत आह– **इति जानन्निति** ।। 'समग्र'मित्यस्य 'ज्ञास्यसी'ति क्रियाविशेषणत्वेऽपि 'न च भगवान् समग्रोऽन्येन' इति वक्ष्यमाणदूषणपरिहारः कथमित्यत उक्तम्– **तवेति** ।। १ ।।

**भावदीपः (रा.टि.)–** भगवन्महिमोक्तेरत्राप्राधान्यनिरासाय प्राधान्यशब्दार्थमाह– **प्राचुर्येणेति** ।। **प्रतिज्ञान्तरेति** ।। यथा ज्ञास्यसि तच्छृणु इति प्रतिज्ञान्तरकरणादित्यर्थः ।। **सङ्गतिस्त्विति** ।। पूर्वोत्तरषट्कयोः 'मय्यासक्त' इति श्लोक एव उक्तमित्यर्थः। तां व्यनक्ति– **अनेनेति** ।। 'योगे त्विमां शृणु' (२.३९) इति श्लोके द्वितीये प्रतिज्ञातं ज्ञानस्य बहिरङ्गसाधनं कर्मयोगम् आपञ्चमाध्यायसमाप्ति निरूप्य, पञ्चमे तदन्तरङ्गसाधनसमाधियोगो निरूपित इति 'अनेन पूर्वोक्तेन द्विविधेन योगेन' इत्युक्तम् ।। १ ।।

**भावरत्नकोशः (सु.टि.)– ।। ज्ञानसाधनादन्यदिति ।।** 'योगे त्विमां शृणु' इति प्रतिज्ञातो हि ज्ञानसाधनयोगो द्विविधः । कामादिवर्जनयुक्तनिवृत्तकर्मानुष्ठानलक्षणक एकः समाधिरूपोऽपर इति यत्, तदुभयस्मात् **अन्यत्** भगवन्माहात्म्यरूपमित्यर्थः । फलरूपतयाऽभ्यर्हितत्वात् 'मोक्षस्य साधनम्' इति प्रतीतावसङ्गतिशङ्का स्यादित्यतोऽध्याहरति– **ज्ञानस्येति** ।। तत्र अतीतेष्वध्यायेषु 'न त्वेवाहम्' इत्यादिना द्वितीये, 'यो बुद्धेः परतस्तु सः' इति तृतीये, 'अजोऽपि सन्नव्ययात्मा' इति चतुर्थे, 'भोक्तारं यज्ञतपसाम्' इति पञ्चमे, 'सर्वभूतस्थमात्मानम्' इति षष्ठे च जननमरणादि-दोषराहित्य-अप्रमेयत्वादिभगवन्माहात्म्यस्य वर्णितत्वादित्यर्थः । 'तत्र तत्र' इति पाठेऽप्येवमेवार्थः ।।

ननु 'प्राधान्यम्' इहानुपसर्जनत्वम् । तच्च भगवन्महिम्न एव, सर्वस्य तदर्थत्वात् । तत् कथं साधनस्य प्राधान्यमित्यतोऽत्र विवक्षितं प्राधान्यशब्दार्थमाह– **प्राचुर्येणेत्यर्थ इति** ।। बहुना ग्रन्थसन्दर्भेणेत्यर्थः । प्रतिज्ञातमसमाप्य कथमन्यदुच्यत इति शङ्कितम् । तत्परिहर्तुमाह– **उक्तमितीति** ।। 'उक्तम्' इत्युक्तिमात्रेण कथं समाप्तिसूचनमित्यतः स्वयं ज्ञापकं दर्शयति– **तचेति** ।। प्रतिज्ञातार्थयोगवर्णनसमापनम् । 'यथा ज्ञास्यसि तच्छृणु' इति प्रतिज्ञान्तरकरणा-दित्यर्थः । पूर्वप्रतिज्ञातार्थवर्णनाभिप्राये पुनरत्र प्रतिज्ञान्तरमयुक्तमिति भावः ।

श्लोकः १

ननु 'उत्तरैः षड्भिरध्यायैर्भगवन्माहात्म्यम्' इति भाष्यं 'ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्यामि' इति गीताविसंवादीति शङ्कां परिहरति– **अनेनेति** ।। 'उत्तरैः' इति भाष्येण । 'ज्ञेय-भगवन्माहात्म्यपरौ' इति वदन् 'ज्ञा अवबोधने' इति धातोः कर्मणि 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणात् ल्युट् । अत एव 'यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते'इति भगवद्वचन-मित्यभिसन्धत्ते– **अत्रापि** भगवन्माहात्म्यप्रतिपादनपरेऽप्युत्तरषट्के । **उक्तत्वादिति** ।।

'ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ।'
'जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।।' इति सप्तमे,

'तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ।।'

'अभ्यासयोगयुक्तेन चेतसानान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ।'

'सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ।।'

'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।।' इत्यादिना अष्टमे,

'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।।' इति

'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।।'

इत्यादिना नवमादौ च साधनस्योक्तत्वात् प्राधान्येनान्यानुपसर्जनतयेत्युक्तमित्यर्थः ।

'न त्वेवाहम्' इत्यादिना पूर्वषट्के भगवन्माहात्म्योक्तावपि साधनस्यैव प्राचुर्येणोक्तिः, अत्र तु षट्के भगवत्संवित्साधनोक्तावप्यन्यानुपसर्जनतया प्राचुर्येण च भगवन्माहात्म्यस्य वर्णनात्, न पूर्वोत्तरषट्कयोरभिधेयसाङ्कर्यं शङ्कनीयमिति भाष्यभाव इति हृदयम् ।

ननु साधनवचनानन्तरं भगवन्माहात्म्यवचनस्य का सङ्गतिरित्याशङ्क्य भगवतैवाद्यश्लोके परिहृतेति भाष्ये तदनुक्तिर्न दोषायेति भावेनाह– **सङ्गतिस्त्विति** ।। हेतुहेतुमद्भावलक्षणसङ्गति-रित्यर्थः । कथमुक्तेत्यत उपपादयति– **अनेनेति** ।। आपश्चमाध्यायसमाप्ति उक्तेन कर्मयोगलक्षणेन,

षष्ठोक्तेन समाधिलक्षणेन इत्येवं **द्विविधेन योगेन** । तच्छब्दश्रवणाद् यच्छब्दोऽध्याहृतः । यः पूर्वषट्के द्विविधो योगः स भक्तिपूर्वकमनुष्ठित एव भगवज्ज्ञानसाधनं नान्यथा । अतो भक्त्युत्पादनार्थं भगवन्महिमा उत्तरषट्के प्राधान्येनाभिधीयत इत्याद्यश्लोक अवगमेन नासङ्गतिशङ्केति भावः । 'योगद्वयसाध्यं भगवन्माहात्म्यज्ञानम्' इति पूर्वोत्तरषट्कयोः हेतुहेतुमद्भावलक्षणसङ्गतिप्रतिपत्तिः प्रथमश्लोकत एवोत्पद्यत इति वाऽऽशयः ।

**आङोऽर्थ इति** ॥ 'आङीषदर्थेऽभिव्याप्तौ सीम्यर्थे धातुयोगजे' इत्यमरव्याख्याने अनेकार्थत्वे सत्यपि, अनभिव्यक्तार्था एव धातवः 'आङ्' इत्याद्युपसर्गयोगादर्थविशेषे वर्तन्ते । अतो धात्वर्थद्योतकत्वेनोपसर्गाणामपि तदर्थत्वमुच्यत इत्युक्त्वा, 'धातुयोगजेऽर्थे' इत्यस्य विवरणपरम् अमरशेषवचनं 'क्रियोद्गमग्रहोधर्षाश्लेषशापाभिकाङ्क्षिणः' इत्याद्युदाहृत्य, एवं प्रयोगान् उपलक्ष्य उपसर्गबोध्या अर्था द्रष्टव्या इत्यभिधानात्, अत्रापि आधातुयोगजार्थस्य क्रियागतातिशयस्यावगमे तद्युक्तधातोरपि स्वार्थसङ्गत्यागेन स्नेहार्थत्वं ज्ञातव्यमिति भावेन भाष्ये 'अतीव स्नेह' इत्युक्तम् । अत एव 'ईषदर्थे क्रियायोगे' इति,

'उपसर्गवशाद्धातुरर्थान्तरविलासकृत् ।
प्रहाराहारसंहारविहारपरिहारवत्'

इत्यादि वैयाकरणवचनमिति भावः ।

'सम्बद्धमनाः' इति प्रतीतार्थे दोषमाह– **सम्बन्धमात्रस्येति** ॥ आसक्तमनस्कत्वस्य योगं प्रत्यङ्गत्वमवगम्यते । तत्सम्बन्धमात्रार्थत्वे चैद्यपौण्ड्रकादिषु द्वेषिषु मनस्सम्बन्धस्य सत्त्वेऽपि तेषां योगित्वाभावादिति भावः ।'शरणे रक्षणे वधे' इत्यनेकार्थत्वस्य विश्वप्रकाशेऽभिधानाद् रक्षणादेः प्रकृतानुपयोगाद्, विवक्षितमर्थमाह– **शरणं रक्षक इति** ॥ शृणाति विपदं हिनस्तीति शरणम् । 'शृ हिंसायाम्' इत्यतः 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । 'शरणं गृहरक्षित्रोः' इत्यमरः । 'शरणं तरुणेन्दुशेखरः' इत्यादिप्रयोगाद् रूपभेदाच्च नपुंसकत्वम् । 'यदनान्तमकर्तरि' इति वचनं तु भाववचनमनान्तं नपुंसकमित्येवंपरम्, अन्यत्रोदासीनमिति व्याख्यातं नैघण्टुकैरिति भावः । भाषितमपि भगवदाश्रयत्वं साधारणमेवेत्यत आह– **जानन्निति** ॥ **यावदिति** ॥ एवंप्रकारकं तु ज्ञानं योगिन एवेति भावः । तदेवाह– **संशयरहितमित्यादि** ॥ अपरः सङ्करः । 'भगव-

श्लोकः १

द्विशेषणत्वेन व्याख्यातवान्' इति वर्तते । तद्भाष्यमनुवदति– **समग्रमिति** ॥ तन्मतेऽपि 'असंशयम्' इत्येतद्भगवद्विशेषणमिति कस्मान्न स्यात् इति शङ्कापनोदायोक्तं– **संशयमन्तरेणेति** ॥ **तन्निरासार्थम्** व्याख्यानद्वयनिरासार्थम् ।

'न विद्यते संशयो यस्मिन् कर्मणि तद्यथा भवति तथेत्यसंशयम्' इत्यस्यानतिगूढत्वात् 'समग्रम्' इत्यस्य क्रियाविशेषणत्वं व्याख्याति– **तवेति** ॥ 'योग्यं ज्ञानम्' इति योज्यम् । त्वद्योग्यतानुसारेण फलाय पर्याप्तमित्यर्थः । मतद्वयमपि दूषयति– **न हीति** ॥ **समग्रः** कृत्स्नः समस्तविभूतिबलशक्त्यैश्वर्यादिगुणसम्पन्नः । **वक्ष्यमाणत्वात्** दशमे । अनेनैव 'यं ब्रह्मापि सर्वविशेषसहितं न पश्यति, तं कथमर्जुनः समग्रं पश्येत् ' इति चोद्यमपि निरस्तम् । तव 'समग्रम्' इति क्रियाविशेषणत्वेन व्याख्यानात् ॥ १ ॥

**गीताक्षरार्थस्तु**– ज्ञानसाधनं कामादिवर्जितनिवृत्तकर्मानुष्ठानलक्षणकर्मयोगं ध्यानयोगं चातीतैः षड्भिरध्यायैरुक्तम् । उत्तरैः षड्भिरध्यायैः षष्ठान्तप्रस्तुतध्यानाङ्गभक्त्युत्पादनार्थं भगवन्महिमा प्राचुर्येण निरूप्यत इति सङ्गतिं वदता, श्रोतारमभिमुखीकुर्वता भगवता भगवन्माहात्म्यं वक्तुं प्रतिज्ञायते– **मयीति** ॥ हे पार्थ, मयि श्रीकृष्णे आसक्तमनाः अतीवभक्तिलक्षणस्नेहयुक्तमनाः योगं युञ्जन् युञ्जानः कर्मयोगध्यानयोगरूपज्ञानोपायम् अनुतिष्ठन् मदाश्रयः अहमाश्रयो यस्य स तथोक्तः, भगवानेव मया सर्वं कारयति स एव मम रक्षकः, तस्मिन्नेव चाहं स्थित इति जानन्निति यावत् । 'असंशयम्' 'समग्रम्' इति क्रियाविशेषणद्वयस्य संशयमन्तरेण तव योग्यताऽनुसारेण समग्रं यथा भवति तथेत्यर्थः । मां यथा येन प्रकारेण ज्ञास्यसि तत् तं प्रकारम्, तथेति वा शृणु । तत्प्रकारकमज्ज्ञानजनकवचनं श्रुत्वा तत्र निष्ठां कुरु इति यावत् ॥ १ ॥

**भावदीपिका (श्री.टि.)**–

प्रणम्य यादवाचार्यगुरूणां पदपङ्क जे ।
सप्तमाध्यायटीकायाः क्रियते भावदीपिका ॥

ननु भगवन्महिमज्ञानार्थमेव योगस्य वर्णितत्वात् कथं 'प्राधान्येन' इत्युक्तमित्यत आह– **प्राचुर्येणेति** ॥ बहुलग्रन्थेनेत्यर्थः । **तच्चेति** ॥ समाप्तिसूचनमित्यर्थः । ननु गीतायां 'ज्ञानं तेऽहं सविज्ञानम्' इति ज्ञानादिकथनस्यैव प्रतिज्ञातत्वात् कथमेतदित्यत आह– **अनेनेति** ॥

श्लोकः २

'भगवन्माहात्म्यमाह' इत्यनेनेत्यर्थः । **द्विविधेन** कर्मसमाधिरूपेण 'ज्ञेय' इत्यादि । कर्मव्युत्पत्त्येति भावः । **अत्रापि क्वचिदिति** ॥ 'मन्मना भव इत्यादौ' इति शेषः । कथं पूर्वेण सङ्गतिः प्रथमश्लोक एवोक्तेत्यत आह– **अनेनेति** ॥ पूर्वषट्कप्रतिपादितेन कर्मसमाधिरूपयोगद्वयेनेत्यर्थः । अनेन 'युञ्जन्' इत्यत्र योगशब्दः कर्मसमाधिरूपोभययोगपर इत्युक्तं भवति । **सम्बन्धमात्रस्येति** ॥ स्नेहरहितसम्बन्धस्येत्यर्थः । ननु 'शरणं गृहरक्षित्रोः' इत्यभिधानाच्छरणशब्दस्य गृहरूपाश्रयार्थत्वे 'तस्मिन्' इत्युत्तरवाक्यं पुनरुक्तं स्यादित्यतो व्याचष्टे– **रक्षक इति** ॥ ननु 'भगवान्' इत्यादेर्ज्ञान एव प्रकारत्वं न स्थितौ । अतः 'इति स्थितः' इति कथमुच्यत इत्यत आह– **इति जानन्निति** ॥ **इत्येवेति** ॥ भगवद्विशेषणत्वेन व्याख्यातवानित्यर्थः । ननु 'समग्रम्' इत्यस्य 'ज्ञास्यसि' इति क्रियाविशेषणत्वे 'न च भगवान् समग्रोऽन्येन केनचिच्छक्यते ज्ञातुम्' इति वक्ष्यमाणदूषणपरिहारः कथमित्यत उक्तं – **एवेति** ॥ ननु उभयोर्भगवद्विशेषणत्वमेव किं न स्यादित्यत आह– **नहीत्यादिना** ॥ कुतो भगवान् स्वान्येन ज्ञातुं न शक्यत इत्यत आह– **स्वयमेवेति** ॥ अर्जुनेनोत्तरत्र 'स्वयमेवात्मनाऽऽत्मानं वेत्थ' इत्युच्यते । तत्रावधारणप्रयोगादिदं लभ्यत इति भावः ॥ १ ॥

**ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥**

## भाष्यम्

**इदं मद्विषयं ज्ञानम् । विज्ञानं विशेषज्ञानम् ॥ २ ॥**

भावप्रदीपिका (प.टी.)– 'असंशयम्' इतिवत् तव मोक्षार्थं समग्रं यथा भवति तथेत्यर्थः । ज्ञानस्यापुरोवर्तित्वात् कथम् 'इदम्' इति परामर्श इत्यत आह– **इदमिति** । 'विज्ञान'पदेनात्र नापरोक्षज्ञानमिति भावेनाह– **विज्ञानमिति** ॥ २ ॥

भावप्रकाशिका (न.टी.)– 'मां यथा ज्ञास्यसि' इति प्रस्तुतत्वात् भगवद्विषय-ज्ञानस्येदन्तया निर्देश इति भावेनाह– **इदमिति** । 'रसोऽहम्' इत्यादिवक्ष्यमाणानन्त-विशेषान् विज्ञानपदोद्दिष्टान् भगवत्यसहमानेन मायिनाऽऽच्छादितं 'सविज्ञान'पदं 'सविज्ञानं स्वानुभवसंयुक्तम्' इति । तत् पुनः प्रकाशयति– **विज्ञानमिति** ॥ २ ॥

श्लोकः २

**प्रमेयदीपिका (ज.टी.)– ननु ज्ञानं वक्ष्यते, न तूक्तम् । तत्कथमिदमिति परामर्शः? इत्यत आह– इदमिति ॥ 'माम्' इति स्वस्य प्रकृतत्वात्तत्सम्बन्धित्वेन ज्ञानमपि प्रकृतमिति भावः । 'सविज्ञानं स्वानुभवसंयुक्तम्' इत्येतदपाकर्तुं विज्ञानपदार्थमाह– विज्ञानमिति ॥ अस्यैव वक्ष्यमाणत्वात् । अपरस्य तदभावादिति भावः ॥ २ ॥**

**भावदीपः (रा.टि.)– ॥ वक्ष्यमाणत्वादिति ॥** 'स्वयमेवाऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम' (१०.१५) इति दशमे वक्ष्यमाणत्वादित्यर्थः ॥ २ ॥

**भावरत्नकोशः (सु.टि.)–** 'मद्विषयम्' इति भाष्यभावोद्घाटनेन कृतचोद्यं परिहरति– **मामितीति ॥** 'असंशयं समग्रं माम्' इत्यस्मच्छब्देन भगवतः प्रकृतत्वात्, सम्बन्धित्वेन भगवन्माहात्म्यमपि प्रकृतमिति इदंशब्दस्य तत्परामर्शित्वं युक्तमित्यर्थः । अनेन 'मदीयमाहात्म्यविषयकं ज्ञानं तवोत्पादयिष्यामि' इति भाष्यार्थ इत्युक्तं भवति । 'सविज्ञानं विशेषमाहात्म्यविषयकज्ञानेन सहितमनुभवसंयुक्तम्' इति सङ्करभाष्यं साभिप्रायमनुवदति– **स्वानुभवसंयुक्तमित्येतदिति । अस्यैवेति ॥** विशेषज्ञानपदोक्तस्य स्वयोग्यस्य माहात्म्यविशेषस्य 'रसोऽहमप्सु कौन्तेय' इत्यादिना वक्ष्यमाणत्वात् ॥ **अपरस्य** स्वानुभवस्य **तदभावात्** वक्ष्यमाणत्वाभावाद् भाष्यकारीयमेव व्याख्यानं युक्तमित्यर्थः ॥ २ ॥

**गीताक्षरार्थस्तु-** 'श्रवणनिष्ठे वचनाधीने' इत्यत उक्तम्– **ज्ञानं तेऽहमिति ॥** अत्र ज्ञानविज्ञानशब्दौ ज्ञातव्यविज्ञातव्यभगवन्माहात्म्यपरौ । इदं 'माम्' इति प्रकृतत्वात् मद्विषयं मम सम्बन्धि ज्ञानं सामान्यतो ज्ञातव्यं माहात्म्यं सविज्ञानं विशेषतो ज्ञातव्यमाहात्म्येन सहितं वक्ष्यामि । 'अशेषतः' इत्यस्य यावदर्जुनयोग्यं तन्मध्ये शेषमकृत्वेत्यर्थः । तन्माहात्म्यं ज्ञात्वा अनुसन्दधतः भूयोऽन्यत् ज्ञातव्यम् अनुसन्धातव्यं नावशिष्यते । यज्ज्ञात्वा ज्ञातव्यमन्यत् नावशिष्यत इत्यत्र च ज्ञानक्रियापेक्षया क्त्वाप्रत्यय इति वा ॥ २ ॥

**भावदीपिका (श्री.टि.)– ॥ स्वानुभवेति ॥** 'विज्ञानसहितं ज्ञानम्' इत्यत्र विज्ञानशब्देन ज्ञानज्ञानरूपानुव्यवसायाख्यं स्वानुभवं गृहीत्वा 'स्वानुभवसंयुक्तं स्वानुभवव्यवसायसंहितमिदं ज्ञानम्' इति व्याख्यानमित्यर्थः । अन्ये तु 'स्वानुभवसंयुक्तम् कृष्णानुभवसिद्धम्' इत्यर्थ इत्याहुः । **अपरस्येति ॥** उत्तरत्र स्वानुभवस्याकथनादित्यर्थः ॥ २ ॥

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।**
**यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥**

## भाष्यम्

दौर्लभ्यं ज्ञानस्याऽह– **मनुष्याणामिति** ॥ ३ ॥

भावप्रदीपिका (प.टी.)– स्वेन वक्ष्यमाणे श्रद्धातिशयाय दौर्लभ्यं वक्त्युत्तरश्लोके-नेत्याह– **दौर्लभ्यमिति** ॥ ३ ॥

भावप्रकाशिका (न.टी.)– अनन्तमहिमत्वादेव भगवतस्तद्विषयज्ञानं तत्प्रसादं विनाऽतिदुर्लभमिति भावेनोत्तरं श्लोकमवतारयति– **दौर्लभ्यमिति** ॥ ३ ॥

प्रमेयदीपिका (ज.टी.)– ननु ज्ञानादिवचनं प्रतिज्ञाय यत्किञ्चित् कथमुच्यते? इत्यत आह– **दौर्लभ्यमिति** ॥ **'श्रोतुरादरजननार्थम्'** इति शेषः । **ज्ञानस्य** दौर्लभ्ये, **विज्ञानस्य** तत् सुतराम् ॥ ३ ॥

**भावबोधः (र.टि.)**– ननु 'ज्ञानविज्ञानयो'रिति कुतो नोक्तमित्यत आह– **ज्ञानस्य दौर्लभ्य इति** ॥ **प्राधान्येनेति** । सविज्ञानमिति विज्ञानस्य साहित्योत्त्या प्राधान्यप्रतीतेरिति भावः ॥ ३ ॥

**भावरत्नकोशः (सु.टि.)**– इदं 'मनुष्याणां सहस्रेषु' इत्यादिकम् । प्रकृतासङ्गतत्वादिति भावः । ज्ञानदौर्लभ्यवर्णनस्यापि प्रकृतसङ्गतये शेषमाह– **श्रोतुरिति** ॥ उभयोरपि वक्ष्यमाणत्वात् 'ज्ञानविज्ञानयोर्दौर्लभ्यमाह' इति किन्न भाषितमित्यत आह– **ज्ञानस्येति** ॥ न्यायसिद्धत्वाद्भाष्ये तदनुक्तिरिति भावः ॥ ३ ॥

**गीताक्षरार्थस्तु-** श्रोतुरादरार्थं ज्ञानविज्ञानयोर्दौर्लभ्यमुच्यते– **मनुष्याणामिति** ॥ कश्चिदेव पुण्यवान् सिद्धये उक्तविधमाहात्म्यज्ञानाय यतति यतते । यततां यतमानानामपि मध्ये कश्चिदेव सिद्धिमान् भवति, सिद्धानां ज्ञानवतामपि मध्ये कश्चिदेव तत्त्वतो मां वेत्ति ॥ ३ ॥

**भावदीपिका (श्री.टि.)**– ननु ज्ञानवत् विज्ञानस्यापि दौर्लभ्यं वक्तव्यम् । ततश्च 'ज्ञानविज्ञानयोः' इति वक्तव्ये 'ज्ञानस्य' इति कथमुक्तमित्यत आह– **ज्ञानस्येति** ॥ ३ ॥

श्लोकः ४

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥**

## भाष्यम्

प्रतिज्ञातं ज्ञानमाह— **भूमिरित्यादिना** ॥ महतोऽहङ्कार एवान्तर्भावः ॥

भावप्रदीपिका (प.टी.)— उत्तरग्रघट्टकमवतारयति— **प्रतिज्ञातमिति** । नन्वादिकार्यं महत्तत्वं कुतो नोच्यते ? इत्यत आह— **महत इति** ॥ ४ ॥

भावप्रकाशिका (न.टी.)— 'रसोऽहम्' इत्यतः प्राक्तनग्रन्थसन्दर्भमवतारयति— **प्रतिज्ञातमिति** ॥ महतः किं कारणे प्रकृतावन्तर्भावः कार्ये वाऽहङ्कार इति संशये सत्याह— **महत इति** ॥ ४ ॥

प्रमेयदीपिका (ज.टी.)— **'मनुष्याणाम्'** इतिवदुत्तरमप्यन्यार्थमिति प्रतीतिनिरासार्थं प्रतिज्ञातयोरुभयोः किमादावुच्यते? इत्यपेक्षायां चाह— **प्रतिज्ञातमिति** ॥ असङ्गति-परिहारायानन्यार्थताज्ञापनाय च ज्ञानस्य प्राथम्ये हेतुसूचनाय च प्रतिज्ञातम् इत्युक्तम् । प्रतिज्ञातत्वेन सङ्गतं प्रतिज्ञातमेव । नतु तदर्थम् । प्राथम्येन प्रतिज्ञातम् । **'रसोऽहम्'** इत्यतः प्राक्तनग्रन्थसङ्ग्रहाय आदिपदम् । महत्तत्वमत्र नोपात्तम् । तत् किं नास्त्येव ? इत्यत आह— **महत इति** ॥ अहङ्कारे अहङ्कारशब्दार्थेऽन्तर्भावः । कार्यवाचिनाऽहङ्कारशब्देन कारणस्य महतोऽप्युपलक्षणमेव । न त्वभाव इत्यर्थः ॥ ४ ॥

भावबोधः (र.टि.)— ननु कार्ये कारणस्य कथमन्तर्भाव इत्यत आह— अहङ्कारशब्दार्थ इति ॥ ननु तथाप्यनुपपत्तिः । अहङ्कारशब्दस्योभयवाचकत्वाभावादित्यत आह— कार्यवाचिनेति ॥ ४ ॥

भावदीपः (रा.टि.)— प्राथम्ये हेतुसूचनं शेषोक्त्या व्यनक्ति— **प्राथम्येन प्रतिज्ञातमिति** ॥४॥

भावरत्नकोशः (सु.टि.)— ॥ इतिवदिति । 'मनुष्याणाम्' इति वचनं यथाऽऽदरजननार्थं तथा 'भूमिरापः' इत्याद्युत्तरमित्यर्थः । 'इत्यपेक्षायां च' इत्यत्र चशब्देन 'यत्किञ्चिदिदं कथमुच्यते'

इत्यसङ्गतिशङ्कायां चेति समुच्चीयते । असङ्गतत्वमन्यार्थत्वं किमादावुच्यत इति च कृतशङ्कात्रयं तद् भाष्यारूढं परिहर्तुमाह– **असङ्गतीति** ॥ हेत्वर्थगर्भं विशेषणमिति भावेनोक्तं– **प्रतिज्ञातत्वेनेति** । 'सर्वं वाक्यं सावधारणम्' इति भावेन एवशब्दं संयोज्य तद्व्यावर्त्यमाह– **न तु तदर्थमिति** ॥ प्रतिज्ञातार्थवचनार्थम्, तच्छेषतया नात्रान्यदुच्यत इत्यर्थः । प्राथम्ये हेतुसूचनं शेषोक्त्या व्यनक्ति– **प्राधान्येनेति** । 'सविज्ञानम्' इत्युक्त्या विज्ञानस्याप्राधान्यलाभः । समासान्तर्वर्तितृतीयायाः 'सहयुक्ते अप्रधाने' इत्यप्राधान्ये विहितत्वात्, प्रथमोपस्थितावचने कारणाभावाच्चेति भावः ।

भाष्ये आदिपदेन सङ्ग्राह्यानुक्तौ 'रसोऽहम्' इत्याद्यपि ज्ञानप्रकरणमिति प्रतीतिः स्यात् । तथा च 'रसोऽहमित्यादि विज्ञानम्' इति भाष्यविरोध इत्यतः सङ्ग्राह्यमाह– **रसोऽहमित्यत इति** ॥ महत्तत्त्वमेव नास्ति किमिति प्रश्ने, गर्वेऽन्तर्भावभापणमननुरूपम् इत्यतो नैतद्गीतोक्ताहङ्कारशब्दार्थो गर्वः, किन्त्वहङ्कारतत्त्वमेव । तत्रान्तर्भावश्च तच्छब्दार्थतयोपादाने वचनवृत्त्यभावाच्च लक्षणा वक्तव्या । तत्र च कार्यकारणभाव एव सम्बन्धबीजमिति भावेनाह– **अहङ्कार इत्यादि** । यद्वा 'महत्तत्त्वं किमिति नोपात्तम्' इति चोद्यस्याहङ्कारान्तर्भावकथनेन कथं परिहार इत्यतोऽहङ्कारशब्देन महतोऽपि ग्रहणमिति भाष्यभावं स्फोरयितुं तद्व्याचष्टे– **अहङ्कारशब्दार्थ इति** । तेन तद्ग्रहणमुपपादयति– **कार्यवाचिनेति** । 'महतोऽपि' इत्यपिपदं न केवलमहङ्कारशब्दो अहङ्कारतत्त्वस्याभिधायकः, किन्तु महत्तत्त्वस्योपलक्षकोऽपीति व्याख्येयम् । कृतप्रश्नपरिहारं दर्शयितुमुक्तम्– **न त्वभाव इति** ॥ प्राचीनटीकायां तु 'महतोऽहङ्कार एव' इति भाष्यं महत्तत्त्वस्य किं कारणे प्रकृतावन्तर्भावः, कार्ये अहङ्कारे वेति संशये सत्याह' इत्यवतारितम् ॥ ४ ॥

**गीताक्षरार्थस्तु- '**माहात्म्यविशेषयुक्तं ज्ञानम्' इति प्रतिज्ञातं ज्ञानमुच्यते भूमिरित्यादिना 'रसोऽहम्' इत्यतः प्राक्तनग्रन्थेन । अनलः अग्निः, खम् आकाशः, मनो बुद्धिश्च तत्त्वे, कार्यवाचिना अहङ्कारशब्देन तत्कारणं महत्तत्त्वमप्युपलक्ष्यत इत्येवमष्टधा भिन्ना प्रकृतिर्मे मदधीना । मत्प्रेरिता प्रकृतिरेव पृथिव्यादिकार्यभावमापन्नाऽस्तीति प्रकृतिप्रेरकत्वादिमाहात्म्योक्तिः ॥ ४ ॥

**भावदीपिका (श्री.टि.)– ॥ अन्यार्थं** दौर्लभ्यार्थम् ॥ **अनन्यार्थतां** प्राधान्यम् । **प्राथम्ये** प्रथमतो निरूपणे । असङ्गतिपरिहारः कथमित्यत आह– **प्रतिज्ञातत्वेनेति** ॥ कथमनन्यार्थताज्ञापनमित्यत आह– **प्रतिज्ञातमेवेति** ॥ **न तु तदर्थमिति** ॥ 'अन्यत् किञ्चिदवाप्यते'

श्लोकः ५

इति शेषः । प्राथम्ये कथं हेतुसूचनमित्यतः 'प्राथम्येन' इति पदाध्याहारेण तत्सिद्धिरिति भावेनाह– **प्राथम्येनेति** ।। 'ज्ञानं तेऽहम्' इति प्राथम्येन प्रतिज्ञातत्वात् प्रथमतो निरूपणमिति भावः । 'प्राधान्येन' इत्यपि क्वचित्पाठः । तत्र 'सविज्ञानम्' इति विज्ञानस्य साहित्योक्त्याऽप्राधान्यप्राप्तौ ज्ञानस्य प्राधान्यं सिद्ध्यतीति भावः । ननु कारणस्य कार्ये कथमन्तर्भाव इत्यत आह– **अहङ्कारशब्दार्थ इति** ॥ ननु तथाऽप्यनुपपत्तिः, अहङ्कारशब्दस्योभयवाचकत्वाभावादित्यत आह– **कार्यवाचिनेति** ॥ ४ ॥

भावप्रकाशः (कृ.टि.)– ननु कार्ये कारणस्य कथमन्तर्भाव इत्यत आह– **अहङ्कारशब्दार्थ इति** ॥ ननु तथाऽप्यनुपपत्तिः । अहङ्कारशब्दस्योभयावाचकत्वादित्यत आह– **कार्यवाचिनेति** ॥ ४ ॥

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥**

## भाष्यम्

**अपरा अनुत्तमा । वक्ष्यमाणमपेक्ष्य । जीवभूता श्रीः । जीवानां प्राणधारिणी । चिद्रूपा । भूता सर्वदा सती । 'एतन्महद्भूतम्' इति श्रुतेः । जगाद च–**

**'प्रकृती द्वे तु देवस्य जडा चैवाजडा तथा ।**
**अव्यक्ताख्या जडा सा च सृष्ट्या भिन्नाऽष्टधा पुनः ॥**
**महान् बुद्धिर्मनश्चैव पञ्च भूतानि चेति हि ।**
**अवरा सा जडा श्रीश्च परेयं धार्यते तया ॥**
**चिद्रूपा सा त्वनन्ता च अनादिनिधना परा ।**
**यत्समं तु प्रियं किञ्चिन्नास्ति विष्णोर्महात्मनः ॥**
**नारायणस्य महिषी माता सा ब्रह्मणोऽपि हि ।**
**ताभ्यामिदं जगत्सर्वं हरिः सृजति भूतराट्'**

**इति नारदीये ॥ ५ ॥**

भावप्रदीपिका (प.टी.)– 'इत:'कार्यात्, 'अपरा' न भिन्ना, इति प्रतीतिनिरासायाह– **अपरेति** । जीवभूतेति जीव एवेति भ्रान्तिनिरासायाह– **जीवेति** । 'जीवभूत'शब्दार्थमाह– **जीवानामिति** । विशेषणद्वयं जीवपदस्यार्थः ।'भूत'शब्दस्य सर्वदा विद्यमानार्थत्वे प्रयोगं दर्शयति– **एतदिति** । उक्तार्थं प्रमाणेन स्थापयति– **जगाद चेति** । अत्राहङ्कारस्य महत्यन्तर्भावः । इयं पूर्वोक्ता अनन्ता देशेन । आभ्याम् इत्यनेन 'एतद्योनीनि' इति व्याख्यातम् ॥५॥

भावप्रकाशिका (न.टी.)– अपरशब्दस्याभेदेऽपि प्रयोगात्, प्रकृत्यात्मनेपाम् अभेदसम्भवाच्च अभेदवाच्ययमित्याशङ्क्याह– **अपरेति** । अहङ्कारादिरूपिण्या अस्याः प्रकृतेर्महान्तं मूलप्रकृतिं वाऽपेक्ष्यानुत्तमत्वशङ्कायामाह– **वक्ष्यमाणामिति** । यतोऽत्र 'इयम्' इति मूलप्रकृतिरेवोच्यते सैवाष्टकार्यरूपेणाष्टधा भिन्ना । अहङ्कारात् सात्विकान्मनः, राजसात् वुद्धिः, तामसात् खादयः पञ्चेति सेयं सकार्यमूलप्रकृतिरपरेत्युच्यते । पृथक्कार्यरूपेणाष्टधा भिन्ना । अतः सूक्तं– **वक्ष्यमाणामपेक्ष्य इति** ॥

एतेनैतदपि प्रत्युक्तम् । यदुक्तं मायिना भूम्यादिशब्दैस्तन्मात्राण्येवोच्यन्ते, न स्थूलानि । मनोवुद्ध्यहङ्कारशब्दैस्तु मनोवुद्ध्यहङ्कारकारणान्यहङ्कारमहदव्यक्तानि, 'भिन्ना प्रकृतिरष्टधा' इति वचनादिति । तदसत् । भूम्यादिशब्दैः स्थूलसूक्ष्माभिधानेऽप्यौपध्यादिकारणत्वेन प्रकृतित्वसम्भवात् न स्वार्थसङ्कोचः कार्यः ।

मनोवुद्ध्यहङ्कारशब्दैस्तत्तदर्थाभिधानेऽपि स्थूलप्रकृतिव्यतिरिक्तानां प्रकृतिविकृतानामेवाष्टविधत्वसम्भवात् न स्वार्थपरित्यागः कल्पनीयः । मनोवुद्ध्योश्च संशयनिश्चयकारणत्वेन प्रकृतित्वमिति ॥

ननु कोपरि वक्ष्यमाणेतःपरत्वेन ? इत्याकाङ्क्षायां जीवशब्दात् तथैवान्यैर्व्याख्यातत्वाच्च जीवा एवेति प्राप्ते, आह– **जीवभूतेति** । ननु 'जीव प्राणधारणे' इति धातोः श्रीरपि जीवभूता चेत्, संसारिवत् देहेन्द्रियप्राणधारिणी स्यादित्यत आह– **जीवानामिति** । स्वयं भगवानिव ज्ञानानन्दादिगुणसान्द्रसुन्दरमूर्तिरूपा यतो ब्रह्मादिसर्वजीवानां प्राणधारिणी । अत एव जीवशब्दोक्ता । यतः श्रीरेवाह स्वसूक्ते 'मया सोऽन्नमति यो विपश्यति यः प्राणिति' इत्यादि । चिद्रूपत्वाच्च जीवशब्दोक्ता सेत्याह– **चिद्रूपेति** ॥

श्लोकः १

'एतन्महद्भूतम्' इत्यादिश्रुताविव सर्वदा सत्त्वमेव भूतशब्दार्थः न तु जातत्वमिति भावेनाह— **भूतेति** । नहि महत्त्वेन जातमिति श्रुत्यर्थः । जीवभूतां जीवत्वं प्राप्तामिति यदन्येनोक्तं तदनेन निरस्तं भवति । 'ययेदं धार्यते जगत्' 'एतद्योनीति भूतानि सर्वाणि' इत्येकस्या एव सर्वजगदाधारत्वं सर्वभूतोत्पत्त्यादिकत्वं चोच्यमानम् । 'अहं मित्रावरुणोभा बिभर्मि', 'यं कामये तं तम्' इत्याद्युक्ता श्रीरेव जीवभूता प्रकृतिः, न बहवः संसारिण इत्यलं विस्तरेण ।

इममेवार्थं 'भूमिः' इत्यादिसार्धश्लोकद्वयस्यान्यत्र भगवान् व्यक्तमुवाचेत्याह— **जगादेति** । देवस्य इति देवाद्भेदः प्रकृत्योरुच्यतेऽत्र । 'इयं मे पराम्' इति गीतायामपि । अतोऽपि न भगवत्स्वरूपा जीवभूता प्रकृतिः । **पुनरिति** । मूलप्रकृतिरूपतः पृथक् प्रकृतिविकृति-रूपेणैवाष्टधेत्यर्थः ॥ ५ ॥

प्रमेयदीपिका (ज.टी.)– अपरशब्दस्यानेकार्थत्वाद् विवक्षितमर्थमाह— **अपरेति** ॥ अनुत्तमत्वस्य सापेक्षत्वात् किमपेक्षया? इत्यत आह— **वक्ष्यमाणामिति** ॥ सन्निधानादिति भावः । 'जीवलक्षणां जीवत्वं वा प्राप्ताम्' इति व्याख्याननिरासार्थमाह— **जीवभूतेति** ॥ कथं सा जीवभूता? इत्यत आह— **जीवानामिति** ॥ प्राणधारिणी इत्येवोक्ते स्वप्राणधारिणी इति प्रतीतिः स्यात् । तन्निरासार्थमुक्तम्— **जीवानामिति** ॥ सर्वजीवदेहेषु स्थित्वा तदीयान् प्राणान् तत्र धारयतीत्यर्थः । स्वप्राणधारिणी कुतो न स्यात्? इत्यत आह— **चिद्रूपेति** ॥ ज्ञानात्मकविग्रहवती ॥ यद्वा 'जीव प्राणधारणे'(पा.धा.५६२) इत्यतो जीवशब्दस्य यौगिकार्थमुक्त्वा गौणीं वृत्तिमाश्रित्यार्थान्तरमनेनोक्तम् । भूतशब्दस्य सर्वदा सत्ववाचित्वे प्रयोगं दर्शयति— **एतदिति**॥ प्रकृतिमपेक्ष्य श्रियः परत्वोपादानदार्थम् एतत् ॥

**'भूमिः'** इत्यादेरभिमतमर्थं पुराणवाक्येन स्थापयति— **जगाद चेति** ॥ देवस्यैव । सृज्यत इति सृष्टिः=कार्यम् । कार्यरूपेणेत्यर्थः । अनेन 'भूम्यादिशब्दैः पञ्चतन्मात्राण्येव उच्यन्ते । न स्थूलानि भूतानि । मनः इति तत्कारणमहङ्कारः । बुद्धिरिति महत्तत्त्वम् । अहङ्कार इत्यविद्यासहितमव्यक्तम् । 'भिन्ना प्रकृतिरष्टधा' इति वचनात्' इति व्याख्यानं निरस्तम् ॥

'कार्यरूपेणाष्टधा भिन्ना' इति व्याख्यानसम्भवेन प्रसिद्धार्थपरित्यागायोगात् ।

श्लोकः १

**महत्यहङ्कारस्य अन्तर्भावः 'इत्येव' इति सम्बन्धः । 'जडा' इत्यवरत्वोपपादनम् । श्रीः परा इत्यस्योपपादनम् इयं धार्यते तया इत्यादि । अनन्ता देशतः गुणतश्च । परा मुख्या । अनादिनिधना न त्वव्यक्तवद् विक्रियावती ॥ ५ ॥**

**भावबोधः (र.टि.)– ॥ गौर्णी वृत्तिमिति ॥** जीवगतचिद्रूपत्वगुणयोगेनेत्यर्थः । **परत्वोपपादनार्थमिति ॥** अनेन 'सर्वदा सती' इत्यत्रैकप्रकारेणेति ग्राह्यम् । जडप्रकृतेश्च विकारित्वेन तदभावादिति भावः । **गुणतश्चेति ॥** ततश्चानेन परत्वोपपादनं न सम्भवतीति भावः । वहुगुणवतीति तात्पर्यम् ॥ ५ ॥

**भावदीपः (रा.टि.)– ॥ गौर्णी वृत्तिमिति ॥** 'जीवभूता' इत्यस्य जीववाचित्वरूपगुणयोगाज्जीवपदोक्तेत्यर्थः ॥ **एतदितीति ॥** जीवभूतेति विशेषणमित्यर्थः । एवकारान्वयमाह– **देवस्यैवेति ॥ अनेनेति ॥** पुराणवाक्यकथनेनेत्यर्थः ॥ 'अविद्यासहितमव्यक्तम्' इत्युक्तार्थे चतुर्थपादसंवादमाह– **भिन्नेति ॥** 'महान् बुद्धिः मनश्च' इत्यादौ गीतोक्ताहङ्कारो न गणित इत्यत आह– **महतीति ॥** एवकारस्य इतिपदेनान्वयमाह– **इत्येव इति सम्वन्ध इति ॥ ५ ॥**

**भावरत्नकोशः (सु.टि.)– ॥ अनेकार्थत्वादिति ॥**

> 'अथापरं क्लीबलिङ्गं सिद्धान्ते मुनयो विदुः ।
> गजपाश्चात्यपादेऽथ त्रिः पूर्वप्रतियोगिनि । अन्यस्मिन्नपि'

इत्यभिधानादिति भाव इति केचित् । अपरे तु परा न भवतीति अपरा, न विद्यते परा यस्याः सा अपरा इत्याश्रयणेऽनेकार्थत्वावेदनादिति भाव इत्याहुः ।

**अनुत्तमत्वस्य** निकृष्टत्वस्य । **अपेक्ष्य** 'उक्ता' इति भाष्ये शेषः, तेन ल्यबुपपत्तिः । चित्प्रकृतेरुपस्थितावुपायमाह– **सन्निधानादिति ॥** 'जीवभूतां क्षेत्रलक्षणाम्' इति सङ्क रभाष्यमर्थतोऽनुवदति– **जीवलक्षणामिति ।** 'प्रमाणभूत आचार्यः' इति महाभाष्ये 'प्रमाणत्वं प्राप्तः' इति कैयटव्याख्यानादाह– **जीवत्वं वा प्राप्तामिति ॥** ननु जीवसम्बन्धिप्राणधारकत्वं जीवानामेव, न तु श्रीदेव्या इत्यत आह– **सर्वजीवदेहेष्विति ॥ तत्र** देहेषु । 'स्वभावाकृतिसौन्दर्यवपुषु श्लोकशब्दयोः । रूपम्' इत्यभिधानादाह– **ज्ञानात्मकविग्रहेति ॥** यत एवम्, अतः सा प्राणधारिणी कुतो न स्यादिति चोद्यस्य नावकाश इति भावः ।

श्लोकः ५

तथा च प्राचीनटीका 'ज्ञानानन्दादिगुणसान्द्रमूर्तिरूपा यतो ब्रह्मादिजीवानां प्राणधारिणी । अत एव जीवशब्दोक्ता । यतः श्रीरेवाह स्वसूक्ते 'मया सो अन्नमत्ति यो विपश्यति यः प्राणिति यः' इत्यादीति । चिद्रूपत्वाच्च जीवशब्दोक्तेत्याह– **चिद्रूपेति** ॥ प्राचीनटीकामनुरुन्धानो भाष्य-मन्यथापि योजयति– **यद्वेति । गौणीं वृत्तिमिति** । जीवगतचिद्रूपत्वलक्षणगुणयोगेन जीवशब्दे-नोपचारेण श्रीरेव ग्राह्येत्यर्थः । अनेनाद्यपक्षे 'जीवा चासौ भूता च' इति विग्रहः । 'पुंवत्कर्मधारय' इति पुंवद्भावः । द्वितीये 'जीवश्चासौ भूता च' इति विग्रहः । जीव इव जीव इति जीवशब्दस्य गौणी वृत्तिः । बहुलग्रहणाच्च विशेषणयोरपि समास इत्युक्तं भवति । **भूतशब्दस्येति** । 'भवतेः 'गत्यर्थाकर्मक' इत्यादिना कर्तरि निष्ठान्तस्य' इत्युपस्कर्तव्यम् । **सर्वदा सत्त्ववाचित्वे** सर्वदा विद्यमानार्थवाचित्वे । 'जीवभूताम्' इति विशेषणं किमर्थमित्यत आह– **प्रकृतामिति** ॥ 'भूमिः' इति पूर्वत्र प्रसक्तां जडप्रकृतिमित्यर्थः । 'प्रकृतिमपेक्ष्य' इति पाठे जडप्रकृतिमित्यर्थः । एतत् 'जीवभूताम्' इति विशेषणम् ।

'जडा चैव' इत्येवशब्दस्य **देवस्य** भगवत इत्यनेनान्वय इत्याह– **देवस्यैवेति** ॥ नान्य-स्येत्यर्थः । जडप्रकृतेरष्टविधत्वं गीतोक्तं घटयितुं सृष्टिशब्दार्थमाह– **सृज्यत इतीति** ॥ सृजतेः कर्मणि 'अकर्तरि च कारके' इत्यनुवृत्तेः क्तिन्प्रत्यय इति भावः । **अनेन** प्रमाणोदाहरणेन, 'निरस्तम्' इति सम्बन्धः । 'भूमिरिति पृथिवीतन्मात्रमुच्यते, न स्थूला' इत्यादिसङ्क रभाष्यं निष्कृष्यानुवदति– **भूम्यादिशब्दैरित्यादि** ।

'महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः ।
तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ॥' इति भागवते,

'रसमात्राणि चाम्भांसि रूपमात्रं समावृणेत् ।
तन्मात्राण्यविशेषानि अविशेषास्ततो हि ते ॥'

इति विष्णुपुराणे च प्रयोगान्मात्रशब्दो नपुंसकलिङ्गोऽप्यस्ति । **तत्कारणं** मनसः कारणम् । अहङ्कार उच्यत इति विपरिणम्यानुवर्तते । कुत एवं कल्पनेत्यत उक्तं– **भिन्ना प्रकृतिरष्टधेति वचनादिति** ॥ स्थूलानां प्रकृतित्वायोगादिति भावः । **इति व्याख्यांनसम्भवेनेति** । तथा चानु-पपत्तेरभावेन लक्षणाश्रयणमयुक्तम् । एकेन प्रकृतिपदेनानेकेषामर्थप्रच्यावनं भूयोऽनुग्रहन्यायबाह्यं

चेति भावः । प्राचीनटीकायां तु 'भूम्यादिशब्दैः स्थूलभूम्याद्यभिधानेऽपि तेषामौषध्यादिकारणत्वेन प्रकृतित्वम्, मनोबुद्ध्योश्च संशयनिश्चयकारणत्वेन प्रकृतित्वमवधेयमिति न प्रकृतिशब्दास्वारस्यमस्मत्पक्षे' इत्युक्तम् ।

'महान् बुद्धिर्मनः' इत्यत्र गीतोक्ताहङ्कारापरिगणनाद् विसंवाद इत्यत आह– **महत्यहङ्कारस्येति** ॥ कारणवाचिना महच्छब्देन तत्कार्याहङ्कारस्याप्युपलक्षणमिति न विसंवादः । इदमेव प्रमाणं हृदि कृत्वा 'महतोऽहङ्कार एवान्तर्भावः' इति प्राग्भाषितमिति भावः । अत्रैवार्थ एवशब्दस्य इतिशब्देनान्वय इत्याह– **इत्येवेतीति** ॥ चशब्दावितरेतरसमुच्चये । इत्येव सृष्ट्याऽष्टधाभिन्ना सा प्रकृतिरित्यपि सम्बन्धो द्रष्टव्यः । 'जडा' इति विशेषणं हेत्वर्थगर्भमवरत्वमुपपादयितुं प्रवृत्तमित्याह– **जडेतीति** ॥ 'श्रीश्च' इति चशब्दस्तुशब्दार्थ इति भावेनोक्तम्– **श्रीस्तु परा उत्तमेति** । इयं जडप्रकृतिः **तया चित्प्रकृत्या धार्यते** 'जगत्' इति शेषः । श्रीदेव्याः जडप्रकृतिं प्रति जगद्धारणशक्तिप्रदत्वमुच्यत इत्युत्तमत्वमुपपादितं भवतीति भावः ।

ननु 'अनन्ता' इत्यत्र कालानन्त्योक्तौ 'अनादिनिधना' इति पूर्वोत्तरकालकोटिविहीनत्ववचनं पुनरुक्तं स्यादित्यत आह– **अनन्ता देशतो गुणतश्चेति** ॥ आनन्त्यस्य भगवदेकायतत्त्वविशेषस्य द्योतनार्थः 'सा तु' इति तुशब्द इत्यतो जडप्रकृतिसाधारणं देशानन्त्यमिति चोद्यं प्रत्यस्तम् । गुणानन्त्यमपि भगवदायत्तमेव विवक्षितमिति न तत्राप्यनुपपत्तिशङ्का । 'परा' इति श्रीतत्त्वे परत्ववचनं व्यर्थमित्यतोऽङ्गावतारन्यायेन श्रीविशेषणानादिनिधनत्वविशेषणम् इत्यभिप्रेत्य व्याचष्टे– **परा मुख्येति** ॥ 'परा' इति पदं परस्ताच्छ्रुतमपि अनादिनिधनविशेषणमिति ज्ञापनार्थमवैयर्थ्यार्थं च 'अनन्ता', 'अनादिनिधना' इति पदयोर्मध्ये व्याख्यातम् । श्रीदेव्यां मुख्यानादिविशेषणवत्त्वकथनस्य व्यावर्त्यमाह– **न त्वव्यक्तवदिति** ॥ ।

**गीताक्षरार्थस्तु**– न केवलं जडप्रकृतिरेव मद्वशा, अपि तु चित्प्रकृतिरपीत्युच्यते **अपरेयमिति** ॥ इयं पूर्वश्लोकोक्ता जडप्रकृतिः, अपरा वक्ष्यमाणचेतनप्रकृत्यपेक्षया अनुत्तमा । इतः जडप्रकृतितस्तु अन्यां जीवभूतां 'जीवा च सा भूता च' इति विग्रहः, तां जीवानां प्राणधारिणीं सर्वजीवदेहेषु स्थित्वा तदीयान् प्राणांस्तत्र धारयतीत्यर्थः । यद्वा जीव इव जीव इति चित्त्वसादृश्याद् गौण्या वृत्त्या श्रीतत्त्वं जीवशब्दार्थः । भूता सर्वदा विद्यमाना च । एतच्च विशेषणद्वयं सर्वजीवनदात्री, अनादिनिधनाऽपि श्रीर्भगवदधीनेति माहात्म्यस्फोरणाय ।

श्लोकः ५

जडप्रकृत्यपेक्षया पराम् उत्तमां प्रकृतिं चित्प्रकृतिं श्रीदेवीं मे मदधीनां विद्धि । परत्वे हेतुः ययेदं धार्यते जगदिति ॥ ५ ॥

**भावदीपिका (श्री.टि.)– ॥ अनेकार्थत्वादिति ॥** परशब्दस्य वैरिपर्यायत्वात्, अपरशब्दः अवैरित्वाद्यर्थक इत्यर्थः । भाष्ये 'वक्ष्यमाणाम्' इत्यनन्तरं 'पराम्' इति शेषः । **सन्निधानादिति ॥** 'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्' इति शब्दसन्निधानादित्यर्थः । **ज्ञानात्मकेति ॥** तथा च देहातिरिक्तप्राणास्तस्या न सन्ति यतः, अतः 'स्वप्राणधारिणी' इत्यर्थो नाङ्गीकार्य इति भावः । **गौणीं वृत्तिमिति ॥** जीवगतचिद्रूपत्वगुणयोगेनेत्यर्थः ।

ननु 'जीवभूताम्' इति विशेषणस्य किं प्रयोजनमित्यत आह– **प्रकृतिमिति ॥** जडप्रकृतिमित्यर्थः । अनेन 'सर्वदा सती' इत्यत्र 'एकप्रकारेण' इति ग्राह्यम् । जडप्रकृतेश्च विकारित्वेन तदभावादिति भावः । **एतदिति ॥** 'जीवभूताम्' इति विशेषणम् । **देवस्यैवेति ॥** 'अधीनः' इति शेषः । 'सृष्ट्या' इत्यस्यार्थमाह– **सृज्यत इति ॥** पञ्चतन्मात्राणि पृथिव्यादिभूतकारणभूतानि गन्ध, रस,स्पर्श,शब्दाख्यानीत्यर्थः । कुत एवं व्याख्येयमित्यत आह– **भिन्ना प्रकृतिरिति ॥** भास्करस्येदं व्याख्यानम् । तन्मते च प्रकृतिशब्द उपादानार्थकः । अत एवानुव्याख्याने तन्मतानुवादसमये 'न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते' इत्युक्तम् । एवञ्चात्र गीतायामुत्तरत्रोपादानकारणस्यैवाष्टधा भिन्नत्वोक्तेः, भूम्यादिशब्दैस्तदुपादानमेव ग्राह्यमिति भावः । **प्रसिद्धार्थेति ॥** गुणत्रयलक्षणप्रसिद्धप्रकृतिपदार्थेत्यर्थः ।

ननु गीतायामहङ्कारतत्त्वग्रहणात्, प्रमाणे च तदभावाद् विसंवाद इत्यत आह– **महतीति ॥** कार्यस्य कारणान्तर्गतत्वात्, तद्ग्रहणेन कार्यमपि गृहीतमेवेति भावः । **इत्येवेति ॥** तथा च 'इत्येवाष्टधा भिन्ना' इत्यन्वयो द्रष्टव्यः ।**इयम्** जडा प्रकृतिः । **तया** श्रिया । 'अनादिनिधना' इति कालानन्त्यस्य वक्ष्यमाणत्वादाह– **देशतो गुणतश्चेति ॥** ननु श्रियो देशत आनन्त्यं सम्भवति, 'समना च' इत्युक्तत्वात् । गुणत आनन्त्यं तु कथम् ?

'देशतः कालतश्चैव गुणतश्च त्रिधा ततिः ।
सा समस्ता हरेरेव न ह्यन्ये पूर्णसद्गुणाः ॥'

इति तस्य भगवदसाधारणधर्मत्वावगमेन, अस्यामसम्भवात् । ब्रह्मापेक्षया कोटिगुणाधिकत्वेन गुणतः सान्तत्वमेव, इति चेत्, सत्यम् । गुणतोऽनन्तशब्दस्य बहुगुणवत्त्वे तात्पर्यान्न दोष इति ध्येयम् । भाष्ये 'अनादिनिधनेन परा' इत्यर्थो द्रष्टव्यः ॥ ५ ॥

भावप्रकाशः (कृ.टि.)– ॥ **अनेकार्थत्वादिति** ॥ 'अपरस्त्वधुनार्थे स्यात् पश्चाद्गात्रे च दन्तिनः । अवाचीनेऽपरं प्राहु'रिति विश्वोक्तेरिति भावः । ननु जीवसम्बन्धिप्राणधारकत्वं जीवानामेव न तु प्रकृतेरित्यत आह– **सर्वजीवेति** ॥ **गौणीवृत्तिमिति** ॥ जीवगतचिद्रूपत्वगुण-योगेनेत्यर्थः । ननु जीवभूतेति विशेषणं किमर्थमित्यत आह– **प्रकृतिमपेक्ष्येति** ॥ नन्वनन्तेति कालानन्त्योक्तौ अनादिनिधनेति पुनरुक्तं स्यादित्यत आह– **अनन्ता देशतो गुणतश्चेति** ॥ अत्र गुणानन्त्यमेव बहुगुणत्वरूपं परत्वोपपादकम् । न तु देशानन्त्यं जडप्रकृतिसाधारण्यादिति विवेक्तव्यम् । परशब्दस्यानेकार्थत्वादाह– **परा मुख्येति** ॥ मुख्यत्वं सविशेषणे हीति न्याये-नानादिनिधनत्वान्वयि अन्यथा वैयर्थ्यादिति भावेन तद्व्यावर्त्यमाह– **न त्वव्यक्तवदिति** ॥ ५ ॥

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।**
**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥**

## भाष्यम्

**न केवलं ते जगत्प्रकृती मद्वशे इत्येतावन्मदैश्वर्यम् इत्याह– अहमिति॥ प्रभवादेः सत्ताप्रतीत्यादेः कारणत्वात् तद्वोक्तृत्वाच्च प्रभव इत्यादि ।**

भावप्रदीपिका (प.टी.)– उत्तरश्लोकमवतारयति– **न केवलमिति** । जगत्प्रकृती जगत्कारणप्रकृती । ननु केनाभिप्रायेण प्रभवादेर्भगवदैक्यमुच्यते ? इत्यत आह– **प्रभवादेरिति** । भोक्तृभोग्ययोरैक्यव्यपदेशो यथा 'अस्य जीव एव कदलीफलम्' इति ।

भावप्रकाशिका (न.टी.)– न च जगत्कर्त्रोर्भगवदधीनत्वमात्रं भगवदैश्वर्यम् । किन्तु तयोर्महदादिषु च सर्वेषु स्थित्वा भगवानेव जगदुत्पत्त्यादि करोति । स एव सर्वस्मात् परतमः । तस्मिन्नेव सर्वमिदं प्रोतमितीत्यभिप्रायेणोत्तरं श्लोकत्रयमवतारयति– **न केवल-मिति** । ननु भवत्पक्षे प्रभवप्रभवित्रोरभेदात् 'अहं कृत्स्नस्य जगतः प्रभवः' इत्याद्युक्तौ 'अहं

कृत्स्नं जगत्' इत्येवोक्तं स्यात् । तर्हि कथं भगवतः सर्वस्माद्भेद इत्यत आह– **प्रभवादेरिति** । स्वकृतक्षेत्रादिरूपेणोच्यमानमैत्रादिवत् प्रभवादिभोक्तृत्वादपि प्रभव इत्याद्युच्यते । मैत्रादेर्व्रीह्यादिप्रभवादिवत् सर्वजगत्प्रभवादिर्भगवतो भोज्य इति भावः ॥

**प्रमेयदीपिका (ज.टी.)–** नन्वत्रापरपरनिरूपणपूर्वकं भगवतो यत्परत्वं वक्तुमभिप्रेतं तत्र शरीरेन्द्रियविषयलक्षणाख्यकार्यस्य जीवानां च तयोरेवान्तर्भाव इति दर्शयितुम् 'एतद्योनीनि' इत्युक्तम् । इदानीमहं परतर इति वक्तव्यम् । इदं तु किमर्थमुच्यते? इत्यत आह– **न केवलमिति** ॥ पूर्वं वाक्यभेदेन प्रकृत्योरवरत्वं परत्वं 'मे' इति स्ववशत्वं चोक्त्वा 'ययेदं धार्यते जगत्, एतद्योनीनि' इति जगदाधारत्वकारणत्वे कथिते । तत्र प्रकृती एव भगवद्वशे जगज्जन्मस्थितिलयास्तु प्रकृत्यधीना एव न भगवदधीना इति प्रतीतम् । तन्निरासार्थमेतदित्यर्थः । जगत्प्रति ममैश्वर्यमित्येतावत् प्रकृतिद्वारकमुपचरितमिति यावत् । प्रकृत्योः कारणत्वादिकं मदायत्तमिति भावः । 'जगद्धर्मयोः प्रभवप्रलययोः साक्षाद् भगवदैक्यमुच्यते' इति प्रतीतिनिरासार्थमाह– **प्रभवादेरिति** ॥ यथा पुत्रादिप्रभवो रिपुप्रलयश्चोपलब्धः सुखहेतुरित्युपलब्धः पित्रादेः तद्भोक्तृत्वं तथा तद्भोक्तृत्वात् ॥

भाववोधः (र.टि.)– ॥ **तयोरेवान्तर्भाव** इति ॥ कार्यरूपजडस्य कारणे भूम्यादौ जीवानां जीवप्राणधारकचित्प्रकृतावन्तर्भाव इत्यर्थः । 'इति दर्शयितु'मित्यनेन 'एतद्योनीनि' इत्यस्य प्रकृतोपयोगः स्पष्टं प्रतीयते इति भाष्ये तदनुक्तिरित्युक्तं भवति । **वाक्यभेदेनेति** ॥ अहङ्कार इत्यष्टधा भिन्ना इयं प्रकृतिर्मे मदधीना जीवभूतप्रकृतिमपेक्ष्यापरा चेति विद्धीत्येकं वाक्यम् । इतः जडप्रकृतितः अन्यां ततः परां मे मदधीनां विद्धीत्यपरं वाक्यमिति वाक्यभेदेनेत्यर्थः ।

ननु 'जगत्प्रकृती' इत्यत्र द्वन्द्वसमासत्वे जगतो भगवद्वशत्वस्यानुक्तत्वादनुक्तसङ्ग्रहः । परापरप्रकृत्योर्भगवद्वशत्वस्योक्तत्वेनैकप्रकृतिपरित्यागश्चापद्यते । षष्ठीतत्पुरुषत्वे जगदिति व्यर्थमित्यतो भिन्नपदत्वमाश्रित्यान्वयं दर्शयन् व्याचष्टे– **जगत्प्रतीति** ॥ 'न केवल'मित्यस्य व्यावर्त्यमाह– **प्रकृत्योः कारणत्वमिति** ॥ विष्णोर्जगत्प्रभवादिभोक्तृत्वप्रकारं सदृष्टान्तमाह– **यथा पुत्रादिप्रभव इति** ॥

श्लोकः ६

**भावदीपः (रा.टि.)**– भाष्ये अनुक्तेः पूर्वार्धतात्पर्यं दुर्गमत्वात् स्वयं व्यक्तीकुर्वन्नेवोत्तरार्धसम्बन्धभाष्यमवतारयति– **नन्वत्रापर इत्यादिना** ॥ **वाक्यभेदेनेति** ॥ 'इयं जडरूपा प्रकृतिरपरा' इत्येकं वाक्यम् । 'इतः जडप्रकृतितः अन्यां जीवभूतां परां विद्धि' इत्यन्यद्वाक्यम् । 'सा च मे मदीया मदधीना' इत्यपरं वाक्यम्' इति वाक्यभेदेनेत्यर्थः ॥ 'जगत्प्रकृति' इत्यत्र जगत्पदस्य षष्ठ्यन्ततया प्रकृतिविशेषणत्वे वैयर्थ्याद् अन्यथा योजयति– **जगत् प्रतीति** ॥ प्रकृती मद्वशे इत्युक्तम् एतत्च्छब्दपरामृष्टम्, तस्य फलितार्थमाह– **प्रकृतिद्वारकमिति** ॥ प्रकृत्यादिभोक्तृत्वं हरेर्व्यनक्ति– **यथेत्यादिना** ॥

**भावरत्नकोशः (सु.टि.)**– पूर्वसन्दर्भानुवादपूर्वम् 'अहं कृत्स्नस्य' इत्यधिगमनिकाभाष्यमवतारयितुं शङ्कते– **नन्वपरेति** ॥ अपरशब्दस्यानुत्तमार्थस्यार्थानुवादः– **अवरेति** ॥ **अभिप्रेतमिति** ॥ अपरवस्तुपरवस्तुनिरूपणानन्तरं परतरवस्तुनिरूपणस्य विस्तरप्राप्तत्वादिति भावः । 'एतद्योनीनि भूतानि' इत्यर्धमपि प्रकृतानुपयुक्तम् इत्यतोऽस्य प्रकृतोपयोगं दर्शयति– **तत्र शरीरेन्द्रियेति** ॥ 'भूतानि सशरीरान् जीवान्' इत्यष्टमाध्यायभाष्ये शरीरपदमुपलक्षणमिति भावेन 'शरीरेन्द्रियविषयलक्षणस्य कार्यस्य जीवानां च' इति भूतशब्दार्थोक्तिः ॥ **तयोरेवेति** ॥ भूतशब्दस्य चिदचिद्विषयवस्तुवाचित्वेन शरीरादिलक्षणकार्यस्य जडप्रकृतौ, जीवानां च चित्प्रकृतावन्तर्भाव इति दर्शयितुं जडाजडप्रकृतिकारणकानि भूतानीत्युक्तमित्यर्थः । **इदं तु** 'अहं सर्वस्य जगतः' इत्यर्धं तु । कृतचोद्यपरिहारं भाष्यारूढं वक्तुमाह– **पूर्वमिति** ॥ 'इयं मे भिन्ना प्रकृतिः' इति, 'प्रकृतिं विद्धि मे पराम्' इति । 'च', 'मे' इत्यस्य द्विरावृत्तितात्पर्यम् **वाक्यभेदेनेति** ॥ 'इयं मे भिन्ना प्रकृतिः' इति, 'प्रकृतिं श्रीदेवीं परां विद्धि' इत्येकं वाक्यम् । 'तां च मद्वशां विद्धि' इत्यपरं वाक्यम् इति वाक्यभेदेनेत्यर्थः । **एतत्** 'अहं कृत्स्नस्य जगतः' इति वाक्यम् ।

ननु 'जगत्प्रकृती' इति द्वन्द्वाभ्युपगमे बहुवचनश्रवणप्रसङ्गः । परापरप्रकृत्योः प्रस्तुतत्वात् । 'जगतः प्रकृती' इति षष्ठीतत्पुरुषाश्रयणे जगत्पदस्य नातीव प्रयोजनम् इत्यतो 'जगत्' इति पृथक् पदं द्वितीयान्तम् । द्वितीया च कर्मप्रवचनीययोगलक्षणेति भावेन प्रतिशब्दं संयोजयति **जगत्प्रति** इति । **इत्येतावत्** 'प्रकृती मद्वशे इत्येतावत्' इत्यस्य फलितं दर्शयति– **प्रकृतिद्वारकमिति** ॥ किमुक्तं भवतीत्यत आह– **उपचरितमिति यावदिति** ॥ प्रकृतिनिष्ठजगदाधारत्वजगत्कारणत्वरूपम् ऐश्वर्यं प्रकृतिस्वामिन्युपचर्यत इत्यर्थः । ननु जगत्कारणत्वाद्यैश्वर्यं प्रकृतिद्वारकमुपचरितं

भवतीत्युक्त्या भगवतः साक्षाज्जगत्कारणत्वादिकं गीताभिप्रेतमित्युक्तं स्यात् । नच तद्युज्यते । 'प्रभवादेः सत्ताप्रतीत्यादिकारणत्वात्' इत्युत्तरभाष्येण जगद्धर्मभूतप्रभवादिकारणत्वस्यैव साक्षात् प्रत्यायनात्, जडप्रकृतिस्वभावपरिणामलक्षणकारणत्वस्य भगवति सर्वथाऽनुपपत्तेश्चेत्यत आह– **प्रकृत्योरिति** ॥

अनेन यदुक्तं 'प्रकृती एव भगवद्वशे, जगज्जन्मादिस्थितिलयाः तत्प्रकृत्यधीना एव, न भगवदधीना' इति तन्निरस्तम् । प्रकृत्योरिव प्रकृतिनिष्ठकारणत्वाधारत्वयोरपि 'अहं कृत्स्नस्य जगतः' इति भगवदधीनत्वकथनादिति । प्राचीनटीकायां भावदीपिकायां च 'जगतः प्रकृती जगत्प्रकृती' इति विग्रह इति लभ्यत इति ।

ननु प्रभवप्रलययो रूपरसादिवद् भोग्यत्वाभावात् कथं तद्भोक्तृत्वं भगवतः ? इत्यतः तद्बुद्ध्यारोहाय दृष्टान्तेनोपपादयति **यथा पुत्रादीति** । तत्सत्तायाश्च मदधीनत्वेन तदभेदव्यपदेशः 'सर्वं खल्विदं ब्रह्म' 'राजा राष्ट्रम्' इत्यादौ दृष्टः । 'यदधीना यस्य सत्ता तत् तदित्येव भण्यते' इति शास्त्रात् । भोग्यभोक्त्रोरैक्यव्यपदेशश्च 'असौ जीव एव कदलीफलम्' इत्यादौ दृष्ट इति भावप्रदीपिकायाम् उक्तम् । उक्तं च 'सर्वयज्ञभुजे नमः' इत्यत्र यज्ञभोक्तृत्वात् 'यज्ञनाम्नः' इतीशावास्यटीकायाम् । वक्ष्यति च 'आह च' इति भाष्यगमनिकायाम् ॥

**भावदीपिका (श्री.टि.)–** ॥ **परापरेति** ॥ प्रकृती इत्यर्थः । **विषयः** शब्दादिः । **तयोरेवेति** ॥ परापरप्रकृत्योरेवेत्यर्थः । तत्र शरीरेन्द्रियादिरूपजडस्य कारणे भूम्यादौ, जीवानां च जीवप्राणधारकचित्प्रकृतावन्तर्भाव इत्याशयः । **इति दर्शयितुमिति** ॥ तथा च 'एतद्योनीनि' इत्यस्य प्रकृतोपयोगः स्पष्टं प्रतीयत इति भाष्ये तदनुक्तिरित्युक्तं भवति । **इदं त्विति** ॥ 'अहं कृत्स्नस्य' इतीदं वाक्यमित्यर्थः । **वाक्यभेदेनेति** ॥ 'अष्टधा भिन्नेयं प्रकृतिः मे मदधीना जीवभूतप्रकृतिम् अपेक्ष्यापरा चेति विद्धि' इत्येकं वाक्यम्, 'इतो जडप्रकृतितोऽन्यां ततः परां चित्प्रकृतिं मे मदधीनां विद्धि' इत्यपरं वाक्यमिति वाक्यभेदेनेत्यर्थः ।

ननु 'जगत्प्रकृती' इत्यत्र द्वन्द्वसमासाश्रयणे जगतो भगवद्वशत्वस्य साक्षादनुक्तानुवादापत्तिः, परापरप्रकृत्योर्भगवद्वशत्वस्योक्तत्वेन एकप्रकृतिपरित्यागश्चापद्येत । षष्ठीतत्पुरुषाश्रयणे तु 'जगत्' इति व्यर्थमित्यतो भिन्नपदत्वम् आश्रित्यान्वयं दर्शयन् व्याचष्टे– **जगत्प्रतीति** ॥ 'केवलं प्रकृती

श्लोकः ६

मद्वशे इत्येतावत्' इत्यस्य तात्पर्यार्थः – **प्रकृतिद्वारकमुपचरितमितीति** ।। केवलशब्दार्थः– **उपचरितमिति** ।। मदधीनप्रकृतेर्जगत्कारणत्वात् तद्द्वारा परम्परया जगदपि मदधीनमित्युपचरितमित्यर्थः । 'केवलमुपचरितं न' इत्यस्य फलितमर्थमाह– **प्रकृत्योरिति** ।। प्रकृतिनिष्ठं जगत्कारणत्वादिकमित्यर्थः । तथा च 'प्रकृती मद्वशे इत्येतावत्' इत्येतावता जगत्प्रति ममैश्वर्यं केवलं प्रकृतिद्वारकमुपचरितं न भवति, किं नाम ? यत् प्रकृतेर्जगत्कारणत्वादि तत् सर्वं मदधीनम्, अतोऽहमेव मुख्यतो जगत्कर्तेति जगत् प्रति ममैश्वर्यं न प्रकृतिद्वारकमुपचरितमित्याहेति भाष्यार्थो द्रष्टव्यः । विष्णोर्जगत्प्रभवादिभोक्तृत्वप्रकारं सदृष्टान्तमाह– **यथेत्यादिना** ।। 'पित्रादेः' इत्यत्रादिपदाद् वैरिग्रहणम् । तथा च यथा पुत्रप्रभव उपलब्धः सुखहेतुरिति तदुपलब्धुः पितुः पुत्रादिप्रभवभोक्तृत्वम्, तथा रिपुप्रलयश्चोपलब्धः सुखहेतुरिति तदुपलब्धुस्तद्वैरिणो रिपुप्रलयभोक्तृत्वम्, तथा जगत्प्रभवप्रलययोरप्युपलब्धयोर्भगवत्सुखव्यक्तिकारणत्वेन तदुपलब्धुर्भगवतस्तद्भोक्तृत्वं युक्तमित्यर्थः ।

**भावप्रकाशः (कृ.टि.)**– ।। **तयोरेवान्तर्भाव इति** ।। अपरप्रकृतिवाचकशब्देन तत्कार्यशरीरादेरुपलक्षणम् । परप्रकृतिवाचकशब्देन तु चिद्रूपत्वाख्यगुणयोगेन गौण्या जीवानां ग्रहणमित्यर्थः ।। कथमनेनोक्तशङ्कानिवृत्तिरित्यत आह– **पूर्वमिति** ।। **वाक्यभेदेनेति** ।। अष्टधा भिन्नेयं प्रकृतिर्मदधीनेत्येकम् । इयं चापरेति द्वितीयम् । एवमितोऽन्यां प्रकृतिं परां विद्धीत्येकं वाक्यम्, तां च मे मदधीनां विद्धीति द्वितीयमित्येवं वाक्यभेदेनेत्यर्थः ।।

ननु केवलं ते जगत्प्रकृती मद्वशे इत्येतावन्मदैश्वर्यं नेत्युक्त्याऽधिकमपि मद्वशमिति प्रतीयते । न च तद्युक्तम् । अधिकस्यैवाभावादिति चेन्न । ममैश्वर्यं जगत्प्रकृती मद्वशे इत्येतावत्केवलं नेत्यन्वयात् । ननु तथाऽपि 'जगत्प्रकृती' इति न द्वन्द्वः । परापरप्रकृत्योः भगवद्वशत्वस्योक्तत्वेनैकप्रकृतिपरित्यागापत्तेः । प्रकृतिपदस्य जगदुपलक्षकत्वेन जगत्पदवैयर्थ्यापत्तेश्च । षष्ठीतत्पुरुषत्वे च 'जगतः' इति व्यर्थमित्यतो भिन्नपदत्वमाश्रित्य व्यवहितान्वयमाह– **जगत् प्रतीति** ।। ननु 'इत्येतावत्' इत्यनेन जगदैश्वर्यस्य प्रकृतिस्वामित्वतादात्म्यमनूद्यत इति वक्तव्यम् । नच तद्युक्तम् । तादात्म्यस्याप्रसक्तेरित्यत आह– **उपचरितमिति यावदिति** । उपचारजीवसम्बन्धं वक्तुमुक्तम् । **प्रकृतिद्वारकमिति** ।। प्रकृतिनिष्ठं जगदाधारत्वादिरूपं जगदैश्वर्यं प्रकृतिस्वामिन्युपचर्यत इत्यर्थः । ननु 'जगत्कारणत्वाद्यैश्वर्यं प्रकृतिद्वारकमुपचरितं न भवतीत्याह' इत्यनेन भगवतः साक्षाज्जगत्कारण-

श्लोकः ६
त्वादिकं गीताप्रतिपाद्यमिति प्राप्तम् । नचैतद्युज्यते । 'प्रभवादेः सत्ताप्रतीत्यादी'ति भाष्येण जगत्कारणत्वादिस्वाम्यस्यैव गीताप्रतिपाद्यत्वोक्तेः । अन्यथा सत्ताप्रतीत्यादिशब्दवैयर्थ्यादित्याङ्कृच 'न केवल'मित्यस्य फलितमाह– **प्रकृत्येरिति** ॥ ननु प्रभवादिरूपादिवद्भोग्यत्वाभावात् कथं तद्भोक्तृत्वं भगवत इत्यत आह– **यथा पुत्रादीति** ॥

## भाष्यम्

**तथाच श्रुतिः– 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' (छां.उ.३.२.१४) इति ।**

भावप्रदीपिका (प.टी.)– ईश्वरस्य सर्वभोक्तृत्वे प्रमाणमाह– **तथा चेति** । अहमेतादृश इति वाक्यरहितः अवाकी, ईदृश इति निरूपणं च नास्तीति अनादरः ॥

भावप्रकाशिका (न.टी.)– ननु रमाविरिञ्चादिदेवदानवमानवा अपि जगति भागशः कुर्वन्तो भुञ्जाना अपि दृश्यन्ते श्रूयन्ते च केचन । अतो भगवानेव कथं सर्वस्य जगतः कर्ता भोक्ता च ? इत्यत आह– **तथा चेति** । कामाः इच्छाः, तद्विषयाश्च कर्मव्युत्पत्त्या । ते सर्वे सर्वाणि च कर्माणि यस्माद्रमाविरिञ्चाद्यन्तर्यामिणः पृथक्स्थिताश्च स सर्वकामः सर्वकर्मा ॥ अनेन यदिच्छामात्रेण सर्वजगत उत्पत्त्यादिकर्तृत्वं यच्च व्यापारपूर्वकं तदुभयविधं भगवत एव संपूर्णस्वातन्त्र्येण च । रमादीनां यद्भागशः कर्तृत्वं तदपि केवलं तदायत्तमित्युक्तं भवति । उपलक्षणार्थौ गन्धरसशब्दौ । अतो गन्धरसरूपस्पर्शशब्दाः सर्वे यस्याधीनाः स सर्वगन्धः इत्यादि । अनेन भगवान् यथेष्टतः सारभोक्तेति सिद्ध्यति ॥

देवदानवमानवानां सारासारमिश्रभोजकत्वेऽपि न भगवत्सर्वभोक्तृत्वहानिः । स्वप्रियविद्वेष्युदासीनानां सारासारमिश्रभोजकत्वस्यापि स्वभोगत्वात् । **सर्वमिदमभ्यात्तः** सर्वेणानेन जगताऽभितः स्वीकृतो भगवान् । तं विनाऽस्य सर्वस्य जगतः सत्तप्रतीतिप्रवृत्तिशक्त्याद्यभावात्, स्वस्यैव तद्विनाऽपि सत्तप्रतीतिशक्त्यादिसम्पूर्णत्वात् 'अहो मयेदं लब्धम्' इति न वक्ति न वर्णयतीति अवाकी । मनसाऽपि नादरं करोतीति अनादरः इत्यर्थः ॥

प्रमेयदीपिका (ज.टी.)– भगवतः सर्वभोक्तृत्वं कुतः? इत्यत आह– **तथा चेति** ॥ 'सर्वकामः' इत्यादेः द्विरुक्तत्वादेकं भोगविषयमिति ज्ञायते । काम्यन्त इति कामाः द्रव्याणि ।

श्लोकः ६

**गन्धरसशब्दौ गुणान्तरस्याप्युपलक्षकौ । सर्वमिदम् अभि अभितः । आत्तः धृतः स्थित इत्यर्थः । न विद्यते वाक्यमनुग्रहमन्तरेण यस्यासाववाक्यः । न विद्यते आदरः आश्चर्यबुद्धिः यस्यासौ नादरः । अवाक्यश्चासौ नादरश्चेति अवाक्यनादरः ॥**

**भावदीपः (रा.टि.)– ॥ द्विरुक्तत्वादिति ॥** छान्दोग्ये तृतीये 'सर्वं खल्विदं ब्रह्म' इति चतुर्दशे खण्डे 'सर्वकामः' इत्यादिवाक्यस्य द्विरुक्तत्वादेकं स्वरूपपरम्, अन्यत् तद्भोक्तृत्वपरम् । तथैव तद्भाष्योक्तेः । अन्यथा पुनरुक्तताप्रसङ्गादिति भावः ॥

**भावरत्नकोशः (सु.टि.)–** ननु 'सर्वकामः' इत्यादिना काम्याद्यैक्यमेवोच्यते, न पुनस्तद्भोक्तृत्वमिति कथमिदं वाक्यं प्रकृतार्थे प्रमाणं स्यादित्यत आह– **सर्वकाम इत्यादेरिति ॥** 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः'इति वाक्यं छन्दोगोपनिषदि द्विः पठ्यते । तत्रैकं गन्धाद्यैक्यबोधनपरम्, अन्यत् गन्धादिभोगबोधनपरम्, अन्यथा वैयर्थ्यप्रसङ्गात् । तथा च छान्दोग्यभाष्यम् 'एकत्र सर्वगन्धादिना चिदानन्दात्मकसर्वगन्धादिरूपत्वमुच्यते । अन्यत्र तद्भोक्तृत्वमिति' इति भावः । ननु कामो नामेच्छापरनामकोऽभिलाषः । स च न भोग्य इत्यतः विवक्षितं कामशब्दार्थमाह– **काम्यन्त इतीति ॥** द्रव्याणि हविःपुष्पफलादीनि । ननु सर्वभोक्तृत्वे नेदं मानम् । गन्धरसयोरेवात्र श्रवणात्, इत्यत आह– **गन्धरसशब्दाविति ॥** गुणान्तरस्य शब्दादेः ॥

ननु भोग्यार्थान् प्रति भगवत आभिमुख्येन स्थितौ स्यादिदं भोगवचनम् । तदेव कथमिति शङ्काऽपनोदाय श्रुतौ 'सर्वमिदमभ्यात्तः' इत्युक्तम् । तदर्थमाह– **सर्वमिदमिति ॥** 'अभिरभागे' इत्यभेः कर्मप्रवचनीयत्वम्, कर्मप्रवचनीययोगे च द्वितीया इति भावेन 'अभि' इत्यस्यार्थ उक्तः **अभित इति ।** यद्यपि 'पर्यभिभ्यां च' इत्यत्र सर्वोभयार्थयोरेव तसिर्नियमित इति, उभयतः पार्श्वद्वये इत्येवार्थः प्राप्त इति 'अभितः' इत्यस्य नाभिमुख्यार्थकत्वलाभः । तथाऽपि 'समीपोभयतःशीघ्रसाकल्याभिमुखेऽभितः' इत्यमरव्याख्याने अभिमुखे यथा 'अभितः समापतन्तम् अरिमपश्यत् आभिमुख्येन आपतन्तं शत्रुमपश्यदित्यर्थः' इत्युक्तेराभिमुख्यार्थकत्वकथनं न दोषाय । आङ्पूर्वाद् 'डु दाञ् दाने' इत्यतः कर्मणि निष्ठायाम् 'आत्तः इति रूपम् । तदर्थमनूद्याह– **आत्तो धृत इति ।** जगतो भगवत्कर्मकधारणं नाम किमित्यतस्तत्तात्पर्यमाह– **स्थित इतीति ॥** तिष्ठतेरकर्मकत्वात्

श्लोकः ६

कर्तरि क्तप्रत्ययः सर्वमिदमभितो भगवान् स्थित इति सर्वाभिमुख्यसद्भावाद् युक्तमेव तस्य सर्वभोक्तृत्वमिति भावः । तदुक्तं प्राचीनटीकायाम् 'सर्वमिदम् अभ्यात्तः सर्वेण अनेन जगताऽभितः स्वीकृतो भगवान्' इति । 'न विद्यते वाक्यमस्य' इत्युक्ते अवक्तृत्वम्, अवाच्यत्वं वा स्यात् । तच्च 'यो वै वेदांश्च प्रहिणोति तस्मै', 'ईक्षतेर्नाशब्दम्' इत्यादिवहुप्रमाणविरुद्धमित्यत उक्तम्– **अनुग्रहमन्तरेणेति** ।। अवाक्यपदेन वक्तृत्वाभाव एव विवक्षितः । न चैवं मूकता वा स्यादिति वाच्यम् । प्राकृतस्यैव निरर्थकवाक्यवक्तृत्वाभावस्याभिसंहितत्वादिति ।

आदरशब्दस्य विवक्षितमर्थमाह– **आश्चर्यबुद्धिरिति** ।। 'विशेषणं विशेष्येण वहुलम्' इति बहुलग्रहणाद् विशेषणयोरपि समासः, नसमासत्वात् नलोपाभावश्च, इति मनसि निधायाह – **अवाक्यश्चासौ नादरश्चेतीति** ।। प्राचीनटीकायां तु 'इदमद्य मया लब्धम्' इति न वक्ति न वर्णयतीति 'अवाकी', मनसाऽपि नादरं करोतीति 'अनादरः' इत्युक्तम् । तत्र 'वच परिभाषणे' इत्यतो भावे घञि 'चजोः कु घिण्ण्यतोः' कुत्वेन वाकः वाक्यम्, सोऽस्यास्तीति 'वाकी' स न भवतीति अवाकी इति, न विद्यत आदरो यस्येति 'अनादरः' इत्येव च व्युत्पत्तिः ।। 'न वक्ति' इत्यादि तु फलितप्रदर्शनमेवमित्यवधेयम् । अवाक्योऽनादरश्चेति विशेषणद्वयं च भगवतो महाप्रभुत्वात् सम्भवति । सर्वभोक्तृत्वं भुञ्जानोऽपि न प्राकृत इवाश्चर्यबुद्ध्या शुभविषयान् गन्ध-रसादींश्चोपभुङ्क्त इति विभावयितुमुपात्तमित्याहुः ।

**भावदीपिका (श्री.टि.)**– ननु 'सर्वगन्धः सर्वरसः' इत्यादिना सर्वगन्धादिरूपत्वमेवोच्यते, नतु तद्भोक्तृत्वम् । अतः कथमियं श्रुतिर्भोक्तृत्वे प्रमाणमित्यत आह– **सर्वकाम इत्यादेरिति** ।। 'छान्दोग्यश्रुतौ' इति शेषः । 'सर्वकामः सर्वकर्मा सर्वगन्धः सर्वरसः' इत्युक्त्वा पुनरुत्तरत्रापि 'सर्वकामः सर्वकर्मा सर्वगन्धः सर्वरसः' इत्युक्तत्वादेकं सर्वगन्धादिभोगविषयम्, अपरं सर्वगन्धादि-स्वरूपविषयमित्यवश्यमङ्गीकार्यम् । अन्यथा पौनरुक्त्यापत्तेः । उक्तं च छान्दोग्यभाष्ये 'एकत्र सर्वगन्धादिना चिदानन्दात्मकसर्वगन्धादिरूपत्वमुच्यते, अन्यत्र तु तद्भोक्तृत्वम्' इति । तथा च 'एतद्योनीनि' इत्यस्य प्रकृतोपयोगः स्पष्ट इति भाष्ये तदनुक्तिरित्युक्तं भवति । **इदं त्विति** ।। 'अहं कृत्स्नस्य' इदीदं वाक्यमित्यर्थः ।। **प्रकृतिद्वारकमुपचरितमितीति** ।। केवलशब्दार्थः– **उपचरित-मिति** ।। मदधीनप्रकृतेर्जत्कारणत्वात् तद्द्वारा परम्परया जगदपि मदधीनमित्युपचरितमित्यर्थः । **द्रव्याणीति** ।। तथा च तद्भोक्तृत्वं युक्तमित्याशयः । **'स्थितः'** इति तात्पर्यार्थः । **आश्चर्यबुद्धि-रिति** ।। स्वस्यैव सर्वाश्चर्यरूपत्वात्, तस्यान्यत्राश्चर्यबुद्धिर्नास्तीत्यर्थः ।

श्लोकः ६

भावप्रकाशः (कृ.टि.)– ननु 'सर्वकाम' इत्यादिना कामाद्यैक्यमुच्यते, न तु तद्धोक्तृत्वमित्यत आह– **सर्वकाम इत्यादेरिति** ॥ 'सर्वकाम' इति वाक्यं छान्दोग्ये द्विः श्रूयते । तत्रैकं गन्धादिभोगपरं द्वितीयं गन्धाद्यैक्यपरम् । अन्यथा पुनरुक्तेः । अत एवोक्तं छान्दोग्यभाष्ये । एकत्रानन्दात्मकसर्वगन्धादिरूपत्वमुच्यतेऽन्यत्र तद्भोक्तृत्वमिति भावः । इच्छाया अभोग्यत्वादाह– **काम्यन्त इतीति** ॥ ननु विषयान् प्रति भगवत अभिमुख्येन स्थितत्वे तद्भोक्तृत्वं स्यात् । तदेव कथमित्याशङ्कानिवृत्त्यै श्रुतौ सर्वमिदमभ्यात्त इत्युक्तम् । तद्व्याचष्टे– **सर्वमिदमिति** ॥ नन्ववाक्यत्वं नाम वाक्यशून्यत्वम् । तच्च वाक्यावक्तृत्वं वा वाक्याविषयत्वं वा । नाद्यः । मूकत्वप्रसङ्गात् । नान्त्यः । वाक्यैकगम्यस्येश्वरस्य वाक्याविषयत्वोक्तावसिद्धिप्रसङ्गादित्यत आह– **न विद्यते वाक्यमिति** ॥ ननु नादरत्वं नाम आदरभिन्नत्वं वा आदरशून्यत्वं वा । नाद्यः । जीवसाधारण्येन विशिष्योक्त्ययोगात् । नान्त्यः । ईश्वरस्यापि भक्तेष्वादरवत्त्वादित्यत आह– **न विद्यते आदर इति** ॥ नसमासत्वान्न लोपो नेति भावः ॥

## भाष्यम्

**आह च–**

**'स्रष्टा पाता च संहर्ता नियन्ता च प्रकाशिता ।**
**यतः सर्वस्य तेनाहं सर्वोऽस्मीत्यृषिभिः स्तुतः ।**
**सुखरूपस्य भोक्तृत्वान्न तु सर्वस्वरूपतः ।**
**आगमिष्यत् सुखं चापि तच्चास्त्येव सदाऽपि तु ।**
**तथाऽप्यचिन्त्यशक्तित्वाज्जातं सुखमतीव च ॥' इति नारदीये ॥**

भावप्रदीपिका (प.टी.)– नन्वयमैक्यव्यपदेशः सत्तादिकर्तृत्वादिनैव नाभेदेनेत्येत्कुतः ? इत्यत आह– **आह चेति** । सुखरूपस्येति शुभविषयस्येत्यर्थः । ननु भोगोत्पाद्यसुखाभावेनापूर्णता हरेः । पूर्णस्य भोगायोगादित्यत आह– **आगमिष्यदिति** । यदप्यागमिष्यत्सुखं तदप्यस्तीति चशब्दावपिशब्दार्थौ ॥

भावप्रकाशिका (न.टी.)– सर्वभिन्नस्यापि भगवतः सर्वत्ववचनं तत्सत्तादिकारणत्वतद्भोक्तृत्वाभ्यामेवेत्येतत् पुराणवाक्येनापि दर्शयति– **आह चेति** । ननु पूर्णसुखरूपस्य

श्लोकः ६

सर्वकर्तृत्वानुपपत्तेः पूर्णसुखरूपस्य च सर्वभोक्तृत्वानुपपत्तेः, उक्तहेत्वोः परस्परविरोधात् सर्वस्वरूपत्वादेव सर्वत्ववचनं भगवतः, न तूक्तहेतुभ्यामित्यत आह— **सुखरूपस्येति** । 'पूर्णानन्दः पूर्णभुक् पूर्णकर्ता' इति श्रुतौ पूर्णसुखरूपस्य पूर्णभोक्तृत्वावगमात् न सर्वकर्तृत्व-भोक्तृत्वयोः परस्परविरोधः । अतस्ताभ्यामेव सर्वत्ववचनं भगवतः । यस्मादेवं पूर्णसुखरूप-स्यापि भोक्तृत्वं श्रूयते, तत् तस्माद्भोगेन आगमिष्यत् सुखमपि सर्वदाऽप्यस्त्येव । सर्व-कर्तृत्वादयोऽपि शक्तिरूपेण सदा सन्तीति पूर्वचकारार्थः । अचिन्त्यशक्तेश्चेत्युत्तरचकारार्थः ॥

ननु सदातनं सुखं कथं भोगेन जातमित्युच्यते इत्याशङ्क्य, उत्तरं चकारार्थं विवृणोति— **तथाऽपीति** ॥ ६ ॥

प्रमेयदीपिका (ज.टी.)— कारणत्वादिनैवैक्यव्यपदेश इत्येतत् कुतः? इत्यत आह— **आह चेति** ॥ सुखरूपस्य सुखकारणस्य । ननु 'स्रष्टा पाता' इत्यादिकमयुक्तम् । कादा-चित्कक्रियाऽवेशे विकारित्वप्रसङ्गात् । भोगेन यद्भाव्यं सुखं तस्य पूर्वमभावेनापूर्णत्व-प्रसङ्गाच्चेत्यत आह— **आगमिष्यदिति** ॥ यद्भोगेन आगमिष्यत् सुखं तच्च सदाऽप्यस्त्येव । क्रियाश्च शक्तिरूपेण चेति चार्थः । तर्हि कथं 'भोगेन जातम्' इत्युच्यते? इति भावेन पृच्छति— **अपि त्विति** ॥ उत्तरमाह— **तथाऽपीति** ॥ सदा सद्भावेऽपि । यद्यपि 'प्रभव-त्यस्मात्' इति प्रभवः, 'प्रलीयतेऽस्मिन्' इति प्रलय इति शक्यते व्याख्यातुम् । तथाऽपि महिमातिशयलाभायैवं व्याख्यातम् ॥

एतेन **'यस्मान्मम प्रकृती योनी सर्वभूतानां ततोऽहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा'** इति व्याख्यानमपहस्तितं भवति ॥ ६ ॥

**भावबोधः (र.टि.)**— ननु 'सर्वकर्मे'त्यादिना सर्वकर्तृत्वादिकमेवोच्यते न भोक्तृत्वमित्यत आह— **द्विरुक्तत्वादिति** ॥ 'सर्वकामः सर्वकर्मा सर्वगन्धः सर्वरसः' इत्युक्त्वा पुनरुत्तरत्रापि 'सर्वकामः सर्वकर्मे'त्याद्युक्तत्वादेकं सर्वगन्धादिभोगविषयम् । अपरं सर्वगन्धादिस्वरूपविषय-मित्यङ्गीकर्तव्यम् । अन्यथा पुनरुक्त्यापत्तेः । उक्तं च छान्दोग्यभाष्ये 'एकत्र सर्वगन्ध इत्यादिना चिदानन्दात्मकसर्वगन्धादिरूपत्वमुच्यते । अन्यत्र तद्भोक्तृत्व'मिति । ननु विष्णोः गीतोक्तसुख-व्यक्तिकारणप्रभवादिभोक्तृत्वे कथं 'सुखरूपस्य' इति प्रमाणमित्यतो व्याचष्टे— **सुखकारणस्येति** ॥

**भावदीपः (रा.टि.)**– सुखहेतुप्रभवप्रलयभोक्तृत्वरूपप्रकृतप्रमेयसंवादाय आह– **सुखरूपस्य सुखकारणस्य इति** ।। रूप्यते उत्पद्यते अनेनेति रूपशब्द कारणपर इति भावः ।। **एतेनेति** ।। प्रामाणिकव्याख्यानान्तरप्रदर्शनेनेत्यर्थः ।। ६ ।।

**भावरत्नकोशः (सु.टि.)**– **'कारणत्वादिना'** इत्यत्रादिपदेन भोक्तृत्वग्रहणम् । 'कारणादिना' इत्यपि क्वचित् पाठः । सुखकारणप्रभवप्रलयभोक्तृत्वरूपप्रकृतप्रमेये 'सुखरूपस्य भोक्तृत्वात्' इत्येतत्कथं प्रमाणमित्यत आह– **सुखरूपस्य सुखकारणस्येति** ।। 'प्रास्यन्ति तमिति प्रासः' इतिवत् 'रूपयन्ति निरूपयन्ति निष्पादयन्ति यं गन्धादिरूपं भोग्यं सोऽयं रूपः' इति । 'रूप करणे' इति धातोः 'अकर्तरि च कारके' इति कर्मणि 'एरच्'. इति णिजन्तात् अच्प्रत्यये रूपशब्दनिष्पत्तौ 'सुखस्य रूपं सुखरूपम्' इति सुखकारणं ग्राह्यमिति भावः ।।

न च 'एरच् अण्यन्तानाम्' इति वचनात् ण्यन्तादच्प्रत्ययो नेति वाच्यम् । 'कल्पादेः प्रतिषेधो वक्तव्यः' इति वार्तिकारम्भात् उक्तवचनमनार्षमिति मनोरमायां स्थितेरिति केचित् । अन्ये तु सुखं रूपयन्ति निष्पादयन्तीति सुखरूपम्, 'कर्मण्यण्' इत्यणि 'कुम्भकारः' इत्यादिवदुपपदसमासः । न च करणे घञ्प्रत्यय एव कुतो न भवेदिति वाच्यम् । ल्युटो घञ्बाधकत्वेन तत्प्रवृत्त्यवश्यम्भावे 'रूपणस्य' इति प्रयोगापत्तेः । 'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी' इत्यमरव्याख्याने तु रूपशब्दो नाना निष्पादित इत्यन्यदेतत्, इत्युक्तरीत्यैव कारणार्थकत्वलाभ इति आहुः । भावप्रदीपिकायां तु सुखरूपस्य शुभविषयस्येत्यर्थ इत्युक्तम् ।

'प्रकाशिता' इति भाष्यस्य 'प्रकाशयिता' इत्यर्थः । तच्छब्दप्रतियोगितया यच्छब्दम्, 'भोगेन' इति च शब्दमध्याहरन्, व्यवहितानामन्वयं वदन्, आद्यचशब्दार्थं चाह **यद्भोगेनेति । शक्तिरूपेण** 'सदा सन्त्येव' इति विपरिणामेनानुवर्तनीयम् । अनेन 'कादाचित्कक्रियावेशे विकारित्वप्रसङ्गात्' इति कृतचोद्यं परिहृतं भवति । **सदा सद्भावेऽपि** 'सुखस्य' इति योज्यम् । **इति प्रभव इति** । प्रपूर्वाद् भवतेरपादाने 'ऋदोरप्' इत्यप्प्रत्यये 'प्रभवः' इति रूपमित्यर्थः । **इति प्रलय इति** । प्रपूर्वात् 'लीङ् श्लेषणे' इति धातोरधिकरणे 'एरच्' इत्यच्प्रत्यय इत्यर्थः । **महिमातिशयेति** । सकलसत्ताप्रतीत्यादिकारणत्वसर्वशुभभोक्तृत्वरूपमहिमातिशयेत्यर्थः । **एतेन** 'प्रभवादेः' इति भाष्येण । **इति व्याख्यानम्** सङ्क रव्याख्यानम् ।

श्लोकः ६

**अपहस्तितमिति ।** 'कर्तृकरणाद्धात्वर्थे' इति अपासितुः करणवाचकात् हस्तशब्दाद् धात्वर्थे निरसने णिच्प्रत्यये 'हस्तेन अपास्यति अपहस्तयति' इत्यतः कर्मणि निष्ठायाम् 'अपहस्तितम्' इति रूपे 'वामेन पाणिनाऽपास्तम्' इत्यर्थः । यद्वा 'अप अपवर्जनवियोगआलेखनचौर्य-निर्देशवैकृतिविधिविपर्ययऋणग्रहणअवयवपूजानिह्नवसव्यावृत्तिषु' इत्युपसर्गनिघण्टौ 'अप' इत्युप-सर्गस्य विधिविपर्ययार्थकत्वाभिधानात् साधुकर्मविहितदक्षिणपाणिविपरीते सव्यपाणौ अपहस्त-शब्दः । 'अपशब्दः' इति यथा । 'सोऽस्य निरासकत्वेन प्राप्तः' इत्यर्थे 'तदस्य सञ्जातं तारका-दिभ्य इतच्' इतीतच्प्रत्यये, अपहस्तेन सव्यहस्तेन निरस्तम् अतितुच्छमित्यर्थः । जगद्धर्मयोः प्रभवप्रलययोः साक्षाद् भगवदैक्यानुपपत्तेरिति भावः ॥ ६ ॥

**गीताक्षरार्थस्तु–** ननु शरीरेन्द्रियविषयलक्षणस्य कार्यस्य जीवानां च सद्भावेन तेषां भगव-दधीनत्वावचनात् कथं प्रकृत्योस्तद्वशत्ववर्णनमात्रेण महिमातिशयलाभ इति शङ्कमानं प्रति शरीरेन्द्रियविषयलक्षणस्य कार्यस्य जीवानां च तयोरेवान्तर्भाव इति दर्शयितुम् एतद्योनीनीत्युक्तम् ॥ शरीरादिकार्यसहितानि जीवजातरूपभूतानि सर्वाणि एतद्योनीनि जडाजडप्रकृतिकारणकानि यथासम्भवं तत उत्पन्नानि इत्युपधारय अवधारय जानीहि । पूर्वं वाक्यभेदेन प्रकृत्योरवरत्वम्, परत्वम्, 'मे' इति स्ववशत्वं चोक्त्वा 'ययेदं धार्यते जगत्' 'एतद्योनीनि' इति जगदाधारकत्व-कारणत्वे कथिते । तत्र प्रकृती एव भगवद्वशे, जगज्जन्मस्थितिलयास्तु प्रकृत्याधीना एव, न भगवदधीना इति प्रतीतम् । तन्निरासार्थं जगज्जन्मस्थितिलयानामपि स्ववशत्वं वक्तुमुच्यते अहमिति । 'एतद्योनीनि' इति वचनं प्रकृतिद्वयनिष्ठं कारणत्वादिकं मदायत्तमित्यभिप्रायकमिति नोक्तविरोध इति भावः । कृत्स्नस्य जगतः प्रभवः प्रलयश्च प्रभवादिसत्ताप्रतीत्यादिकारणत्वात् 'यदधीना यस्य सत्ता तत् तदित्येव भण्यते' इति ताच्छब्द्यम्, पुत्रादिप्रभवो रिपुप्रलयश्चोपलब्धः सुखहेतुरिति उपलब्धुः पित्रादेः तद्भोक्तृत्वम्, तथा तद्भोक्तृत्वाच्च प्रभवः प्रलयः । तद्भोक्तृत्वेन तच्छब्दवाच्यत्वं च 'यज्ञभोक्तृत्वाद् यज्ञनामा' इत्यत्र दृष्टम् । तथा च भाष्यम् 'सुखरूपस्य भोक्तृत्वात्' इति ॥ ६ ॥

**भावदीपिका (श्री.टि.)– ॥ कारणत्वादिनेति ॥** प्रभवादेः सत्तादिकारणत्वादिना तेनैक्य-व्यपदेश इत्येतद् कुत इत्यर्थः । ननु विष्णोर्गीतोक्तसुखव्यक्तिकारणप्रभवादिभोक्तृत्वे 'सुख-स्वरूपस्य' इत्येतत्कथं प्रमाणमित्यत आह– **सुखकारणस्येति ॥** शुभविषयस्येत्यर्थः । 'रूप्यते

जायतेऽनेन' इति रूपशब्दः कारणपर इति ध्येयम् । अनयैव रीत्या सर्वत्रापि 'शुभं पिबति' इत्यादौ शुभशब्दः शुभविषयपर एव, तथा 'कर्मफलभोक्ता' इत्यस्यापि 'सुखरूपकर्मफल-साधनशुभविषयभोक्ता' इत्येवार्थो द्रष्टव्यः ।

'श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्रणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ।।'

इति वक्ष्यमाणत्वादिति ध्येयम् । **कादाचित्केत्यादि** ॥ स्रष्टृत्वादेः क्रियां विनाऽसम्भवात्, क्रियायाश्च सदा सृष्ट्यभावेन कादाचित्कत्वात्, कादाचित्कक्रियावेशेन भगवतो विकारित्वं प्रसज्यत इत्यर्थः । शक्तिरूपेण सन्तीत्यर्थः । यथोक्तम्– 'सविशेषोऽपि क्रियावेशः शक्त्यात्मना स्थिरः' इति ।। महिमातिशयः भोक्तृत्वाख्यः । **एतेनेति** ॥ अस्मदीये प्रामाणिकव्याख्याने महिमातिशय-लाभेनेत्यर्थः । **मम प्रकृती** ममाधीने प्रकृती इत्यर्थः । **अत इति** ॥ प्रकृतिद्वारा परम्परयेत्यर्थः ।।६।।

**भावप्रकाशः (कृ.टि.)–** ननु सुखकारणस्य प्रभवादेः भोक्तेत्यत्र सुखरूपस्येति कथं प्रमाणमित्यत आह– **सुखकारणस्येति** ।। 'भोगेन' इत्यध्याहारात् व्यवहितानामन्वयं द्वितीयच-शब्दार्थं चाह– **यद्भोगेनेति** ।। **महिमातिशयेति** ।। भोक्तृत्वाख्यमहिमातिशयेत्यर्थः ।। ६ ।।

**मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

## भाष्यम्

अहमेव परतरः । **मत्तोऽन्यत् परतरं न** किञ्चिदपि ।। ७ ।।

भावप्रदीपिका (प.टी.)– ननु न केवलं पूर्वकाले, सदाऽपि मत्तः परतरं नान्यदित्य-न्यथाप्रतीतिनिरासाय यथावद्व्याचष्टे अहमिति ।।

भावप्रकाशिका (न.टी.)– एवं जडाजडप्रकृत्योरपरत्वपरत्वोक्तौ परतरः कः ? इत्या-काङ्क्षायां स एव निरूपणीयः, न तु सर्वाभेद इति भावेन 'मत्तः' इति श्लोकार्धं व्याचष्टे– **अहमेवेति** । भगवतोऽन्यस्य परतरत्वनिषेधात् स एव परतरः । अन्यत्वमात्रनिषेधे 'परतर'

श्लोकः ७

**शब्दः 'अन्यत्' शब्दो वा व्यर्थ इति भावः । परापरयोश्चिदचित्प्रकृत्योस्तयोनिकस्य च महदहङ्कारादिलक्षणस्य ब्रह्मेशानादेः कृत्स्नस्य जगतः प्रभवादिशब्दोक्तसत्ताप्रतीतिप्रवृत्यादि-प्रदत्वात् परतमोऽपि स एव ॥**

**प्रमेयदीपिका (ज.टी.)– नन्वपरं परं च तत्त्वमुक्त्वा परतरोऽहमिति वक्तव्यम् । मत्तः इति किमुच्यते? इत्यतः तात्पर्यमाह – अहमेवेति ॥ परापरप्रकृत्योः स्वाधीनत्वोक्त्यैव स्वस्य परतरत्वम् उक्तप्रायम् । किन्त्वपरतत्वं यथाऽनेकं भूम्यादिभेदेन, यथा च परतत्वं 'मुक्तस्तु स्यात् पराभासः' (गी.ता.७.७) इति वचनात् तथा परतरमपि किमनेकमुत त्वेकमेव? इति जिज्ञासायाम् 'अहमेव परतरः' इत्यनेनोच्यत इत्यर्थः । कथमनेनेदं लभ्यते? भगवत्प्रति-योगिकाधिक्यवन्निषेधस्यात्र प्रतीतेः, इत्यतो योजयति– मत्त इति ॥ अन्यथा तरपोऽन्य-शब्दस्य च वैयर्थ्यादिति भावः ॥ ७ ॥**

**भावबोधः (र.टि.)– ॥ आधिक्यवन्निषेधस्येति** । विवक्षितभगवत्समनिषेधस्याप्रतीतेरिति भावः । **तरपो अन्यशब्दस्य चेति** । मत्तः परो नास्तीत्येतावतैवाधिकनिषेधसिद्धेरिति भावः ॥७॥

**भावदीपः (रा.टि.)–** यदि उक्तप्रायं तर्हि 'मत्तः' इत्यनाकाङ्क्षितं किमित्युच्यते? इति पृच्छति– **किन्त्विति ॥ परतत्वमिति** ॥'अनेकम्' मित्यनुषङ्गः । कथमित्यतः, चित्प्रकृतित्वेनैकं तु व्यक्तम्, अन्यत्तु मुक्तजातमिति भावेन गीतातात्पर्योक्तं वचनमाह– **मुक्तस्तु स्यादिति** ॥ 'पराभासः सुनित्यसुखभोजनात्' इति वाक्यशेषः । नित्यनिर्दुःखचित्प्रकृतिवत् नित्यनिर्दुःखत्वं तेषां नास्ति । किन्तु मुक्तावेवेति भावेन चित्प्रकृतिः परा, मुक्तः पर इत्यनुक्त्वा, 'पराभासः' इत्युक्तम् ॥ **आधिक्यवन्निषेधस्येति** ॥ आधिक्यवद्विषयकनिषेधस्येत्यर्थः ॥ **अन्यथेति** । हरेः परतरत्त्वार्थ-कत्वाभिप्रायाभाव इत्यर्थः ॥ ७ ॥

**भावरत्नकोशः (सु.टि.)–** 'परतरोऽहम्' इति वक्तव्यमित्यस्योत्तरमाह– **परापर-प्रकृत्योरिति ॥ स्वाधीनत्वोक्त्या** 'इयं मे प्रकृतिरष्टधा भिन्ना अपरा इति, 'प्रकृतिं विद्धि मे पराम्' इति च स्वाधीनत्वोक्त्या । भावलब्धत्वेऽपि साक्षाद्वचनाभावाद् 'उक्तप्रायम्' इत्युक्तम् । तर्हि 'मत्तः' इत्यनाकाङ्क्षितं किमित्यभिधीयत इति पृच्छति– **किन्त्विति** ॥ उत्तरमाह– **अपरतत्त्वमिति ॥ परतत्त्वम्** 'अनेकम्' इत्यनुषङ्गः । तत्कुत इत्यतः श्रीतत्त्वं तावदेकं परं

तत्त्वम्, अन्यत्तु मुक्तजीवजातम् इति भावेन तत्र गीतातात्पर्यमुदाहरति– **मुक्त इति** ॥ 'सुनित्यसुखभोजनत्वादवरत्वाभावेऽपि प्राग् दुःखसम्बन्धात् पराभास एव मुक्तः, न तु पर एव' इति तट्टीकायां 'मुक्तस्तु स्यात् पराभासः सुनित्यसुखभोजनात्'. इति वचनं व्याख्यातम् । हेतुहेत्वाभासयोः हेतुशब्द इव, श्रीजीवयोः परशब्द इति परानेकत्वमपि प्रामाणिकमिति भावः । गीतागतास्मच्छब्दार्थः **भगवदिति** । भगवत्प्रतियोगिकं यदाधिक्यम्, तच्छालि यद्वस्तु, तन्निषेधस्य भगवदपेक्षया चाधिकवस्तुनिषेधस्यात्र 'मत्तः' इति गीतायां प्रतीतेः, 'अहमेव परतरं तत्त्वम्' इत्येतत् कथं लभ्यत इत्यर्थः । **अन्यथेति** । 'मत्तोऽन्यत् परतरं न किञ्चिदपि' इति भाष्योक्तयोजनामनभ्युपगम्य 'मत्तः परं नास्ति' इत्यर्थाङ्गीकारे तरपः 'द्विवचनविभज्योपपदे तरबीयसुनौ' इति विहितस्य परशब्दात् परस्य तरप्प्रत्ययस्य, 'मत्तः परं नास्ति' इत्येतावतैव परोत्प्रेक्षितार्थलाभसम्भवादन्यशब्दस्य च वैयर्थ्यादित्यर्थः ॥

**गीताक्षरार्थस्तु**– परापरप्रकृत्योः स्वाधीनत्वोक्त्यैव स्वस्य परतरत्वमुक्तप्रायम् । किन्तु, अपरं तत्त्वं यथाऽनेकं भूम्यादिभेदेन, यथा च परं तत्त्वं श्रीतत्त्वमुक्तजातभेदेन, तथा परतरमपि किमनेकम् उत त्वेकमेवेति जिज्ञासायाम् 'अहमेव परतरं तत्त्वम्' इत्यनेनोच्यते । त्वमिवान्योऽप्यस्ति चेत् परतरः, तदा जगद्धर्मरूपप्रभवप्रलयादिकारणत्वतद्धोक्तृत्वलक्षणधर्मस्यान्यत्र सम्भवे भगवत एव महिमातिशयो न वर्णितः स्यादिति चोद्यं परिहर्तुम् 'मत्तोऽन्यत् परतरं न किञ्चिदपि' इति विभाव्यत इति तात्पर्यम् । 'मत्तः परतरं नान्यत्' इत्यत्र 'मत्तः' इति अस्मच्छब्दाद् आद्यादित्वात्तसिः । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य मादेशः । 'तसेश्च' इति तसिलादेशो न भवति, 'अद्व्यादिभ्यः' इति पर्युदासात्, तेन विभक्तिसंज्ञाप्रयुक्तत्वादिकार्यं न । एवमेव 'त्वत्तः कमलपत्राक्ष' इत्येतदपि निर्वोढव्यम् । न केवलं जगतः प्रभवप्रलयौ मदधीनौ, अपि तु स्थितिरपि मदायत्तेत्युच्यते मयीति । इदं प्रकृत्यादिरूपं जगदिति ॥ ७ ॥

**भावदीपिका (श्री.टि.)**– ॥ **अपरं परं चेति** ॥ जडाजडप्रकृत्याख्याम् । ननु श्रीरूपतत्त्वस्यैकत्वात् कथं परतत्त्वमनेकविधमित्युच्यत इत्यत आह– **मुक्तस्त्विति** ॥ **इति वचनादिति** ॥ 'मुक्तस्तु स्यात् पराभासः सुनित्यसुखभोजनात्' इति गीतातात्पर्यवचनादित्यर्थः । सुनित्यसुखभोजनाद् अवरत्वाभावेऽपि प्राग्दुःखसम्बन्धात् पराभास एव, न मुख्यतः पर इति वचनादित्यर्थः । **भगवत्प्रतियोगिकेति** ॥ यथा 'परतत्त्वमनेकविधम्' इत्युक्ते अपरतत्त्वत्वेन

ब्रह्मादिजीवसमाना जीवाः सन्तीति लभ्यते । यथा हि 'परतत्त्वम् अनेकविधम्' इत्युक्ते 'परतत्त्वत्वेन श्रीसमानाः मुक्ताः सन्ति' इति लभ्यते, एवं परतरमनेकविधम् उतैकविधमिति शङ्कायाम्, अनेकविधत्वे भगवानेकः परतरः, तत्सदृशोऽन्यः परतरो नास्तीति प्राप्तेः, अतः परतरोऽहमेक एव, मत्सदृशोऽन्यः परतरो नास्तीति समनिषेधप्रतिपादनमेवोक्तशङ्कानिरासकम्, न तु भगवत्सकाशादधिकनिषेधः । स एव चात्र प्रतीयते । अतः कथं समनिषेधोऽनेन लभ्यत इत्यर्थः । भाष्ये 'मत्तोऽन्यत् परतरम्' इत्युक्त्या 'मत्सदृशम्' इति सूचितं भवति । **अन्यथेति** ॥ समनिषेधमनङ्गीकृत्य भगवत्प्रतियोगिकाधिक्यवन्निषेधार्थकताऽङ्गीकारे 'मत्तः परो नास्ति' इत्येतावतैवाधिकविषेधसिद्धेः, तरप्-अन्यशब्दवैयर्थ्यं स्यादिति भावः ॥ ७ ॥

भावप्रकाशः (कृ.टि.)– ननु परतरत्वस्य प्रागनुक्तत्वात् तदेव विधातव्यम्, अवधारणं तु व्यर्थम् । किञ्च अस्त्विदं तात्पर्यम् । तथाऽप्यहमेव परतर इत्युक्तेः का पूर्वसङ्गतिरित्यत आह– **परापरप्रकृत्योरिति** ॥ **आधिक्यवन्निषधस्येति** ॥ मत्तः परतरमित्यव्यवहितान्वयाभिप्रायेणेदम् । तस्य इति ॥ 'मत्तः परो नास्ती'त्येतावतैव अधिकनिषेधसिद्धेरिति भावः ॥ ७ ॥

**रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः ।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥**

## भाष्यम्

इदं ज्ञानम् । **रसोऽहम्** इत्यादि विज्ञानम् । अवादयोऽपि तत एव ॥

भावप्रदीपिका (प.टी.)– ज्ञानप्रतिपादकप्रघट्टकं समाप्तमित्याह– **इदमिति** ॥ ७ ॥

उत्तरप्रघट्टकप्रतिपाद्यमाह– **रसोऽहमिति** । नन्वनादिसत्ताप्रतीतिभोक्तृत्वं भगवतोऽस्त्येव । अतः किमर्थं रसादीनां भगवत्कृतत्वादिविशेषेणोच्यते ? इत्यत आह– **अबादयोऽपीति** । यद्यप्यवादयोऽपि भगवत्सृष्टास्तद्भोग्याश्च । तथाऽपि रसादीनां विशिष्याभिधानं युक्तम् । यदवादिकर्तृत्वादिकं तन्नान्तरीयकतया रसादीनामबादिस्वभावानाम्, अबादिगुणेषु सारभूतानां नियामको भगवानिति शङ्कानिवर्त्यव्यातिविशेषतोऽपि तेषां रसादित्वे, अवादिगुणमध्ये सारत्वे, अबादिस्वभावत्वे नियामक इति ज्ञापनार्थत्वादित्यर्थः ॥

भावप्रकाशिका (न.टी.)– 'ज्ञानं तेऽहं प्रवक्ष्यामि' इति प्रतिज्ञायैवं पारापर्यस्योक्तत्वा-देतद्विषयमेव ज्ञानम्, एतद्विरोधि सर्वं मिथ्याज्ञानमिति भावेनाह– **इदमिति** ॥ नन्वेवमनन्तैश्वर्यविषयमपि ज्ञानं चेत्, विज्ञानं कीदृशमित्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकसन्दर्भमवतारयति– **रस इति** । ननु 'अहं कृत्स्नस्य' इत्यादिनैवावादीनां सर्वेषां सत्तप्रतीत्यादेर्भगवदधीनत्वस्य, तेषां भगवद्भोग्यत्वस्य चोक्तत्वात्, किमिति पुनस्तेषु रसादीनां तदुभयमुच्यते ? इत्यत आह– **अबादयोऽपीति** । भवतु 'अहं कृत्स्नस्य' इत्यादिनैवावादिसत्तप्रतीत्यादेर्भगवदधीनत्वम् । न त्ववादीनां रसादिस्वभावत्वम्, अवादिगुणेषु रसादीनां सारत्वम्, रसादित्वं च विशेषतः पृथक् भगवन्नियम्य् । किन्त्वबादीनामवादित्वकारणेनैव तेषां सिद्धिरित्याशङ्कां परिहर्तुं 'रसोऽहम्' इत्याद्यारभ्यत इति भावः ॥

प्रमेयदीपिका (ज.टी.)– 'भूमिः' इत्यादिना इत्यत्रावधेरनुक्तेः **'रसोऽहम्'** इत्याद्यपि ज्ञानप्रकरणमिति प्रतीतिः स्यात् । तन्निरासाय तत्समाप्तिमाह– **इदमिति** ॥ एतावता ग्रन्थेन ज्ञानं निरूपितमित्यर्थः ॥ कुतोऽत्र ज्ञानप्रकरणस्य समाप्तिः? इत्यत आह– **रसोऽहमिति** ॥ इतिशब्दाद्यभावेऽपि प्रकरणान्तरारम्भ एव समाप्तिं गमयिष्यति । अलौकिकमाहात्म्य-प्रतिपादनादस्य विज्ञानप्रकरणत्वं ज्ञायत इति भावः । प्रभवादेः इत्युक्तन्यायेनैव **'रसोऽहम्'** इत्यादेरपि व्याख्यानं सिद्धम् । 'रसादीनां सत्तादिकारणत्वाद्भोक्तृत्वाच्च भगवान् रसादिः' इति ॥

नन्ववादयोऽपि धर्मिणो भगवदधीनाः तद्भोग्याश्चेत्यङ्गीक्रियते न वा । नेति पक्षे 'अहं कृत्स्नस्य' इत्युक्तिविरोधः । आद्ये तु 'अप्सु रसः' इत्यादेर्धर्मिभ्यो निष्कृष्य धर्माणां ग्रहण-स्यानुपपत्तिरित्यतः प्रथमं पक्षं तावदङ्गीकरोति– **अवादयोऽपीति** ॥ धर्मिणोऽपि तदधीना एव तद्भोग्याश्चैव ॥

भावदीपः (रा.टि.)– ॥ अवधेरनुक्तेरिति प्रतिज्ञातं ज्ञानमाह भूमिरित्यादिना इति भाष्य इत्यर्थः । व्याख्यानं सिद्धमित्येतद्व्यनक्ति– **रसादीनामिति** ॥ चशब्देन भोक्तृत्वादिति ग्राह्यम् ॥

भावरत्नकोशः (सु.टि.)– ॥ इत्यादिनेत्यत्रेति । 'प्रतिज्ञातं ज्ञानमाह– भूमिरित्यादिना' इति पूर्वभाष्य इत्यर्थः ॥ 'इदम्' इत्यस्य अव्यवहितपरामर्शित्वभ्रमनिरासाय तात्पर्यम् एतावतेति । **ज्ञानम्** ज्ञातव्यम्, 'निरूपितम्' इति शेषोक्तिः । इतिशब्दाद्यभावेऽपीति । अत्रादिशब्देन 'एषा

श्लोकः ११

**करण्यमिति** चेन्न । जाग्रच्छब्दस्य भावप्रधाननिर्देशत्वेन जाग्रत्त्वार्थकत्वात्, जाग्रत्त्वं च जागरावस्थैव, यद्वक्ष्यति 'जाग्रदवस्थो गृह्यते' इति । एवमादिशब्दोऽप्यवैरूप्याय अवस्थापर एवेति युक्तं सामानाधिकरण्यम् । 'देहयोगाद् वासोऽपि' इत्यधिकरणादौ जाग्रदवस्थाप्रेरकत्वम् इत्यादिव्यवहारोऽपि भावप्रधानत्वेनैव निर्वाह्य इति । **उक्तविधया** 'औपाधिकं भेदमङ्गीकृत्य' इत्युक्तप्रकारेण । **भगवत्पक्षेऽपि** भगवत्पक्षे तु ।

**शारीराविती**ति ॥ भाष्ये जीवः, ईश्वरसंज्ञितः 'ईश्वर इति संज्ञा अस्य सञ्जाता' इति इतच्प्रत्ययः, ईश्वरशब्दादभिहितः परश्च । 'शारीरौ ज्ञेयौ' इत्युक्तौ जीवस्य शरीरवत्त्वेन शरीराभिमानितया, 'तस्येदम्' इति शरीरसम्बन्धित्वेन वा, अणि शारीरशब्दार्थत्वं युक्तम् । ईश्वरस्य तु तदयोगात् कथं शारीरत्वम् । तथात्वे च जीवस्येव संसारादि स्यादित्यत उत्तरार्धं प्रवृत्तम् । तत्र 'तस्येदम्' इत्यादिना अणि जीवे शारीरशब्दः, ईश्वरे तु शेषे 'अपत्यादिचतुरर्थ्यन्ताद् अन्योऽर्थः शेषः', तत्राणादय इति लक्षणं च, अधिकारश्चेति वदद्भिर्वैयाकरणैरुक्तत्वेन 'शरीरेण हीनः' इत्यर्थे शैषिके अण्प्रत्यये सति निष्पन्नो वर्तत इति वक्तुम् 'अनादिवन्धनः' इति, 'नित्यमुक्तः' इति चोक्तमिति तस्याभिप्रायो व्याख्यातव्यः ।

समुच्चयादेरयोगादाह– **च इति** ॥ चशब्द इत्यर्थः । अव्ययानामनेकार्थत्वादिति भावः । **भेदश्रुतेः** 'शारीरादात्मनः' इति भेदाभिधानस्य ॥ **मुख्य इति** ॥ तस्यौत्सर्गिकत्वादिति भावः । कुतो विनिगमनमिति शङ्कितम्, तदनुवदति– **अत इति** ॥ प्राचीनटीकायां तु भगवतः शारीरशब्दार्थत्वं भेदश्रुतिसामर्थ्यादपि सिद्ध्यतीत्यभिप्रायेणाह– **भेदश्रुतेश्चेति** ॥ न हि जीवः स्वस्मादेव, स्वयं भिन्न इति **'अस्मात्'** इति पदव्यावर्त्यो भगवानेव स्यादित्यर्थ इति 'भेदश्रुतेश्च' इति पृथग्योगो व्याख्यातः । भाष्ये 'आह च' इति चशब्दश्रवणादाह– **न केवलमिति** ॥ प्रविविक्तभुग्यतः 'प्रविविक्तभुक्त्वात्', 'स्थूलाभोगात्' इति हेत्वोर्यथाश्रुतसाध्याभ्यामन्वये विरुद्धता स्यादित्यत आह– **अभोक्ता च भोक्ता चेत्येतयोरिति** ॥ **व्युत्क्रमेण** प्रविविक्तभुक्त्वात् 'भोक्ता' इति, स्थूलाभोगात् 'अभोक्ता च' इति व्युत्क्रमेण । तथा च न विरुद्धतेति भावः ॥ ८-१० ॥

**भावदीपिका (श्री.टि.)**– ननु स्वप्नशब्दस्य जीवावस्थाविशेषवाचकत्वात्, कथं 'स्वप्नादिश्च शारीर एव' इत्यभेदोक्तिरित्यत आह– **स्वपो नन्निति** ॥ 'कर्तरि व्युत्पन्नः' इति शेषः । 'ञि ष्वप् शये' इत्यस्माद्धातोः कर्तरि नन्प्रत्ययः स्यादिति सूत्रार्थः । तथा च 'ञि ष्वप् शये'

श्लोकः ११

इत्यस्माद्धातोः कर्तरि नन्प्रत्यये 'हलन्त्यम्' इत्यन्त्यनकारलोपे, 'धात्वादेः षः सः' इति षकारस्य सकारे 'स्वप्न' सति कर्तरि रूपसिद्धिः ॥ **उक्तविधयेति** ॥ अवस्थाभेदोपाधिकं जीवस्य भेदमङ्गीकृत्येत्युक्तविधयेत्यर्थः ।

**भावप्रकाशः (कृ.टि.)**– ननु 'स्यान्निद्रा शयनं स्वापः स्वप्न' इत्यमरोक्तेः स्वप्नशब्दस्य निद्रार्थत्वात् कथं शारीरे प्रयोग इत्यत आह– **स्वपो नन्निति** ॥ यद्यपि भावे कर्तृभिन्नकारके च 'स्वपो नन्' इति ननोविधानात् 'कर्तरी'त्ययुक्तम् । तथापि 'कृत्यल्युटो बहुल'मित्यत्र 'बहुल'मिति योगविभागेन कृन्मात्रस्यार्थव्यभिचारोक्तेः 'कर्तरी'त्युपपन्नम् । तथा च भावार्थननन्तस्वप्नशब्दस्य निद्रावाचित्वेऽपि कर्त्रर्थननन्तस्य शारीरे प्रयोगोपपत्तिरिति भावः । **सुषुप्तश्चेति** ॥ सुपूर्वात् स्वपेरकर्मकत्वात् कर्तरि 'गत्यर्थाकर्मक' इति क्तप्रत्यये 'वचि स्वपि' इति सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे सुविनिर्दुर्भ्यः सुपि सूतिसमा' इति षत्वेन सुषुप्तशब्दनिष्पत्तिरिति भावः । जाग्रदादिशब्देन जागरादिकर्तृग्रहणे जीवस्य तत्रावस्थितिर्न सम्भवतीत्यतो भावप्रधानोऽयं निर्देश इति भावेन व्याचष्टे– **अवस्था त्विति** ॥

## भाष्यम्

**भेदश्रुतेश्च । सति गत्यन्तरे पुरुषभेद एव कल्प्यो न त्ववस्थाभेदः ।**

**आह च–**

**'प्रविविक्तभुग्यतो ह्यस्माच्छारीरात् पुरुषोत्तमः ।**
**अतोऽभोक्ता च भोक्ता च स्थूलाभोगात् स एव तु' इति गीताकल्पे**

**॥ ९-११ ॥**

भावप्रदीपिका (प.टी.)– न केवलं स्थूलानशनपरिदानोक्तिवलात् कल्प्यते, किन्तु प्रमाणेनैव व्यवस्थापितत्वाच्चेत्याह– **आह चेति** । अतोऽभोक्ता च भोक्ता च इत्यस्य पाठव्यत्यासेनान्वयः ॥ ११ ॥

भावप्रकाशिका (न.टी.)– नन्वीश्वरस्यापि शारीरशब्दार्थत्व एतत् स्यात् । तदेव कुतः ? इत्यत आह– **शारीराविति** । भगवतोऽपि शारीरशब्दार्थत्वं भेदश्रुतिसामर्थ्यादपि

सिद्ध्यतीत्यभिप्रायेणाह– **भेदश्रुतेश्चेति** । न हि जीवः स्वस्मादेव स्वयं भिन्न इत्यस्मादिति पदव्यावृत्तः भगवानेव स्यादित्यर्थः । ननु भवत्येव भिन्नः स्वाप्नाद्यवस्थो जाग्रदवस्थात्, अतोऽसावेव अस्मात् इति पदव्यावृत्तः स्यादित्यत आह– **सतीति** । अवस्थामात्रभेदात्, गत्यन्तरे पुरुषभेदे सति स एव कल्प्य इत्यर्थः । भगवत एवानया श्रुत्या सूक्ष्माशनोक्तिम् अन्यासां स्थूलाभोगपरत्वं च गीताकल्पेन स्थापयति– **आह चेति** ॥ ११ ॥

**प्रमेयदीपिका (ज.टी.)**– नन्वेवं पक्षद्वयेऽप्युपपत्तावीश्वर एवात्रोच्यते न जीव इति कुतो विनिगमनम्? इत्यत आह– **भेदेति** ॥ चः हेतौ । भेदश्रुतेः, स्वाभाविकभेदरूपे गत्यन्तरे सम्भवति पुरुषभेद एवार्थतया ग्राह्यो न त्ववस्थोपाधिको भेदः । मुख्यामुख्ययोर्मुख्ये सम्प्रत्ययात् । अतो युक्तं विनिगमनम्। न केवलमुक्तव्यवस्था न्यायप्राप्ता, किन्त्वागमसिद्धा चेत्याह– **आह चेति** ॥ अभोक्ता च भोक्ता चेत्येतयोर्व्युत्क्रमेणान्वयः ॥ ९-११ ॥

**भावदीपः (रा.टि.)**– भाष्ये प्रयुक्तप्रविविक्तभोगस्थूलभोगरूपहेत्वोः क्रमादुक्तयोरन्वयमाह– **अभोक्ता च भोक्ता चेत्यादि** ॥ ९-११ ॥

**भावदीपिका (श्री.टि.)**– ॥ **पक्षद्वयेऽप्युपपत्ताविति** ॥ 'सत्याम्' इति शेषः । 'प्रविविक्त' इति वाक्यस्येश्वरपरत्वपक्षेऽप्यस्ति भवदुक्तरीत्या घटना, अवस्थाभेदोपाधिकभेदमादाय जीव-परत्वपक्षेऽप्यस्ति घटनेत्यर्थः । **व्युत्क्रमेणेति** ॥ यतः प्रविविक्तभुक्, अतो भोक्ता, स्थूला-भोगादभोक्तेति व्युत्क्रमेणेत्यर्थः । यथाश्रुतान्वये हेत्वोर्विरुद्धत्वप्रसङ्गादिति भावः ॥ ८-११ ॥

**भावप्रकाशः (कृ.टि.)**– यथाश्रुतान्वये हेतोर्विरुद्धत्वादाह– **व्युत्क्रमेणेति** ॥ यतः प्रविविक्तभुग् अतो भोक्ता स्थूलाभोगाच्चाभोक्तेति व्युत्क्रमेणेत्यर्थः । कथमनेनोक्तपरिहार इत्यत आह– **तदुपजीवनेनेति** ॥ तथा च सर्वभूतस्थमित्यनेन स्थितिमात्रमुक्तम् । अत्र तु विशिष्ट-स्थित्यभाव इत्यविरोध इति भावः ॥ ८-११ ॥

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।**
**मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥**

श्लोकः ११

## भाष्यम्

**न त्वहं तेषु इति तदनाधारत्वमुच्यते । उक्तं च 'तदाश्रितं जगत् सर्वं नासौ कुत्रचिदाश्रितः' इति गीताकल्पे ॥ १२ ॥**

भावप्रदीपिका (प.टी.)– ननु सर्वगतो हरिः कथं भूतेषु नावस्थित उच्यत इत्यत आह– **न त्विति** । भगवतोऽनाधारत्वे प्रमाणमाह– **उक्तं चेति** ॥ १२ ॥

भावप्रकाशिका (न.टी.)– ननु भगवतः सर्वभावेषु स्थित्यभावे परिच्छिन्नत्वम्, 'सर्वभूतस्थमात्मानम्' इत्याद्युक्तिविरोधश्च स्यादित्यत आह– **न त्विति** । तत्र प्रमाणमाह– **उक्तं चेति** ॥ १२ ॥

प्रमेयदीपिका (ज.टी.)– 'सर्वभूतस्थमात्मानम्' (६.२९) इत्युक्तत्वात्, उपसंहार-वाक्ये 'न त्वहं तेषु'इति कथमुच्यते? इत्यत आह– **न त्वहमिति** ॥ तदनाधारत्वं तदुप-जीवनेन स्थित्यभावः । कुत एतत्? इत्यत आह– **उक्तं चेति** ॥ न केवलमुक्तविरोधादिति चार्थः ॥ १२ ॥

भावदीपः (रा.टि.)– ॥ इत्युक्तत्वादिति ॥ पूर्वाध्याये ॥ उक्तेति ॥ 'सर्वभूतस्थ'-मित्युक्तेरित्यर्थः ॥ १२ ॥

भावदीपिका (श्री.टि.)– ननु तत्रस्थत्वे तदाधारत्वं प्राप्तमेवेत्यतो व्याचष्टे– तदुप-**जीवनेनेति** ॥ **उक्तविरोधादिति** ॥ 'सर्वभूतस्थामात्मानम्' इत्युक्तविरोधादित्यर्थः ॥११,१२॥

भावरत्नकोशः (सु.टि.)– 'मत्त एवेति तान् विद्धि' इत्युपसंहाराच्च' इत्युत्तरप्रस्थानोक्तिं हृदि कृत्वाऽऽह– **उपसंहारवाक्य इति** ॥

विज्ञाननिरूपणमुपसंह्रियते– ये चैवेति । ये चैव सत्त्वगुणनिर्वृत्ताः, रजोगुणनिर्वृत्ताः, तमोगुणनिर्वृत्ताश्च ये च केचिद् भावाः पदार्थाः तान् मत्त एव मत्कारणकानेव विद्धि । तेषु भावेषु अहं तदुपजीवनेन न तिष्ठामि । 'सर्वभूतस्थमात्मानम्' इत्यत्र स्थितिमात्रोक्तावपि तदुपजीवनेन स्थित्यभावोऽभिसंहित इति न तद्विरोधः । ते तु मयि मदुपजीवनेनैव वर्तन्त इति च विद्धि । 'उपसंहारवाक्ये' इति टीकोक्तेः 'मत्त एवेति तान् विद्धीत्युपसंहाराच्च' इति तात्पर्यनिर्णयवचनाच्च इतिशब्दो विज्ञाननिरूपणसमाप्तिवचनोऽपि व्याख्येयमिति ॥ १२ ॥

श्लोकः १३

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥**

## भाष्यम्

**तर्हि कथमेवं न ज्ञायस इत्यत आह— त्रिभिरिति ॥ तादात्म्यार्थे मयट् । तच्चोक्तम्— 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति । नहि गुणकार्यभूता माया । 'गुणमयी'इति च वक्ष्यति ॥**

भावप्रदीपिका (प.टी.)— नन्वयं यदि भगवान् सर्वाधारो नान्याधारः, तर्हि किमिति सर्वविलक्षण एव न दृश्यते, सर्वसादृश्येनैव प्रतीयते ? इत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतारयति— **तर्हीति** । 'गुणमयैः' इत्यस्य विवक्षितार्थमाह— **तादात्म्येति** । मयटो विकारार्थत्वे 'मामेभ्यः' इत्यत्र गुणातीतत्वमयुक्तं स्यात् । अतस्तादात्म्यार्थतैवेत्यर्थः । मयटो विकारार्थत्वादर्थान्तरमेव नास्तीति कश्चिद्व्याख्याति । तं प्रत्याह— **न हीति** । यदि मयटो विकारैकार्थता तदा प्रकृतेर्गुणविकारत्वं स्यात् । न च तद्युक्तमित्यर्थः । कथं मयटो विकारैकार्थताभ्युपगमे प्रकृतेर्गुणविकारतापत्तिः ? इत्यत आह— **गुणेति** । तादात्म्यार्थत्वे गुणातीतत्वमेव हरेः स्यात्, न गौणातीतत्वमित्यत आह— **सिद्धं चेति** ।

भावप्रकाशिका (न.टी.)— ननु यदि भगवान् सत्वरजस्तमोगुणात्मकदेहानां ब्रह्मादीनां सर्वेषामाश्रयः स्वयमनन्याश्रयश्च, तर्हि तद्विलक्षणाप्राकृतापरिमितज्ञानानन्दादिस्वरूपदेहः स्यात् । तादृक्त्वाप्रतीतेरयमपि गुणात्मकदेह इति भावेनाशङ्क्य, एतां परिहर्तुमुत्तरं श्लोकमवतार्य व्याचष्टे— **तर्हीति** । मयटोऽत्र विकारार्थत्वे 'मामेभ्यः परम्' इति गुणकार्येभ्य एव भगवतः परत्वं स्यात् । न गुणेभ्योऽपि अतस्तदुभयज्ञापनार्थं तादात्म्यार्थत्वं मयटः सप्रमाणकमाह— **तादात्म्येति** । मायिनाऽत्र मयटो विकारार्थत्वमुक्तं 'गुणमयैः गुणविकारैः' इति । तत्पक्षे मायाऽपि गुणकार्यभूता स्यात् । न च तद्युज्यत इत्याह— **न हीति** । ननु कथं गुणकार्यभूता स्यात् ? इत्याशङ्क्य, तस्या अप्युत्तरश्लोके गुणमयीत्याभिधानादित्याह— **गुणमयीति** ॥

श्लोकः १३

**प्रमेयदीपिका (ज.टी.)**– ननु विज्ञाननिरूपणं प्रारभ्य 'त्रिभिः' इत्यादिकं किमर्थमुच्यते? इत्यत आह– **तर्हीति** ॥ 'ये चैव' (७१२) इति विज्ञाननिरूपणोपसंहार-वाक्ये सत्त्वादिगुणनिर्वृतानां भगवान् कारणम् आश्रयश्च तदनाश्रयश्चेत्युक्तम् । तेनैव 'गुणातीतः' इति चोक्तप्रायम् । तस्यायमाक्षेपः । **एवं** गुणातीततया 'सगुणश्च ज्ञायसे' इति शेषः । एवमनुपलम्भविपरीतोपलम्भाभ्याम् उक्तमसदिति भावः ॥

विकारार्थतानिरासार्थमाह– **तादात्म्येति** ॥ मयटः तादात्म्यार्थत्वं कुत इत्यत आह– **तच्चेति** ॥ तादात्म्ये प्रयोगं दर्शयितुमुपोद्धातमाह– **न हीति** ॥ कार्यभूतेत्युपलक्षणम् । गुणप्राचुर्यादिकमपि तस्यां न सम्भवति । ततः किम्? इत्यत आह– **गुणेति** ॥ 'दैवी ह्येषा गुणमयी मम माया' (७.१४) इति मायाया गुणमयीत्वमुच्यते । नच तत्र विकाराद्यर्थता सम्भवति । ततः परिशेषतस्तादात्म्यार्थता ग्राह्येत्यर्थः ॥

**भावदीपः (रा.टि.)**– ॥ **प्रारभ्येति** ॥ 'रसोऽहम्' इत्यादिना इति योज्यम् ॥ अनुवादव्याजेन पूर्वश्लोकार्थं व्यनक्ति– **ये चैवेति** ॥ एवमित्यनूद्यार्थमाह– एवं **गुणातीततयेति** ॥ **उक्तमिति** ॥ गुणातीतत्वं गुणप्राचुर्यादिकमपीति ॥ मयटः प्राचुर्यार्थत्वं प्राधान्यार्थकत्वं चात्र न युक्तमिति सूचितम् ॥

**भावरत्नकोशः (सु.टि.)**– कृतामसङ्गतिशङ्कां परिहर्तुं पूर्वश्लोकार्थं वदन् आक्षेपविषयं दर्शयति– **ये चैवेतीति** ॥ **तेनैव** उपसंहारवाक्येनैव । **उक्तप्रायमिति** ॥ न हि गुणबद्धो गुणनिर्वृतपदार्थकारणं भवतीत्यर्थाद् गुणातीतत्वमपि प्राप्तमिति भावः । **तस्य** गुणातीतत्वस्य । अयं भाष्यगतः 'कथम्' इत्ययम् । न पुनः कारणत्वस्य आश्रयत्वस्य वा, गीतायां तत्परिहाराप्रतीतेरिति भावः । 'एवम्' इत्यनूद्यार्थवर्णनं– एवं **गुणातीततयेति** ॥ गुणमयाः पदार्थाः भगवद्विषयस्य सगुणत्वप्रकारकमोहस्य कारणम् । तेन च मोहेन गुणातीतत्वं न जानातीत्यस्यार्थस्य गीतायां वक्ष्यमाणत्वात्, गमनिकाभाष्ये तद्व्यावर्त्या शङ्का संयोज्येति भावेनाह– **सगुणश्च ज्ञायस** इति शेष इति ॥ 'नाभिजानाति' इत्यादिगीतानिवर्त्याशङ्कामुक्त्वा 'मोहितम्' इति गीताव्यावर्त्याक्षेपमाह 'सगुणश्चेति' इत्यप्यवतारयन्ति । **एवमनुपलम्भविपरीतोपलम्भाभ्यामिति** ॥ गुणातीतत्वानुपलम्भसगुणत्वोपलम्भाभ्यामित्यर्थः । **उक्तम्** 'गुणातीतः' इत्युक्तम् । **विकारार्थतेति** ॥ तथा च सङ्क रः 'गुणमयैः गुणविकारैः' इति । 'प्रयोगं च' इत्यत्र न केवलं प्रमाणसिद्धत्वमिति चशब्दः ।

ननु मयटः विकारः, अवयवः, प्राचुर्यम्, तादात्म्यं चेति चत्वारोऽर्थाः । तत्र 'न हि कार्यभूत' इति विकारार्थत्वप्रतिषेधमात्रेण न परिशेषे वक्ष्यमाणः प्रवर्तते । प्रसक्तयोः प्राचुर्यावयवार्थयोरप्रतिषेधादित्यत आह– **कार्यभूतेति** ॥ न सम्भवति 'इत्यपि ग्राह्यम्' इत्युपस्कर्तव्यम् । 'गुणमयीत्वम्' इत्यत्र 'त्वतलोर्गुणवचनस्य' इति सूत्रे गुणशब्दः शुक्लादिगुणवचन एवेति मनोरमायां व्यवस्थापितमिति न पुंवद्भावः । अत्र सत्त्वादेर्गुणशब्दार्थस्य द्रव्यत्वात् । अत एव 'स्त्रियाम्' इति सूत्रे 'व्यापिनीत्वात्' इति कैयटः । **विकाराद्यर्थता** विकारप्राचुर्याद्यर्थता ।

**भावदीपिका (श्री.टि.)–** ॥ **निर्वृत्तानाम्** उत्पन्नानाम् । **तेनैवेति** ॥ गुणमयसर्वपदार्थानां कारणत्ववचनेनेत्यर्थः । **उक्तं** गुणातीतत्वम् । **कार्यभूतेति** ॥ तथा न विकारार्थे मयडिति भावः । **गुणप्राचुर्यमपि तस्यां न सम्भवतीति** ॥ 'इत्यपि द्रष्टव्यम्' इति शेषः । वाक्यार्थमाह– **गुणेति** ॥ तत्र मायाशब्देन दुर्गाया गृहीतत्वात्, तस्यां च गुणविकारस्य, तत्प्राचुर्यस्य वाऽसम्भवादित्यर्थः । **मायायाः** दुर्गायाः । **तादात्म्यार्थतेति** ॥ **गुणतादात्म्यं** चाभिमानित्वाद्युक्तम् । अभिमान्यभिमन्यमानयोरैक्यपदेशस्य 'तथौ प्राणात्मकौ प्रोक्तौ' 'महतश्च चतुर्मुखात्' इत्यादौ दर्शनादिति द्रष्टव्यम् ।

**भावप्रकाशः (कृ.टि.)–** ॥ **ननु तर्हीत्यादिना** ॥ कारणत्वादिना कुतो न ज्ञायस इत्याक्षिप्यते । न चैतद्युक्तम् । गीतायां सगुणत्वमोहादौ कारणस्योक्तत्वेनोक्ताक्षेपपरिहारालाभादित्यत आह– **ये चैवेतीति** ॥ 'नाभिजानाती'त्यादि गीतानिवर्त्यशङ्कामुक्त्वा मोहितमित्यन्तगीतानिवर्त्याक्षेपमाह– **सगुणश्चेति** ॥ ननूक्तप्रमाणाच्छाब्दिकप्रसिद्धेश्च मयटश्चत्वारोऽर्थाः विकारोऽवयवः प्राचुर्यं तादात्म्यं चेति । तत्र न हि कार्यभूतेति विकारार्थत्वं निषिद्धं न चैतावता वक्ष्यमाणपरिशेषप्रवृत्तिः । प्रसक्तयोः प्राचुर्यावयवार्थत्वयोरनिषेधात् । इत्यत आह– **उपलक्षणमिति** । **प्राचुर्यादिकमिति** ॥ आदिपदाद्गुणावयवत्वसङ्ग्रहः । **गुणमयीत्वमिति** ॥ नात्र त्वतलोर्गुणवचनस्येति पुंवद्भावः शुक्लादयो ये गुणाः प्रसिद्धाः तद्वाचिन एव पुंवद्भाव इति भट्टोजिना सिद्धान्तितत्वात् । प्रकृते च सत्त्वादेः द्रव्यत्वेन तदात्मकत्ववाचिगुणमयशब्दस्य प्रसिद्धशुक्लादिगुणवाचित्वाभावादिति बोध्यम् ॥

श्लोकः १३

## भाष्यम्

**सिद्धं च कार्यस्यापि तादात्म्यम् । 'तादात्म्यं कार्यधर्मादेः संयोगो भिन्न-वस्तुनोः' इत्यादि व्यासयोगे । भावैः पदार्थैः ॥**

भावप्रदीपिका (प.टी.)– भावशब्दस्य नानार्थत्वाद् विवक्षितार्थमाह– **भावैरिति** ।

भावप्रकाशिका (न.टी.)– ननु मूलप्रकृतेरकार्यत्वात् तादात्म्यं मयडर्थः स्यात् । एषां तु भावानां गुणकार्यत्वात् कथं तत्तादात्म्यमित्याशङ्क्य कार्यस्यापि तादात्म्यं सप्रमाणकमाह– **सिद्धं चेति** । बह्वर्थत्वात् 'भाव'शब्दस्यात्र भगवद्विवक्षितार्थमाह– **भावैरिति** ॥

प्रमेयदीपिका (ज.टी.)– अस्तु मयटस्तादात्म्ये शक्तिः । अत्र विकारार्थतां परित्यज्य तद्ग्रहणे को हेतुः ? इति चेदुच्यते । विकारार्थताग्रहणे 'मामेभ्यः परम्' इत्यत्र गुणकार्येभ्य एव भगवतः परत्वमुक्तं स्यान्न तु गुणेभ्यः । अतस्तत्सङ्ग्रहाय तादात्म्यार्थताग्रहणम् । एवं तर्हि गुणेभ्य एव परत्वमुक्तं स्यान्न तु गुणकार्येभ्योऽपीति समानमित्यत आह– **सिद्धं चेति** ॥ सिद्धं प्रमितम् । ततश्च गुणात्मकैरित्युक्ते गुणानां तत्कार्याणां चोपादाने सत्युभयपरत्वमुक्तं भवति ॥ **कार्यधर्मादेरिति** ॥ कार्यद्रव्यस्योपादानेन गुणक्रियाजातिपूर्वाणां धर्माणां गुण्यादिभिरित्यर्थः ॥ भावशब्दस्य अनेकार्थत्वात् तस्य विवक्षितमर्थमाह– **भावैरिति** ॥ एवंसति सर्वपरत्वलाभादिति भावः ॥

भावबोधः (र.टि.)– ॥ एवं सति **सर्वपरत्वलाभादिति** ॥ भावशब्दस्य पदार्थपरत्वे सति एभ्य इत्यस्य भावशब्दोक्तसर्वपदार्थपरामर्शकत्वसिद्धौ विष्णोः सर्वपरत्वलाभादित्यर्थः ।

भावदीपः (रा.टि.)– ॥ आदिपदार्थोक्तिः– **उपादानेनेति** ॥ जातिस्तदसाधारणो धर्मः ॥

भावरत्नकोशः (सु.टि.)– ॥ **तद्ग्रहणे** तादात्म्यार्थताग्रहणे । **गुणेभ्यः** परत्वम् । तत्सङ्ग्रहाय गुणपरत्वसङ्ग्रहाय । उपसंहारस्योत्पत्तेर्वा ग्रहणं प्रकृते न सम्भवतीत्यतो विवक्षित-मर्थमाह– **सिद्धं प्रमितमिति** । इत्युक्ते 'गुणमयैः' इत्यस्य 'गुणात्मकैः' इत्यर्थपर्यवसाने । **'कार्यधर्मादेः'** इत्यत्र कार्यम् उपादेयद्रव्यम्, **तद्धर्माः** गुणक्रियाजातिशक्तिसादृश्यविशिष्टांश-

लक्षणाश्च, आदयो यस्य उपादानद्रव्यस्य, गुणिनः, क्रियावतः, जातिमतः, शक्तिमतः, सदृशस्य, शुद्धस्य, अंशिनश्च इत्येवंरूपस्य समूहस्य स तथा, तस्येति विग्रहमभिप्रेत्य कार्यस्योपादानेन, गुणस्य गुणिना, क्रियायाः क्रियावता च तादात्म्यमित्यादिरूपेण व्याख्या द्रष्टव्येत्याह– **कार्यधर्मादिरितीति । अनेकार्थत्वादिति ॥**

'भावः स्वभावेऽभिप्राये चेष्टासत्तात्मजन्मसु । क्रियालीलापदार्थेषु वन्धुजन्तुविभूतिषु'

इति विश्वप्रकाशाभिधानादिति भावः । एवमनेकार्थत्वेऽपि प्रकृते पदार्थार्थकत्वमेव युक्तम्, 'एभ्यः परम्' इत्यनेन सर्वपदार्थेभ्योऽपि परत्वालाभादित्याह– **एवमिति** ॥ पुरोवर्तिमात्रस्य परामर्शे सति बुद्ध्या विविक्तस्यान्वयः । 'इदम्' इत्यस्यार्थः– **व्यवहारेति** ॥ लौकिक-हानोपादानादिव्यवहारपदमित्यर्थः । 'पामरजनस्य ग्रामस्था अपि न ग्राम्याः, वैलक्षण्याद्धि सज्जनाः' इत्यादौ ज्ञानिनां पामरवैलक्षण्याभिधानेन ज्ञानिजनवैलक्षण्यवेदनादिति भावः ।

**भावदीपिका (श्री.टि.)–** भाष्ये **तादात्यं** कारणेन तादात्म्यमित्यर्थः । **उभयपरत्वमिति** ॥ कारणपरत्वोक्तौ तदात्मककार्यपरत्वमप्युक्तप्रायमिति भावः । ननु कार्यकारणयोरभेदादेव कार्येभ्य उत्तमत्वोक्तौ कारणेभ्यो गुणेभ्योऽप्युत्तमत्वं प्राप्यत एवेति चेत्, सत्यम् । 'गुणेभ्यश्च परम्' इत्युत्तरत्र गुणेभ्य एवोत्तमत्ववचनेन तादात्म्यार्थत्वमेव ग्राह्यमिति हृदयम् । **'गुण्यादिभिः'** इत्यत्रादिपदेन क्रियावतो जातिमद्व्यक्त्यादेश्च ग्रहणम् । **एवं सतीति** ॥ भावशब्दस्य पदार्थमात्रपरत्वे सति 'एभ्यः' इत्यस्य भावशब्दोक्तसर्वपदार्थपरामर्शकत्वसिद्धौ विष्णोः सर्वपरत्व-लाभादिति भावः ।

**भावप्रकाशः (कृ.टि.)– ॥ तादात्म्ये शक्तिरिति** ॥ ननु पाणिनीयानां मते कथं मयटस्तादात्म्ये शक्तिः । अविधानादिति चेन्न । 'नित्यं वृद्धशरावादिभ्यः' इत्यत्र नित्यग्रहण-स्याधिकविधानार्थत्वात् । तादात्म्ये मयडिति प्रक्रियाटीकायां 'चिन्मय'मित्यत्र कृष्णपण्डितोक्तेरिति गृहाण । उपसंहारोऽयमिति प्रतीतिनिरासार्थमाह– **सिद्धं प्रमितमिति** ॥ प्रमाणसान्निध्यादिति भावः । **जातिपूर्वाणामिति** । विशिष्टांशिनोः सङ्ग्रहाय पूर्वशब्दः । तथा च 'कार्यधर्मादि'रित्यत्र कार्यधर्मपदाभ्यां कार्यद्रव्यादिरूपाश्रितमात्रग्रहणम् । आदिपदेनोपादानादीनामाश्रयाणां सङ्ग्रह इत्युक्तं भवति । **अनेकार्थत्वादिति** ॥

श्लोकः १३

'भावः स्वभावेऽभिप्राये चेष्टासूत्रात्मयोनिषु ।
क्रियालीलापदार्थेषु बुधजन्तुविभूतिषु'

इति विश्वोक्तेरिति भावः । **सर्वपरत्वेति** ॥ 'एभ्यः पर'मित्यनेन विष्णोः सर्वपरत्वलाभादित्यर्थः । 'भावै'रित्युक्तस्यैव 'एभ्यः' इत्यनेन परामर्शादिति भावः ।

## भाष्यम्

**सर्वे भावा दृश्यमाना गुणमया एत एवेति दर्शयति– एभिरिति ॥ ज्ञानिव्यावृत्त्यर्थम् इदमिति । गुणमयदेहादिकं दृष्ट्वेश्वरदेहोऽपि तादृश इति मायामोहित इत्यर्थः ॥ जगाद च व्यासयोगे**

**'गौणान् ब्रह्मादिदेहादीन् दृष्ट्वा विष्णोरपीदृशः ।
देहादिरिति मन्वानो मोहितोऽज्ञो जनो भृशम् ॥' इति ।**

**एभ्यः गुणमयेभ्यः । 'गुणेभ्यश्च परम् '(१४.१९) इति वक्ष्यमाणत्वात् । 'केवलो निर्गुणश्च' (श्वेत.उ.६.११) इत्यादिश्रुतिभ्यश्च । 'त्रैगुण्यवर्जितम्' (म.भा.१.१.१) इति चोक्तम् ॥ १३ ॥**

भावप्रदीपिका (प.टी.)– 'एभिः' इत्यस्यार्थमाह । केषाञ्चित्पदार्थानां गुणमयत्वमेव नास्तीति विपरीतप्रतीतिनिरासायाह– **सर्व इति** । ब्रह्मादीनां मोहाभावात् कथं सर्वं जगन्मोहितमित्यत आह– **ज्ञानीति** । श्लोकाभिप्रायं सप्रमाणकमाह– **गुणमयेति** । गौणस्यैव तव गुणावद्धत्वे कथं मोहः ? इत्याशङ्कां परिहर्तुं सप्रमाणकं चतुर्थपादं व्याचष्टे– **एभ्य इति** ॥ १३ ॥

भावप्रकाशिका (न.टी.)– दृश्यमानसर्वभावानां गुणमयत्वज्ञापनार्थम् 'एभिः' इति निर्देशो नान्यव्यावृत्त्यर्थः । येनान्येभ्यः परत्वं भगवतो न सिद्ध्येदिति भावेनाह सर्व इति । 'इदम्' इति विशेषणं त्वन्यव्यावृत्त्यर्थमित्याह– **ज्ञानीति** । एवं पदार्थाद्युक्त्वा श्लोकतात्पर्यार्थ्यं सप्रमाणकमाह– **गुणमयेति** । ननु भगवद्देहस्य ब्रह्मादिदेहसादृश्यज्ञो जनः तर्ह्येव

श्लोकः १३

मोहितः स्यात्, यद्यसावतादृशः स्यात् ? तदेव कुतः ? इत्याशङ्कापरिहारत्वेन चतुर्थपादोक्त-मतादृक्त्वं प्रकाश्य, उक्तवक्ष्यमाणसम्मत्या श्रुत्या च स्थापयति– **एभ्य इत्यादिना** । स्वाभेदं स्वदेहस्य ज्ञापयितुं 'माम्' इत्युक्तं भगवतेत्यभिप्रायः ॥ १३ ॥

**प्रमेयदीपिका (ज.टी.)**– नन्वेवमप्येभिरिति पुरोवर्तिनामेव ग्रहणान्न सर्वपरत्वसिद्धि-रित्यत आह – **सर्व इति** ॥ प्रमितपरामर्शोऽयं न पुरोवर्तिमात्रस्येति भावः ॥ जगन्मोहितम् इत्यलम्, किम् इदम् इत्यनेन? इत्यत आह – **ज्ञानीति** ॥ व्यवहारपतितमित्यर्थः । ननु भगवद्विपयस्य सगुणत्वमोहस्य कथं गुणात्मकाः पदार्थाः कारणम्? इत्यत आह– **गुण-मयेति** ॥ 'देहत्वादिहेतुना' इति शेपः ॥ माया इति गुणमयानां ग्रहणम् । मोहितः जनः ॥

तत्र प्रमाणमाह– **जगाद चेति** ॥ आदिपदेनेन्द्रियादिग्रहणम् । यदर्थं तादात्म्यार्थग्रहणं कृतं तदाह– **एभ्य इति** ॥ ननु भगवतो गुणातीतत्वे प्रमिते तदर्थोऽयं श्रमः सफलः स्यात् । तदेव कुत इत्यत आह– **गुणेभ्यश्चेति** ॥ १३ ॥

**भावबोधः (र.टि.)**– ॥ **देहत्वादिहेतुनेति** । ईश्वरदेहादिः गुणमयः देहादित्वात् गुण-मयदेहादिवत् इत्यनुमानं भाष्य एव स्पष्टप्रतिभासम् ॥ १३ ॥

**भावदीपः (रा.टि.)**– ॥ **देहत्वादिहेतुनेति** ॥ । विमतो भगवद्देहो गुणमयः, देहत्वात्, ब्रह्मादिदेहवत् । विमतानि ईश्वरेन्द्रियाणि गुणमयानि इन्द्रियत्वात् चैत्रादीन्द्रियवदित्येवं 'देहत्वात्' इतिहेतुकानुमानेन मोहिता जनाः मिथ्याज्ञानिनो भवन्तीत्यर्थः ॥ १३ ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **देहत्वादीति** ॥ 'विमत ऐश्वरो देहो गुणमयः देहत्वात्, चैत्रदेहवत्', 'ऐश्वराणीन्द्रियाणि गुणमयानि इन्द्रियत्वात् सम्मतवत्' इत्यनुमानेनेत्यर्थः । गुणमय-पदार्था उक्तानुमानाभासोत्पादनद्वारा भगवद्विषयस्य सगुणत्वप्रकारकमोहस्य कारणमिति नोक्त-चोद्यमिति भावः । ननु गुणमयपदार्थानां मोहकारणत्वे प्रतिपादनीये भाष्ये मायाशब्दः कथं प्रयुक्त इत्यत आह– **मायया इति** ॥ वक्ष्यमाणप्रमाणानुसारेण 'जनः' इति विशेष्योक्तिः । अत्र गुणमयपदार्थानामनुमानाभासोत्पादनद्वारा सगुणत्वमोहे कारणत्वमित्यत्र । 'इन्द्रियादिग्रहणम्' इत्यत्र आदिशब्देन मनोग्रहणम् । 'मनः सर्वेन्द्रियाणि' इत्यादौ तस्य पृथगुक्तेः । प्राणबुद्ध्यादि-

ग्रहणमित्यन्ये । **अयं श्रमः** तादात्म्यार्थताग्रहणश्रमः । **तदेव** गुणातीतत्वमेव । भाष्ये **वक्ष्यमाणत्वात्** 'गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति' इति चतुर्दशेऽध्याये गुणातीतत्वस्य । 'केवलः जडामिश्रः निर्गुणः सत्त्वादिगुणहीनः' इति तत्त्वप्रकाशिका ।

नच निर्गुणश्रुतिर्ब्रह्मणो ज्ञानानन्दादिगुणसामान्याभावप्रतिपादनाय प्रवृत्तेति न त्रिगुणातीतत्वे प्रमाणमिति वाच्यम् ।

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता ..................॥'

इति स्वेनैव एकः प्रधानभूतः सर्वभूतेषु गुप्ततयाऽवस्थितः । न केवलं भूतेषु, सर्वव्यापी च, न केवलं सर्वभूतेषु स्थितिमात्रं च, सर्वभूतान्तर्यामी च, अध्यक्षः अधिपतिः सर्वभूतानामाश्रयः सर्वं साक्षादीक्षत इति साक्षी, चेता ज्ञानरूप इति बहुगुणविधानेन व्याघातापातात् ॥

किं च निर्गुणवाक्यं छागपशुन्यायेन गुणत्रयशून्यत्वरूपविशेषोपसंहारपरम् अभ्युपगन्तव्यमिति भावेन 'त्रैगुण्यवर्जितम्' इति भारतवाक्यमुदाहृतम् । त्रयो गुणा एव त्रैगुण्यम् तद्वर्जितमित्याह– **गुणत्रयातीतत्वमत्र स्फुटमिति भाष्यं व्याख्येयम् ॥** भारततात्पर्यनिर्णये च 'निर्दोषकः सृतिविहीन उदारशक्तिः' इत्यत्र 'त्रैगुण्यवर्जितम्' इत्यस्य निर्दोषपदेन व्याख्यानं सर्वदोषाणां गुणत्रयकार्यतया तद्वर्जने सर्वदोषविहीनत्वं फलतीति फलितार्थप्रदर्शनरूपमिति न तद्विसंवादशङ्का ॥

'त्रिभिः' इत्याद्यायाः 'कामैस्तैः' इत्यतः प्राक्तन्याः सप्तश्लोक्या **अक्षरार्थस्तु** 'ये चैव' इति विज्ञाननिरूपणोपसंहारवाक्ये 'सत्त्वादिगुणनिर्वृत्तानां सर्वपदार्थानां भगवान् कारणमाश्रयश्च' इत्युक्तम्, तेनैव 'गुणातीतः' इति चोक्तप्रायम् । तत्रैवं शङ्क्यते– यदि त्वं गुणातीतस्तर्हि कथं गुणातीततया न ज्ञायसे ? प्रत्युत सगुण एव ज्ञायस इति ॥ तत्परिहारार्थमुच्यते त्रिभिरिति ॥ गुणशब्दात् तादात्म्ये मयट् । सत्त्वरजस्तमोरूपगुणत्रयात्मकैः पदार्थैः सर्वे भावा दृश्यमाना गुणमया इति दर्शयितुम् 'एभिः' इति विशेषणम्, प्रमितैरित्यर्थः । मोहितं मोहमापादितं सद् इदं ज्ञानिव्यावृत्तं व्यवहारपतितं सर्वं जगद् एभ्यः गुणतत्कार्येभ्यः परं विलक्षणं गुण-तत्कार्यातीतमिति यावत्, नाभिजानाति । अत एव देहतोऽप्यव्ययं गुणक्रियादिदोषशून्यदेहं नाभिजानाति, विपरीतं सगुणं च जानाति ।

ननु भगवद्विषयस्य सगुणत्वमोहस्य कथं गुणमयाः पदार्थाः कारणमिति चेत् 'ऐश्वरो देहो गुणकार्यभूतः देहत्वात् ब्रह्मादिदेहवत्' 'ऐश्वराणीन्द्रियाणि गुणकार्याणि इन्द्रियत्वात् सम्प्रतिपन्नवत्' इत्यनुमानाभाससम्पादनेनेति ब्रूमः । वक्ष्यमाणप्रपत्तिरूपोपायाभावात्, तदज्ञजनस्य गुणातीतत्वेन भगवतोऽनुपलम्भः तदापादितदेहत्वाद्यनुमानाभासेन तु सगुणतया विपरीतोपलम्भश्चेत्युक्तं भवति ॥ १३ ॥

**भावदीपिका (श्री.टि.)**– ॥ **प्रमितेति** ॥ तथा च भाष्ये 'दृश्यमानाः' इत्यस्य 'प्रमाणप्रमिताः' इत्यर्थो द्रष्टव्य इत्युक्तं भवति । **व्यवहारपतितमिति** ॥ तथा च 'इदम्' इत्यस्य लोकव्यवहारान्तर्गतमज्ञानिजातमित्यर्थः । ज्ञानिनस्तु लोकातीतत्वेन न लोकव्यवहारपतितत्वमिति भावः । **देहत्वादिहेतुनेति** ॥ ईश्वरदेहो गुणमयो देहादित्वाद् गुणमयदेहादिवत् इत्यनुमानं भाष्य एव स्पष्टम् ॥ **मायेतीति** ॥ तथा च गुणमयदेहादिदृष्टान्तेन मोहित इत्यर्थः । 'मोहितोऽज्ञो जनो भृशम्' इति वक्ष्यमाणप्रमाणानुसारादाह– **जन इति** ॥ अज्ञानिजन इत्यर्थः ॥ **इन्द्रियादीति** ॥ तथा च ईश्वरेन्द्रियं पक्षीकृत्येन्द्रियत्वेन हेतुना गुणमयब्रह्मादीन्द्रियदृष्टान्तेन गुणमयत्वं साधनीयमित्युक्तं भवति । **अयं श्रम इति** ॥ 'तादात्म्यार्थे मयट्' इत्यादिना कृतः श्रम इत्यर्थः ॥ १३ ॥

**भावप्रकाशः (कृ.टि.)**– नन्विदमिति सन्निकृष्टमुच्यते ज्ञान्यपि तथा । तत्कथं तेन तद्व्यावृत्तिरित्यत आह– **व्यवहारपतितमित्यर्थ इति** ॥ हानोपादानादिव्यवहारपतितमित्यर्थः । **देहत्वादिति** ॥ आदिपदादिन्द्रियत्वादिग्रहः । **इन्द्रियादिग्रहणमिति** ॥ आदिपदेन मनः । 'मनः-सर्वेन्द्रियाणि च' इत्यादौ इन्द्रियेभ्यः पृथक्त्वेन मनोग्रहणादिति ध्येयम् ॥ १३ ॥

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥**

## भाष्यम्

कथमनादिकाले मोहानत्ययो बहूनाम्? इत्यत आह– **दैवीति** ॥ अयमाशयः । माया **ह्येषा** मोहिका ॥

श्लोकः १४

भावप्रदीपिका (प.टी.)– ननु यदि भगवतो गौणत्वज्ञानं मोहः, तर्हि वाधः किमिति नास्ति । अतो नायं मोह इत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतारयति– **कथमिति** । वाधाभावे कारणप्रश्ने मायास्वरूपं किमर्थं वर्ण्यते इत्यत आह– **अयमिति** । ये गुणा मोहतयोक्ताः, तदभिमानी माया हि मोहिका ।

भावप्रकाशिका (न.टी.)– ननु त्रिगुणात्मकदेहो भगवानित्ययं मोहश्चेत्, बाधकप्रत्ययः स्यात् । तदभावान्न मोहोऽयमिति भावेनाशङ्क्य, तां परिहर्तुमुत्तरश्लोकार्धमवतार्य व्याचष्टे– **कथमिति** । ननु 'बाधकाभावे किं कारणम् ' इति प्रश्नस्य मायादैवत्वदुरतिक्रमणत्वयोरभि-धानं कथमुत्तरमित्यत आह– **अयमिति** । मोहकारणत्वेनेतिहासपुराणादिप्रसिद्धा या माया (तस्या) भगवदीयत्वेन दुरत्ययत्वान्न बाधक इत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– उपायाभावानुमानाभासाभ्यामनुपलम्भो विपरितोपलम्भ-श्चेत्युक्तम् । अतः किमुत्तरेण वाक्येनेत्यत आह– **कथमिति** ।। भगवान् गुणमयविग्रह इत्ययं न मोहः । बाधकप्रत्ययाभावात् । ज्ञानिनां सम्यक्प्रत्ययो बाधक इत्युक्तमिति चेन्न । बहुतर-ज्ञानविरोधेन कतिपयज्ञानानामेवायथार्थत्वापत्तेः । ननूत्तरकाले बाधकप्रत्ययो भविष्यतीति चेत् न । अनादौ कालेऽजातस्योत्तरत्राप्यसम्भवादिति भावः ।।

ननु बाधकप्रत्ययाभावाद्यथार्थ एवायं प्रत्यय इति शङ्कायां किमेतदसङ्गतमुच्यते? इत्यत आह– **अयमिति** ।। **एषा** इत्यनुवादेन मोहिका इति व्याख्यातम् । 'मोहितम्' इति धात्वर्थ-मात्रं परामृश्य योग्यप्रत्ययसम्बन्धेन व्याख्यानात् । गुणमयी तदभिमानिनी दुर्गा या हि तमोगुणेनैवंविधं मोहं जनयति । अनुमानं तु निमित्तमात्रम् ।।

भावबोधः (र.टि.)– ननु मोहकर्त्र्याः पूर्वमनुक्तत्वात् 'एषा' इत्यनेन तत्परामर्शासम्भवेन कथं मोहिकेत्येतद्व्याख्यातमित्यत आह– **मोहितमिति** ।। **योग्येति** । कर्त्रर्थकण्वुल्प्रत्यय-सम्बन्धे-नेत्यर्थः । तथा च 'मुह वैचित्ये' इत्यस्माद्धातोः कर्तरि ण्वुलि 'युवोरनाकौ' इत्यकादेशे लघूपधगुणे टापि 'प्रत्ययस्थात्' इतीत्वे विमोहिकेति रूपनिष्पत्तिरित्यर्थः ।

भावदीपः (रा.टि.)– ।। **उपायेति** ।। गुणातीतत्वेन कथं न ज्ञायसे । प्रत्युत 'गुणयुक्तत्वेनैव ज्ञायसे' इत्याक्षेपस्य 'त्रिभिः' इति श्लोके गुणातीतत्वानुपलम्भोपायाभावेन गुणमयत्वेन विपरीतोप-

लम्भश्च देहत्वाद्यनुमानाभासेनेत्युक्तमित्यर्थः ॥ अप्रकृतस्य कथमत्र '**मोहिका**' इति परामर्श इत्यत आह– **मोहितमितीति** ॥ विशेष्याकाङ्क्षायां गीतास्थं पदं स्वयमनूद्य तदर्थमाह – **गुणमयीति** ॥ **अनुमानं त्विति** ॥ देहत्वाद्यनुमानमित्यर्थः ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ननु मोहकर्त्र्याः पूर्वमनुक्तत्वात् 'एषा' इत्यनेन तत्परामर्शासम्भवात् कथं मोहिकेत्येतद्व्याख्यातमित्यत आह– **मोहितमिति । योग्येति** ॥ कर्त्रर्थकण्वुल्प्रत्ययसम्बन्धेनेत्यर्थः । तथा च 'मुह वैचित्ये' इत्यस्माद्धातोः 'ण्वुल्तृचौ' इति कर्तरि ण्वुलि तस्य 'युवोरनाकौ' इत्यकादेशे पुगन्तलघूपधस्य चेति लघूपधगुणे स्त्रीत्वविवक्षया टापि 'प्रत्ययस्थात्कात् पूर्वस्य इदाप्यसुपः'इति इत्वे मोहिकेति रूपनिष्पत्तिरित्यर्थः ॥

**भावरत्नकोशः (सु.टि.)**– 'त्रिभिर्गुणमयैः' इति श्लोकस्य निर्गलितमर्थं वदन्नेवोत्तरभाष्यमवतारयति– **उपायाभावेति** ॥ गुणातीततोपलम्भस्य मोहाभाव उपायः, तदभावः मोह एवोपायाभावरूपः, उक्तानुमानाभासश्च सगुणत्वोपलम्भे उपायः । ताभ्याम् उपायाभावअनुमानाभासाभ्याम् अनुपलम्भ विपरीतोपलम्भौ भवत इति 'त्रिभिः' इति श्लोके उक्तमित्यर्थः । अतः प्रत्युपस्थितचोद्यस्य परिहृतत्वात् 'कथम्' इत्याक्षेपभाष्यभावमाह– **भगवानिति** ॥ **इत्ययम्** प्रत्ययः ॥ **सम्यक्प्रत्ययः** गुणातीतत्वाध्यवसायः । 'बहुतर' इत्यत्र 'अल्पाच्तरम्' इत्यादाविव स्वार्थे तरप् । बहुबाधस्यान्याय्यत्वादिति भावः । 'अनादिकालम्' इत्यस्य भावं वक्तुं शङ्कते **ननु चेति** ॥ **अजातस्य** बाधकप्रत्ययस्य । **अयं** 'भगवान् पुण्यमयविग्रहः' इत्ययम् ।

नन्वेतच्छब्दः समीपतरवर्तिपदार्थपरामर्शी । नच मोहिका समीपस्था, पूर्वमप्रसक्तत्वात् । तत्कथं भाष्ये 'एषा' इत्यनूद्य 'मोहिका' इति व्याख्यायत इत्यत आह– **मोहितमितीति** ॥ पूर्वश्लोके हि 'मोहितं नाभिजानाति' इत्यत्र मुहधात्वर्थो मोहनम्, तन्मात्रम् 'एषा' इति परामृश्य कर्त्रर्थकण्वुल्प्रत्ययरूपार्थानुकूलप्रत्ययोत्पादनेन व्याख्यानाद् युक्तं तथा व्याख्यानमित्यर्थः । 'मोहिका' इत्यत्र विशेष्याकाङ्क्षापूरकं 'माया' इति पदम् । तत्र विशेषणं 'गुणमयी' इति । 'मयट् तादात्म्यार्थः' इति भाषितम् । तत्कथं मायाया गुणतादात्म्यमित्यतस्तद्धटयितुमाह– **गुणमयी तदभिमानिनीति** ॥ तमोगुणाभिमानिनी । का सा माया । तदर्थः दुर्गा । यदर्थमेतद्विशेषणोपादानं तदाह **माया हि तमोगुणेनेति** । कथं माया मोहिकेत्याकाङ्क्षानिरासायैतद्विशेषणमिति भावः । तर्हि

श्लोकः १४

कथमनुमानाभासेन सगुणत्वमोह इत्युक्तमित्यत उक्तम्– **अनुमानं त्विति**। जीवप्रबोधस्य भगवद्-साधारणकारणकत्वेऽपि तत्र यथा भेरीताडनादि निमित्तमात्रम्, तथा देहत्वाद्यनुमानं सगुणत्व-मोहनिमित्तमात्रमिति भावः।

**भावदीपिका (श्री.टि.)**– ननु भगवतो गुणातीतत्वमसत्। तथात्वेनानुपलम्भात्, सगुण-त्वादिना विपरीतोपलम्भाच्च इत्याशयेनाशङ्कि तस्य 'तर्हि कथमेवं न ज्ञायसे' इत्यस्य एतावता प्रबन्धेन किमुत्तरं जातमित्यतः, तद्वदन्नेवोत्तरवाक्यम् अवतारयति– **उपायाभावेत्यादिना**॥ मोहातितरणलक्षणोपायाभावाद् गुणातीततयाऽनुपलम्भो युक्तः, देहत्वाद्यनुमानाभासेन विपरीतोप-लम्भश्चेत्यर्थः। 'बहूनाम्' इत्यस्याभिप्रायमाह– **बहुतरज्ञानेति**॥ गुणमयविग्रहत्वावगाहीत्यर्थः। **कतिपयज्ञानानाम्** गुणातीतविग्रहवत्त्वावगाहिनाम्। अनादिपदाभिप्रायमाह– **उत्तरेति**॥

ननु 'एषा' इत्यस्य 'मोहिका' इति कथं व्याख्यानम्। मोहकर्त्र्याः पूर्वमनुक्तत्वेन 'एषा' इत्यनेन तत्परामर्शायोगादित्यत आह– **मोहितमिति**॥ 'एषा' इत्येनेन मोहकर्त्र्या न परामर्शः, येनोक्तदोषः स्यात्। किं नाम, 'मोहितम्' इत्यत्रत्यं मुह्धात्वर्थमात्रमेव 'एषा' इत्यनेन परामृश्य, तस्य योग्यो यः कर्त्रर्थण्वुल्प्रत्ययः, तत्सम्बन्धेन 'मोहिका' इति व्याख्यानमात्रं क्रियत इत्यर्थः। तथा हि 'मुह वैचित्त्ये' अस्माद्धातोः कर्तरि ण्वुल्प्रत्यये, 'युवोरनाकौ' इत्यकादेशे, लघूपधत्वात् 'पुगन्तलघूपधस्य च' इति गुणे, 'मोह अक' इति जाते, 'प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः' इति सूत्रेण 'अक' इत्यत्रस्थस्य पूर्वस्याकारस्य इकारादेशे 'मोहिका' इति रूपं द्रष्टव्यम्। नन्वत्र मायाया विपरीतोपलम्भरूपमोहकारणत्वमुच्यते। पूर्वं देहत्वाद्यनुमानस्य मोहकारणत्वमुक्तम्, अतो विरोध इत्यत आह– **अनुमानं त्विति**॥ मुख्यतो मोहजनिका मायैवेत्याशयः।

**भावप्रकाशः (कृ.टि.)**– ननु सगुणत्वमोहे गीतायां कारणमुक्तं न तु गुणातीतत्वानुपलम्भ इत्याशङ्कां परिहरन्नाह– **उपायाभावेति**॥ अग्र उपयस्य वक्ष्यमाणत्वादत्रेदं लभ्यत इति भावः। ननु कथमित्यादिर्न प्रश्नः। अनादिकाले बहूनामिति विशेषणवैयर्थ्यादित्याङ्क्ष चाक्षेपपरतया व्याचष्टे– **भगवानिति**॥ **इत्युक्तमिति**। ज्ञानिव्यावर्तकेदम्पदनोक्तप्रायमित्यर्थः।

ननु समीपतरवर्ति चैतदो रूपमित्युक्तेरेतदः समीपस्थपरामर्शकत्वात् मोहिकायाश्चासामीप्यात् मोहिकेति कथं व्याख्यातमित्यत आह– **मोहितमिति**॥ **योग्यप्रत्ययेति**॥ कर्त्रर्थकण्वुल्प्रत्यय-

सम्बन्धेनेत्यर्थः । तथा च विपूर्वान् 'मुह वैचित्ये' इत्यस्माद्धातोः कर्तरि ण्वुलि 'युवोरनाका' वित्यकादेशे लघूपधगुणे टापि 'प्रत्ययस्थात्' इतीत्वे च विमोहिकेति रूपनिष्पत्तिरिति भावः ॥

नन्वत्र मायाशब्देन दुर्गाऽभिप्रेता । तस्या 'गुणमयी' इत्युक्तं गुणतादात्म्यं कथमित्यतः तदनूद्य व्याचष्टे– **गुणमयी तदभिमानिनीति** ॥ किमर्थमेतद्विशेषणमित्यत आह– **या हीति** ॥ कथं मोहिकेति जिज्ञासानिवृत्त्यर्थमेतदिति भावः । तर्ह्यनुमानं मोहहेतुरिति प्रागुक्तविरोध इत्यत आह– **अनुमानं त्विति** ॥

## भाष्यम्

**सा च सृष्ट्यादिक्रीडादिमद्देवसम्बन्धित्वादतिशक्तेर्दुरत्यया । तथा हि देवताशब्दार्थं पठन्ति 'दिवु क्रीडा-विजिगीषा-व्यवहार-द्युति-स्तुति-मद-मोद-स्वप्न-कान्तिगतिषु' (काशकृत्स्नधा.पा.) इति । कथं? दैवी । मदीयत्वात् । अहं हि देव इति ।**

भावप्रदीपिका (प.टी.)– ततश्च किमित्यत आह– **सा चेति** । क्रीडादिगुणवत्त्वास्स्वयं देवीति किं न स्यात् ? इत्याशङ्क्य, 'मम' इति पदं व्याचष्टे– **कथमिति** । उभयोरपि तच्छब्दवाच्यत्वं किं न स्यात् ? इत्यत आह– **अहं हीति** । मुख्यत इत्यर्थः । ततो गुणाभिमानिन्यादिरूपाया विष्णुवलाश्रयाया अवधित्वान्न मोहाश्रया इत्यर्थः ।

भावप्रकाशिका (न.टी.)– ननु सा भगवतेव स्वातन्त्र्येणैव सृष्ट्यादिक्रीडादिमत्त्वात् स्वयं देव्येव । न तु 'दैवी' इति भावेनाशङ्क्य, तदुत्तरत्वेन 'मम' इति व्याचष्टे– **कथ-मित्यादिना** । ननु देवदेव्योर्मध्ये देवशब्दमुख्यार्थत्वनिर्धारः कथमित्यत आह– **अहमिति** । हीति श्रुत्यादिसर्वप्रमाणप्रसिद्धमित्यर्थः ।

प्रमेयदीपिका (ज.टी.)– ततः किम्? इत्यत आह– **सा चेति** ॥ सा दुरत्यया । तत्कृतमोहं कोऽपि नात्येतुं शक्नोति । न कस्यापि वाधकप्रत्ययो भवति । कुतो दुरत्यया? इत्यतः 'अतिशक्तेः' इति हेतुरध्याहृत्योक्तः । कुतोऽतिशक्तित्वम्? इत्यतो **दैवी** इत्येतद्धेतु-गर्भमिति व्याख्यातम् ॥ **देवसम्बन्धित्वादिति** ॥ सम्वन्धित्वं परमप्रियत्वम् ॥ सति

श्लोकः १४

देवस्यातिशक्तित्वे तत्सम्बन्धिन्यास्तत् स्यात् । तदेव कुतः? इत्यतो देवशब्दार्थो निरुक्तः– **सृष्ट्यादीति** ॥ सृष्ट्यादिश्च सा क्रीडा च । प्रथमादिपदेन स्थित्यादेः सङ्ग्रहः। द्वितीयेन विजिगीषादेः । क्रीडादिमत्वेनातिशक्तिर्न सिद्ध्यतीति क्रीडा व्याख्याता ॥

देवशब्दस्य क्रीडादिमत्वमर्थः कुत इत्यत आह– **तथाहीति** ॥ देवशब्दे या प्रकृतिः तदर्थमित्यर्थः । प्रत्ययस्त्विगुपधालक्षणस्य कस्य बाधकः, पचाद्यच् । **दैवी** इत्यनेन निराकाङ्क्षत्वात् **मम** इति व्यर्थमित्यत आह– **कथमिति** ॥ तस्यैव व्याख्यार्थमेतदिति भावः। त्वदीयत्वेऽपि कथं दैवी? इत्यतः शेषं पूरयति– **अहं हीति** ॥ आशयवर्णनसमाप्तौ इतिशब्दः ॥

भावबोधः (र.टि.)– ॥ **कस्य बाधक इति** । कप्रत्यये 'पुगन्तलघूपधस्य च' इति प्राप्तगुणस्य 'क्ङिति च' इति निषेधे देव इति रूपं न सिद्ध्येत् । अच्प्रत्यये च कित्वाभावाद्गुणे सति रूपसिद्धिरिति भावः । (**किं**) **समाप्ताविति शब्द इति** ॥ हेत्वर्थकहिशब्देनैव यतोऽहं देव इति स्वदेवत्वस्य हेतुत्वसिद्धेरितिशब्दस्य न तदर्थत्वमिति भावः ॥

भावदीपः (रा.टि.)– ॥ **बाधकप्रत्यय इति** ॥ गुणमयदेहो हरिरिति प्रत्ययस्येति योज्यम् ॥ गीतायामदृष्टेराह–**अध्याहृत्येति** ॥ **इगुपधेति** ॥ 'इगुपधाज्ञाप्रीकिरः सम्प्रसारणम्' (पा.सू.३.१.१३५) इति सूत्रे इगुपधानिमित्तको यः कप्रत्ययः तस्य बाधकः 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः (पा.सू.३.१.१३४) इति विहितोच्प्रत्ययः । 'इगुपधा' इत्यस्य पचादिसूत्रात् परत्वे अपि 'देवसेवामेषादयः पचादिषु द्रष्टव्याः' इति तृतीयाद्यपादे प्रत्ययसूत्र एव वृत्तावुक्तेः अच्प्रत्ययत्वे च कित्वाभावेन 'क्ङिति च' (पा.सू.७.२.११८) इति निषेधाप्राप्तेः 'पुगन्तलघूपधस्य च' (पा.सू.७.३.८६) इति गुणे देव इति रूपमिति भावः ॥

वाक्यार्थप्रदीपः (पां.टि.)– ॥ **प्रत्ययस्त्विति** ॥ प्रत्ययस्तु पचाद्यच् इति सम्बन्धः ॥ **इगुपधलक्षणस्येति** ॥ 'इगुपधसञ्ज्ञाप्रीकिरः क' इति सूत्रप्राप्तस्येत्यर्थः । **कस्य बाधक इति** ॥ दिव् इत्यस्मात् इगुपधतया इगुपधेति कप्रत्यये तस्य कित्त्वेन 'पुगन्तलघूपदस्य च' इति प्राप्तलघूपधगुणस्य 'किति च' इति निषेधात् बुधः प्रियः किरः इत्यादिवत् दिव इत्येवरूपं स्यात् । नतु देव इति गुणः स्यात् । तस्मात् तदुपपत्तये 'देवसेवमेषादयः पचादौ पठितव्याः' इति वृत्तिकृतोक्तेः पचाद्यचि तस्य कित्त्वाभावेन लघुपधगुणोपपत्तेः देव इति रूपसिद्धिरिति भावः ॥

श्लोकः १४

**भावरत्नकोशः (सु.टि.)–** 'सा च माया दुरत्यया' इत्यनूद्यार्थमाह– **दुरत्ययेति** ॥ किमुक्तं भवतीत्यत आह– **न कस्यापीति** ॥ **बाधकप्रत्ययः** 'गुणमयदेहो हरिः' इति प्रत्ययस्य । **हेत्वर्थगर्भं** विशेषणम् । हेत्वर्थगर्भत्वं व्यनक्ति– **देवेति** ॥

ननु देवसम्बन्धित्वं सर्वसाधारणं कथमतिशक्तत्वे हेतुरित्यत आह– **सम्बन्धित्वं परमप्रियत्वमिति** ॥ **तत्सम्बन्धिन्याः** देवसम्बन्धिन्या मायाशब्दितदुर्गायाः, **तत्** अतिशक्तत्वम् । सृष्ट्यादेर्धात्वर्थत्वाभावेन द्वन्द्वायोगाद् विवक्षितविग्रहं दर्शयति– **सृष्ट्यादिश्च सा क्रीडेति** ॥ 'क्रीडा' इति कथमुच्यत इत्यत आह– **स्थित्यादेरिति** ॥ स्थितिसंहारनियमनादेः, **विजिगीषादेः** विजिगीषाव्यवहारद्युतिस्तुतिमोदादेः । प्रकृत्यर्थाभिधानेन प्रकृतसिद्धेः 'सृष्ट्यादिरूपा क्रीडा' इति किमुच्यत इत्यत आह– **क्रीडादिमत्त्वेनेति** ॥ ननु देवशब्दे या प्रकृतिर्दीव्यतिधातुस्तदर्थमिति न व्याख्यानं युक्तम् । देवशब्दस्यैव निष्पादयितुमशक्यत्वात् । यतो दीव्यतेः 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्यये 'दिवः' इत्येव स्यात् इत्यत आह– **प्रत्ययस्त्विति** ॥ **बाधक इति** ॥ 'कर्मोपपदानाम् इगुपधानां च बाधकबाधनार्थं पचाद्यनुक्रमणम्' इति हरदत्तेन देवसेवमेषादीनां पचादौ पाठस्य कप्रत्ययबाधनार्थत्वस्योक्तत्वादिति भावः ॥ **तस्यैवेति** ॥ 'दैवी' इत्यस्यैव । देवो नान्यः, किन्त्वहमेवेति देवशब्दस्य स्वात्मार्थत्वं स्फोरयितुमेव 'मम सम्बन्धिनी माया' इत्युक्तमिति न वैयर्थ्यमिति भावः । हेतुस्फोरणस्य हिशब्देनैव सिद्धेः, इतिशब्दानर्थक्यमित्यत आह– **आशयेति** ॥ 'इत्ययमाशयः' इति इतिशब्दान्वय इति भावः ॥

**भावदीपिका (श्री.टि.)–** सृष्ट्याद्यर्थं क्रीडेति प्रतीयते । तन्न युक्तम् । क्रीडाप्रयोजनकत्वात् सृष्टेः । 'क्रीडार्थमिति चापरे' इत्यादिश्रुतिविरुद्धत्वादत आह– **सृष्ट्यादिश्च सेति** ॥ ननु 'क्रीडादिमत्' इत्येव वक्तव्ये, 'सृष्ट्यादि' इति क्रीडा कस्माद्व्याख्याता इत्यत आह– **क्रीडादिमत्त्वेनेति** ॥ आलस्यपरिहारार्थकप्रसिद्धक्रीडादिमत्त्वेनेत्यर्थः । ननु क्रीडादेर्दिवुधात्वर्थमात्रत्वमेव, न कर्त्रर्थकप्रत्ययसहितदेवशब्दार्थत्वम् । अतः कथं 'देवशब्दार्थम्' इत्युक्तमित्यत आह– **देवशब्द इति** ॥ **प्रकृतिः** दिव्धातुरूपा । नन्वयं धातुश्चेत्, कः प्रत्ययोऽभिप्रेतः । यदुपर्ययं देवशब्दो निष्पन्न इत्यत आह– **प्रत्ययस्त्विति** ॥ अत्र दिव्धातोः इगुपधत्वात् 'इगुपधज्ञाप्रीकिरः कः' इत्यनेन यदि कप्रत्ययः, तर्हि 'पुगन्तलघूपधस्य च' इति प्राप्तगुणस्य 'क्ङिति च' इति सूत्रेण प्रतिषिद्धत्वात्, प्रकृते च कप्रत्ययस्य कित्त्वाद् गुणो न स्यात् । तथा च 'दिव' इत्येव स्यात् । 'देव' इति रूपं

श्लोकः १४

न सिद्ध्येत् । तदर्थम् इगुपधलक्षणस्य कस्य 'इगुपधज्ञा' इत्यादिसूत्रविहितस्य कप्रत्ययस्य बाधकः 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति सूत्रविहिताचूप्रत्यय एवानेयः । दिव्धातोरपि पचादिधातुगणस्थत्वात् । तथा च दिव्धातोः 'दीव्यति' सति कर्त्रर्थे पचाद्यच्प्रत्यये, तस्य कित्त्वाभावेन निषेधकाभावात्, लघूपधगुणे सति 'देव' इति रूपसिद्धिरित्यर्थः ।

**निराकाङ्क्षत्वादिति** ॥ स्वसम्बन्धस्य 'दैवी' इत्यनेनैव लब्धत्वेन, आकाङ्क्षायाः पूर्णत्वात् 'मम' इति व्यर्थमित्यर्थः । मदीयत्वे स्वदेवत्वस्य हेतुत्वसिद्धेः, 'यतोऽहं देवः' इति हेत्वर्थकहिशब्देनैव लब्धत्वात्, इतिशब्दो व्यर्थ इत्यत आह– **आशयवर्णनेति** ॥ तथा च ' इत्ययमाशयः' इत्यन्वयो द्रष्टव्यः ॥

**भावप्रकाशः (कृ.टि.)**– ननु बाधकप्रत्ययाभावशङ्कायां किमेतदसङ्गतमुच्यत इत्यत आह– **न कस्यापीति** ॥ ननु यथाकथञ्चित् देवसम्बन्धित्वं सर्वसाधारणं कथमतिशक्तित्वे हेतुरित्यत आह– **सम्बन्धित्वं परमप्रियत्वमिति** ॥ ननु दीव्यतेरिगुपधत्वात् इगुपधज्ञाप्रीकिर इति कर्तरि कप्रत्यये कित्वाद्गुणाभावे दिव इति रूपं स्यात् । देव इति तु कथमित्यत आह– **प्रत्ययस्त्विति** ॥ दीव्यतः पचादिपाठो बाधकबाधनार्थमिति शाब्दिकोक्तेरिति भावः । **इगुपधलक्षणस्येति** । इगुपधत्वं लक्षणं निमित्तं यस्य तस्येत्यर्थः । ननु हेतुत्वस्य हिशब्देनोक्तत्वादितिशब्दो व्यर्थ इत्यत आह– **आशयेति** ॥

## भाष्यम्

**अब्रवीच्च–**

**'श्रीर्भूर्दुर्गेति या भिन्ना महामाया तु वैष्णवी ।**
**तच्छक्त्यनन्तांशहीनाऽथापि तस्याश्रयात् प्रभोः ॥**
**अनन्तब्रह्मरुद्रादेर्नास्याः शक्तिकलाऽपि हि ।**
**तेषां दुरत्ययाऽप्येषा विना विष्णुप्रसादतः' इति च व्यासयोगे ॥**

भावप्रदीपिका (प.टी.)– अत्रैव प्रमाणमाह– **अब्रवीच्चेति** ।

भावप्रकाशिका (न.टी.)– अन्यत्रैतमेवार्थं भगवान् व्यक्तमवोचदित्याह– **अब्रवीच्चेति** ।

**प्रमेयदीपिका (ज.टी.)– अत्र प्रमाणमाह– अब्रवीच्चेति ॥**

**भावरत्नकोशः (सु.टि.)–** ॥ अत्र भगवदधीनतया अतिशक्तेः 'दुरत्यया माया' इत्यत्र । भाष्ये **वैष्णवी** विष्ण्वधीना, कुत एतदित्यत उक्तम्– **तच्छक्त्यनन्तांशहीनेति** ॥ नन्वेवं मायाया ब्रह्मादीनां च भगवदधीनत्वाविशेषात् सा कथमन्यैर्दुरत्यया स्यात् ? इत्यत उक्तम् – **अथापीति** ॥ यद्यपि सा भगवदधीना । तथाऽपि प्रभोः तस्य विष्णोराश्रयात् हि यतोऽनन्तस्य ब्रह्मरुद्रादिदेववर्गस्य अस्याः शक्तिकलाऽपि नास्ति । ततस्तेषामपि सा दुरत्यया । तर्हि सर्वथा दुरत्यया किम् ? न इत्युच्यते– **विनेति** । सम्पादितविष्णुप्रसादैस्तु साऽप्यत्येतुं शक्यैवेति भाव इति प्रमाणार्थः ॥

## भाष्यम्

**तर्हि न कथञ्चिदत्येतुं शक्यत इत्यत आह– मामेवेति ॥ अन्यत् सर्वं परित्यज्य मामेव ये प्रपद्यन्ते गुर्वादिवन्दनं च मय्येव समर्पयन्ति । स एव च तत्र स्थित्वा गुर्वादिर्भवतीत्यादि पश्यन्ति । आह च नारदीये**

**'मत्सम्पत्त्या तु गुर्वादीन् भजन्ते मध्यमा नराः ।**
**मदुपाधितया तांश्च सर्वभूतानि चोत्तमाः' इति ।**

**'आचार्यचैत्यवपुषा स्वगतिं व्यनक्ति' इति च ॥ १४ ॥**

भावप्रदीपिका (प.टी.)– यदि स्वयमपि महेश्वरी पुनर्हर्याश्रयाद् बध्नाति, तर्हि न कस्यापि संसारतरणमित्याशङ्क्य उत्तरार्धमवतारयति– **तर्हीति** । 'एव'कारविवरणपूर्वकं व्याचष्टे– **अन्यदिति** । गुर्वादिपरित्यागे प्रत्यवायः स्यादित्याशङ्कां सप्रमाणकं परिहरति– **गुर्वादीति** । मध्यमाधिकारिविषयम् । स एव चेत्युत्तमाधिकारिविषयम् । **मत्सम्पत्त्या** मद्भक्ततयेत्यर्थः । **मदुपाधितयेति** मत्प्रतिमात्वेन । आचार्यस्य चित्तस्थेन वपुषा स्वज्ञानं विस्तृतवानसि ॥ १४ ॥

भावप्रकाशिका (न.टी.)– ननु सर्वजगन्मोहकरी महामायैवात्येतुमशक्या । किं पुनः सैव भगवद्धलेरिता ? अतः का गतिर्जगतः ? इति भावेनाशङ्क्य, तां परिहर्तुमुत्तरार्धमवतार्य

श्लोकः १४

व्याचष्टे— **तर्हीति** । अवधारणार्थं दर्शयति— **सम्यग्घटयितुमन्यदिति** । प्रपद्यन्ते शरणं व्रजन्तीत्यर्थः । ननु गुर्वग्न्यादिपूजाभावे प्रत्यवायः स्यादित्यत आह— **गुर्वादीति** ॥ प्राधान्येनान्यत् सर्वं परित्यज्यापि भगवदीयत्वेन गुर्वादीन् सम्पूज्य, तत्पूजां च भगवत्येव समर्पयन्ति ये ते च मध्यमभक्ताः । उत्तमभक्तानाह स एवेति ।

उक्तद्वैविध्ये प्रमाणमाह— **आह चेति** । भगवत्सम्पत्तिर्भगवान्नः स्वामीति स्वामिसम्पत्तिर्गुर्वादीनाम् । अत एव तान् सेवन्ते भगवदर्थिनः । द्रव्यसम्पन्नानपि द्रव्यार्थिनः । प्रतिमास्विव भगवानुपाधीयते स्वेच्छयैव गुर्वादिषु । अतस्तानुत्तमास्तदुपाधितयैव सेवन्ते । गवादिसर्वभूतेष्वपि स्थित्वा स एव क्षीरादिप्रद इत्येव तानि च सेवन्त इत्यर्थः ।

आचार्यचित्तस्थेन वपुषेत्यर्थः । युक्तं च रमाजशङ्करादेर्जडाजडात्मकस्य विश्वस्य भगवदुपाधियतैव सेव्यत्वम् । यतः स्वान्तर्निहितभगवत्सन्निधानतारतम्यादेव गुणतारतम्यम्, अत एव तत्तदन्तर्गतस्य भगवतो वासुदेवस्यैव सर्वगुणसम्पूर्णत्वम् । अनेनैव 'वासुदेवः सर्वम्' इति वक्ष्यमाणसर्वत्वस्य व्याख्यातत्वान्न पुनस्तद्व्याख्यास्यति । न च जडाजडात्मत्वं सर्वत्वं भगवतः । 'मामेव ये प्रपद्यन्ते' इत्यवधारणविरोधादित्येषा दिक् ॥ १४ ॥

प्रमेयदीपिका (ज.टी.)— उत्तरस्य प्रकृतोपयोगितया सङ्गतिमाह— **तर्हीति** ॥ यदि न केवलमनुमानं किन्तु भगवतोपोद्बलिता माया मोहहेतुः तर्हीत्यर्थः । ततश्च ज्ञानिव्यावृत्त्यर्थं यदिदमित्युक्तं तदसदिति भावः ॥

ननु मायात्ययोपायस्यासम्भावनाशङ्कायां तदुपाय एव वक्तव्यो न तूपायान्तरप्रतिषेधः । अतोऽनुपपन्नमवधारणमित्यत आह— **अन्यदिति** ॥ स्वप्रतिपत्तावित्थम्भावसूचक एवैवशब्दो नोपायान्तरप्रतिषेधपर इत्यर्थः । एवं तर्हि गुर्वादिवन्दनाभावः प्राप्त इत्यतोऽभिप्रायमाह— **गुर्वादीति** ॥ 'भागवता एते' इत्यादि बुद्ध्या वन्दनादि कुर्वन्तीति यावत् ॥

एतन्मध्यमभक्तानां चरित्रमुक्तम् । उत्तमानां तु आह— **स एवेति** ॥ भगवानेव । तत्र गुर्वादिषु । द्वयं प्रमाणेनोपपादयति— **आह चेति** ॥ अहं च सा सम्पत्तिश्च । मदुपाधितया मत्प्रतिमात्वेन । चैत्यं चित्तस्थम् । स्वगतिं स्वज्ञानम् । व्यनक्ति व्यञ्जयसि ॥ १४ ॥

श्लोकः १४

**भावबोधः (र.टि.)**– भजतां मध्यमत्वोत्तमत्वव्युत्पादनाय 'मत्सम्पत्या मदुपाधितया' इत्यनयोरर्थमाह–**'अहं चेति** ।। 'वित्तं बन्धुर्वयः कर्म विद्या चैव तु पञ्चमी' इत्युक्तवित्तादेरिव विष्णुरूपसम्पत्तेर्निमित्तत्वोक्त्या 'सदेहमानिहरये प्रणमेत्' इत्युक्तरीत्या गुर्वादयोऽपि पूज्याः । उत्तमानां भीमादीनां तु द्रोणादिपूजायां गुर्वादीनां शालग्रामादिवत् प्रतिमात्वोक्त्या 'प्रणमेत्केवलाय वा' इत्युक्तरीत्या गुर्वादिनिष्ठविष्णुरेव पूज्यः । न तु तेऽपि । स्वाधामानां पूज्यत्वासम्भवात् । अत एव 'तांश्च सर्वभूतानि च' इति गुर्वादिसमतया सर्वभूतानां ग्रहणमिति व्याख्यातं भवति । व्यनक्तीत्येतदन्तर्भावितण्यर्थमित्याशयवानाह– **व्यञ्जयसीति** ।। १४ ।।

**भावदीपः (रा.टि.)**– ।। **इदमित्युक्तमसदिति** ।। ज्ञानिनोऽपि दुरत्ययत्वेन मोहितत्वादिति भावः । **व्यनक्ति** इतिपदं ण्यर्थतया व्याचष्टे – **व्यञ्जयसीति** ।। १४ ।।

**भावरत्नकोशः (सु.टि.)**– ।। **असदिति** ।। ज्ञानिनामपि तदत्ययायोगादिति भावः । **असम्भावनेति** ।। भगवच्छक्त्युपोद्बलिताया मायाया अतिशक्ततया तत्करणं दुःशकमिति शङ्कायामित्यर्थः । **उपायान्तरप्रतिषेध इति** । 'मामेव' इत्यवधारणेन 'अन्यं न प्रपद्यते' इति प्रतिभानादिति भावः । **प्राप्त इति** ।। तथा च 'गुरुरनुगन्तव्योऽभिवाद्यो वृद्धवयाः प्रत्युत्थेयः' इति शास्त्राननुष्ठानात् पुरुषः प्रत्यवेयादिति भावः । कथं गुर्वादिकर्मकवन्दनस्य गुर्वादावेवार्पणीयस्य भगवत्यर्पणमित्यतो भाष्यतात्पर्यमाह– **भागवता एत इति** ।। 'अन्यत्सर्वं परित्यज्य' इत्यादि 'गुर्वादिवन्दनं च' इत्यनेन तात्पर्यस्योक्तत्वात् 'स एव च' इत्यादिकं किमर्थमित्याशङ्का, तत्सार्थक्यं दर्शयितुमाह– **एतदिति** ।। गुर्वादिवन्दनस्य भगवत्यर्पणम् । उत्तमानां तु भक्तानामाह– **चरित्रं भगवानेवेति** ।। गीताभाष्ययोरस्मच्छब्देन भगवत एव प्रस्तुतत्वादिति भावः ।

'गुर्वादिवन्दनम्' इत्यत्र प्रस्तुतत्वादाह– **तत्र गुर्वादिष्विति** ।। द्वयं मध्यमभक्तचरित्रम्, उत्तमभक्तचरित्रमिति द्वयम् । 'मत्सम्पत्त्या मदुपाधितया च भजन्ते' इत्युक्तेराह– **उपपादयतीति** । 'मत्सम्पत्त्या' इत्यत्र मम सम्पत्त्या मम सम्पदा मदैश्वर्येण गुर्वादीन् भजन्तो मध्यमा इत्यर्थाभ्युपगमे स्वसमवेतैश्वर्यस्य मध्यमभागवतनिष्ठगुरुभजनहेतुत्वं न युक्तमित्यतो विवक्षितविग्रहमाह– **अहं च सा सम्पत्तिश्चेति** ।। 'स्यात्तु सम्पदि सम्पत्तिः' इत्यभिधानात् मद्रूपया सम्पदा सम्पन्ना इति निमित्तेन ये गुर्वादिगतं मां भगवन्तं गुर्वादींश्च भजन्ते ते मध्यमाः । 'स देहमानिहरये प्रणमेत्' इति

श्लोकः १४
कर्मनिर्णयोक्तेरिति भावः । उपाधीयेऽहमेतेषु गुर्वादिष्वित्युपाधिः । 'उपसर्गे घोः किः' इत्यधिकरणे धातोः किप्रत्यये, आतो लोपश्च । ममोपाधिर्मदुपाधिः, तया । **तांश्च गुर्वादीन् सर्वभूतानि च** । 'गुर्वादिषु भूतेषु च स्थित्वा भगवान् गुर्वादिर्ज्ञानादिप्रदो भवतीति ये भजन्ते पश्यन्ति ते तूत्तमाः' इति योजनेति भावेन 'मदुपाधितया' इत्येतद्व्याचष्टे– **मदिति** ॥

'नैवोपयान्त्यपचितिं कवयः स्तवेन ब्रह्मादयोऽपि नतमूर्धसदास्मरन्तः ।
योऽन्तर्बहिस्तनुभृतामशुभं विधुन्वन् आचार्यचैत्त्यवपुषा स्वगतिं व्यनङ्क्ति ॥'

इति भागवतश्लोके अनिमित्तबन्धुत्वेन सर्वस्मादुपकारकस्य भगवतः प्रत्युपकारं कर्तुं कवयो ब्रह्मादयोऽपि न समर्था इत्यर्थपरे कवयो ब्रह्मादयोऽपि नतमूर्धसदास्मरन्तः नतमूर्धानः सन्त आ सम्यक् स्मरन्तः, विशेषणसमासः । नतमूर्धानश्च ते सदास्मरन्तश्चेति वा, तवापचितिं = प्रत्युपकारमानृण्यं नैवोपयान्ति । तनुभृतामन्तर्बहिः स्थित्वा अशुभं विधुन्वन् निरस्यन् यः त्वम् आचार्यचैत्त्यवपुषा आचार्यस्य स्वस्वयोग्यगुरोरित्यनन्तरं चैत्त्यपदस्य स्वगतिपदस्य च प्रकृतोपयोगायार्थमाह– **चैत्त्यं चित्तस्थमिति** ॥ 'चित्ते भवः' इत्यर्थे 'तद्धिताः' इति ष्यञ्प्रत्ययः । तथाविधेन वपुषा व्यासदत्तादिरूपेण स्वगतिं स्वज्ञानं स्वकर्मकं ज्ञानं स्वेषां योग्यं ज्ञानं बिम्बसाक्षात्कारस्वरूपं च व्यनङ्क्ति । तदिदमप्रतीतेर्व्याचष्टे– **व्यञ्जयसीति** ॥ प्रकाशयसीत्यर्थः ।

ननु कथं 'व्यञ्जयसि' इति व्याख्यातम् । यावता व्यञ्जिः प्रकाशानुकूलव्यापारार्थः । 'व्यनक्ति' इत्यस्य 'प्रकाशयति' इत्यर्थप्रतीतेः । 'समिद्धो अञ्जन् कृदरं मतीनाम्' इत्यत्र वेदभाष्ये 'अञ्जन् प्रकाशयन्' इति भट्टभास्करेण व्याख्यानाच्च, इति चेन्न । 'व्यञ्जयसि' इत्यत्र णिचः स्वार्थिकत्वाभ्युपगमात् । न च तस्य चुरादावपाठान्न तस्मात् स्वार्थे णिजुत्पादयितुं शक्य इति वाच्यम् । 'बहुलमेतन्निदर्शनम्' इत्यत्र नवगणीपठितेभ्योऽपि क्वचित् स्वार्थे णिच् 'रामो राज्यमचीकरत्' इति यथा इति सिद्धान्तकौमुदीकारवचनात् ॥

'त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय' इत्यत्र द्वितीयाध्याये 'कारयेति स्वार्थे णिच्' इति टीकोक्तेश्च । णिजन्तेन व्याख्यानं तु 'व्यनङ्क्ति' इत्यस्यान्तर्भावितणिजर्थत्वज्ञापनायेति केचित् । वस्तुतस्तु आचार्यचित्तगतेन स्वरूपेण त्वमेव स्वगतिं स्वयोग्यज्ञानं व्यनङ्क्ति व्यञ्जनीकरोषीत्युक्ते, आचार्यस्यैव शिष्यनिष्ठज्ञानव्यञ्जनं प्रति प्रयोजकत्वेन भगवतः प्रयोजकत्वं न लभ्यते । नस्यैव

तद्यथा स्यादिति भावेन 'व्यञ्जयसि' इति व्याख्यातम्' व्यञ्जतीं स्वगतिं प्रेरयन्तमाचार्यं तच्चित्तगतेन स्ववपुषा प्रेरयसि इत्यर्थलाभे भगवत्प्रयोज्यत्वमाचार्यस्य लभ्यत इति भावेनैवमुक्तमिति ॥

एतेन 'प्रतीतार्थेऽनुपपत्तिर्विचारणीया' इति वदन्तः प्रत्यूढाः । विपूर्वादञ्जेः सिपि रुधादित्वात् श्नमि विकरणे, 'श्नान्नलोपः' इति नलोपे, 'चोः कुः' इति कुत्वे, 'खरि च' इति चर्त्वे, 'इण्कोः' इति षत्वे, 'व्यनक्षि' इति रूपस्यैव माधवाद्युक्तरीत्या युक्तत्वेऽपि, छन्दस्तुल्यत्वात् 'श्नान्नलोपः' नाश्रित इति हृदयम् ॥

ननु यदुक्तं भगवान् गुणमयविग्रह इत्ययं प्रत्ययो विपरीतोपलम्भरूपो मोह इति, तदयुक्तम् । बाधकप्रत्ययाभावात् । सम्यक्प्रत्ययो बाधक इति चेन्न । बहुतरज्ञानविरोधे कतिपयज्ञानानामेव अयथार्थत्वोपपत्तेः । न चोत्तरकाले बाधकप्रत्ययो भविष्यतीति वाच्यम् । अनादौ काले अजातस्योत्तरत्राप्यसम्भवात्, इत्याशङ्क्योच्यते– **दैवीति** ॥ देवस्य सम्बन्धिनी । सम्बन्धित्वं च परमप्रियत्वम्, 'तत एव अतिशक्ता' इति शेषः । ननु भगवत एवातिशक्तत्वं कुतः । यत्सम्बन्धि-तया मायाया अतिशक्तिरिष्यत इति चेन्न । देवशब्दप्रकृतिभूतधात्वर्थतया लाभात् । 'दिवु क्रीडादौ' इति हि देवशब्दार्थो निरुक्तः । सृष्टिस्थितिसंहारनियमनादिरूपक्रीडाविजिगीषादिमान् देव इति तदर्थावगमात् । एवंविधं देवं शृङ्गग्राहिकया दर्शयितुम् 'मम' इत्युक्तम् । 'देवस्य सम्बन्धिनी' इत्यत्र बुद्ध्या विविक्तं 'देवस्य' इति पदं 'मम' इति व्याख्यातं भवति ।

गुणमयी गुणाभिमानिनी माया दुर्गा एषा मोहिका । माया हि तमोगुणेनैवंविधं मोहं जनयति । अनुमानं तु निमित्तमात्रम् । किं ततः । सा दुरत्यया तत्कृतं मोहं कोऽपि नात्येतुं शक्नोति । मायाकृतमोहस्य सुदृढत्वान्न कस्याप्यनुत्तीर्णमायस्य बाधकप्रत्ययो भवतीति । यदि न केवलमनुमानम्, किन्तु भगवतैवोपोद्वलिता मायाऽपि मोहहेतुः, तर्हि सा न कथञ्चिदत्येतुं शक्या इति कस्यापि ज्ञानं न स्यात्, ततश्च ज्ञानिव्यावृत्त्यर्थम् 'इदम्' इति यद् विशेषणं तदसत् इत्यत इदमुक्तम् मामेवेति । 'भागवताः' इति बुद्ध्या गुर्वादीनां वन्दनादिकं कुर्वन्तोऽपि प्राधान्येन मामेव ये प्रपद्यन्ते शरणं प्राप्नुवन्ति ते एतां मोहिकां मायां तरन्ति यावन्तं कालं साधको भगवन्तं न प्रपद्यते तावन्तमेव कालं मोहिका मायाऽस्तीति न सगुणत्वमोहस्य बाधकप्रत्ययोदयः । कृतायां तु प्रपत्तौ मोहकमायाऽभावाद् 'ज्ञानानन्दाद्यात्मकविग्रह एव भगवान्' इति बाधकप्रत्ययो ज्ञानिन उदेष्यतीति हेतोरसिद्ध्या नोक्तचोद्यमिति भावः ॥ १४ ॥

श्लोकः १४

**भावदीपिका (श्री.टि.)**– ॥ **अनुमानं** देहत्वादि ॥ **मोहहेतुः** गुणमयविग्रहत्वादिमोहहेतुः । **तदसदिति** ॥ एतादृशप्रबलमायातितरणस्य कस्याप्यसम्भवेन ज्ञानिनामेवाभावादिति भावः । **तदुपाय एवेति** ॥ तथा च 'मां प्रपद्यन्ते' इत्येव वाच्यमिति भावः । **नन्विति** ॥ 'एवकारेण' इति शेषः । **इत्थम्भावेति** ॥ स्वप्रतिपत्तिः कथं कर्तव्येत्याशङ्कायां 'सर्वं परित्यज्य' इति सर्वपरित्याग-रूपेत्थम्भावसूचक इत्यर्थः । **चरित्रं** कर्म । कर्तव्यमिति यावत् । भजतां मध्यमत्वोत्तमत्वव्युत्पादनाय 'मत्सम्पत्त्या', 'मदुपाधितया' इत्यनयोरर्थभेदमाह– **अहं च सेत्यादिना** ॥ तथा च 'मत्सम्पत्त्या' इत्यस्य मदाख्यसम्पत्तियुक्ततयेत्यर्थः । अनेन मध्यमभक्तानां गुर्वादिपूजाकरणे 'वित्तं बन्धुर्वयः कर्म विद्या च' इत्युक्तविद्यादेरिव, 'मत्सम्पत्त्या' इति विष्णुरूपसम्पत्तेर्निमित्तत्वोक्त्या 'सदेहमानिहरये प्रणमेम्' इत्युक्तरीत्या गुर्वादयोऽपि भजनीयाः । उत्तमानां भीमसेनादीनां तु द्रोणादिगुर्वादिपूजायां 'मदुपाधितया' इति तेषां सालग्रामवत् प्रतिमात्वोक्त्या च, 'प्रणमेत् केवलाय वा' इत्युक्तरीत्या गुर्वादिनिष्ठो विष्णुरेव पूज्यः, नतु तेऽपि । स्वाधमानां पूज्यत्वासंम्भावात् । अत एव 'तांश्च सर्वभूतानि च' इति गुर्वादिसमतया सर्वभूतानां ग्रहणमिति द्रष्टव्यम् । 'व्यनक्ति' इत्येतदन्तर्भावित-ण्यर्थकमित्याशयेनाह– **व्यञ्जयसीति** ॥ तथा च 'आचार्यचित्तस्थरूपेण स्वगतिं स्वज्ञानं त्वमेव व्यञ्जयसि' इति कृष्णं प्रत्युद्धवचनम् । 'स एव च' इत्युक्तार्थे इदं मानमिति द्रष्टव्यम् ॥ १४ ॥

**भावप्रकाशः (कृ.टि.)**– 'मत्सम्पत्त्या' इत्यादिवक्ष्यमाणप्रमाणानुसारेणाह– **भागवता इति** ॥ भजतां मध्यमत्वोत्तमत्वोपपादनाय मत्सम्पत्या मदुपाधितयेत्यनयोरर्थभेदमाह– **अहं च सेत्यादिना** ॥ अनेन मध्यमभक्ता गुर्वादिगतं विष्णुं तांश्च भजन्ति । 'सदेहमानिहरये प्रणमे-दि'त्युक्तेः । उत्तमास्तु भीमादयो द्रोणादिगतं विष्णुमेव भजन्ते न तु द्रोणादीन् । स्वाधमत्वेन पूज्यत्वायोगात् । ते तु सालग्रामादिवत्प्रतिमाः । यथोक्तं 'प्रणमेत् केवलाय वा' इतीत्युक्तं भवति । अत एव 'तथा सर्वभूतानि च' इति गुर्वादिसमकक्षतया भूतानां ग्रहणमिति बोध्यम् । 'व्यनक्ति' इत्येतदन्तर्णीतण्यर्थमित्याशयेनाह– व्यञ्जयसीति ॥ १४ ॥

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।**
**माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥**

श्लोकः १४

## भाष्यम्

**तर्हि सर्वेऽपि किमिति नात्यायन्? इत्यत आह– न मामिति ॥ दुष्कृतित्वात् मूढाः । अत एव नराधमाः । अपहृतज्ञानत्वाच्च मूढाः । अत एव आसुरं भावमाश्रिताः ॥**

भावप्रदीपिका (प.टी.)– नन्वेतादृश्यपि माया यदि त्वत्प्रपन्नान्न वध्नाति । तर्ह्युपायसत्त्वे किमिति सर्वे तां नात्यायन् ? इत्याशङ्क्य, उत्तरश्लोकमवतारयति– **तर्हीति** । ननु मोक्षयोग्या अप्यभजन्तः सन्ति । तेषां कथमसुरभावाश्रयणमित्यत आह– **स चेति** । नात्रासुरभावो नाम भगवद्द्वेपिस्वभावत्वमित्यर्थः ॥

भावप्रकाशिका (न.टी.)– ननु यदि भगवान् स्वाश्रितानुत्तारयति मोहार्णवात्, तर्हि तं कृपालुं प्लवं सर्वेऽपि समाश्रित्य किमिति मोहं नात्यायन् ? अतः प्रशंसामात्रमिदं भगवत इति भावेनाशङ्क्य, तां परिहर्तुमुत्तरश्लोकं व्याचष्टे– **तर्हीति** । विशेषणपञ्चके हेतुहेतुमद्भावं दर्शयति– **दुष्कृतित्वादित्यादिना** । दुष्कृतित्वापहृतज्ञानत्वाभ्यां मूढाः । अतो नराधमाः । ततः आसुरभावमाश्रिताः । ततो भगवन्तं न प्रपद्यन्त इत्यर्थः ॥

प्रमेयदीपिका (ज.टी.)– उत्तरवाक्यं प्रकृतानुपयुक्तमित्यत आह– **तर्हीति** ॥ यदि त्वत्प्रपत्तिः मायातरणोपायस्तर्हीत्यर्थः । 'त्वां प्रपद्ये' इति शेपः । तथाच 'मामेव'(७. १४) इत्युक्तमसदिति भावः । दुष्कृतित्वादीनां प्रयोजनान्तराभावात् हेतुत्वेनान्वये स्थिते किं ते पञ्चापि साक्षाद् भगवदप्रपत्तिहेतवः? किं वा हेतुहेतुमद्भावेन? इत्यपेक्षायामाह– **दुष्कृतित्वादिति** ॥ मूढाः मिथ्याज्ञानिनः । विपर्ययस्याधर्मकार्यत्वप्रसिद्धेः । अत एव मूढत्वादेव । देवानाम् उत्तममध्यममनुष्याणां च केवलमिथ्याज्ञानित्वाभावात् । अधिष्ठानयाथात्म्याज्ञानस्य विपर्ययहेतुत्वप्रसिद्धेः अपहृतज्ञानत्वाच्च मूढाः । अत एव नराधमत्वादेव । जीवत्रैविध्यविवक्षायां नराधमानाम् असुरेष्वन्तर्भावस्य प्रसिद्धत्वात् । आसुरभावाश्रयणात् न मां प्रपद्यन्ते इत्यर्थः ॥

भाववोधः (र.टि.)– ननु न मिथ्याज्ञानित्वेन तमोयोग्यनिष्ठनराधमत्वसाधनं युक्तम् । ऋजुव्यतिरिक्तमुक्तियोग्येषु नित्यसंसारिषु च व्यभिचारादित्यतो न मिथ्याज्ञानित्वमात्रं हेतुः, किन्तु

सर्वात्मना प्रकारविषयकायथार्थज्ञानस्वरूपत्वम् । अतो न व्यभिचार इत्यत आह– **देवानामिति** ॥ **नराधमत्वादेवेति** । भाष्यसन्निहितमूढत्वपरामर्शे तत्साध्यत्वेनोक्तनराधमत्वसमुच्चयार्थमाश्रिताश्चेति चशब्दाभावो दोषः । आसुरभावाश्रयणेनैव भगवदप्रतिपत्त्युपपत्तौ नराधमत्वस्यापि स्वातन्त्र्येण तद्धेतुत्वकल्पने गौरवं चेति भावः ।

नन्वनेन तमोयोग्यरूपभगवदप्रतिपन्ना आसुरम्भावमाश्रिताः । नराधमत्वादित्यभिप्रेतमनुमानम् । तदनुपपन्नम् । पक्षैकदेशेषु नराधमेषु आसुरभावाश्रयणरूपसाध्यस्य कल्याद्यसुररूपतदेकदेशे नराधमत्वहेतरोरभावेनांशे बाधाद्भागासिद्धेश्चेत्यत आह– **जीवत्रैविध्यविवक्षायामिति** ॥ 'त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः । नैवमासुर' इत्यादिवाक्येषु दानवासुरशब्देन सकलतमोयाग्यग्रहण-वद्गीतायां नराधमशब्देन मुक्तियोग्यनित्यसंसारिव्यतिरिक्तजीवग्रहणसम्भवेन सर्वत्र साध्यसाधन-सत्त्वेन न बाधभागासिद्धी इति भावः ।

**भावदीपः (रा.टि.)–** 'नराधमाः' इत्युक्तेः कृत्यमाह– **देवानामिति** ॥ अपहृतज्ञानत्वस्य मूढतायां हेतुत्वं व्यनक्ति– **अधिष्ठानेति** ॥

**भावरत्नकोशः (सु.टि.)–** ॥ **इत्युक्तमसदिति** । बहूनामत्ययादर्शनिन प्रपत्तेरपि मायातरणो-पायत्वमसदित्यर्थः । **पञ्चापि** दुष्कृतिनः, मूढाः, नराधमाः, मायापहृतज्ञानाः, आपन्नासुरभावाश्चेति पञ्च विशेषणानीत्यर्थः । दुष्कृतित्वेऽप्यमिथ्याज्ञानित्वं किं न स्यादित्यत आह– **विपर्ययस्येति** ॥ मिथ्याज्ञानस्य । 'विपरीतनिश्चयो विपर्ययः' इति पद्धतिः । **प्रसिद्धेति** ॥ 'येषां त्वन्तगतं पापं ते द्वन्द्वमोहनिर्मुक्ताः इत्यादौ' इति शेषः । 'द्वन्द्वमोहो मिथ्याज्ञानम्' इत्युत्तरप्रस्थाने भाष्यकारोक्ति-रिति भावः । 'अत एव नराधमाः' इत्यत्र 'अत एव' इत्यस्यार्थमाह– **अत एवेति** ॥ ननु मिथ्याज्ञानित्वान्नराधमाः' इति न साधयितुं युक्तम् । देवेषु मुक्तियोग्यमनुष्येषु नित्यसंसारिषु च व्यभिचारादित्यत आह– **देवानामिति** ॥ केवलमिथ्याज्ञानित्वस्य हेतुत्वेन विवक्षितत्वात्, तस्य च देवादिष्वभावान्न व्यभिचारशङ्का । न चैवमपि कल्यादौ व्यभिचारः, तस्य केवलमिथ्याज्ञानित्वेऽपि नराधमत्वाभावादिति वाच्यम् । नराधमशब्देन भगवद्द्वेषित्वरूपचेतनाधमत्वस्य प्रकृते विवक्षित-त्वादिति भावः ।

अपहृतज्ञानत्वमूढत्वयोर्हेतुहेतुमद्भावं व्यञ्जितुमाह– **अधिष्ठानेति** ॥ अपहृतज्ञानत्वं प्रकृतेऽ-धिष्ठानयाथात्म्यज्ञानशून्यत्वम्, अधिष्ठानतत्त्वापरिज्ञानं च, शुक्तिकाशकले रजतत्वप्रकारकभ्रमं प्रति

कारणमिति विश्वजनीनम् इति युक्तस्तयोर्हेतुहेतुमद्भाव इति भावः । 'अत एवाऽसुरं भावम्' इत्यत्र 'अत एव' इत्यनेनाव्यवधानेन प्रकृतस्य मूढत्वस्य परामर्शो, पूर्वं तत्र साध्यस्योक्तत्वेन तत्समुच्चयार्थं चशब्दानुबन्धप्रसङ्गः, इत्यतो विवक्षितमर्थमाह– **नराधमत्वादेवेति** ॥

ननु नराधमत्वहेतुना आसुरभावसाधनमयुक्तम् । नराधमत्वस्य मनुष्यत्वव्याप्यजातिरूपत्वे कलिविप्रचित्त्यादावभावाद्, विरुद्धत्वाच्च । उत्तममध्यमान्यचेतनत्वरूपत्वे, 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान्' इति वक्ष्यमाणरीत्या द्वेषिचेतनरूपत्वे वा, आसुरत्वस्य जातिविशेषरूपत्वे पिशाचादौ व्यभिचार इत्यत आह– **जीवत्रैविध्येति** ॥ विवक्षितेन हेतुना प्रवृत्तिनिवृत्त्याद्यपरिज्ञानादिलक्षणासुरभावस्य साध्यत्वाङ्गीकारान्नोक्तदोषः । 'त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः' इत्यादिप्रमाणसिद्धजीवत्रैविध्यविवक्षायाम् उक्तलक्षणासुरभावस्य दैत्यरक्षःपिशाचमर्त्याधमरूपचेतनाधमेष्वभ्युपगमादिति भावः । नराधमत्वेनासुरभावसाधनेन फलितं दर्शयति– **आसुरेति** ॥

**भावदीपिका (श्री.टि.)**– ॥ **तथा चेति** ॥ त्वत्प्रपत्तेर्मायातरणोपायत्वे सर्वेऽपि त्वां प्रपद्य मायां तरेयुरेव । नहि तीर्णाः । तेन ज्ञायते त्वत्प्रतिपत्तेर्मायातरणोपायत्वं यत् 'मामेव' इत्येनेनोक्तं तद् असदितीति भावः ॥ दुष्कृतित्वमूढत्वयोर्हेतुहेतुमद्भावमुपपादयति– **विपर्ययस्येति** ॥ **प्रसिद्धेरिति** ॥ 'दुष्कर्मणा भवेन्मोहः' इति वचनादिति भावः । ननु मिथ्याज्ञानित्वेन हेतुना तमोयोग्यनिष्ठनराधमत्वसाधनमयुक्तम् । ऋजुव्यतिरिक्तेषु मुक्तियोग्येषु देवेषु, तथा मनुष्योत्तमेषु नित्यसंसारिभूतमध्यममनुष्येषु च व्यभिचारात्, इत्यत आह– **देवानामिति** ॥ ऋजुव्यतिरिक्तानामित्यर्थः । **केवलमिथ्याज्ञानित्वेति** ॥ प्रकारांश इवाधिष्ठानांशेऽप्ययथार्थज्ञानस्वरूपत्वम् केवलमिथ्याज्ञानित्वम्, तदभावादित्यर्थः । तथाच न मिथ्याज्ञानित्वमात्रं हेतुत्वेन विवक्षितम्, येन व्यभिचारः स्यात् । किं नाम, सर्वात्मना मिथ्याज्ञानित्वमेव । तस्य च देवादिष्वभावान्न व्यभिचार इति भावः ।

मूढत्वे दुष्कृतित्वातिरिक्तमपहृतज्ञानत्वं च हेतुरित्याशयेन 'अपहृतज्ञानत्वाच्च मूढाः' इत्युक्तं भाष्ये । तत्र तयोर्हेतुहेतुमद्भावमुपपादयति– **अधिष्ठानेति** ॥ **प्रसिद्धेरिति** ॥ लोके शुक्तिरजतादिभ्रमे दर्शनादिति भावः ।

ननु 'तमोयोग्या असुरभावमाश्रिता नराधमत्वात्' इत्यत्र नराधमानामपि तमोयोग्यत्वेन पक्षकोटिनिक्षिप्ततया तत्रासुरभावाश्रयणरूपसाध्याभावाद् बाध इत्यत आह– जीवत्रैविध्येति ॥

श्लोकः १४

'त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः'

'नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा,
एवं सुराः, नैवमसुराः, एवमनेवं च मनुष्याः'

इत्यादिवाक्येषु देवशब्देन मोक्षयोग्यानां, मनुष्यशब्देन नित्यसंसारिणां, दानवासुरशब्देन तमोयाग्यानां गृहीतत्वेन, एतद्विवक्षया नराधमानामपि तमोयोग्यत्वेनासुरेष्वन्तर्भावस्य प्रसिद्धत्वेन आसुरभावाश्रयणरूपसाध्यस्यापि सत्त्वान्न बाध इत्याशयः ।

ननु 'तर्हि किमिति सर्वे नात्यायन्' इति प्रश्नस्य किमुत्तरमनेन जातमिति चेत्, तत्राह– **आसुरभावेति** ॥ तथा च 'तमोयोग्याः न मां प्रपद्यन्ते आसुरस्वभाववत्त्वात्' तदपि कुतः । नराधमत्वात् । तदपि कुतः । मूढत्वात् । तदपि कुतः। दुष्कृतित्वात्, अपहृतज्ञानत्वाच्च, इति हेतुहेतुमद्भावो द्रष्टव्यः ।

**भावप्रकाशः (कृ.टि.)**– ननु कथं मिथ्याज्ञानित्वेन नराधमत्वसाधनम् । मुक्तियोग्येषु नित्यसंसारिषु च व्यभिचारादित्यत आह– **देवानामिति** ॥ तथा च केवलमिथ्याज्ञानित्वरूपविवक्षितहेतोरभावान्न व्यभिचार इति भावः । यथा च न कल्यादौ केवलमिथ्याज्ञानित्वस्य व्यभिचारस्तथाऽग्रे वक्ष्यामः ।

ननु भगवन्तमप्रपद्यमानाः सर्वे पक्षाः ते च मुक्तियोग्यास्तदयोग्याश्च । तथा च पक्षे व्यभिचारशङ्कादिकमयुक्तमिति चेत् । उच्यते । एतद्वाक्योक्तानां दुष्कृतित्वादीनां मध्ये नराधमत्वं केवलमिथ्याज्ञानित्वं च तमोयोग्यानामसाधारणम् । मिथ्याज्ञानित्वमात्रं दुष्कृतित्वादिकं च योग्यायोग्यसाधारणम् । यथा 'प्रयाणकाले मनसा' इत्यग्रिमाध्यायश्लोके 'भ्रुवोर्मध्ये प्राणमावेश्य' इत्येतद्वायुजयादिप्रधानानामसाधारणम् । अन्यत् साधकमात्रनिष्ठं तद्वत् । यथा च साधारणस्य हेतुत्वे तद्वतामेव पक्षत्वात् तदन्यत्र व्यभिचारशङ्कादिकं युक्तमेवेति । 'अपहृतज्ञानत्वाच्च मूढा' इति हेतुमद्भावमुपपादयन्नाह– **अधिष्ठानेति** ॥ ननु सन्निहितमूढत्वपरामर्शो न युक्तः पूर्वं साध्यस्योक्तत्वेन तत्समुच्चयार्थमाश्रिताश्चेति चशब्दप्रसङ्गादित्यत आह– **नराधमत्वादेवेति** ॥

ननु नराधमत्वेनासुरभावसाधनमयुक्तं साध्याभावव्याप्तत्वेन विरुद्धत्वप्रसङ्गादित्यत आह– **जीवत्रैविध्येति** ॥ 'त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः' इत्यादिप्रमाणानुसारेण जीवत्रैविध्य-

विवक्षायामित्यर्थः । तथा च नराधमत्वस्यासुरत्वव्याप्यत्वादुक्तं युक्तमिति भावः । इदं च नराधमत्वं मनुष्यत्वव्याप्यमित्यभिप्रेत्योक्तम् । वस्तुतस्तु नराधमत्वं नाम अधमजीवत्वं प्रकृतेऽभिप्रेतम् । अन्यथा केवलमिथ्याज्ञानित्वेन मनुष्यत्वव्याप्यनराधमत्वसाधने कल्यादौ व्यभिचारादिति बोध्यम् । एतेषामिति । प्रवृत्तिं चेत्याद्युक्तधर्माणां प्रत्येकमासुरभावत्वात् क्षपणकादौ च हिंसाद्यभावेऽप्य-सत्यमप्रतिष्ठन्त इत्याद्युक्तधर्मसत्त्वान्नासिद्धिरित्यर्थः ।

## भाष्यम्

**स च वक्ष्यते– 'प्रवृत्तिं च निवृत्तिं च' इत्यादिना । अपहारोऽभिभवः । उक्तं चैतव्द्यासयोगे 'ज्ञानं स्वभावो जीवानां मायया ह्यभिभूयते' इति । असुषु रताः असुराः । तच्चोक्तं नारदीये 'ज्ञानप्रधाना देवास्तु असुरास्तु रता असौ' इति ॥ १५ ॥**

भावप्रदीपिका (प.टी.)– ननु मोक्षयोग्यानां भगवज्ज्ञानं स्वरूपमेव । तस्य कथमप-हारः ? इत्यत आह– **अपहार इति** । ननु यदि प्रवृत्तिनिवृत्त्याद्यज्ञानमत्र विवक्षितम्, तर्हि नासुरपदं प्रयोक्तव्यम् । तस्य तदवाचकत्वादित्यत आह– **असुष्विति** ॥ एवमुपायाननुष्ठाना-देव वन्धः, न त्वमोचकत्वान्ममेति भावः ॥ १५ ॥

भावप्रकाशिका (न.टी.)– नन्वासुरभाववर्जिता अहिंसादिव्रतस्था अपि भगवन्तं न प्रपद्यन्ते । अतस्तत्रासुरभाव एव कारणमित्येतत् कथमित्यत आह– **स चेति** । तेषामपि 'प्रवृत्तिं च' इत्यादिवक्ष्यमाणलक्षणासुरभाववत्त्वादिति भावः । ननु ज्ञानापहारे जीवापहारः स्यात्, ज्ञानरूपत्वात् तेषामित्यत आह– **अपहार इति** । ये भगवन्तं न प्रपद्यन्ते ते सर्वेऽप्यासुरं भावमाश्रिता इति ज्ञापयितुमैहिकामुष्मिकभोगपरायणेष्वप्यासुरं भावं सप्रमाणकं दर्शयति– **असुष्विति** । देवासुरभावावत्यन्तव्यावृत्ताविति दर्शयितुमुभयत्र तुशब्दः ॥ १५ ॥

प्रमेयदीपिका (ज.टी.)– नन्वासुरो भावो हि हिंसानृतादिलक्षणोऽन्यैर्व्याख्यातः । तद्रहिताश्च क्षपणकादयो न भगवन्तं प्रपद्यन्ते । तत्कथमस्य हेतुत्वम्? इत्यत आह– **स चेति** ॥ एतेषामन्यतमः सर्वेष्वप्यस्तीति भावः ॥ ननु मुक्तौ योग्यानामयोग्यानां च भगवन्त-मप्रपद्यमानानां एते धर्मा वक्तव्याः । तत्र मुक्तियोग्यानां सम्यज्ज्ञानस्वभावात् तत्कथमपहृत-

ज्ञानत्वम्? इत्यत आह– **अपहार इति** ।। आगमवाक्यमपि सज्जीवविषयम् । मुक्तियोग्यानामासुरभावाश्रयणं प्रवृत्त्याद्यज्ञानेनोक्तम् ।।

प्रकारान्तरेण घटयितुमाह– **असुष्विति** ।। इन्द्रियेषु तत्प्रीणन एव रताः । असौ इति जातावेकवचनम् । पदसन्धेर्विवक्षाधीनत्वादसन्धिर्न दोषः । 'त्रिभिः'(७. १३) इत्यत्र भगवतो गौणविग्रहत्वज्ञानस्य कारणमुक्तम् । अत्र तु स्वदोषादेव न मां प्रपद्यन्ते । नतु मत्प्रपत्तेर्मायातरणोपायत्वाभावादित्यतो महान् भेदः ।। १५ ।।

**भावबोधः (र.टि.)**– ।। **एतेषामिति** ।। 'प्रवृत्तिं च निवृत्तिं च' इत्यादिनोक्तधर्माणां प्रत्येकमासुरभावरूपत्वात् क्षपणकादौ हिंसानृताद्यविषयमिति । मध्यमाधमजीवानां सम्यग्ज्ञानमात्रस्वभावत्वाभावेन तदभावस्याकल्प्यत्वादिति भावः । **जाताविति** ।। तथा चासुष्वसावित्यनयोरेकार्थत्वमिति भावः । **असन्धिरिति** ।। 'देवास्तु असुरा' इत्यसन्धिरित्यर्थः ।

**भावदीपः (रा.टि.)**– ।। **एतेषामिति** ।। 'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः । न शौचं नापि चाचारो न सत्यं तेषु' इत्यादिना षोडशे वक्ष्यमाणप्रवृत्तिनिवृत्तिज्ञानादिधर्माणां मध्य अन्यतमस्य सर्वपुरुषेषु सत्वादस्ति तेषामासुरभाव इत्यर्थः ।। **एत इति** ।। दुष्कृतित्वादिधर्मा इत्यर्थः ।।ननु 'देवास्त्वसुरास्तु' इति भाव्यम् । कथं तत्र सन्ध्यभाव इत्यत आह– **पदसन्धेरिति** ।। अत एव सप्तमे आद्यपादे 'इकोऽचि विभक्तौ' इत्यत्र वृत्तौ 'रायत्वं तिसृभावश्च व्यवधानान्नुमा अपि' इति श्लोके 'नुमा' इत्यस्यापिपदेन सन्धिमकृत्वा निर्दिष्टम् । पदमञ्जर्यां च 'नुमा अपि इति' इत्यत्र संहिताया अविवक्षितत्वात् सवर्णदीर्घत्वं न कृतमित्युक्तम् ।। १५,१६ ।।

**वाक्यार्थप्रदीपः (पां.टि.)**– नन्वसूनां बहुत्वात् 'बहुषु बहुवचन'मिति बहुवचने च 'असुषु' इति भवितव्यम् । 'असौ' इत्येकवचनं तु कथमित्यतः 'ज्ञात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इत्यत्र जातिर्यत्राख्यायत तत्र एकवचनं बहुवचनञ्च साध्वित्यस्यार्थस्याभिहितत्वाद् युक्तं बहुष्वपि जात्याख्यायामेकवचनमित्याह– **असाविति जातावेकवचनमिति** ।।

ननु इको यणचीति यणि त्वसुर इति भवितव्ये सन्ध्यभावः किन्निबन्धन इत्यतो विवक्षातस्तु सन्धिः भवतीति वचनेन तस्य विवक्षाधीनत्वेन नियतत्वाभावाद् विवक्षया सन्ध्यभावो युक्त इत्याह– **पदसन्धेरिति** ।।

श्लोकः १५

**भावरत्नकोशः (सु.टि.)– ॥ अन्यैर्व्याख्यात इति ॥**तथा सङ्करः 'आसुरं भावं हिंसा-नृतादिलक्षणमाश्रिताः' इति । **क्षपणकादयः** बौद्धप्रभेदाः । अस्य अनाश्रितहिंसानृतादिलक्षणा-सुरभावत्वस्य । **हेतुत्वं प्रपत्तौ** । निषिद्धत्वाभावस्याधर्मसाधनत्वाभावव्याप्यत्ववत्, अनासुरभावस्य प्रपत्तिव्याप्यत्वाभावाद् आसुरभावोपपत्तौ न प्रयोजक इति भावः । **एतेषामन्यतम इति** । प्रवृत्तिनिवृत्त्यज्ञानजगदसत्यत्वावबोधादीनां षोडशे वक्ष्यमाणानामसुरधर्माणां मध्येऽन्यतमः सर्वेषु क्षपणकादिष्वस्तीति युक्तम् । आसुरभावो न प्रपत्तिसाधनमिति भावः । **एते धर्मा इति** । मुक्तौ योग्यानां नराधमत्वातिरिक्ताः दुष्कृतित्व-मूढत्व-अपहृतज्ञानत्व- आश्रितासुरभावत्वलक्षणा वक्तव्याः । अयोग्यानां तु पञ्चापि धर्माः । तत्रापि मूढत्वं केवलमिथ्याज्ञानित्वं च, अपहृतज्ञानत्वं चानुत्पन्नमनोवृत्तिरूपाधिष्ठानयाथात्म्यज्ञानत्वरूपं द्रष्टव्यमिति विवेक्तव्यम् । तमोयोग्येष्वप्यपहृत-ज्ञानत्वम् अनुमतमिति दुष्कृतित्वापहृतज्ञानत्वाभ्यां मूढाः, अतो नराधमा इति प्राचीनटीकयाऽव-गम्यते । अपहारस्य सज्जीवविषयत्वे प्रमाणे साधारणजीवशब्दोपादानायोग इत्यत आह– **आगमेति ॥** 'ज्ञानं स्वभावो जीवानाम्' इत्यागमवाक्यम् । न केवलं भाष्यमित्यपिशब्दः ।

अत्रैवमनुमानप्रकारः– विमता अतीर्णमाया अप्रपन्नभगवच्छरणा आश्रितासुरभावत्वात् सम्प्रतिपन्नवत् । न चात्र हेतोरसिद्धिः । विमता आश्रितासुरभावाः मूढत्वादिति तत्साधनात् । आसुरभावाश्रयणं च ब्रह्मवायुसरस्वतीभारत्यतिरिक्तदेवेषु 'द्रोणकर्णद्रौणिकृपाः कृष्णाभावे मनो दधुः' इत्यादिना निर्णये मनःशब्दोपादानाद् आगन्तुकं विवक्षितमिति न क्षुद्रोपद्रवः ॥

अत्र मूढत्वं नाम मिथ्याज्ञानित्वमात्रं विवक्षितम् । न चात्राप्यसिद्धिः शङ्कनीया । अपहृत-ज्ञानत्वदुष्कृतित्वाभ्यां तत्सिद्धेः । अपहृतज्ञानत्वं चाभिभूतज्ञानत्वं विवक्षितमिति योग्यपक्षे । मुक्त्ययोग्यपक्षे तु प्रधानानुमानम् उक्तरूपमेव । तत्रासुरभावो नराधमत्वेन हेतुना साधनीयः । नराधमत्वं च भगवद्द्वेषिस्वभावत्वमिति ज्ञातव्यम् । तच्च केवलमिथ्याज्ञानित्वरूपमूढत्वेन साधनीयम् । देवानाम् उत्तममध्यममनुष्याणां च केवलमिथ्याज्ञानित्वाभावान्न तत्र व्यभिचारः शङ्कनीयः । केवलमिथ्याज्ञानित्वं चापहृतज्ञानत्वदुष्कृतित्वाभ्यां हेतुभ्यामनुमातव्यम् । तत्राप्य-पहृतज्ञानत्वम् अनुत्पन्नाधिष्ठानयाथात्म्यज्ञानत्वेन द्रष्टव्यमिति ॥

**घटयितुम्** आसुरभावाश्रयणम् । आह– **असुरशब्दार्थम् ॥** असुशब्दस्य 'पुंसि भूम्न्यसवः प्राणाः' इति प्राणार्थत्वेन तत्र रमणमयुक्तमित्यतोऽत्र विवक्षितमसुशब्दार्थमाह– इन्द्रियेष्विति ॥

श्लोकः १५

'अस्यन्ति क्षिपन्ति पुरुषान् विषयेषु' इति इन्द्रियाण्यसुशब्दार्थः । तदुपपदाद् रमेः 'अमन्ताड्डः' इति डप्रत्यय इति भावः । तत्रापि रमणं नाम किमित्यतस्तात्पर्यमाह– **तत्प्रीणने इन्द्रियप्रीणन एवेति** ॥ 'असुषु रताः' इति भाष्यार्थसंवादायाह– **जातावेकवचनमिति** ॥ 'असुषु' इत्यर्थ इति भावः । 'इको यणचि' इति यणादेशे 'देवास्त्वसुराः' इति निर्देशः स्यात् । इत्यत आह– **पदसन्धेरिति** ॥ तथा च महाभाष्यकारः 'शयाना वर्धते दूर्वा आसीनं वर्धते विषम्' इति 'लक्षणहेत्वोः क्रियायाः' इति सूत्रे । तथा वृत्तिकारवचनं च,

रायत्वं तिसृभावश्च व्यवधानान्नुमा अपि ।
नुड् वाच्य उत्तरार्थं तु इह किञ्चित् त्रपो इति ॥' इति ।

अत्र च संहिताया अविवक्षितत्वात् 'नुमा अपि' इत्यत्र सवर्णदीर्घत्वं न कृतमिति । तुशब्दस्य यण् न कृत इति च हरदत्तः ।

ननु 'त्रिभिर्गुणमयैर्भावैः' इत्यत्र 'मोहितं नाभिजानाति' इति भगवद्याथात्म्याज्ञानमुक्तम् । अत्रापि 'माययाऽपहृतज्ञानाः' इति भगवद्याथात्म्याज्ञानमुच्यत इति पुनरुक्तिः । किञ्च यदि त्वत्प्रपत्तिर्मायातरणोपायः, तर्हि त्वां प्रपद्य सर्वेऽपि किमिति नात्यायन् । अतो 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति त्वदुक्तमसदिति च प्राक् चोदितम् । तत्परिहारो न कृत इत्यत उभयोस्तात्पर्यभेदमाह– **त्रिभिरित्यत्रेति** ॥ गौणविग्रहत्वज्ञानस्य गुणातीतत्वाज्ञानस्य च, कारणं दुर्गाभिमततमोगुणजनितमोहरूपम् । स्वदोषादेव दुष्कृतित्वादिना साधितादासुरभावरूपादेव । अतो यच्चोदितं 'मामेवेत्युक्तमसत्' इति, तदपि परिहृतम् । तात्पर्यभेदाच्च न पौनरुक्त्यशङ्काऽपीति भावः ॥

**गीताक्षरार्थस्तु-** यदि त्वत्प्रपत्तिर्मायातरणोपायः, तर्हि त्वां प्रपद्य किमिति सर्वे तां नात्यायन् । अतो 'मामेव' इत्युक्तमसदित्यत उच्यते– **न मामिति** ॥ ये अनुपचितयोग्यतापुण्यास्ते न मां प्रपद्यन्ते यत आसुरं भावमाश्रिताः । कुत आसुरभावाश्रयणम् ? मूढाः मिथ्याज्ञानिनो यतः । मूढत्वमपि कुतः । यतो दुष्कृतिनः मायाऽभिभूताधिष्ठानयाथात्म्यज्ञानाश्च । केचिद्भगवद्द्वेषिणो दुष्कृतित्व-अनुपसञ्जाताधिष्ठानयाथात्म्यज्ञानत्वाभ्यां मूढाः केवलमिथ्याज्ञानिनो यतः, अत एव नराधमाः । यत एवम् तत आश्रितासुरभावा इति न मां प्रपद्यन्त इति मुक्तियोग्यतदयोग्यविषयतया

व्याख्येयम् । तत्र मुक्तियोग्यानामासुरभावो नाम 'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः' इत्यादिना वक्ष्यमाणः प्रवृत्त्यज्ञानरूपः, इन्द्रियप्रीणनरतत्वरूपश्च बोद्धव्यः । इतरेषां तु भावप्रदीपिकोक्तरीत्या भगवद्द्वेषिस्वभावत्वमिति विवेक्तव्यम् । 'त्रिभिः' इत्यत्र भगवतो गौणविग्रहत्वज्ञानस्य कारणमुक्तम् । अत्र तु स्वदोषादेव न मां प्रपद्यन्ते, न तु मत्प्रपत्तेर्मायातरणोपायत्वाभाव इत्युच्यत इत्यतो महान् भेदः । अतः किमिति सर्वे नात्ययन् इति शङ्कितम्, तत्परिहृतं वेदितव्यम् ॥ १५ ॥

**भावदीपिका (श्री.टि.)– ॥ हेतुत्वमिति ॥** प्रयोजकत्वमित्यर्थः । भगवदप्रपत्तावासुरभावस्य न प्रयोजकत्वम्, तद्रहितानामपि क्षपणकादीनां भगवत्प्रपत्तिसद्भावात्, तस्मिन् सति अभवतः, तेन विनाऽपि भवतः तदप्रयोज्यत्वादिति भावः । **एतेषामिति ॥**

> 'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
> न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥'

इत्युक्तानां प्रवृत्त्याद्यज्ञानादीनां धर्माणां मध्येऽन्यतमो धर्मः क्षपणकादिष्वस्त्येव, इत्यासुरस्वभावत्वमेवास्तीति नोक्तदोष इति भावः ।

अत्र भगवदप्रपत्तिकर्तारो द्विविधाः मुक्तियोग्याः, तमोयोग्याश्चेति । तत्र तमोयोग्यानां धर्माणां भगवदप्रपत्तौ साक्षात् परम्पराहेतुप्रतिपादकत्वेन 'न मां दुष्कृतिनो मूढाः' इति समग्रं श्लोकं व्याख्याय, मुक्तियोग्यानां भगवदप्रपत्तिपक्षे प्रवृत्त्याद्याज्ञानमात्रादिरूपासुरभावाश्रयणं साक्षाद्धेतुः, अभिभूतज्ञानत्वरूपापहृतज्ञानत्वमेव आसुरभावाश्रयणे हेतुरित्येवं हेतुहेतुमद्भावोऽभिप्रेत इति न दोष इति प्रतिपादनपरतयाऽपि 'माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः' सति पदद्वयम् उत्तरभाष्येण व्याख्यायत इत्यभिप्रेत्योत्तरभाष्यम् अवतार्य व्याचष्टे– **ननु मुक्तौ योग्यानामित्यादिना ॥**

**एते धर्मा इति** ॥ आसुरभावाश्रयणादयो धर्मा इत्यर्थः । ननु प्रमाणवाक्ये जीवमात्रज्ञानस्याभिभवप्रतिपादनं प्रतीयते, न मुक्तियोग्यजीवज्ञानस्येति चेत्, तत्राह– **आगमेति ॥** मध्यमाधमजीवानां सम्यज्ज्ञानमात्रस्य स्वभावत्वाभावेन तदभिभवस्याकल्प्यत्वादिति भावः । **जाताविति ॥** समुदायापेक्षमेकवचनमित्यर्थः । सिद्धान्ते अनुगतजातेरभावादित्यवधेयम् । तथा च 'असुषु' 'असौ' इति भाष्यप्रमाणयोर्न विसंवाद इति भावः । ननु 'देवास्त्वसुराः' इति सन्धिः

श्लोकः १६

स्यादिति चेत्, तत्राह– **पदसन्धेरिति** ॥ 'विवक्षितस्तु सन्धिर्भवति' इति वचनादिति भावः । **असन्धिरिति** ॥ 'देवास्तु असुराः' इति सन्ध्यभाव एव जात इत्यर्थः । ननु 'तर्हि किमिति सर्वे नात्यायन्' इति प्रश्नस्य 'त्रिभिर्गुणमयैर्भावैः'इत्यनेनैव मायामोहितत्वकथनेन परिहृतत्वात् 'न मां दुष्कृतिनः' इति पुनरुक्तम्, इति मन्दाशङ्कां पूर्वोत्तरग्रन्थयोर्भेदप्रदर्शनेन परिहरति– **त्रिभिरित्यत्रेति** ॥ **कारणम्** मायामोहितत्वरूपम् । **स्वदोषात्** योग्यताऽभावरूपात् ॥ १५,१६ ॥

**भावप्रकाशः (कृ.टि.)– ॥ ननु मुक्तौ योग्यानामिति ॥** अत्र मुक्तियोग्यानां पक्षत्वे दुष्कृतित्वापहृतिज्ञानत्वाभ्यां मूढत्वं साध्यम् । तच्च मिथ्याज्ञानित्वमात्रम् । तेन चासुरभाव इति विवेक्तव्यम् । **आगमवाक्यमिति** । ज्ञानं स्वभाव इति वाक्यमित्यर्थः । 'असुषु' इत्यनेनैकार्थत्वसिद्ध्यर्थमाह– **जाताविति** ॥ ननु 'इको यणचि' इति यणादेशे 'देवास्त्वसुरा' इति वक्तव्यम् । कथं 'देवास्तु असुरा' इत्यसन्धिरित्यत आह– **पदसन्धेरिति** ॥

'संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते'

इति शाब्दिकोक्तेरिति भावः ॥ १५ ॥

## चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
## आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥

**भावरत्नकोशः (सु.टि.)–** ननु त्वत्प्रपत्तेर्मायातरणाकारणत्वात् स्वदोषाद्वा त्वां न प्रपद्यन्त इत्यत्र कथं निर्णय इत्याशङ्क्य प्रेक्षावतां मद्भजनमेव निर्णयकारणमिति मनसि निधाय, तदुपपादनाय दुष्कृतित्वादिस्वदोषशून्याः केचिन्मां प्रपद्यमानाः सन्तीत्युच्यते– **चतुर्विधा** इति । आर्तः व्याघ्रचोररोगाद्यभिभूतः तन्निवृत्तिकामः सन्निति योज्यम् । जिज्ञासुः आत्मज्ञानेच्छुः, अर्थार्थी भोगलोलः, ज्ञानी आत्मविचेत्येवं चतुर्विधाः सुकृतिनः जनाः मां भजन्ते सेवन्ते । 'भरतर्षभ', 'अर्जुन' इति सम्बुद्धिरादरार्था ॥ १६ ॥

श्लोकः १७

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥**

## भाष्यम्

**एकस्मिन्नेव भक्तिरित्येकभक्तिः । तच्चोक्तं गारुडे– 'मय्येव भक्तिर्नान्यत्र एकभक्तिस्स उच्यते' इति ॥ १७ ॥**

भावप्रदीपिका (प.टी.)– भक्तेरेकत्वं नाम किमित्यत आह– **एकस्मन्निति** । अस्य इति संयोज्यम् ॥ १७ ॥

भावप्रकाशिका (न.टी.)– ये तु सुकृतिनस्ते सर्वे हरिं भजन्ते । तत्र ज्ञान्येव तं शरणं व्रजतीत्यभिप्राय उत्तरश्लोकचतुष्टये भगवतोऽन्यभजनीयत्वादर्शनादेवैकभक्तिः । न तु स्वतोऽन्यादर्शनादिति भावेन 'एकभक्ति'पदं सप्रमाणकं व्याचष्टे– **एकस्मिन्निति** । वैष्णवत्वेन रमाब्रह्मादिषु भक्तौ विद्यमानायामपि प्राधान्येनैकस्मिन् विष्णावेव भक्तिर्यस्यासावेकभक्तिरित्यर्थः ॥

प्रमेयदीपिका (ज.टी.)– 'एका भक्तिर्यस्य' इति विग्रहे भक्तिशब्दस्य प्रियादित्वात्तस्मिन् परतः पूर्वपदस्य पुंवद्भावो न सिद्ध्यतीत्यालोच्याऽह– **एकस्मिन्नेवेति** ॥ 'अस्य' इत्यध्याहार्यम् । तथाऽपि वैयधिकरण्याद् बहुव्रीहिर्न सिद्ध्यतीति चेन्न । आगमसिद्धत्वाच्च इत्याह– **तच्चेति** ॥ 'यस्य' इत्युपस्कर्तव्यम् ॥ १७ ॥

भावबोधः (र.टि.)– ॥ प्रियादित्वादिति ॥ 'स्त्रियाः पुंवद्भाषितपुंस्कात्' इति सूत्रे 'प्रियादिषु' इति प्रियादिगणस्य पुंवद्भावनिषेधादित्यर्थः । यद्यप्येका भक्तिर्यस्येति विग्रहेऽपि 'एकतद्धिते च' इत्युत्तरपदमात्रे एकशब्दस्य ह्रस्वत्वविधानात् 'सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावो वक्तव्यः' इत्यत्र प्रियादिपर्युदासानाश्रयणाच्च पुंवद्भावो भविष्यति । तथाप्यस्मिन् पक्षे भगवत एव भक्तिविषयत्वरूपार्थविशेषसिद्धिरिति भावः ॥ **आगमसिद्धत्वादिति** ॥ आगमस्यापि 'सप्तमीविशेषणे बहुव्रीहौ' इति सप्तम्यन्तस्य पूर्वनिपातवचनमेव ज्ञापकमिति भावः । 'मुक्तश्च कां गति'मित्येतद्भगवदग्रहणे चासम्भवादित्यत्र प्रमाणान्तरम् ॥ १६,१७ ॥

श्लोकः १७

**भावदीपः (रा.टि.)–** ॥ **प्रियादित्वादिति** ॥ 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणी प्रियादिषु' इति (पा.सू.६.३.३४) षष्ठतृतीयपादीयसूत्रेणोक्तषष्ठपुंस्कात् परस्य अनूङः स्त्रीप्रत्ययस्य पुंवद्रूपं स्यात् । एकार्थे स्त्रीलिङ्गे परतः, न तु पूरण्यां प्रियादौ परतः' इति पुंवद्भावस्य प्रियादौ परतो निषेधात्; भक्तिपदस्य प्रियादौ पाठादित्यर्थः । 'एका भक्तिः यस्य' इत्युक्तावपि 'एकतद्धिते च' (पा.सू.६.३.६२) इति तत्पादगतसूत्रेण 'तद्धितान्ते उत्तरपदे च परत एकशब्दस्य ह्रस्वो भवति' इत्युक्तेः 'एकभक्तिः' इति रूपसिद्धावपि वक्ष्यमाणप्रमाणानुरोधाद् व्यधिकरणबहुव्रीहिरप्याराश्रित इति ज्ञेयम् ॥ **तथापीति** ॥ एकशब्दस्य पुल्लिङ्गत्वोपपत्तावपीत्यर्थः । 'अनेकमन्यपदार्थे' (पा.सू.२.२.२४) इति समानाधिकरणानामेव बहुव्रीह्युक्तेरिति भावः ॥ बहुव्रीहित्वख्यापनायाऽह– **इत्युपस्कर्तव्यमिति** ॥ अन्यथा 'स उच्यते' इत्युक्त्यनुपपत्तेरिति भावः ॥ १७ ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** ॥ **एका भक्तिः यस्येति इत्यादि** ॥ स्त्रियाः पुंवद्भाषितपुंस्कात् इति सूत्रे भाषितपुंस्कात् परस्य अनङः स्त्रीप्रत्यस्य समानाधिकरणे स्त्रीलिङ्गे पदे परे पुंवद्भाव-मभिधाय अतिप्रसङ्गपरिहारार्थे 'अप्रियादिषु' इति प्रियादिषु परेषु पुंवद्भावो न भवतीत्यभिधानात् 'प्रिया मनोज्ञा कल्पाणी सुभगा दुर्भगा भक्तिः सुभगा' इत्यादिना प्रियादिगणे भक्तिशव्दपाठेन तस्याः प्रियादित्वात् एकशब्दस्य पुंवद्भावानुपपत्तेः तदभावे च तत्प्रयुक्तस्त्रीप्रत्ययलोपानुपपत्तेः एका भक्तिरित्येव स्यात् । नचैकविभक्तिरित्यर्थः ॥ ननु एका भक्तिर्यस्येति विग्रहेऽपि 'एकतद्धिते च' इत्युत्तरत्र सूत्रे तद्धिते चोत्तरपदमात्रे एकशब्दस्य ह्रस्वत्वविधानात् सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावो वक्तव्य इत्यत्र 'अप्रियादिषु' इति निषेधानाश्रयणाच्च पुंवद्भावोपपत्तेः व्यर्थं व्यधिकरण-बहुव्रीत्वाश्रयणमिति चेन्न । एका भक्तिर्यस्येति विग्रहे भगवत एव भक्तिविषयत्वरूपार्थविशेप-सिद्ध्यनुपपत्त्या तत्सिद्ध्यर्थं व्यधिकरण बहुव्रीह्याश्रयणमित्यत्र तात्पर्यादिति भावः ॥

**॥ श्री इति श्रीपदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यचरणानां निजनिशिष्यकेशवेन विरचिते व्याकरणस्पृष्टप्रमेयदीपिकावाक्यार्थप्रदीपे सप्तमोऽध्यायः ॥**

**भावरत्नकोशः (सु.टि.)–** ॥ **इति विग्रह इति** ॥ सामानाधिकरण्यलाभायाभ्युपगते 'एका-भक्तिरित्येव निर्देशः स्यात्, यतः' इति शेषः । **प्रियादित्वात्** प्रियादिगणे पाठात् । तथा च वृत्तिः

'प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः' इति । **तस्मिन्** भक्तिशब्दे **पूर्वपदस्य** एका-शब्दस्य । **पुंवद्भावः** **'स्त्रियाः पुंवत्'** इति सूत्रोक्तं पुंशब्दस्येव रूपम् । 'स्त्रियाः पुंवत् भाषित-पुंस्कादनूङ् समानाधिकरणे स्त्रियाम् अपूरणीप्रियादिषु' इति सूत्रस्यायमर्थः । भाषितपुंस्काद् अनूङ् ऊङभावो यस्यामिति बहुव्रीहिः, निपातनात् पञ्चम्या अलुक्, षष्ठ्याश्च लुक् । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात् पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात्, समानाधिकरणे स्त्रीलिङ्ग उत्तरपदे, न तु पूरण्यां प्रियादौ च परत इति । उदाहरणं च चित्रा गावोऽस्य चित्रगुः, रूपवती भार्या अस्य रूपवद्भार्य इत्यादि ।

नन्वनेन पुंवद्भावसिद्धावपि 'एकतद्धिते च' इत्यत्र एकशब्दस्य तद्धितप्रत्यये उत्तरपदे च परतः ह्रस्वो भवति । एकस्या भाव एकत्वम्, एकता । एकस्याः क्षीरम् एकक्षीरम् इति व्याख्यानात्, अत्रापि 'एका भक्तिः' इति विग्रहेऽप्येकशब्दे ह्रस्वो भविष्यतीत्यतः किमिति व्यधिकरणबहुव्रीहि-राश्रयितव्य इति चेन्न । 'एकतद्धिते च' इति सूत्रस्य व्यधिकरणार्थमिदमिति वदता हरदत्तेन भिन्न-विभक्तिकविग्रहस्थल एव प्रवर्तितत्वेन 'एका चासौ भक्तिः' इति सामानाधिकरण्यस्थलेऽ-नवतारात् । अत एव भाष्ये वृत्त्यादौ च 'एकस्याः क्षीरमेकक्षीरम्' इत्यादि व्यधिकरणमेवो-दाहृतम् । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति 'दिङ्नामान्यन्तराले' इति सूत्रे भाष्यकारेष्ट्या गतार्थत्वात् 'एकतद्धिते च' इति सूत्रमेवेदं न कर्तव्यमित्याधुनिकैनैतत्सूत्रस्य प्रत्याख्यातत्वात् । न चैवमुक्तभाष्यकारेष्ट्यैवाप्येकशब्दे पुंवद्भावो भविष्यतीति व्यधिकरणबहुव्रीह्याश्रयणमनुचितमिति वाच्यम् । 'उपायस्य उपायान्तरादूषकत्वम्' इति भावेन व्यधिकरणबहुव्रीहेरभ्युपगमोपपत्तेः । 'अपूरणीप्रियादिषु' इति पर्युदस्तव्यतिरिक्तविषयत्वोपपत्तेश्च ।

वस्तुतस्तु 'सर्वनाम्नो वृत्तिमात्रे' इतीष्टिरनादरणीया 'स्त्रियाः पुंवत्' इति योगविभागेन 'एकस्याः क्षीरमेकक्षीरम्' इत्यादीष्टसिद्धेः । सम्मतं चैवं योगविभागाश्रयणं वैयाकरणानाम् । 'दिङ्नामान्यन्तराले' इत्यत्र 'स पुनः स्त्रियाः पुंवत्' इति योगविभागेन सिद्ध्यति, इति न्यासकारवचनात् । न चैवमनेनैव योगविभागेनात्रापि पुंवद्भावसिद्धेर्न व्यधिकरणबहुव्रीह्याश्रयणं युक्तमिति वाच्यम् । एतत्सूत्र एव 'अपूरणीप्रियादिषु' इति भक्तिशब्दे परतः पुंवद्भावनिषेधादिति मीमांसामभिसन्दधानो भाष्यकारो व्यधिकरणबहुव्रीहिरित्याह– **इत्यालोच्येति** ॥ एतदङ्गीकारश्च भगवत एकस्यैव भक्तिविषयत्वप्रदर्शनरूपमहाप्रयोजनलाभायेति हृदयमिति भावः । **अस्ये-**

**त्यध्याहार्यमिति** ॥ 'एकस्मिन्नेव भक्तिः' इत्यनन्तरम् ॥ **इत्यध्याहार्यम्** 'यस्य सः' इत्यध्याहार इत्यवचनम् 'अस्य' इत्यनेन बहुव्रीहित्वस्फोरणस्य कृतत्वात्, लाघवाच्च । अत एव 'चित्रगुः' इत्यत्र 'चित्रा गावो यस्य' इत्येव विग्रहः प्रदर्शितो हरदत्तेन ।

सङ्करभाष्यव्याख्यात्रा च 'एकस्मिन् भगवति भक्तिरस्येत्येकभक्तिः इत्येवोक्तम् । प्राचीन-टीकायाम् 'एकस्मिन् विष्णावेव भक्तिर्यस्यासावेकभक्तिः' इत्युक्तिरुभयथाऽप्यन्यपदार्थनिर्देश-सम्भवाभिप्राया । वक्ष्यति च 'यस्यासौ इत्युपस्कर्तव्यम्' इति । **तथाऽपि** सप्तम्यन्तत्वाश्रयणेन ह्रस्वत्वेऽपि । **वैयधिकरण्यादिति** । 'बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम्, व्यधिकरणानां मा भूत्' इति वृत्तिकारवचनात् प्रकृते च भिन्नविभक्तिकत्वरूपवैयधिकरण्यान्न बहुव्रीहिः सिध्य-तीत्यर्थः । 'चेन्न' इत्यनन्तरं 'व्यधिकरणानां 'सप्तमीविशेषणे बहुव्रीहौ' इत्यत्र सप्तम्यन्तस्य पूर्वप्रयोज्यत्वोक्तिलिङ्गात् सिद्धेरिति ब्रूमः' इति वाक्यं संयोज्यम् । तल्लिङ्गादन्यत्र व्यधिकरण-बहुव्रीह्यभ्युपगमेऽपि, अत्र स एवाश्रयितव्य इत्यत्र को विशेषहेतुरित्यत आह– **आगमसिद्ध-त्वादिति** ॥ **तत्** व्यधिकरणपदबहुव्रीह्याश्रयणम् । 'गारुडे उक्तं च' इति भाष्ये चशब्दान्वयः । **यस्यासावित्युपस्कर्तव्यमिति** । 'मय्येव भक्तिः, अन्यत्र सा नास्ति यस्यासौ मद्भक्तिः' इति व्याससमासौ ज्ञातव्यौ ।

ननु मद्भक्तिशब्दः किमिति व्याख्यायते ? प्रकृतार्थासङ्गतत्वात्, इत्यत उक्तं भाष्ये स एवैकभक्तिरुच्यत इति । 'एकभक्तिः' इत्यत्र गीतायामेकशब्देन अहं भगवानेवोच्ये, स च सप्तम्यन्तः, 'एकस्मिन् भक्तिरस्य' इति व्यधिकरणपदश्च बहुव्रीहिरिति सिद्धान्तितव्यमिति प्रमाणार्थत्वावगतेर्नासङ्गतिरिति व्याख्येयम् । एवं वाक्यभेदज्ञापनायैव पदसन्धिर्न कृत इति भावः ।

केचित्तु भूम्ना 'यस्यासौ' इत्यस्य बहुव्रीहित्वस्फोरणार्थत्वप्रसिद्धेः, प्रमाणस्थं 'सः' इति पदम् 'असौ' इत्यनूद्य तस्य 'यस्य' इति पदेन सम्बन्धोऽभिमत इति भावेन टीकायाम् 'यस्यासौ' इत्युपस्कर्तव्यमित्युक्तमित्याहुः । भाष्ये 'सः' इति श्रवणात् 'यस्य' इत्युपस्कर्तव्यम्, तेन च बहुव्रीहित्वं ज्ञापितम् । 'अन्यत्र नास्ति' इत्यत्र कर्त्राकाङ्क्षायाम् 'असौ तादृशी' इति भक्तिपरामर्शपरं पदं वोपस्कर्तव्यमित्यतः पदद्वयमपि सार्थकमिति अन्ये ।

यत्तु प्रमाणे 'सः' इति श्रवणाद् 'यस्य' इत्युपस्कर्तव्यमित्येव पाठः । 'यस्यासौ' इति पाठस्तु प्रामादिक इति । तन्न । व्याससमासयोः स्वपदविग्रहस्थले एकविधे प्रातिपदिकानुस्यूते

व्युत्पत्तिसिद्धत्वात् । अत एव 'चक्रं पाणौ यस्य स अरिहस्तः', 'कण्ठे कालो अस्य गलेगरलः', 'मूर्धनि शिखा यस्य स मस्तकशिखः' इति व्याससमासयोरप्रदर्शनं विश्वजनीनम् । अत एव च द्वितीयाध्याये 'विधेय आत्मा मनो यस्य सः, जितात्मेत्यर्थः' इत्यत्र टीकायां 'स इत्यनन्तरं विधेयात्मेति शेषः' इत्युक्तम् । अतो मय्येव भक्तिर्यस्यासौ मद्भक्तिः, स एव च एकभक्तिरुच्यत इत्युक्तरीत्या व्याख्याने पदद्वयोपकार एव युक्त इति ॥ १७. १८ ॥

**गीताक्षरास्तु–** 'भजन्ते' इत्युक्त्या प्राप्ता सेवकेषु साम्यशङ्का परिह्रियते– **तेषामिति** ॥ चतुर्णां मध्ये ज्ञानी नित्ययुक्तः सदा भगवत्समाधिसम्पन्नः एकभक्तिः वैष्णवत्वेन रमाब्रह्मादिषु भक्तौ विद्यमानायामपि प्राधान्येनैकस्मिन् मयि विष्णावेव भक्तिरस्यास्तीति तथोक्तः । विशिष्यते विशेषम् आधिक्यमापद्यते । तत्प्रकारविवरणम् प्रियो हीति । ज्ञानिनोऽत्यर्थम् अहं प्रियो यतः, ततः सः ज्ञानी मम प्रियः इत्येवंरूपो विशेषः पूर्वोक्तो ज्ञातव्य इति ॥ १७ ॥

**भावदीपिका (श्री.टि.)– ॥ भक्तिशब्दस्य प्रियादित्वादित्यादि ॥** 'स्त्रियाः पुंवत् भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियाम् अपूरणीप्रियादिषु' उक्तभाषितपुंस्कात् परस्य ऊङ्-प्रत्ययभिन्नस्य स्त्रीप्रत्ययस्य पुंवद्भावः स्यात्, समानाधिकरणार्थे एकार्थे स्त्रीलिङ्गे पदे परे, न तु पूरण्यामपूरणार्थकाः मयट्प्रत्ययाद्याः पूरणीप्रत्ययाः, तदन्तानां पदानां परतः स्थितौ, प्रियादिषु गणस्थेषु च परतः सत्सु पूर्वपदस्य न पुंवद्भाव इति सूत्रार्थः । पुंवद्भावात् स्त्रीप्रत्ययलोपः । 'चित्रा गावो यस्यासौ चित्रागुः' इति भाव्ये पुंवद्भावेन स्त्रीप्रत्ययस्य टापो लोपे 'चित्रगुः' इति भवति । अनूङ् किम् । 'वामोरूः भार्या यस्यासौ वामोरूभार्यः' इत्येव भवति, न तु 'वामोरुभार्यः' इति । अपूरण्यां किं, कल्याणी पञ्चमी यासां स्त्रीणां ताः कल्याणीपञ्चमाः । अप्रियादिषु किम् । कल्याणीप्रिय इत्यादि । अत्र प्रियादिगणस्थयोगात् न पूर्वपदस्य पुंवद्भावेन स्त्रीप्रत्ययलोपः । प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा कान्ता । क्षान्ता समा चपला दुहिता वामा अबला तनया इति प्रियादिगणः । एवं च प्रकृतेः 'एकभक्तिः' इत्यत्र 'एका भक्तिर्यस्य' इति विग्रहे भक्तिशब्दस्य प्रियादिगणस्थत्वात्, तस्मिन् परतः पूर्वपदभूतैकपदस्य 'स्त्रियाः पुंवत्' इति सूत्रेण पुंवद्भावासम्भवेन स्त्रीप्रत्ययलोपाभावात्, 'एका भक्तिर्यस्यासौ एकाभक्तिः' सत्येव स्यात्, नतु पुंवद्भावेन स्त्रीप्रत्ययस्य टापो लोपेन 'एकभक्तिः' इतीत्यर्थः ।

श्लोकः १७,१८

**न सिद्ध्यतीति** ॥ 'स्त्रियाः पुंवदिति सूत्रेण' इति शेषः । ननु भक्तिशब्दस्य प्रियादित्वात्, 'तस्मिन् परतः' इत्यादि कस्मादुक्तम् । किं नाम, एका भक्तिरिति विग्रहे 'न कोपधायाः' इति पुंवद्भावो न सिद्ध्यतीति कस्मान्नोक्तम् । 'न कोपधायाः' ककारयुक्तोपधायाः स्त्रियाः पुंवद्भावो न स्यात् । 'पाचिका भार्या यस्यासौ पाचिकाभार्यः' 'रसिकाभार्यः' इति दर्शनात् । एवं च प्रकृतेऽप्येकशब्दस्य ककारोपधत्वेन पुंवद्भावायोगात् ॥

न च 'कोपधादेः प्रतिषिद्धः पुंवद्भावः कर्मधारये प्रतिप्रसूयते' इति वार्तिकेन 'न कोपधायाः' इति प्रतिषिद्धस्यापि पुंवद्भावस्य प्रतिप्रसवात्, 'एका चासौ शाटी च एकशाटी' इति दर्शनाच्च, 'एकभक्तिः' इति युक्तमिति वाच्यम् । तत्र 'कर्मधारये' इत्युक्तत्वात्, प्रकृते च बहुव्रीहि-समासत्वादिति चेत्, उच्यते । 'न कोपधायाः' इत्यस्य 'स्त्रियाः पुंवत्' इ सूत्रप्राप्तपुंवद्भाव-प्रतिषेधकत्वात् । यथोक्तं काशिकायाम् 'न कोपधायाः' इति 'स्त्रियाः पुंवत्' इति सूत्रप्राप्तपुंवद्भावो निषिद्ध्यते' इति । न ह्यत्र प्रकृते 'स्त्रियाः' इत्यनेन पुंवद्भावप्राप्तिरस्ति, येन 'न कोपधायाः' इत्यादिवक्तव्यं स्यात् । तत्र 'अप्रियादिषु' इत्युक्तत्वादिति ॥ यद्यपि 'एका भक्तिर्यस्य' इति विग्रहेऽपि 'एकतद्धिते च' इति सूत्रेण उत्तरपदमात्रे परे एकशब्दस्य ह्रस्वताविधानात् पुंवद्भावः सिद्ध्यति । तथाऽप्यस्मिन् पक्षे भगवतो भक्तिविषयत्वरूपार्थविशेषासिद्धिरित्याद्यालोचनीयमिति द्रष्टव्यम् । **न सिद्ध्यतीति** ॥ समानाधिकरणबहुव्रीहेरेवार्थगमकत्वादिति भावः । **आगमसिद्ध-त्वादिति** ॥ 'एकभक्तिः इत्यत्र व्यधिकरणबहुव्रीहिः' इति शेषः ॥ १७,१८ ॥

**भावप्रकाशः** (कृ.टि.)– ॥ **न सिध्यतीति** ॥ 'स्त्रियाः पुंवद्भाषितपुंस्कात्' इति सूत्रे 'अपूरणी प्रियादिषु' इत्यनेन प्रियादिशब्दे परे पुंवद्भावनिषेधादिति भावः । यद्यपि सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः सम्भवति । तथाऽपि वक्ष्यमाणागमानुसारात् व्यधिकरणबहुव्रीहिरङ्गीकृता इति ज्ञातव्यम् । **वैयधिकरण्यादिति** । 'समानाधिकरणानां बहुव्रीहिरिष्यते' इत्युक्तेरिति भावः । उपलक्षणं चैतत् । सप्तमीविशेषणे बहुव्रीहिरिति सप्तम्यन्तस्य पूर्वनिपातोक्तिरूपलिङ्गाच्चेति ग्राह्यम् । **यस्यासावितीति** ॥ अत्र यस्येत्युपस्कर्तव्यमित्येव पाठः । स उच्यत इति तच्छब्दस्य सत्त्वात् । अन्यादृशस्तु लेखकप्रमादादित्याहुः ॥ १७ ॥

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥**

श्लोकः १८,१९

**भावरत्नकोशः (सु.टि.)**– चतुर्ष्वेकस्य प्रशंसया प्राप्तेतरनिन्दा परिह्रियते– **उदारा इति** ॥ एते चत्वारोऽपि उदाराः महान्तः एव अन्यदेवताभक्तेभ्यः, किन्तु ज्ञानी त्वात्मा अहम् एव इत्यतिप्रियत्वादभेदोपचार इति विवृतिकृतः ॥

स्वामिनस्तु ज्ञानिनो विशेषेण भगवत्प्रतिमात्वात्, ज्ञानित्वात् 'आत्मैव' इत्यभेदोक्तिः । प्रतिमायां चाभेदोक्तिः प्रसिद्धा । सर्वस्य भगवत्प्रतिमात्वेऽपि विशेषतो ज्ञानी रसादिरिव हरेरुपासने प्रतिमेति प्रतिपादयितुमुक्तमुपपद्यते । 'आस्थितः' इत्युक्त्वा 'वासुदेवः सर्वम्' इति वाक्यं च 'प्रभवादेः' इत्युक्तन्यायेनैव रसोऽहम् इत्यादेरपि व्याख्यानं सिद्धम् । रसादीनां सत्ता-प्रतीत्यादिकारणत्वात्, तद्धोक्तृत्वाच्च भगवान् रसादिरित्यभेदेनोच्यते' इति विज्ञाननिरूपण-प्रकरणे टीकोक्तरीत्या वासुदेवः सर्वसत्ताप्रतीत्यादिकारणत्वात् तद्धोक्तृत्वाच्च सर्वमुच्यत इति ज्ञानवान् सुदुर्लभः' इति व्याख्यातवन्तः । उत्तरप्रस्थाने तु ज्ञानी तु मे मम आत्मा प्राप्त एव,

'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चात्मसन्ततो भावस्तस्मादात्मेति भण्यते ॥'

इति भारते, प्राप्तेरात्मशब्दार्थत्वोक्तेः । कुतस्त्वां प्राप्नोत्येव ज्ञानीति । यस्मात् स हि ज्ञानी अनुत्तमां सर्वातिशायिनीं गतिम् उद्दिश्य युक्तात्मा समाहितमना उपासीनः सन् मामेवास्थितः प्राप्तः । अतो ज्ञानी मत्प्राप्तिमानेवेति ॥ १८ ॥

**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥**

## भाष्यम्

**बहूनां जन्मनामन्ते ज्ञानवान् भवति । तच्चोक्तं ब्राह्मे– 'बहुभिर्जन्मभि-र्ज्ञात्वा ततो मां प्रतिपद्यते' इति ॥ १९ ॥**

भावप्रदीपिका (प.टी.)– ज्ञानोत्पत्त्यनन्तरं वहुजन्मान्ते मां प्रपद्यत इत्यन्यथाप्रतीति-निरासायाह– **बहूनामिति** ॥ १९ ॥

श्लोकः १९

**भावप्रकाशिका (न.टी.)– न च ज्ञानवतो भगवतः तत्प्रपत्तौ बहुजन्मापेक्षः, किन्तु ज्ञानार्जन एव सेत्येतत् सप्रमाणकमाह– बहूनामिति ॥ १९ ॥**

**प्रमेयदीपिका (ज.टी.)– 'बहूनां जन्मनाम्' इत्यत्र 'ज्ञानोत्पत्त्यनन्तरं भगवत्प्रपत्तौ बहुजन्मव्यवधानमुच्यते' इति निरासार्थमाह– बहूनामिति ॥ प्रतीतमेव किं न स्यात्?** इत्यत **आह– तच्चेति ॥ ततः तदैव ॥ १९ ॥**

**भावदीपः (रा.टि.)–** 'ततः' इत्यनूद्यार्थमाह– **तदैवेति** ॥ १९ ॥

**भावरत्नकोशः (सु.टि.)– ॥ प्रतीतमिति** । 'ज्ञानवान् बहूनां जन्मनामन्ते मां प्रपद्यते' इत्यन्वये तथा प्रतीतिः स्यात्, तन्निरासार्थमित्यर्थः । प्रतीतमेव ज्ञानवतो भगवत्प्रपत्तौ बहुजन्म-व्यवधानम् । कृतचोद्यनिरासकत्वस्फोरणाय प्रमाणे 'ततः' इति पदमनूद्य 'सर्वं वाक्यं सावधारणम्' इति भावेन व्याचष्टे– **ततस्तदैवेति** ॥ तथा च उत्सर्गतः ज्ञानाव्यवहितकाल एव प्रपत्त्यावेदनात् प्रतीतमसदिति भावः ॥

यद्यनुमत्तां गतिमुद्दिश्य त्वामेवास्थितो ज्ञानी तवाऽऽत्मा, तर्ह्यनादिकालादारभ्यैव त्वत्प्राप्तिः कथं न स्यादित्यत उच्यते–**बहूनामिति** ॥ सत्यं 'ज्ञानवान् मां प्रपद्यत एव' इति । तच्च ज्ञानं कस्याप्यनादिकालाद् भवति, किन्तु बहूनां जन्मनामवसान एव । यदाहुः

'निःशेषगतदोषाणां बहुभिर्जन्मभिः पुनः ।
स्यादापरोक्ष्यं हि हरेः......................॥' इति

'बहुभिर्जन्मभिर्ज्ञात्वा ततो मां प्रतिपद्यते' इति च ।

किंविशेष्यककिंप्रकारकज्ञानवानत्र तवात्मा ? इत्यत इदमुदितम् 'वासुदेवः सर्वं पूर्णं वस्त्विति ज्ञानवान्' इति । यद्येवंविधज्ञानेन मोक्षः, तर्हि सर्वेषां स्यात् ? इत्यत उक्तम्– **स इति** ॥ सः उक्तज्ञानवान् महात्मा सुदुर्लभः । 'सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामते' इत्याद्युक्तेः सुतरां दुर्लभः । वासुदेवस्य पूर्णत्वज्ञानेन मोक्षसद्भावेऽपि तज्ज्ञानिनो न सर्व इति, न सर्वेषां मोक्ष इति भाव इति ॥ १९ ॥

श्लोकः २०

भावदीपिका (श्री.टि.)– 'ततः ज्ञानान्तरं बहुभिर्जन्मभिर्मां प्रपद्यते' इति प्रतीयते । तदयुक्तम् । 'एवं मुक्तिफलानियमः' इति सूत्रविरोधात्, इत्यत आह– ततस्तदैवेति ॥ ज्ञानानन्तरमेवेत्यर्थः । 'प्रारब्धप्रतिबन्धाभावे' इति द्रष्टव्यम् ॥ १९ ॥

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥**

## भाष्यम्

**प्रकृत्या स्वभावेन । 'स्वभावः प्रकृतिश्चैव संस्कारो वासनेति च' इत्यभिधानात् ॥ २० ॥**

भावप्रदीपिका (प.टी.)– प्रकृतेः सर्वत्रैक्येन कथं स्वया इति प्रातिस्विकत्वोक्तिः ? इत्यत आह– **प्रकृत्येति** ॥ २० ॥

भावप्रकाशिका (न.टी.)– ननु संसारनिवृत्तये हरिमेव प्रपद्यमाना अप्यर्थाद्यर्थं देवतान्तरं भजेयुः । को दोष इत्यपेक्षायाम् एवं कामशः शरण्या एव किं न स्युरिति तत्प्रपद्येरन् इत्यभिप्राय उत्तरश्लोके शिवशक्त्यादिदेवतान्तरशरणागतिस्वभाव एव केषाञ्चित्, न माय्युक्तप्रकारेण संस्कारमात्रमिति भावेन 'प्रकृत्या' इति पदं सप्रमाणकं व्याचष्टे– **प्रकृत्येति** । ननु भगवतः स्ववशीकृतसर्वस्वभावत्वात् कथं तं विहाय केषाञ्चित् स्वभावेनापि देवतान्तरशरणागतिस्तत्फलं चेत्याकाङ्क्षायां भगवानेव तत्सर्वं करोति । तथाऽपीज्यानामन्तवत्त्वात् तत्प्राप्तिर्नाम फलमपि अन्तवदेव, तदपि भगवद्विपयाल्पमेधसां न त्वमेधसां वेत्यर्थः ॥ २० ॥

प्रमेयदीपिका (ज.टी.)– ननु मूलप्रकृतेः सर्वत्रैकत्वात् कथं **'स्वया'** इति प्रातिस्विकत्वमुच्यते? इत्यत आह– **प्रकृत्येति** ॥ 'स्वभाव एव' इत्येवशब्दसम्बन्धः ॥ २० ॥

भावरत्नकोशः (सु.टि.)– ॥ एकत्वादिति ॥ 'अजामेकां लोहितशुक्लकृष्णाम्' 'प्रकृती द्वे तु देवस्य जडा चैवाजडा तथा । अवरा सा जडा' इत्यादौ एकशब्दश्रवणाद्, एकवचनश्रवणाच्च 'भिन्ना प्रकृतिरष्टधा' (७.४) इति तु 'कार्यरूपेणाष्टधा भिन्ना' इति व्याख्यातमिति भावः । एवशब्देति । 'प्रकृतिः संस्कारो वासनेति च स्वभाव एवाभिधीयते' इत्येवशब्दसम्बन्ध इत्यर्थः ॥

श्लोकः २१,२२

**'कामैस्तैस्तैः'** **इतिश्लोकाक्षरार्थस्तु-** भगवतः सर्वकारणत्वादिमाहात्म्यज्ञानेन तं प्रपद्यमानो दुर्लभ इत्येतदुपपाद्यते– **कामैरिति ।** तैस्तैः पुत्रकलत्रपशुस्वर्गादिविषयैः कामैः अभिलाषैः हृतज्ञानाः स्वया स्वात्मीयया प्रातिस्विक्या प्रकृत्या स्वभावेन नियताः नियमिताः सन्तस्तद्देवताराधने यो यो नियमः, तं तमास्थाय कृत्वेति यावत्, अन्यदेवताः प्रपद्यन्ते ॥ २० ॥

भावदीपिका (श्री.टि.)– ॥ **एवशब्देति** ॥ तथा च प्रकृतिसंस्कारवासनाशब्दैः स्वाभाव एवोच्यत इत्यर्थः ॥ २० ॥

**यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥**

भावरत्नकोशः (सु.टि.)– प्राप्तान्यदेवता अपि ता विहाय भगवन्तं पुनः किमिति न प्रपद्येरन् इत्यत उच्यते– **यो य इति ।** यो यो भक्तः यां यां ब्रह्मरुद्रादिरूपां तनुं श्रद्धयाऽर्चितु-मिच्छति तस्य तस्य तां तद्विषयिणीं श्रद्धामचलां स्थिरां विदधामि करोमि ॥ २१ ॥

**स तया श्रद्धया युक्तः तस्या राधनमीहते ।**
**लभते च ततः कामान् मयैव विहितान् हि तान् ॥ २२ ॥**

## भाष्यम्

**यां यां ब्रह्मादिरूपां तनुम् । उक्तं च नारदीये 'अन्तो ब्रह्मादिभक्तानां मद्भक्तानामनन्तता' इति । 'मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः' इत्यादेः परिहारसन्दर्भाच्च मोक्षधर्मेषु । 'अवतारे महाविष्णोर्भक्तः कुत्र च मुच्यते' इत्यादेश्च ब्रह्मवैवर्ते ॥ २१,२२ ॥**

भावप्रदीपिका (प.टी.)– 'यो यो यां याम्' इत्यत्र मत्स्यादिशङ्का न कार्येत्यभि-प्रायेणाह– **यामिति ।** नात्र विष्णुरूपाणि विवक्षितानि । 'अन्तवत् तु फलम्' इत्यन्त-वत्फलकारणत्वश्रवणादित्यर्थः ॥ अन्तवत्फलत्वं विष्णुभक्तानां किं न स्यात् ? इत्यत आह– **उक्तं चेति ।** मूलरूपभक्तस्यान्तवत्त्वाभावेऽपि, अरतारभक्तस्य स्यादित्यत आह– **अवतारेति ।** कुत्राप्यवतारे ॥ २१ ॥

श्लोकः २१,२२

भावप्रकाशिका (न.टी.)– उत्तरश्लोकत्रये 'यां यां तनुम्' इत्यादिसामान्योक्तेर्विष्णु-तनुभक्तस्याप्यन्तवत्फलं स्यादित्याशङ्क्य, यासां तनूनामुपासनमन्तवत्फलं तांस्तनून् ग्रन्थान्तरानुसारेण विशिनष्टि– **यां यामित्यादिना ॥ कां गतिं गच्छेत्** कं गम्यमाप्नुयात् । **किमात्मकः** किं स्वर्गादिवदनित्यसुखरूपः, उतानन्तसुखात्मक इति । आदिशब्दात् 'देवतानां च को देवः' इत्यादेर्ग्रहणम् । बह्वध्यायात्मकोऽयं सन्दर्भः परिहार(रूपवाक्य)-सन्दर्भो नारदनारायणसंवादादिरूपः । तत्र देवदेवं नारायणं श्वेतद्वीपादिनिवासिनं तदेकान्तभक्ताः सम्प्राप्यानन्तकालं यथासुखं विहरन्ति । नान्यभक्तानां तादृशी गतिरिति (निर्गलितोऽर्थ) अवगम्यते ।

प्रमेयदीपिका (ज.टी.)– 'रामकृष्णादिरूपां भगवत्तनुम्' इति प्रतीतिनिरासाय आह– **यां यामिति** ॥ कुत एतत्? 'अन्तवत्तु फलं तेषाम्'इति तद्भक्तानामन्तवत्फलवचनात् । तस्य च ब्रह्मादिग्रहणे सम्भवाद् भगवद्ग्रहणे चासम्भवादिति भावेनाऽह– **उक्तं चेति** ॥ 'फलस्य' इति शेषः । गम्यत इति गतिः । इत्यादेः प्रश्नस्य परिहाररूपवाक्यसन्दर्भाच्च । बहुत्वादनु-दाहरणमिति भावः ॥ अनन्तफलत्वं मूलरूपभक्तानामस्तु । अवतारतनुभक्तानाम् अन्तव-त्फलाङ्गीकारे को विरोध इत्यत आह– **अवतार इति** ॥ कुत्र च अवतारे ॥ २१,२२ ॥

भावरत्नकोशः (सु.टि.)– ॥ कुत इति । 'ब्रह्मादिरूपां तनुम्' इति व्याख्यानं कस्मा-द्धेतोरवगम्यत इत्यर्थः । **तद्भक्तानां** भगवदितरदेवताभक्तानाम् । **शेषः** ब्रह्मादिभक्तानां फलस्य **अन्तः** अन्तवत्ता । **मद्भक्तानां** 'फलस्य' अनन्तेत्युभयत्र शेष इत्यर्थः । गमेर्भावे क्तिन्प्रत्यय इत्यभ्युपगमे 'गतिं गच्छेत्' इत्यनन्वितम्, इत्यतः 'कां गतिं गच्छेत् कं गम्यमाप्नुयात् ' इति प्राचां वाचमनुरुन्धानः कर्मणि 'अकर्तरि च कारके' इति क्तिन्निति भावेनाह– **गम्यत इति** । 'इति प्राप्यम्' इत्यर्थः । 'किमात्मकः' इति भाष्यस्य किं स्वर्गादिवदनित्यसुखरूप उत अनन्तसुखात्मक इति प्राचीनटीकोक्तार्थः । **'इत्यादेः'** इत्यत्रादिपदेन 'देवतानां च को देवः', 'पितॄणां तु पिता तथा' इत्यादेर्ग्रहणम् । 'इत्यादेः परिहारसन्दर्भाच्च' इति सामानाधिकरण्येनान्वयस्य किंशब्दघटित-तया प्रश्नत्वस्य स्फुटमवभासेनायोगात् 'प्रश्नस्य' इति शेषोक्तिः । सन्दर्भपदप्रयोगस्य तात्पर्यमाह– **बहुत्वादिति** ॥

'क्षीरोदधेर्योत्तरतो हि द्वीपः श्वेतः स नाम्ना प्रथितो विशालः ।'

श्लोकः २१,२२

'अनिन्द्रियाश्चानशनाश्च तत्र निष्पन्दहीनाः सुसुगन्धिनस्ते ।'
'श्वेताः पुमांसो गतसर्वपापाश्चक्षुर्मुषः पापकृतां नराणाम् ॥' इति,

'वरेण्यं वरदं तं वै देवदेवं सनातनम् ।
कथं पश्येम हि वयं देवं नारायणं त्विति ॥'

'क्षीरोदधेरुत्तरतः श्वेतद्वीपो महाप्रभुः ।
तत्र नारायणपरा मानवाश्चन्द्रवर्चसः ॥
एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमम् ।
ते सहस्रार्चिषं देवं प्रविशन्ति सनातनम् ॥
अनिन्द्रिया निराहारा अनिष्पन्दाः सुगन्धिनः ।
एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः ॥'

इत्यादिरूपाणां परिहारवाक्यानां बहुत्वादित्यर्थः । 'अयं परिहाररूपवाक्यसन्दर्भो नारद-नारायणसंवादरूपः । तत्र देवदेवं नारायणं श्वेतद्वीपादिनिवासिनं तदेकान्तभक्ताः सम्प्राप्यानन्तकालं यथासुखं विहरन्ति । अन्यदेवताभक्तानां न तादृशी गतिरिति निर्गलितोऽर्थोऽवगम्यते' इति प्राचीनटीका । 'महाविष्णोरवतारे भक्तः कुत्रापि मुच्यते' इत्यन्वयप्रतीतिनिरासायाह– कुत्र **चावतार इति** ॥ काप्यवतारे भक्तोऽपि मुच्यत इति मुक्तिरुच्यते । मुक्तिश्चानन्तफलरूपेति भावः ॥ २१,२२ ॥

यो मद्विहिताचलश्रद्धः स तया श्रद्धया युक्तस्तस्याः ब्रह्मादिरूपेतरदेवतातनोः राधनम् आराधनम् 'प्रति' इति शेषः, ईहते चेष्टते । देवताराधनं निर्वर्तयतीति यावत् । ततो देवतायाः कामान् अभिलषितार्थान् लभते च । कथं देवतान्तरस्य कामितफलस्य दानसामर्थ्यमिति शङ्का-निरायासोक्तम् **मयैवेति** । तासु देवतासु स्थित्वा अहमेव कामितं ददामीति भावः । तथा चाहुः–

'तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तिप्रबोधकः ।
एक एव महाविष्णुः कुरुते सर्वमञ्जसा ॥' इति ॥ २२ ॥

**भावदीपिका (श्री.टि.)**– भाष्ये भगवद्भक्तानामन्तवत् फलं न सम्भवतीत्यत्र 'मुक्तश्च कां गतिम्' इति प्रमाणान्तरमिति मन्तव्यम् । ननु परिहारवाक्योदाहरणं कस्मान्न कृतमित्यत आह–

बहुत्वादिति ॥ अत एव 'सन्दर्भात्' इत्युक्तमिति भावः । **आहेति** ॥ अवतारभक्तानामप्यनन्तफलवत्त्वमेवेत्याहेत्यर्थः । **कुत्रचेति** ॥ यस्मिन् कस्मिन्नप्यवतार इत्यर्थः ॥ २१,२२ ॥

**अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।**
**देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥**

**भावरत्नकोशः (सु.टि.)–** त्वत्तः प्राप्तफलानाम् इतरदेवताः प्रतिपद्यमानानां 'हृतज्ञानाः' इति निन्दनं तर्हि किमिति क्रियते इत्यत उच्यते **अन्तवत्त्विति** । विनाश्येव तेषां तत् इतरदेवताभिः प्राप्यं फलम् अल्पमेधसां क्षुद्रफल्गुबुद्धीनामिति हेत्वर्थगर्भम् । कथमन्तवत्त्वमित्यत उक्तम् देवानिति । देवान् यजन्त इति देवयजः ते देवान् यान्ति । मद्भक्ताः ममानन्तफलदत्वज्ञानवन्तस्तु मामेव यान्ति । अपिशब्दः 'आनुमानिकमप्येकेषाम्' इत्यादाविव एवशब्दार्थः ॥ २३ ॥

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥**

## भाष्यम्

**को विशेषस्तवान्येभ्यः? इत्यत आह– अव्यक्तमिति ॥ कार्यदेहादिवर्जितम् । तद्वान् इव प्रतीयस इत्यत आह– व्यक्तिमापन्नमिति ॥ कार्यदेहाद्यापन्नम् ॥**

भावप्रदीपिका (प.टी.)– नन्वेवं ब्रह्मादिभक्तानां क्षयिष्णुफलत्वेऽपि त्वद्भक्तानां क्षयिष्णुफलत्वमित्यत्र तव को विशेषः ? इत्याशङ्कां परिहर्तुमुत्तरश्लोकाद्यपादमवतार्य व्याचष्टे– **क इति** । ब्रह्मादीनां कार्यदेहादिमत्त्वाद्युक्तं तद्भक्तानां क्षयिष्णुफलत्वम् । मम तदभावात् मद्भक्तानामनन्ततेत्यर्थः । यदि कार्यदेहादिशून्यो भवान्, तर्हि कथं तथा प्रतीयते ? इत्याशङ्कोत्तरत्वेन श्लोकमवतार्य सप्रमाणकं व्याचष्टे– **तद्वानिति** ॥

भावप्रकाशिका (न.टी.)– ननु देहवत्त्वेनान्तवत्त्वाद्देवनान्तद्यजान्तानेव प्राप्तानां फलमन्तवच्चेत्, भगवतोऽपि देहवत्त्वाविशेषादयं दोषः किं न स्यात् ? इति भावेनाशङ्क्य,

श्लोकः २४

अकार्यदेहत्वान्नायं दोष इत्युत्तरश्लोकस्थाव्यक्तशब्देन परिहरति— **क इति** । कथं तर्हि कंसादयः कार्यदेहवन्तमिव पश्यन्ति ? इत्याशङ्क्य, बह्वागमविरुद्धत्वात् भ्रान्ता एव त इत्येवं श्लोकशेषमवतार्य व्याचष्टे— **तदित्यादिना** ॥

**प्रमेयदीपिका (ज.टी.)**– **अव्यक्तम्** इति श्लोकस्य प्रकृतेन साक्षात् सङ्गत्यभावात् तं सङ्गमयितुमाह — **क इति**॥ अन्येभ्यः ब्रह्मादिभ्यः । 'येन तान् प्राप्तानामन्तवत्फलत्वेऽपि त्वां प्राप्तानामनन्तफलता' इति शङ्का शेषः । कथमनेनोक्तशङ्कापरिहार इत्यत आह— **कार्येति** ॥ अनेन यथाश्रुतं पदं पठित्वा व्याख्यातम् । वस्तुतस्तु 'अव्यक्तं माम्' इत्यनुवादात् 'अव्यक्तोऽहम्' इति यत्सिद्धं तस्येदं व्याख्यानमिति ज्ञातव्यम् । इदानीमुत्तरस्य सङ्गतिमाह— **तद्वानिति** ॥ कार्यदेहादिमान् इवेति मृदूक्तिः, वस्तुतस्त्वेवेति । 'अतो न तद्वर्जितः' इति शेषः । प्रकृतोपयोगितया व्याचष्टे— **कार्येति** ॥

**भावबोधः (र.टि.)**– ॥ **यथाश्रुतमिति** । 'अव्यक्तोऽह'मिति विधायकवाक्यनुवादान्यथानुपपत्त्या अर्थतः सिद्धमिति प्रथमान्तपदं मुखतो न श्रुतमित्यर्थः । प्रतीतिश्चाज्ञानमूलेत्यनेन 'अबुद्धयः' 'मन्यन्ते' इतिपदद्वयमुक्तार्थं भवति । ननु याथार्थ्यस्य प्रमाणधर्मत्वात् कथमर्थगतत्वमित्यत आह– **प्रमाणेति** ॥ २३,२४ ॥

**भावदीपः (रा.टि.)**– भाष्ये 'अव्यक्तम् 'इति प्रतीकग्रहणात् 'कार्यदेहवर्जितम्' इति व्याख्यैव युक्ता, प्रथमान्तव्याख्या त्वयुक्ता । 'अव्यक्तः' इति विधायकपदाभावादिति हृद्याशङ्क्य चार्थलब्धस्येयं व्याख्येत्याह– **अनेनेत्यादिना** ॥ आक्षेपलाभायाऽह– इति **मृदूक्तिरित्यादि** ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **प्रकृतेन** अन्यदेवताभक्तानाम् अन्तवत्फलम्, मद्भक्तानामनन्तरमिति पूर्वप्रकृतेन । मुखतः सङ्गत्यनवभासात् 'साक्षात्' इत्युक्तम् । **तत्** प्रकृतं वचनम्, प्रकृतं वा । 'अन्तवत्फलत्वादि' इति पाठे तु आदिशब्देनाल्पमेधस्त्वग्रह इति आहुः । **'अनन्तफलता'** इति बहुव्रीहिः । **अनेन** 'कार्यदेहादिवर्जितः' इति भाष्येण । **यथाश्रुतम्** 'अव्यक्तम्' इति द्वितीयाविभक्त्यन्तं गीतापदं व्याख्यातं प्रातिपदिकार्थवर्णनेन । गीताऽऽनुगुण्याद् द्वितीयान्ततया भाषणमेवोचितम्, न तु प्रथमान्ततयेत्यत उक्तं– **वस्तुतस्त्विति** ॥ 'अबुद्धयो अव्यक्तं मां मन्यन्ते'

इत्यन्वययोगादनुवादोऽयमिति तावद् वक्तव्यम् । अनुवादश्च पुरोवादसापेक्षः । न च 'अव्यक्तोऽहम्' इत्येवमाकारकं पुरोवादवाक्यमितःपूर्वं श्रुतमस्ति । तदभावे च को विशेषस्तवान्येभ्य इति शङ्का न शाम्यति । सति तु तस्मिन् शाम्यति । अतोऽनुवादेन विनोक्तशङ्कायाः परिहाराभावाद् 'अव्यक्तोऽहम्, इतरे त्वतथाविधाः' इत्यतो युक्ते फलस्यानन्ततासान्तते इति परिहारो गीताचार्याभिप्रेत इति वक्तव्यम् । अत्र च'अव्यक्तमपि मां व्यक्तिमापन्नं मन्यन्ते' इत्यनुवादो ज्ञापकः । तदन्यथानुपपत्त्या च यत्सिद्धं 'अव्यक्तोऽहम्' इति वाक्यं प्रथमान्तम्, तस्य कार्यदेहादिवर्जित इति व्याख्यानं युक्तमेवेति भावः । यद्वक्ष्यति 'न तद्वर्जितः' इति शेष इति ।

'अव्यक्तमिति कार्यदेहादिवर्जितम्' इति भाष्यपाठो भूम्ना लक्ष्यते । तत्र 'अव्यक्तं माम्' इत्यनुवादाद् 'अव्यक्तोऽहम्' इति यत्सिद्धं तस्यैव व्याख्यानम् 'कार्यदेहादिवर्जितः' इति कार्यम् । 'तद्वानिव प्रतीयसे' इति वक्ष्यमाणप्रथमान्ताक्षेपानुगुण्यादित्यत आह– **अनेनेति** ।। यथाश्रुतं गीतागतम् 'अव्यक्तम्' इति द्वितीयान्तमेव पदं 'कार्यदेहादिवर्जितम्' इति द्वितीयान्तपदेन भाष्ये व्याख्यातमित्यर्थः । तथाऽप्युक्तशङ्कापरिहारो न स्फुटप्रतिभासः ? इत्यतो द्वितीयान्तभाष्यभावमाह– **वस्तुतस्त्विति** ।। तस्येदं व्याख्यानं 'तात्पर्यगत्या' इति योज्यमित्यपि व्याचक्षते । कार्यदेहादिमत्सादृश्यप्रतीतावपि कथं तद्वर्जितत्वाक्षेपः । विरोधाभावादित्यत उक्तम्– **मृदूक्तिरिति** ।। आक्षेपपरत्वस्फोरणाय वस्तुतस्त्विति । 'तद्वानेव प्रतीयसे' इति निर्गलितस्य साध्यमाह– **अत इति** ।।

**भावदीपिका (श्री.टि.)**– ।। **यथाश्रुतं** द्वितीयान्तमव्यक्तपदम् । **पठित्वा** 'अव्यक्तम्' इति प्रतीग्रहणेन । **व्याख्यानमिति** ।। 'कार्यदेहादिवर्जितम्' इत्यनेनेत्यर्थः । यत् विधिरूपं वाक्यम् । **तस्येदमिति** ।। ततश्च 'कार्यदेहादिवर्जितम्' इति वाक्यविन्यासो द्रष्टव्यः । एवं विधिवाक्याध्याहारे 'को विशेषस्तवान्येभ्यः' इति शङ्कापरिहारहेतुः कार्यदेहराहित्यरूपो विशेषोऽभिहितो भवति । अन्यथा 'अव्यक्तम्' इत्याद्यसङ्गतप्रयोगोक्त्या शङ्कापरिहारालाभादित्याशयः । **एवेतीति** ।। तथा च कार्यदेहादिमानेव प्रतीयसे यतः, अतः कार्यदेहादिवर्जितत्वं यत् 'अव्यक्तोऽहम्' इत्यनेनोक्तं तदसदित्यर्थः । **कार्येतीति** ।। तथा च 'अव्यक्तं मां व्यक्तिमापन्नमबुद्धयो मन्यन्ते, कार्यदेहादिमत्त्वप्रतीतिरज्ञानमूला' इति गीतार्थो द्रष्टव्यः ।।

श्लोकः २४

# भाष्यम्

**तच्चोक्तम्– 'सदसतः परम्' 'न तस्य कार्यम्' (श्वे.उ.६.८), 'अपाणि-पादः' (श्वेत.उ.३.१९) 'आनन्ददेहं पुरुषं मन्यन्ते गौणदेहिकम्' इत्यादौ । भावं याथार्थ्यम् । तथाऽब्रवीत् (च) । 'याथातथ्यमजानन्तः परं तस्य विमोहिताः' इत्यादि ॥ २४ ॥**

भावप्रदीपिका (प.टी.)– सदसतः परम् इत्येतदेव स्पष्टयते न तस्येति । एतच्छ्रुतिभ्यो देहाभाव एव प्राप्त इत्यत आह– **आनन्देति** । 'भाव'शब्दस्य विवक्षितार्थमुक्त्वा तदन्वयं प्रमाणेनैवाह **भावमिति** ॥ २४ ॥

भावप्रकाशिका (न.टी.)– सच्चासच्च यस्य यस्मिन् वा देहरूपेणासौ सदसत् ततः परं पाञ्चभौतिकदेहात् जीवजातात् परमित्यर्थः । नन्वेतैर्वाक्यैरदेहत्वमेव स्यादित्यत आह– **आनन्देति** । याथार्थ्यं याथार्थ्यज्ञानरूपत्वं भगवतः, तदेव हि तस्य परम् अव्ययम् अनुत्तमं कार्यदेहाद्यनाप्तौ कारणम् । तदुक्तं श्रीभागवते

'देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः ।
अविलुप्तावबोधात्मा स युज्येताजया कथम्' इति ॥ २४ ॥

प्रमेयदीपिका (ज.टी.)– भगवतः कार्यदेहादिवर्जितत्वं तद्वत्ताप्रतीतिश्चाज्ञानमूलेत्येतत् कुतः? येन वाक्यद्वयम् उक्तार्थं स्यादित्यतोऽर्थद्वये क्रमेण प्रमाणान्याह– **तच्चेति** ॥ 'कार्यात् कारणाच्चेदमपरं रूपं परं तु रूपमजानन्तः' इति प्रतीतिनिरासार्थमाह– **भावमिति** ॥ याथार्थ्यं प्रमाणाव्यभिचरितस्वरूपम् । अत एव **परम्** । कुतोऽयमर्थः? समाख्यानादित्याह– **तथेति** ॥ यद्यप्ययमर्थः 'त्रिभिः'(७. १३) इत्यत्रोक्तः,तथाऽपि प्रसङ्गात् पुनरुक्त इत्यदोषः ॥ २४ ॥

भावदीपः (रा.टि.)– पूर्वार्धतात्पर्यं निष्कृष्यानुवदति– **भगवत इत्यादिना** ॥ वाक्यद्वय-मिति ॥ 'अव्यक्तं माम्' इति एकम्, 'व्यक्तिम्' इत्याद्यपरमिति वा, 'अव्यक्तोऽहम्' इत्यर्थतः सिद्धमेकम्, यथाश्रुतमन्यदिति वेति ज्ञेयम् ॥ याथार्थ्यस्य प्रमाणधर्मत्वात् 'मम' इत्युक्तार्थस्य कथमित्यतः तद्घटयति – **प्रमाणेति** ॥ प्रमाणं यथा गृह्णाति तथास्थितस्वरूपमित्यर्थः ॥

**परमिति** ॥ विलक्षणमित्यर्थः ॥ **प्रसङ्गादिति** ॥ ब्रह्मादिप्राप्तेः अन्तवत्फलम्, भगवत्प्राप्ते-रनन्तफलमित्युक्तौ को विशेषस्तेभ्यस्तवेति चोद्यनिरासस्य प्रसक्तत्वादित्यर्थः ॥ **अत एवेति** ॥ मायाया उपायविशेषत्वादेवेत्यर्थः ॥ २४ ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **प्रकृतेति** ॥ 'प्रादुर्भावं प्राप्तम्' इत्यस्य प्रकृतोपयोगादिति भावः । **तद्धत्ताप्रतीतिः** तद्धत्ताप्रकारकप्रतीतिः । **वाक्यद्वयम्** अनुवादानुमितपुरोवादरूपम्, व्यक्ति-मापन्नं मन्यन्त इति चेति वाक्यद्वयम् । द्वन्द्वैकवद्भावमभिसन्धाय सदसच्छब्दार्थं कथयति **कार्या-त्कारणाच्चेति । परं** विलक्षणं कार्यकारणवर्जितमित्यर्थः । 'सदसतः पाञ्चभौतिकदेहाद् जीवजातात् पर'मिति प्राचीनटीका ।

भाष्ये 'कार्यं प्रकृतिकार्यं शरीरं न विद्यते' इति कार्यदेहवर्जितत्वे मानान्तरम् । **अपाणिपादः** प्रकृतिकार्यभूतपाणिपादवर्जित इत्यप्युक्तार्थे मानान्तरम् । **'गौणदैहिकम्'** इत्युभयपदवृद्धिः । 'प्रकृतिगुणकार्यदेहवन्तं मन्यन्ते' इत्येतत्तु कार्यदेहवर्जितत्वे, तद्धत्ताप्रतीतेरज्ञानमूलत्वे च प्रमाणम् । इति **प्रतीतीति** । व्यक्तिमापन्नमबुद्धयो मन्यन्त इति पूर्वार्धोक्तमपरम्, लीलाविग्रहादिलक्षणं सोपाधिकं रूपं परन्तु रूपमनौपाधिकं ममाव्ययमजानन्तः इति प्रतीतीत्यर्थः । तथा च 'परं भावं परमात्मस्वरूपमजानन्तः' इति सङ्करभाष्यस्य व्याख्याता'सोपाधिकनिरुपाधिकभावाववोधार्थम्' इत्यादि ॥ निरसनीया च सा प्रतीतिः, भगवतः सोपाधिकनिरुपाधिकभावद्वयाङ्गीकारस्य बुहमानविरुद्धत्वादिति भावेन भावशब्दस्य विवक्षितमर्थमाहेत्यर्थः ।

प्रमाणधर्मो याथार्थ्यं भगवतः कथं धर्म इत्यत आह– **प्रमाणेति** ॥ यथार्थस्य यथावस्थितज्ञेय-विषयीकारिणः प्रमाणस्य यो भावः अर्थाव्यभिचारित्वम्, तदेव याथार्थ्यं नाम । तच्च प्रमाण-विषयीभूते भगवति प्रमाणाव्यभिचरितत्वस्वरूपेणोपलक्ष्यत इति भाव इति केचित् । अपरे तु यथावस्थितोऽर्थो यथार्थः, 'सुप्सुपा' इति समासः । तस्य भावः याथार्थ्यम् । कथं यथावस्थितत्व-मर्थस्येत्यत उक्तम्– **प्रमाणाव्यभिचरितत्वस्वरूपमिति** ॥ अनेनैव भाष्ये 'याथातथ्यम्' इति समाख्याऽनुसाराद् 'याथात्म्यम्' इति वक्तव्येऽपि, 'याथार्थ्यम्' इत्युक्तिप्रयोजनमपि सूचितम् । प्रमाणप्रमितत्वस्यापि तेन सूचनात् । इदमपरं रूपम्, परन्तु रूपमजानन्त इति प्रतीतिं निरसितु-माह– **अत एव परमिति** ॥ कार्यदेहवर्जितत्वादेव परम्, न तु पररीत्याऽनौपाधिकस्वरूपत्वात्

परमित्यर्थः । भगवत औपाधिकानौपाधिकरूपद्वयाभावादिति भावः । उत्तरमाह– **समाख्यानादिति ॥ प्रसङ्गादिति ।** ब्रह्मादिप्राप्तेरन्तवदेव फलम्, मत्प्राप्तेः फलमनन्तमित्युक्ते कस्तव तादृशो विशेष इति कृतचोद्यनिरासस्य कर्तव्यत्वेन प्रसक्तत्वादित्यर्थः ॥

को विशेषस्तवान्येभ्यो ब्रह्मादिभ्यः । येन तान् प्राप्तानाम् अन्तवत्फलवत्त्वम्, त्वां प्राप्तानाम् अनन्तफलता, इत्यत उच्यते अव्यक्तमिति । अबुद्धयः अज्ञानिनः, वस्तुतः अव्यक्तं कार्यदेहेन्द्रियवर्जितम्, अत एव परं विलक्षणं व्यक्तिं कार्यदेहादिकम् आपन्नं मन्यन्ते । यतो मम अनुत्तमम् उत्तमवर्जितम् अव्ययं भावं प्रमाणाव्यभिचरितत्वस्वरूपम् अजानन्त इति । स्वतः कार्यदेहादिवर्जितस्यापि भगवतः तद्वत्ताप्रतीतिरज्ञानमूलेत्यभिसन्दधता कार्यदेहादिराहित्यं तद्वद्भ्यो ब्रह्मादिभ्यो मम विशेष इति विभावितं भवति । यद्यपि अयमर्थः 'त्रिभिः' इत्यत्रोक्तः तथाऽपि प्रसङ्गात् पुनरुक्त इत्यदोषः ॥ २४ ॥

**भावदीपिका (श्री.टि.)– ॥ वाक्यद्वयमिति ॥** 'अव्यक्तोऽहम्' इति विधिवाक्यम्, 'अव्यक्तम्' इत्याद्यनुवादवाक्यं चेत्यर्थः । भाष्ये – 'आनन्ददेहं पुरुषं मन्यन्ते गौणदैहिकम्' इत्यनेन तद्वत्ताप्रतीतिरज्ञानमूलेत्युक्तं भवतीति द्रष्टव्यम् ॥ 'परं तु रूपम्' इति 'परं भावम्' इति शब्दार्थकथनम् । ननु प्रमाणधर्मस्य यथास्थितार्थज्ञेयविषयीकारित्वरूपयाथार्थ्यस्य कथमर्थगतत्वमित्यतो व्याचष्टे– **प्रमाणेति ॥ अयमर्थः** 'अव्यक्तम्' इति श्लोकोक्तार्थः ॥ **प्रसङ्गादिति ॥** ब्रह्मादिभक्तानामन्तवत्फलस्य, भगवद्भक्तानाम् अनन्तपलस्य चाभिधाने तत्प्रसङ्गात् 'को विशेषः' इति शङ्काप्राप्तौ तत्परिज्ञानस्य पुनरनेनाच्यमानत्वादित्यर्थः ॥ २४ ॥

**भावप्रकाशः (कृ.टि.)–** ननु 'अव्यक्तं मा'मित्यनुवादाद् 'अव्यक्तोऽह'मिति यत्सिद्धं तस्यैव व्याख्यानं कार्यम् । तद्वानिव प्रतीयस इति प्रथमान्ततया वक्ष्यमाणाक्षेपानुगुण्यादित्यत आह– **अनेनेति ॥** ननु कार्यदेहादिमत्सादृश्यप्रकारकप्रतीत्या कथं तद्वर्जितत्वाक्षेपः । विरोधित्वादित्यत आह– **इवेतीति ॥ अज्ञानमूलेति ॥** अनेन मामबुद्धयो मन्यन्त इत्येतद्व्याख्यातम् । ननु याथार्थ्यस्य प्रमाणधर्मत्वात् कथमर्थगतत्वमित्यत आह– **प्रमाणेति ॥** यथाभूतोऽर्थो यथार्थः । 'सुप्सुपा' इति समासः । ततः स्वार्थे ष्यञ्नि सत्युक्तार्थलाभ इति भावः ॥ २४ ॥

श्लोकः २५

**नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥**

## भाष्यम्

**अज्ञानं च मदिच्छयेत्याह– नाहमिति ॥ योगेन सामर्थ्योपायेन । मायया च । मयैव मूढो नाभिजानाति । तथा हि पाद्मे–**

**'आत्मनः प्रावृतिं चैव लोकचित्तस्य बन्धनम् ।**
**स्वसामर्थ्येन देव्या च कुरुते स महेश्वरः' इति च ॥ २५ ॥**

भावप्रदीपिका (प.टी.)– ननु त्वामविजानताम् अज्ञानमाहर्तुमसामर्थ्यात् कथमव्यक्तत्वं तव? इत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतार्य सप्रमाणकं व्याचष्टे– **अज्ञानमिति** ॥ २५ ॥

भावप्रकाशिका (न.टी.)– ननु स्वकार्यं देहं मन्यमानानामज्ञानं निवर्तयितुमशक्तः कथमानन्ददेहः स्यात् ? इत्याशङ्कापरिहारायोत्तरं श्लोकमवतार्य सप्रमाणकं व्याचष्टे– **अज्ञानं चेति** । 'युज्यते येन योगोऽसावुपायः शक्तिरेव च' इत्यभिधानात् सामर्थ्योपायौ योगशब्दार्थौ । अत्र तु सामर्थ्यमेवोपायः ॥ २५ ॥

प्रमेयदीपिका (ज.टी.)– तथाऽपि 'नाहं प्रकाशः' इति पुनरुक्तिरित्यतः तात्पर्यमाह– **अज्ञानं चेति** ॥ येनाज्ञानेन मामन्यथा मन्यन्ते तदज्ञानं च मदिच्छाधीनमेव, न स्वतन्त्रम् । येन तया निन्दया मम खेदः स्यादिति भावः । 'योग एव माया' इति व्याख्यानमसदिति भावेनाऽह– **योगेनेति** ॥ सामर्थ्यमेवोपायः ॥

'युज्यते येन योगोऽसावुपायश्शक्तिरेव च' इति वचनाद्योगशब्दस्योभयार्थत्वेन द्वन्द्वैकवद्भावः किं न स्यात्? इति चेन्न । मायया च इत्यस्य वैयर्थ्यापत्तेः । तस्या अप्युपायविशेषत्वात् । अत एवोपायार्थत्वं गृहीत्वा सामार्थ्येति तद्व्याख्यानं कृतम् । इदं तात्पर्यं श्लोके न प्रतीयते? इत्यत आह– **मयैवेति** ॥ उक्तार्थस्थापनाय पुराणसम्मतिमाह– **तथेति** ॥

भावबोधः (र.टि.)– 'सामर्थ्यमेवोपाय इति' स्वकृतभाष्यव्याख्यानमेवाक्षिप्य समाधत्ते– **युज्यते येनेत्यादिना । अत एवेति** । यतः 'उपायेन' इत्येवोक्ते मायाया अप्युपायत्वेन योगशब्देनैव

तद्ग्रहणप्राप्तौ 'माया' इति व्यर्थं स्यात् । अतोऽनेन योगशब्देन भगवत्सामर्थ्यरूपोपायविशेषस्यैव ग्रहणम् । न देव्याख्यानायासामर्थ्याद्युपायमात्रग्रहणमिति दर्शयितुं सामर्थ्येति व्याख्यानं कृत-मित्यर्थः ॥ २५ ॥

**भावदीपः (रा.टि.)**– ॥ **उपायार्थत्वं** योगपदस्येति योज्यम् ॥ शङ्कते– **युज्यत इत्यादिना** ॥ **उभयेति** ॥ शक्त्युपायरूपोभयेत्यर्थः ॥ **द्वन्द्वैकवद्भाव इति** ॥ सामर्थ्योपायेनेति भाष्य इति योज्यम् ॥ २५ ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **पुनरुक्तिरिति** ॥ 'त्रिभिर्गुणमयैर्भावैर्मोहितं जगन्नाभिजानाति' इति भगवतो जगदज्ञेयत्वस्य पूर्वमुक्तत्वादिति भावः । अज्ञानस्य भगवदधीनत्वोक्तेः प्रकृतासङ्गतत्वं परिहर्तुं भाष्यभावमाह– **येनाज्ञानेनेति** ॥ चशब्दोऽवधारणार्थोऽपि इति भावेन तद्व्यावर्त्यमुक्तम्– **न स्वतन्त्रमिति** । 'योगो युक्तिः, सैव माया योगमाया' इति सङ्कङ्क रोक्तेराह– **इति व्याख्यान-मिति** ॥ सामर्थ्यमेवोपायं इत्युक्तिसमर्थनायाह– **युज्यते येनेति** ॥ इति वचनाद्योगशब्दस्य सामर्थ्यमुपायश्चेत्युभयार्थत्वाद् भाष्ये एकवचनं द्वन्द्वैकवद्भावाभिप्रायेणेत्यस्त्विति शङ्कते– **'युज्यत इति' वा** ॥ ननु मायायाः समावरणत्वं च वक्तुं तदुक्तिरित्यत आह– **तस्या अपीति** ॥ मायाया इत्यर्थः । उपायविशेषत्वात् अप्रकाशोपायविशेषत्वाद् भाष्ये पुनः 'मायया' इति वचनं व्यर्थमेवेत्यर्थः ।

**अत एव** यतः 'उपायेन' इत्युक्तौ 'मायया' इत्यस्य वैयर्थ्यम्, अत एव योगशव्द-स्योपायार्थत्वग्रहणेन मायाया अप्युपायत्वेन प्राप्तिसम्भवात् तद्व्युदासस्फोरणाय 'सामर्थ्यम्' इत्यनेनोपायो विवृत इत्यर्थः । **इदम्** 'अज्ञानं च मदिच्छया' इति भाषितम् । उत्तरार्धसङ्गतये 'मयैव' इति वदता भाष्यकृता अहमेव मोहने, तत्कृतानभिज्ञाने च कर्तेत्यतो अज्ञानिकृतनिन्दया न मम खेदप्रसक्तिरिति तात्पर्यमस्मिन्नेव श्लोके प्रत्याहतमिति भावः । भाष्ये **आत्मनः** स्वात्मनः **प्रावृतिं** प्रावरणं **स्वसामर्थ्येन** लोकचित्तस्य **बन्धनं** याथात्म्यावगाहनशक्तिकुण्ठनं मायाऽभि-मानिन्या दुर्गादेव्या च **स महेश्वरः कुरुत** इति वचनेनैव 'योग एव माया' इति व्याख्यानमपि निरस्तमिति भावः ॥

येनाज्ञानेन मामन्यथा मन्यन्ते तदज्ञानं तदिच्छाधीनमेव, न स्वतन्त्रम्, येन तया निन्दया मम खेदः स्यादिति भावेनोच्यते– **नाहमिति** । योगः स्वसामर्थ्यलक्षण उपायः, माया देवी च ताभ्यां

समावृतः सञ्छन्नः अहं सर्वस्य लोकस्य न प्रकाशः काशतेः कर्मणि घञ् । कस्यचिदेव भक्तस्य प्रकाशो भवामीति 'न सर्वस्य' इत्युक्तम् । स्वसामर्थ्येन स्वात्मनः प्रावरणं मायादेव्या च लोकचित्तस्य बन्धनं यतोऽहमेव करोमि, अतो मयैव मूढोऽयं लोको अजमव्ययं जन्मापायहीनं मां नाभिजानाति ॥ २५ ॥

**भावदीपिका (श्री.टि.)–** ॥ **येन तथेति** ॥ तथा च मदधीनाज्ञानमूलकतन्निन्दया न मम खेद इति भावः ॥ **सामर्थ्यमेवोपाय** इति ॥ द्वन्द्वाभिप्राये 'सामर्थ्योपायाभ्याम्' इति स्यादिति भावः। 'सामर्थ्यमेवोपाय' इति व्याख्यानमेवाक्षिप्य समाधत्ते– **युज्यत इत्यादिना** ॥ **इति वचनादिति** ॥ गीतातात्पर्योदाहृतवचनादित्यर्थः । युज्यते उपेयं सम्भवतीत्युपायो योगः ॥ शक्तिश्च युज्यते शक्यमनयेति योग इत्यर्थः । **उभयार्थत्वेनेति** ॥ उपायसामर्थ्योभयार्थत्वेनेत्यर्थः । तर्ह्येक-वचनानुपपत्तिरित्यत आह– **द्वन्द्वैकवद्भाव इति** ॥ कुत इत्यत आह– **तस्या अपीति** ॥ मायाया अपीत्यर्थः । तथा चोपायशब्देनैव तस्याः प्राप्तत्वात् पुनः 'मायया च' इति भाष्यमयुक्तं स्यादिति भावः । **अत एवेति** ॥ 'उपायेन' इत्येवोक्तौ मायाया अप्युपायत्वेन योगशब्देनैव गृहीतत्वात् पुनः 'मायया' इति व्यर्थं स्यादिति यतः, अत एव योगशब्दस्य सामान्येनोपायमात्रवाचित्वमुक्त्वा, स एवोपायो भगवत्सामर्थ्यरूपविशेषपरतया व्याख्यातमित्यर्थः । **इदं तात्पर्यमिति** ॥ 'अज्ञानं च मदिच्छया' इति तात्पर्यमित्यर्थः । प्रमाणे 'देव्या च' इत्युक्त्या 'मायया' इति भाष्यस्य 'दुर्गा-देव्या' इत्यर्थो द्रष्टव्यः । गीतायां योगमायासमावृतत्वं मूढलोकविशेषणमिति ज्ञातव्यम् ॥ २५ ॥

**भावप्रकाशः (कृ.टि.)–** पूर्वेण सङ्गतिमाह– **येन ज्ञानेनेति** ॥ सामर्थ्यमेवोपाय इति स्वव्याख्यां समर्थयितुमाह– **युज्यत इति** ॥ एकवचनोपपत्त्यर्थम् 'एकवद्भाव' इत्युक्तम् । **अत एवेति** । यत 'उपायेन' इत्येवोक्तौ 'मायया' इत्यस्य वैयर्थ्यमत एवेत्यर्थः । **इदं तात्पर्यमिति** । 'अज्ञानं च मदिच्छया' इति तात्पर्यमित्यर्थः ॥ २५ ॥

**वेदाहं समतीतानि वर्तमानानि चार्जुन ।**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥**

श्लोकः २६

## भाष्यम्

न च मां माया बध्नातीत्याह– **वेदेति** ॥ **न कश्चन** अतिसमर्थोऽपि स्वसामर्थ्यात्
॥ २६ ॥

भावप्रदीपिका (प.टी.)– ननु यदि मायावरणेन त्वां न जानन्ति, तर्हि तवाप्यज्ञानं स्यात्, यवनिकोभयभागगतवत् इत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतारयति– **न चेति** । ननु भगवज्ज्ञानाभावे मोक्षाभावापत्तेः कथमुच्यते 'मां तु वेद न कश्चन' इति ? इत्यत आह– **न कश्चनेति** ॥ २६ ॥

भावप्रकाशिका (न.टी.)– ननु यदीशस्य स्वमायासमावृतत्वान्न तमन्ये पश्यन्ति, तर्हि तेनैव हेतुना सोऽप्यन्यान् न पश्यत्वित्याशङ्क्य, तां परिहर्तुमत्तरं पादोनं श्लोकमवतारयति– **न चेति** । न च भगवानिवान्यः कश्चिदतिसमर्थोऽप्यवद्धोऽस्तीत्यभिप्रायेणान्त्यपदं व्याचष्टे– **नेति** ॥ २६ ॥

प्रमेयदीपिका (ज.टी.)– अकस्मात् स्वस्य सार्वज्ञं किमित्युच्यते? इत्यत आह– **नेति** ॥ 'यवनिकाद्युभयभागवर्तिनोः परस्पराज्ञानवत्तवापि भूतविषये ज्ञानं न स्यादिति शङ्कानिरासार्थम्' इति शेषः । तथाऽपि **'मां तु वेद न कश्चन'** इति पुनरुक्तमित्यत आह– **न कश्चनेति** ॥ असमर्थो लोको न जानातु । अतिसमर्थस्तु ब्रह्मादिर्ज्ञास्यतीति शङ्कानिरासार्थमेतदुक्तम् । **'कश्चन'** इति विशेषणादिति भावः । तर्हि **'ज्ञानी च भरतर्षभ'** (७।१६) इत्यादिविरोध इत्यत उक्तम्– **स्वेति** ॥ २६ ॥

भावबोधः (र.टि.)– ॥ **यवनिकेति** । जीवं प्रतीश्वरावरकमायायां तदुभयमध्यवर्तित्वेन यवनिकासाम्यमिति भावः ॥ २६ ॥

भावदीपः (रा.टि.)– ॥ **यवनिकादीति** ॥ द्वयोः मध्यगतविवृतप्रसारितपटाद्यावरणं यवनिका । **आदिपदेन** कुड्यादिग्रहः ॥ **इत्यादिविरोध इति** ॥ 'ज्ञानी च मां भजते', 'तेषां ज्ञानी नित्ययुक्तः', प्रियो हि ज्ञानिनः' इत्यादिपूर्वतनग्रन्थविरोधः । 'न कश्चन वेद' इत्युक्त्या ज्ञानिन एव दुर्लभत्वादिति भावः ॥ २६ ॥

श्लोकः २६

**भावरत्नकोशः (सु.टि.)–** एवमपि सर्वज्ञानोक्तेः कथं सङ्गतिरित्यत उक्तम्– **यवनिकेति** ॥ तिरस्करिणीत्यर्थः । जीवं प्रति मायाया ईश्वरकर्मकज्ञानावरणत्वेन तस्या जीवेश्वरमध्यवर्तितया यवनिकासाम्यम् । यवनिका हि पुरुषद्वयमध्यवर्तिनी परस्परज्ञानाच्छादिका दृश्यते । तद्वन्मायाऽपि भगवतो भूतविषयाज्ञानमापादयति किमिति शङ्कानिरासार्थमिति शेषोक्तौ सङ्गतिर्लभ्यत इति भावः । **तथाऽपि** सङ्गतिलाभेऽपि, 'मूढो लोको मां नाभिजानाति' इत्यव्यवहितश्लोक एवास्यार्थस्योक्तत्वात् पुनरभिधानं व्यर्थमिति भावः । तत्सार्थक्यमाह– **इति शङ्कानिरासार्थमिति** ॥ **तर्हि** 'कोऽपि न वेद' इत्युक्तौ, 'ज्ञानी च भरतर्षभ भजते' 'ज्ञानी त्वात्मैव' 'स च मम प्रियः' इत्यादौ भगवज्ज्ञानिन उक्तत्वात् **तद्विरोध** इत्यर्थः । **स्वेतीति** । स्वसामर्थ्यात् कोऽपि जानाति । जानन् कश्चनापि मदनुग्रहेणैव मां जानातीति तात्पर्यान्नोक्तविरोध इति भाष्यभाव इति हृदयम् ॥

यवनिकोभयभागवर्तिनोः परस्पराज्ञानवत् तवापि भूतविषयेऽपि अज्ञानं स्यात् ? इत्याशङ्कानिरासार्थम्, तिरस्करिण्यपि माया न मां बध्नातीत्युच्यते **वेदाहमिति** । भविष्याणि भविष्यन्ति । 'लृटः सद्वा इत्यत्र अकारोऽप्यत्र प्रश्लिष्य व्याख्यायते' इति ऋग्भाष्यटीकारीत्याऽकारान्तत्वं निर्वोढव्यम् । भूतानि वेद जानामि । मायाया मदधीनत्वात् सा मम यथा बन्धिका, तथाकरणे सामर्थ्यसत्त्वाद् भूतविषयकाज्ञानजननी न भवितुमर्हतीति भावः । मया मूढो लोकस्तु न मां वेद । असमर्थो लोको न जानातु, अतिसमर्थस्तु ब्रह्मादिर्ज्ञास्यतीति शङ्कापनोदायोक्तम् कश्चन इति । अतिसमर्थो ब्रह्मादिरपि भगवत्प्रसादमन्तरा स्वसामर्थ्येन न वेद, साकल्येन च न वेद । यदाहुः

> 'यथाऽऽत्मानं हरिर्वेत्ति तथाऽन्ये नैव तं विदुः ।
> जानन्ति किञ्चित् क्रमशो रमाद्यास्तत्प्रसादतः ॥' इति ॥ २६ ॥

**भावदीपिका (श्री.टि.)–** ॥ **यवनिकेति** ॥ जीवं प्रति परमाच्छादकमायया जीवेश्वरोभयमध्यवर्तित्वेन यवनिकासाम्यमिति भावः । **तर्हीति** ॥ यदि 'कश्चन' इति विशेषणसामर्थ्यादतिसमर्थोऽपि ब्रह्मादिर्न मां वेदेत्युक्तौ 'ज्ञानी च' (७.१६) इत्याद्युक्तविरोधः स्यादित्यर्थः ॥२६॥

**भावप्रकाशः (कृ.टि.)–** कथमनेन सङ्गतिलाभ इत्यत आह– **यवनिकेति** ॥ जीवं प्रति ईश्वरावरकमायायाः तदुभयमध्यवर्तित्वेन यवनिकासाम्यं बोध्यम् ॥ २६ ॥

श्लोकः २७

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।**
**सर्वभूतानि सम्मोहं सर्गे यान्ति परन्तप ॥ २७ ॥**

## भाष्यम्

**द्वन्द्वमोहेन** सुखदुःखादिविषयमोहेन । इच्छाद्वेषयोः प्रवृद्धयोर्न हि किञ्चिज्ज्ञातुं शक्यम् ॥

भावप्रदीपिका (प.टी.)– ननु द्वन्द्वमोहादेवाज्ञानं नेश्वरेच्छात इत्याशङ्कोत्तरभूतम् 'इच्छाद्वेषसमुत्थेन' इति श्लोकं व्याचक्षाणः, तावत् 'द्वन्द्वमोह'शब्दार्थमाह– **द्वन्द्वेति** । श्लोकं योजयति–**इच्छेति ॥**

भावप्रकाशिका (न.टी.)– नन्वतिवृद्धेच्छाद्वेषाभ्यामेव सुखदुःखादिविषयज्ञानवद् भगवद्विषयज्ञानसम्भवात् कथमज्ञानं भगवदिच्छया ? इत्याशङ्कापरिहारत्वेनोत्तरं श्लोकं व्याचक्षाणो 'द्वन्द्वमोह'शब्दार्थं तावदाह– **द्वन्द्वेति** । आदिशब्दादिच्छाद्वेषादि । मोहस्येच्छाद्वेषसमुत्थत्वं लोकप्रसिद्धमिति हिशब्देन प्रदर्शयन्, द्वन्द्वमोहसम्मोहयोर्निमित्तनैमित्तिकभावोक्तिः तयोरेकनिमित्तकत्वज्ञापनायेति सूचयन्नज्ञानमेवात्र मोहसम्मोहशब्दार्थ इति सूचयति– **इच्छेति** । किञ्चिदिति सुखदुःखादिकमीश्वरादिकं च । अत इच्छाद्वेषाभिवृद्धिरेवोभयविषयज्ञानमिति भावः ।

प्रमेयदीपिका (ज.टी.)– 'इच्छाद्वेषौ द्वन्द्वम् । तज्जन्यो मोहो द्वन्द्वमोहः । तेन' इति कश्चित्। तदसदिति भावेनाऽऽह– **द्वन्द्वेति** ॥ अन्यथा इच्छाद्वेषसमुत्थेन मोहेनेत्येव स्यादिति भावः । व्याख्यानव्याख्येयभावश्चागतिका गतिः । द्वन्द्वमोहस्य इच्छाद्वेषसमुत्थत्वं कथम्? इत्यत आह– **इच्छेति** ॥ किञ्चित् सुखादिकम् । 'हेयत्वादिना' इति शेषः ॥

भावबोधः (र.टि.)– ननु द्वन्द्वमोहेनेत्येतदिच्छाद्वेषेत्यनेन व्याख्यायते । ततो न दोष इत्यत आह– **व्याख्यानव्याख्येयभावश्चेति** ॥ २७ ॥

भावरत्नकोशः (सु.टि.)– ॥ **कश्चिदिति** ॥ 'इच्छाद्वेषौ द्वन्द्वशब्देनाभिधीयेते, तन्निमित्तो मोहो द्वन्द्वमोहः, तेन' इति भाषमाणः सङ्क र इत्यर्थः । अपव्याख्यानं भाष्यभावोक्त्या दूषयति– **अन्यथेति** । परव्याख्याने इत्यर्थः । नन्विच्छाद्वेषौ द्वन्द्वः, तज्जन्यो मोहो द्वन्द्वमोहः, इतीच्छा-

द्वेषयोर्द्वन्द्वत्वं व्याख्यातुं 'द्वन्द्वमोहेन' इत्येवं व्याख्यानव्याख्येयभावाङ्गीकारेण सङ्क रो द्वन्द्वशब्द-वैयर्थ्यदोषं पर्यहार्षीत् स्वग्रन्थ इत्यत आह– **व्याख्यानेति** ।। **अगतिका गतिः** गत्यन्तरशून्या गमनिका । भाष्योक्तगत्यन्तरे सम्भवति नागतिकं व्याख्यानं युक्तमिति भावः । भाष्यमनूद्यार्थमाह– **किञ्चिदिति** ।। ननु सुखादेर्ज्ञातैकसत्त्वात् कथं तदज्ञानमित्यत उक्तम्– **हेयत्वादिनेति** । इच्छाद्वेषसमुत्थं द्वन्द्वमोहलक्षणमेतत् । 'द्वन्द्वमोहेन' इति तृतीययोक्तं कारणमित्यर्थः ।।

भावप्रकाशिका (न.टी.)– ।। **इत्येव स्यादिति** ।। द्वन्द्वशब्दस्तु व्यर्थमिति भावः । ननु 'इच्छाद्वेषसमुत्थेन' इत्येतदेव 'द्वन्द्वमोहेन' इत्यनेन व्याख्यायत इति न दोष इति चेत्, तत्राह– व्याख्यानेति ।। द्वन्द्वशब्द एवेच्छाद्वेषपदेन व्याख्यायत इत्यत आह– **अगतिका गतिरिति** ।। **गतिरिति** ।। गतिः गमनिका व्याख्या गतिशून्या गमनिकेत्यर्थः । गतिस्त्वस्मद्रीत्याऽस्तीति भावः

## भाष्यम्

**कारणान्तरमेतत् । सर्गे सर्गकाले । आरभ्यैव । शरीरे हि सतीच्छादयः। पूर्वं त्वज्ञानमात्रम् ।। २७ ।।**

भावप्रदीपिका (प.टी.)– पूर्वचोद्यस्य कः परिहारः ? इत्यत आह– **कारणान्तरमिति** । अवान्तरकारणं द्वन्द्वमोहः, हरिरेवाज्ञानस्य मुख्यहेतुरित्यत्र न प्रतीयत इत्यत आह– **सर्ग इति** । कुतो न सर्वदा तत्कारणः ? इत्यत आह– **शरीर इति** । शरीराभावकाल इत्यनाद्य-भावाद्द्वन्द्वमोहस्य, तत्कार्यस्याप्यभावः । अतो न तत्कार्यमज्ञानं तदा । किन्तु परमेश्वरेच्छा-निमित्तकमज्ञानमात्रमित्यर्थः ।। २७ ।।

भावप्रकाशिका (न.टी.)– न चैतावतैतदेव भगवद्विषयाज्ञानकारणम् । किन्त्वे-तत्कारणान्तरमागन्तुकम् । अनादिकारणं तु भगवदिच्छैवेत्यभिप्रायेण 'सर्गे' इति पदमनूद्य व्याचष्टे– **कारणान्तरमित्यादिना** । तदागन्तुकत्वमुपपादयति **शरीरे हीति** । अज्ञानमात्रम् अज्ञानमेव, नेच्छादय इत्यर्थः ।। २७ ।।

प्रमेयदीपिका (ज.टी.)– ननु 'नाहं प्रकाशः' (७.२५) इति भगवतो 'दैवी ह्येपा' (७.१४) इति तदधीनायाः गुणमय्या मायायाश्च मोहकत्वमुक्तम् । तत्कथं भगवद्विषय-

श्लोकः २७

सम्मोहस्येच्छाद्वेपसमुत्थो द्वन्द्वमोहः कारणमुच्यते? इत्यत आह— **कारणान्तरमिति** ॥ इच्छाद्वेषसमुत्थद्वन्द्वमोहलक्षणमेतद् भगवद्विपयस्य सम्मोहस्यावान्तरकारणमुच्यत इत्यर्थः ॥ कुत एतत्? इत्यतः तत्सूचकं पदं पठति— **सर्ग इति** ॥ सर्गः क्रिया । कथं तस्या अधिकरणत्वम्? इत्यतो लक्षणामाश्रित्य व्याचष्टे— **सर्गेति** ॥ तदुत्तरकालं किं तत्र कारणम्? इत्यतः पुनर्लक्षणाश्रयणेनाऽह— **आरभ्येति** ॥ सर्गकालमिति सम्बन्धः । कथमनेनावान्तरकारणत्वं ज्ञायते? इत्यतः सावधारणमेतदित्युक्तम् 'एव' इति ॥

उक्तमुपपादयन्नाह— **शरीर इति** ॥ आदिपदेन द्वेपस्य द्वन्द्वानां च ग्रहणम् । अतः सर्गकालमारभ्यैवैतत् कारणमिति सिद्धम् । एतावता कथमवान्तरकारणत्वसिद्धिः? इत्यत आह— **पूर्वं त्विति** ॥ सर्गात् पूर्वं तु इच्छादिना विनाऽज्ञानमस्त्येव भगवदिच्छाद्यधीनम् । अत एतदवान्तरं कारणमिति सिद्धमित्यर्थः ॥ २७ ॥

**भावदीपः (रा.टि.)**– 'आरभ्य' इत्यस्याकाङ्क्षां पूरयति– **सम्बन्ध इति** ॥ 'आरभ्यैव' इत्येवकारोक्तेः कृत्यं व्यनक्ति– **कथमित्यादिना** ॥ एतदिति भावेन **उक्तमेव** इतिपदमित्यर्थः ॥ 'सावधारणमेतत्' इत्युक्तिमात्रेण कथं परिहारः? इत्यत आह– **उक्तमुपपादयन्निति** ॥ **द्वन्द्वानां चेति** ॥ सुखदुःखलाभालाभादिद्वन्द्वानामित्यर्थः ॥ २७ ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **लक्षणामिति** । क्रियावाचिना सर्गशब्देन तदाधारकाललक्षणामित्यर्थः । **पुनर्लक्षणेति** । सर्गशब्दलक्षितकालेऽप्यनुपपत्त्या तदारम्भक्रिया लक्षणीयेति लक्षितलक्षणेत्यर्थः । **इति सम्बन्ध इति** । 'सप्तम्यन्तस्यापि विपरिणामेन' इति शेषः । एतत् 'आरभ्य' इति पदम् । **इति भावेन** 'एव' इत्युक्तमित्यन्वयः । सर्वं वाक्यं सावधारणमिति न्यायादिति भावः । 'आरभ्य' इत्यस्य सावधारणत्वे कथमुक्तचोद्यपरिहार इत्यत आह– **उक्तमिति** ॥ अवान्तरकारणत्वमित्यर्थः । **उपपादयन्** पूर्वं त्वज्ञानमात्रमित्यनेनोपपादयितुं द्वन्द्वमोहोत्पत्तिप्रकारमाहेत्यर्थः । एतत् इच्छाद्वेषसमुत्थद्वन्द्वमोहलक्षणं–**इच्छादिना विनेति** । भाष्ये मात्रशब्दार्थः । 'इच्छादि' इत्यत्रादिपदेन मायाग्रहः ॥

'नाहं प्रकाशः' इति भगवतः, 'दैवी ह्येषा' इति तदधीनमायायाश्च मोहकत्वमुक्तम् । एवमेव भगवद्विषयसम्मोहस्य इच्छाद्वेषप्रवृद्धिसमुत्थद्वन्द्वमोहोऽप्यवान्तरकारणम् इत्युच्यते इच्छेति ।

द्वन्द्वमोहेन सुखदुःखादिविषयमोहेन, दुःखादिर्यथा हेयः, तथा वैषयिकसुखादिरपि हेय एव। तथाऽपि तस्योपादेयत्वप्रकारकं यज्ज्ञानं तद्रूपमिथ्याज्ञानेनेत्यर्थः । सर्गे सर्गकाले, सर्गमारभ्यैव, सर्गात् पूर्वं त्विच्छादिना विना अज्ञानमस्त्येव । भगवदिच्छाद्यधीनसर्गानन्तरं तु शरीरभावेनेच्छाद्वेषभावात् तदुत्पन्नद्वन्द्वमोहः सम्मोहम् उक्तरूपं प्रत्यवान्तरकारणमित्युक्तं भवति । द्विः सम्बोधनम् अस्यार्थस्यावश्यप्रत्येतव्यत्वज्ञापनाय ।। २७ ।।

**भावदीपिका (श्री.टि.)**– ।। **क्रियेति** ।। सृष्टिरूपक्रियेत्यर्थः । **लक्षणामिति** ।। क्रियावाचिसर्गपदेन तदधिकरणं कालो लक्ष्यत इत्यर्थः । **तदुत्तरकालमिति** ।। स्थितिकाल इत्यर्थः । **पुनरिति** ।। सर्गकालशब्देन तदारम्भो लक्ष्यत इत्यर्थः । **कारणमिति** ।। भगवद्विषयसंमोहस्येच्छाद्वेषसमुत्थो द्वन्द्वमोहः कारणमित्यर्थः । **सर्गात्पूर्वम्** प्रलये । **इच्छादिना विनेति** ।। शरीराद्यभावेनेच्छाद्वेषसमुत्थद्वन्द्वमोहाभावादित्यर्थः । **अज्ञानमस्त्येवेति** ।। भगवदिच्छाद्यधीनं भगवद्विषयमज्ञानमेवास्ति, न मोह इति यतः अत एव सर्गकालमारभ्य शरीरादिके सतीच्छादिप्राप्त्या तत्प्रसक्तद्वन्द्वमोहे सति भगवद्विषयसंमोहो भवतीति तस्यावान्तरकारणत्वं सिद्धमित्यर्थः ।। २७ ।।

**भावप्रकाशः (कृ.टि.)**– ननु 'इच्छाद्वेष' इत्यनेन द्वन्द्वमोहशब्दव्याख्यानात् नोक्तदोष इत्यत आह– **व्याख्यानेति** ।। २७ ।।

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ।। २८ ।।**

## भाष्यम्

विपरीताश्च केचित् सन्तीत्याह– **येषामिति** ।। २८ ।।

**भावप्रकाशिका (न.टी.)**– ननु सर्वभूतानां सम्मोहे कथं चतुर्विधास्त्वं भजन्ते ? कथं च तत्रापि केचित् तमेव शरणं व्रजन्ति ? इत्याशङ्कापरिहारत्वेनोत्तरं श्लोकमवतारयति– **विपरीताश्चेति ।।**

**प्रमेयदीपिका (ज.टी.)**– चतुर्विधाः इत्यनेन गतार्थमुत्तरं वाक्यमित्यत आह– **विपरितारश्चेति** ।। त्वत्प्रपत्तेर्मायातरणकारणत्वात् स्वदोषाद्वा त्वां न प्रपद्यन्त इत्यत्र कथं

**निर्णय इत्यतस्तदुक्तम् । सर्वभूतानि सम्मोहं यान्ति चेल्लुप्तो मुक्तिमार्ग इत्याशङ्क्य चात्र द्वन्द्वमोहरहिताश्च केचित् सन्तीत्याहेत्यर्थः ॥ २८ ॥**

**भावबोधः (र.टि.)**– ॥ **लुप्तो मुक्तिमार्ग इति** ॥ उपदेष्टॄणामभावादित्यर्थः ॥ २८ ॥

**भावदीपः (रा.टि.)**– गतार्थतानिरासायार्थभेदं वक्ति– **त्वत्प्रपत्तेरिति** ॥ 'दैवी ह्येषा' इत्यादि श्लोकद्वयतात्पर्यानुवादः क्रमात् पश्चम्यन्तद्वयेन ॥ **तदुक्तमिति** ॥ 'चतुर्विधाः' इत्याद्युक्त-मित्यर्थः ॥ 'इच्छा' इत्यादि श्लोकार्थानुवादः– **सर्वभूतानीत्यादि** ॥ २८ ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **गतार्थमिति** । 'सुकृतिनो भजन्ते' इति सुकृतिनां भगवद्भजनमुक्तम् । **अत्रापि** 'ते पुण्यकर्माणो भजन्ते' इति वचने पुनरुक्तमित्यर्थः । एतच्चोद्य-निरासायार्थभेदं दर्शयति – **त्वत्प्रपत्तेरिति** ॥ **तदुक्तं** 'चतुर्विधाः' इति उक्तम् । **लुप्तो मुक्तिमार्ग इति** । ज्ञानस्यैव मुक्त्युपायत्वात् सर्वेषां शरीरसङ्ग्रहाद् आरभ्य इच्छाद्वेषसमुत्थद्वन्द्वमोहस्या-वर्जनीयतया उपदेष्टॄणामुपदेश्यानां च ज्ञानाभावप्रसक्त्या कस्यापि मुक्तिर्न स्यादिति भावः । अत्र 'येषां त्वन्तगतं पापम्' इति श्लोके ॥

सर्वभूतानि सम्मोहं यान्ति चेत् लुप्तो मुक्तिमार्ग इत्याशङ्क्य द्वन्द्वमोहरहिताश्च केचित् सन्तीत्युच्यते **येषामिति** । अन्तगतं नाशं प्राप्तम्, 'द्वितीया श्रितातीतपतितगत' इति समासः । द्वन्द्वमोहनिर्मुक्ताः द्वन्द्वविषयमिथ्याज्ञानहीना दृढव्रताः सन्तो मां भजन्ते ॥ २८ ॥

**भावदीपिका (श्री.टि.)**– ॥ **इत्यत्र** इत्युभयकोटिकसंशये । **तदुक्तमिति** ॥ मोहाख्य-स्वदोषादेव न मां प्रपद्यन्ते, न मत्प्रपत्तेर्मायातरणाकारणत्वादिति निर्णायकम् ' न मां दुष्कृतिनः' इत्यादिनोक्तमित्यर्थः । **लुप्तो मुक्तिमार्ग इति** ॥ उपदेष्टॄणामभावादिति भावः ॥ २८ ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **लुप्तो मुक्तिमार्ग इति** । उपदेष्टॄणामभावादिति भावः ॥ २८ ॥

**जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।**
**ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥**

# भाष्यम्

**जरामरणमोक्षाय इत्यन्यत्कामन्यावृत्त्यर्थं मोक्षे सक्तिस्तुत्यर्थं वा । न विधिः । 'मुमुक्षोरमुमुक्षुस्तु वरो ह्येकान्तभक्तिभाक्' इतीतरस्तुतेर्नारदीये । 'नात्यन्तिकम्' इति च ॥**

भावप्रदीपिका (प.टी.)– ननु द्वन्द्वमोहे जनयति (?) सर्वभूतानि सम्मोहं यान्ति तर्हि कथं 'चतुर्विधा भजन्ते' इत्यादीनां (?) कोत्तराय साधनत्वमुक्त्वा 'मामाश्रित्य' इति भगवत्प्रसादस्यापि ज्ञानसाधनत्वमुच्यते **'ते विदुर्युक्तचेतसः' इति ।** अतो ज्ञानभगवत्प्रसाद-मन्तरेणापि कारणं पापक्षयाद्यस्तीति मन्दाशङ्कां परिहरति– **त एव चेति** । पापक्षयादिनापि भगवत्प्रसादवन्त एव 'ममाश्रित्य' इत्युक्ताः विदुः नान्य इत्यर्थः ॥

॥ इति श्रीपद्मनाभभट्टारकविरचितश्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां सप्तमोऽध्यायः ॥

भावप्रकाशिका (न.टी.)– ये तु तमेव शरणमागत्य तद्विपयश्रवणादियत्नं कुर्वन्ति, त एव तेन स्वीकृतत्वात् तत्प्रसादादेव तद्ब्रह्म यथायोग्यं सम्पूर्णं विदुः, तदर्थमेवाध्यात्मादिकं च विदुः । न तु स्वसामर्थ्यादित्यभिप्रेतमर्थं श्लोकद्वयस्य 'त एव च' इत्यादिना प्रकाशयिप्यन् 'जरामरणमोक्षाय' इत्येतत् मोक्षशक्तिस्तुत्यर्थः, अन्त्यकामनिवृत्त्यर्थं वा । न तु मोक्षायैव तं शरणं व्रजेतेत्येतदर्थम्, मुक्तिकामात् तदकामस्यैव परत्वादित्येतत् सप्रमाणकमाह– **जरा इत्यादिना** । नात्यन्तिकं विगणयन्त्यपि ते प्रसादं मुक्तिमपि नेच्छन्तीत्यर्थः । सत्त्व एव सदा सर्वगुणाढ्य एव भगवति एकमनसः पुरुपस्य इन्द्रियदेवानां रूपादिज्ञानलिङ्गकानां श्रुत्युक्तं सर्वं कर्म कुर्वतां तस्मिन्नेव भगवति या वृत्तिः स्वाभाविका न फलस्नेहनिमित्ता, या चाशु लिङ्गशरीरं जरयति– **इति हि मुख्यलक्षणं भक्तेः** । सा चापूर्णभक्तिनिमित्तात् मुक्ते-र्गरीयसीत्यर्थः । ननु मुक्तिमप्यकामयमानानां किं हरिणा ? इत्याशङ्क्याह आह– **चेति** ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां
श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां सप्तमोऽध्यायः ॥

प्रमेयदीपिका (ज.टी.)– **'मां भजन्ते'** इत्युक्तानुवादेन फलमुच्यते । तत्र 'जरामरण-मोक्षाय' इत्यनुक्तस्यानुवादासम्भवादप्राप्तत्वेन विध्यर्थं मद्भजनं च जरामरणमोक्षोद्देशेन

श्लोकः २९

**कार्यमित्येवं प्रतीतिनिरासार्थमाह– जरेति** ॥ लक्षणया स्वर्गादिकामनिवृत्तिरर्थोऽस्येति तथोक्तम् । मोक्षविषया सक्तिः अन्यसक्तेः प्रशस्तेति तत्स्तुत्यर्थं वा । सर्वथा न विधिः । कुतः? इत्यत आह– **मुमुक्षोरिति** ॥ इतरस्यामुमुक्षोर्भक्तस्य । न हि प्रशस्ते सत्यप्रशस्तं नियन्तुं युक्तमिति भावः । 'इति च' 'इतरस्तुतेः' इति सम्बन्धः । प्रकारभेदात् पृथगुक्तिः ॥

**भावबोधः (र.टि.)**– ॥ **लक्षणयेति** ॥ मोक्षकामनायाः स्वर्गादिकामनानिवृत्त्या व्याप्तिरेव शक्यसम्बन्ध इति भावः । **न हि प्रशस्त इति** । जरामरणमोक्षानुद्देशेन भजने प्रशस्ते विद्यमाने तदुद्देशेन भजनमप्रशस्तं न विधातुं युक्तमित्यर्थः ॥

**भावदीपः (रा.टि.)**– अनुवादासम्भवे हेतुः– **अप्राप्तत्वेनेति** ॥ 'विध्यर्थम्' इत्यत्राप्ययं हेतुरन्वेति । विध्यर्थत्वमेव व्यनक्ति– **मद्भजनमित्यादिना** ॥ । 'सर्वथा न विधिः, कुतः' इत्यस्य किमुत्तरमित्यत आह– **नहीति** ॥ । मोक्षमनुद्दिश्य भजने प्रशस्ते तदुद्देशे सत्यप्रशस्तं तदुद्देशेन भजनं विधिरित्यर्थः ॥ **'जरा'** इति श्लोकेन नियन्तुं युक्तमित्यर्थः ॥ **प्रकारेति** ॥ स्तुतिप्रकारभेदान्मोक्षे 'सक्ति' इति वाक्ये अनुक्त्वा पृथगुक्तिरित्यर्थः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **उक्तानुवादेनेति** । 'मां भजन्ते' इति पूर्वोक्तभजनस्य 'मामाश्रित्य यतन्ति' इत्यनुवादेनेत्यर्थः । **फलमुच्यते** 'ते ब्रह्म तद्विदुः' इति फलमुच्यते । विध्यर्थत्वे हेतुः– **अप्राप्तत्वेनेति** । विध्यर्थं 'जरामरणमोक्षाय' इति पदमित्युक्तं विशदयति– **मद्भजनं चेति** । **लक्षणयेति** । जरामरणमोक्षोद्देशेन भगवद्भजनं कार्यमिति हि विधिः परस्याभिमतः । न चासौ युज्यते । मोक्षकामनारहितान् एकान्तिनः प्रत्यस्य विधेरव्यापारात् । अतो मुख्यार्थानुपपत्तौ 'निवृत्तस्वर्गादीतरफलकामनो भगवन्तं भजेत' इति विध्यर्थो वक्तव्यः । स च लक्षणां विना नावगम्यत इति लक्षणाऽऽश्रयणीया । न च शक्यसम्बन्धाभावः । मोक्षकामनायाः स्वर्गादीतरकामनानिवृत्त्या व्याप्तेरेव शक्यसम्बन्धत्वादिति भावः । जरामरणमोक्षकामानां मोक्षकामनारहितानां च स्वर्गादीतरफलकामनासाम्यं शक्यसम्बन्ध इत्यप्याहुः ।

**अस्य** 'जरामरणमोक्षाय' इति पदस्य । सप्तम्यर्थः– **मोक्षविषयेति** । **अन्यसक्तेः** स्वर्गादीतरफलसक्तेः । भाष्यगतेतरशब्दार्थः– **इतरस्यामुमुक्षोर्भक्तस्येति** । 'एकान्तभक्तिभाग्वरः' इति श्रवणादिति भावः । सर्वथा न विधिः कुत इति कृतचोद्यस्य भाष्यारूढमुत्तरमाह– **न हीति** ॥

अनुद्दिष्टमोक्षके भगवद्भजने प्रशस्ते सम्भवति, अप्रशस्तं तदुद्देश्यकं भजनं न विधातुमुचितमित्यर्थः । भाष्ये 'आत्यन्तिकं मुक्तिहेतुम्' इति द्वितीये टीका । 'मुक्तिमपि नेच्छन्ति' इत्यर्थ इति तत्र प्राचीनटीका । ननु भाष्ये 'मुमुक्षोरमुमुक्षुस्तु वरो ह्येकान्तभक्तिभाक्' 'नात्यन्तिकम्' इति चेतरस्तुतेरित्येकवाक्ये कर्तुं शक्येऽपि किमिति 'नात्यन्तिकमिति चेतरस्तुतेः' इति पृथगुक्तिरित्यत आह– **प्रकारभेदादिति ॥ नारदीये** 'वरः' इत्यमुमुक्षुस्तुतिर्मुख्यत आवेद्यते । भागवते च 'न विगणयति' इत्यनेनार्थात् तत्स्तुतिरुन्नीयत इति प्रकारभेदात् पृथग्वचनद्वयोदाहरणमित्यर्थः ।

**भावदीपिका (श्री.टि.)– ॥ उक्तानुवादेनेति** ॥ इत्युक्तस्यानुवादेनेत्यर्थः । **फलमुच्यते** 'जरामरणमोक्षायेति श्लोकेन' इति शेषः । तत्र पूर्वार्धेनानुवादः, उत्तरार्धेन फलकथनमिति मन्तव्यम् । अप्राप्तत्वेनानुवादासम्भवादित्यन्वयः । विधिप्रकारमेव दर्शयति– **मद्भजनं चेति ॥ लक्षणयेति** ॥ मोक्षकामनायाः स्वर्गादिकामनानिवृत्त्या व्याप्तिरेव शक्यसम्बन्ध इति भावः । **अन्यसक्तेः** स्वर्गादिविषयकसक्तेः सकाशात् । **अमुमुक्षोः** मोक्षकामनारहितस्य । ननु कथमनेन विध्यसम्भव उक्त इत्यत आह– **नहीति** ॥ जरामरणमोक्षानुद्देशेन भजने प्रशस्ते विद्यमानेऽपि तदुद्देशेन भजनमप्रशस्तं न विधातुं युक्तमित्यर्थः ।

ननु 'ममुक्षोः' 'नात्यन्तिकम्' इत्युभयोरपि वाक्ययोरेकार्थत्वादेकेनैव वाक्येनोदाहृतेनालम्, किं पृथक् 'नात्यन्तिकम्' इति वाक्योदाहरणेनेत्यत आह– **प्रकारभेदादिति ॥** वरत्वोपपादकयोरेकान्तभक्तिभाक्त्व-आत्यन्तिकप्रसादानिच्छुत्वरूपयोः प्रकारयोर्भेदात् तयोश्चात्र कथितत्वात्, पृथग्वाक्यद्वयोक्तिरित्यर्थः । यद्वा मद्भजनं च जरामरणोद्देशेन कार्यमिति विधित्वप्रतीतिनिरासस्य 'अन्यकामनिवृत्त्यर्थम्' इति पक्षोक्त्या, 'मोक्षे सक्तिस्तुत्यर्थम्' इति पक्षोक्त्या वा सम्भवेन पृथक् पक्षद्वयोक्तिः किमर्थमित्यत आह– **प्रकारभेदादिति** ॥ विधित्वनिरासः प्रकारद्वयेनापि भवतीति पृथक् पक्षद्वयोक्तिरित्यर्थः ॥

**भावप्रकाशः (कृ.टि.)– ॥ लक्षणयेति** ॥ न च शक्यसम्बन्धाभावः । मोक्षकामनायाः स्वर्गादिकामनानिवृत्त्याव्याप्तेरेव शक्यसम्बन्धित्वादित्याशयात् । **प्रकारभेदादिति** । पूर्ववाक्ये वर इति कण्ठत इतरस्तुतिरुत्तरत्र न विगणयन्तीत्यर्थ इति प्रकारभेदादित्यर्थः ।

श्लोकः २९

## भाष्यम्

**'देवानां गुणलिङ्गनामानुश्राविककर्मणाम् ।**
**सत्त्व एवैकमनसो वृत्तिः स्वाभाविका तु या ॥**
**अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी ।**
**जरयत्याशु या कोशं निगीर्णमनलो यथा ॥' (भाग.३२६३२,३३)**

**इति लक्षणाच्च भागवते ॥**

प्रमेयदीपिका (ज.टी.)– इतश्च न मोक्षकामविधिरित्याह– **देवानामिति** ॥ सत्त्व एवैकमनसः शुद्धसात्त्विकस्य पुंसो देवानाम् इन्द्रियाणाम् । गुणलिङ्गानां गन्धाद्युपलब्धि-लक्षणगुणानुमेयानाम् । तथा वचनादिक्रियाऽनुमेयानां च ॥ आनुश्राविककर्मणां वैदिकानुष्ठाने कारणानाम् । या भगवत्यनिमित्ता फलोद्देशरहिता केवलं स्वाभाविका निरवधिकस्नेहरूप-स्वभावनिर्वृत्ता वृत्तिः सा भक्तिः । सा च सकामभक्त्या जातायाः सिद्धेः मुक्तेरपि गरीयसी । या सा कामनाऽभावेऽपि कोशं लिङ्गशरीरं स्वभावादेव जरयति– **अनलवत् इत्यनिमित्त-त्वस्य भक्तिलक्षणत्वेनोक्तत्वाच्चेत्यर्थः** । नहि लक्षणवैकल्यं विधेयमिति भावः ॥

भाववोधः (र.टि.)– 'सदा सर्वगुणाढ्यत्वात् सत्त्वो विष्णुरुदीर्यते' इति भागवततात्पर्यं मनसि निधाय सत्त्व एवैकमनस इत्यनूद्य तत्फलितमाह– **शुद्धसात्त्विकस्येति** ॥ चतुर्मुखस्येत्यर्थः । अत एव शुद्धेत्युक्तम् । तदुक्तं 'सत्त्वसत्त्वमहासत्त्वसूक्ष्मसत्त्वश्चतुर्मुख' इति । तस्यैव सदा सर्वगुणाढ्यत्वनिमित्तकसत्त्वशब्दवाच्ये विष्णावेकमनस्त्वं मुख्यमनोवत्त्वं नान्यस्येति भावः । **इन्द्रियाणामिति** । अभिमानिवाचकशब्दस्याभिमन्यमानेषु लक्षणा । ज्ञानकर्मरूपगत्यर्थकदिव्धातोः पचाद्यचि लघूपधगुणे निष्पन्नदेवशब्दस्येन्द्रियेषु योगो वेति भावः ।

'आनुश्राविककर्मणा'मित्येतदनुरोधेन 'गुणलिङ्गाना'मित्येतदुपलक्षणमित्याशयेनाह **तथा च वचनादिति** । 'आनुश्राविककर्माऽसौ श्रुत्युक्तं यो न लङ्घयेत्' इति भागवततात्पर्यं मनसि निधाय 'आनुश्राविककर्मणा'मित्येतदनूद्य व्याचष्टे– **वैदिकेति** ॥ यस्य कर्मेन्द्रियाणां नियमेन वैदिका-नुष्ठानकारणत्वं स एव श्रुत्युक्तं न लङ्घयतीत्यर्थः । यद्वा आनुश्राविककर्मेति इन्द्रियगण एवोच्यत इति ज्ञेयम् । एवञ्च 'न मे हृषीकाणि पतन्त्यसत्पथे' इत्युक्तरीत्या चतर्मुखकर्मेन्द्रियाणामेव नियमेन वैदिकानुष्ठानकरणत्वात् तस्यैव श्रुत्युक्तोल्लङ्घनाभाव इति भावः ।

श्लोकः २९

'अपूर्णभक्तो मुक्तौ तु न सुखं पूर्तिमेष्यति ।
अतस्तादृशमुक्तेश्च भक्तिः पूर्णा गरीयसी'

इति भागवततात्पर्यं मनसि निधाय 'वृत्तिः स्वाभाविकी तु या । अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी' इत्येतद्व्याचष्टे– **या भगवतीत्यादिना** ॥ फलोद्देशरहितत्वं केवलस्वभावनिर्वृत्तत्वमेव भक्तेः पूर्णत्वम् । तद्राहित्यमेवापूर्णत्वमिति भावः । **लक्षणवैकल्यमिति** । जरामरणमोक्षोद्देशेन भजनविधानेऽनिमित्तत्वरूपलक्षणवैकल्यं स्यादिति भावः । नन्वत्र भगवत्कर्तृकवरणस्य ज्ञानहेतुत्व-मुच्यते न भजनस्येत्यत आह– **भक्तमेव चेति** ॥

॥ इति रघूत्तमयतिकृते श्रीमद्गीताभाष्यटीकाभावबोधे सप्तमोऽध्यायः ॥

**भावदीपः (रा.टि.)– ॥ मोक्षकामेति ॥** मोक्षकामोद्देशेन भजनविधिरित्यर्थः ॥

**भावरत्नकोशः (सु.टि.)–** भाष्ये **सत्त्वे** सत्त्वगुण एव **एकमनसः** एकाग्रचित्तस्येत्यर्थमभि-सन्धाय तत्तात्पर्यमाह– **शुद्धसात्त्विकस्येति** ॥ 'पुंसः' इति शेषोक्तिः । 'देवः सुरे धने राज्ञि, देवमाख्यातमिन्द्रियम्' इति विश्वप्रकाशोक्तेराह– **देवानामिन्द्रियाणामिति** । ज्ञानकर्मेन्द्रियाणा-मित्यर्थः । गुणा गन्धरसादयः, तदुपलब्धयो लिङ्गानि येषां तानि तथोक्तानि, तेषामिति भावेन तदनूद्यार्थमाह– **गुणेति** ॥ कर्मेन्द्रियपक्षे गुणशब्दोऽयं प्रधानार्थ इति भावेनोक्तम्– **तथा वचनेति** ॥

अनुश्रवशब्दः श्रुतिवचनः, तत्र भवमानुश्रविकम्, श्रुतिविहितानुष्ठानमिति यावत् । तस्मिन् क्रियते व्यापार एभिरिति कर्माणि करणानि, तेषामिति ज्ञानकर्मेन्द्रियविशेषणमिति भावेन 'आनुश्रविककर्मणाम्' इत्यनूद्य व्याचष्टे– **आनुश्रविकेति** ॥ अनिमित्तपदस्य प्रकृतोपयोगायार्थ-माह– **फलेति** ॥ 'निवृत्तेऽक्षद्यूतादिभ्यः' इति स्वभावशब्दात् ठक्, इति भावेनोक्तम्– **स्वभाव-निर्वृत्तेति** । तुशब्दार्थः **केवलमिति** । **सकामभक्त्या** फलकामनावत्या भक्त्या । **कामनाभावेऽपि** लिङ्गशरीरनाशकामनाभावेऽपि । 'कोशोऽस्त्री कुड्मले दिव्ये शास्त्रेऽर्थे च गृहे तनौ' इति यादवोक्तेराह लिङ्गशरीरमिति ।

स्वर्गकामनाभावे समनुष्ठितस्यापि ज्योतिष्टोमादेः स्वर्गानिष्पादकत्ववत् भक्ते लिङ्गभङ्गकामना-भावे तन्नाशनिष्पादकत्वं न स्यात् । इत्यत उक्तम्– **स्वभावादेवेति** । न ह्यालोकोऽन्धकार-

निवृत्तिकामं प्रत्येव प्रकाशमुत्पादयतीति नियम इति भावः । समूलतूलनाश एवात्राभिमत इति भावेन तत्र दृष्टान्त उक्तः **निगीर्णमनलो यथेति** । तात्पर्यम् **अनलवदिति** । सर्वतो ग्रस्तमग्निरिव जरयतीति । **अनिमित्तत्वस्य** फलकामनारहितत्वस्य । अनेन कथमितश्च न मोक्षकामविधिरित्युक्तं लभ्यत इत्यत आह– **न हि लक्षणवैकल्यमिति** ॥ फलोद्देशरहितत्वं यद्भक्तिलक्षणमुक्तं तद्विकलभजनं न हि विधेयमित्यतः स्वर्गादिकामनिवृत्त्यर्थत्वं मोक्षविषयसक्तिस्तुत्यर्थत्वं वेत्युक्तमेव गीतातात्पर्यगोचरार्थ इति भावः ।

देवानामित्यादि द्विश्लोकी–

'सदा सर्वगुणाढ्यत्वात् सत्त्वो विष्णुरुदीर्यते ।'

'आनुश्रविककर्माऽसौ श्रुत्युक्तं यो न लङ्घयेत् ।'

'अपूर्णभक्तेर्मुक्तौ तु न सुखं पूर्तिमेष्यति ।

अतस्तादृशमुक्तेश्च भक्तिः पूर्णा गरीयसी ॥'

इति तात्पर्यानुसाराद् भागवतटीकायां गुणलिङ्गानां शब्दाद्युपलक्षणगुणानुमेयानाम् आनुश्रविककर्मणां वेदोक्तकर्मानुष्ठानेन तदुक्तानतिलङ्घिनां देवानां तत्त्वसंज्ञानां सत्त्वे सर्वगुणाढ्ये भगवति एकमनस एकाग्रचित्तस्य या वृत्तिः सा भक्तिः उच्यते । कीदृशी ? स्वाभाविका, अनिमित्ता फलाभिसन्धिरहिता, सा च सिद्धेः अपरिपक्वभक्त्या समवाप्तमुक्तेरपि गरीयसी ।

किमुक्तं भवति । यस्मिन् काले त्वपूर्णभक्तयः सब्रह्मचारिणो मुक्तिमेष्यन्ति, तस्मिन्नेव समये मुक्तिप्राप्तियोग्यस्य स्वयोग्यभक्तिपरिपाकमप्राप्तस्य पुंसो या सिद्धिरपरिपूर्णसुखलक्षणा मुक्तिः, तस्याः सिद्धेर्गरीयसी । 'अपूर्णभक्तेर्मुक्तौ तु' इत्युक्तवचनादित्युक्तं भवति । गरीयस्त्वमुपपादयितुम् निगीर्णमनल इव भक्तिः कोशं जरयतीत्युक्तमिति प्रकारान्तरेण व्याख्याता ।

प्राचीनटीकायां तु सत्त्वे सर्वगुणाढ्ये भगवत्येकमनसः पुरुषस्येन्द्रियदेवानां रूपादिज्ञानलिङ्गकानां श्रुत्युक्तं सर्वं कर्म कुर्वतां तस्मिन्नेव भगवति या वृत्तिः स्वाभाविकी, अनिमित्ता, या चाशु लिङ्गशरीरं जरयतीत्याद्युक्तम् ।

**भावदीपिका (श्री.टि.)**– 'सदा सर्वगुणाढ्यत्वात् सत्त्वो विष्णुरुदीर्यते' इति तृतीयस्कन्ध-तात्पर्यं मनसि निधाय 'सत्त्व एवैकमनसः' इत्यनूद्य तत्फलितमेवाह– **शुद्धसात्त्विकस्येति** ॥ चतुर्मुखस्येत्यर्थः । अत एव 'शुद्ध' इत्युक्तम् । 'सत्त्वसत्त्वमहासत्त्वसूक्ष्मसत्त्वश्चतुर्मुखः' इति वचनात्, अतो युक्तत्वं नान्यस्येति भावः । अभिमानिवाचकशब्दस्याभिमन्यमानेषु लक्षणां गत्यर्थकदिवुधातुनिष्पन्नस्य देवशब्दस्येन्द्रियेषु 'दीव्यति अवगच्छति एभिः' इति योगं वाऽभिप्रेत्य 'देवानाम्' इत्येतदनूद्य व्याचष्टे– **इन्द्रियाणामिति** ॥ **गन्धाद्युपलब्धीत्यादि** । गन्धाद्युपलब्धिः सकरणिका क्रियात्वात् छिदिक्रियावदित्यनुमानं द्रष्टव्यम् । 'आनुश्रविककर्मणाम्' इत्येतदनुरोधेन कर्मेन्द्रियसङ्ग्रहाय 'गुणलिङ्गानाम्' इत्येतदुपलक्षणमित्याशयेनाह– **तथा वचनादिति** ॥ 'आनु-श्रविककर्माऽसौ श्रुत्युक्तं यो न लङ्घयेत्' इति तृीयस्कन्धतात्पर्यं मनसि निधायाह– **वैदिकेति** ॥ वैदिककर्मेत्यर्थः । इदं कर्मेन्द्रियाणां विशेषणम् । एवं च 'न मे हृषीकाणि पतन्त्यसत्पथे' इत्युक्तरीत्या चतुर्मुखकर्मेन्द्रियाणामेव नियमेन वैदिकानुष्ठानकारणत्वात् तस्यैव श्रुत्युक्तोल्लङ्घनाभाव इति भावः ।

> 'अपूर्णभक्तेर्मुक्तौ तु न सुखं पूर्तिमेष्यति ।
> अतस्तादृशमुक्तेश्च भक्तिः पूर्णा गरीयसी ॥'

इति तृतीयस्कन्धतात्पर्यं मनसि निधाय 'वृत्तिः स्वाभाविकी तु या, अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी' इत्येतद्व्याचष्टे– **या भगवतीत्यादिना** ॥ फलोद्देशरहितत्वं केवलस्वभावनिर्वृतत्वमेव भक्तेः पूर्णत्वम्, तद्राहित्यमेवापूर्णत्वमिति भावः । **सकामभक्त्या** मोक्षकामनया कृतभक्त्या । **मुक्तेः** अल्पाधिकारिमुक्तेः सकाशात् । **कामनाभावेऽपीति** ॥ 'लिङ्गभङ्गरूपमोक्षो मे स्यात्' इति कामनाभावेऽपीत्यर्थः । **उक्तत्वादिति** ॥ तृतीयस्कन्धे देवहूतिं प्रति भगवता कपिलेनोक्तत्वा-दित्यर्थः । इदं लक्षणं चतुर्मुखे मुख्यम्, तदितरदेवेष्वप्युत्तमाधिकारिषु यथायोग्यमस्तीति द्रष्टव्यम् । नन्वस्त्वनिमित्तभक्तित्वमुत्तमाधिकारिलक्षणम् । तथाऽपि 'जरामरणमोक्षोद्देशेन भजनं तान् प्रति कुतो न विधेयमित्यत आह– **नहीति** ॥ तेषां जरामरणमोक्षोद्देशेन भजनविधाने अनिमित्त-भक्तिमत्त्वरूपलक्षणवैकल्यमेव स्यात् । नहि लक्षणवैकल्यं लक्षणवैकल्यापादकम् । लक्षणविरोधीति यावत् । विधातुं योग्यमित्यर्थः ॥

श्लोकः २९

**भावप्रकाशः (कृ.टि.)**– 'सदा सर्वगुणाढ्यत्वात् सत्त्वो विष्णुरुदीर्यते' इति तृतीयस्कन्ध-तात्पर्यं मनसि निधाय 'सत्त्व एवैकमनस' इत्यनूद्य तत्फलितमाह– **सत्त्व एवेत्यादिना** ॥ चतुर्मुखस्येत्यर्थः । तस्यैव विष्ण्वेकमनस्त्वात् । 'सत्त्वसत्त्वमहासत्त्वसूक्ष्मसत्त्वश्चतुर्मुख' इति शुद्धसात्त्विकत्वोक्तेश्चेति बोध्यम् । प्रसिद्धार्थतानिरासार्थमाह– **इन्द्रियाणामिति** ॥ दीव्यन्ति द्योतन्ति द्योतन्त इति योगेन देवशब्दस्येन्द्रियेष्वपि सम्भवादिति भावः । 'इन्द्रियाणा'मित्यनेन ज्ञानकर्मेन्द्रियाणामभिप्रेतत्वात् ज्ञानेन्द्रियेषु 'गुणलिङ्गाना'मित्येतद्व्याख्याय कर्मेन्द्रियेष्वपि तथा व्याख्याति– **तथा वचनादीति** ॥ अत्र गुणशब्दोऽप्रधानवाचीति भावः । 'आनुश्रविककर्माऽसौ श्रुत्युक्तं यो न लङ्घयेदि'ति तात्पर्यानुसारेण व्याचष्टे– **वैदिकानुष्ठान इति** ॥ वैदिकानां श्रवणादीनां होमादीनाञ्चानुष्ठान इत्यर्थः ।

अनुश्रवाः श्रुतिः, तत्र भवमानुश्रविकं श्रुतिविहितमिति यावत् । कर्मशब्दः क्रियामात्रपरः । आनुश्रविकं कर्म यैः ते , तत् तथा, तेषामिति कृते उक्तार्थलाभ इति भावः । करणेऽपीन्द्रियगणे कर्तृत्वविवक्षया तात्पर्ये कर्तरि प्रयोग इति हृदयम् । 'निर्वृत्तेऽक्षद्यूतादिभ्यः' इति ठगिति भावेनाह– **स्वभावनिर्वृत्तेति** ॥

> 'अपूर्णभक्तेर्मुक्तौ तु न सुखं पूर्तिमेष्यति ।
> अतस्तादृशमुक्तेश्च भक्तिः पूर्णा गरीयसी'

इति प्रमाणानुसारेण 'भक्तिः सिद्धेर्गरीयसी' इत्येतद्व्याचष्टे– **सा चेति** ॥ प्रमाणे पूर्णत्वं नाम फलोद्देशराहित्यस्वभावनिर्वृतत्वरूपाङ्गसाकल्यं तद्राहित्यमपूर्णत्वमिति भावः । नन्वियं भक्तिर-कामितत्वात् 'मुक्तिं न जनयेत्' इत्यतोऽकामितामपि मुक्तिं स्वभावादेव जनयतीति सदृष्टान्तमाह– **या सेति** ॥ **अनलवदिति** । यथा जाठरानलो निगीर्णं भुक्तमन्नं जरयति तथेत्यर्थः ॥ **लक्षण-वैकल्यमिति** । जरामरणमोक्षोद्देशेन भक्तिविधानेऽनिमित्तत्वरूपलक्षणवैकल्यं स्यादिति भावः ॥

## भाष्यम्

> **आह च सर्ववेदास्तु देवार्थाः देवा नारायणार्थकाः ।**
> **नारायणस्तु मोक्षार्थे मोक्षो नान्यार्थ इष्यते ।**

श्लोकः २९

**एवं मध्यमभक्तानामेकान्तानां न कस्यचित् ।**
**अर्थे नारायणो देवः सर्वमन्यत्तदर्थकम्' इति गीताकल्पे ।**
**त एव च विदुः । 'यमैवेष वृणुते' (कठ.उ.२.२२) इति श्रुतेः**
**॥ २९,३० ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये सप्तमोऽध्यायः ॥ ७ ॥

प्रमेयदीपिका (ज.टी.)– आह च स्पष्टमेतदन्यत्र ॥ **देवार्थाः** देवप्रतिपत्त्यर्थाः । प्रतिपन्ना देवाः नारायणज्ञानार्थाः । मोक्षार्थे ज्ञातव्यः । नान्यार्थः । परः पुरुपार्थः । **मध्यमभक्तानां** चित्तवृत्तिः । **एकान्तानां** नियतानामुत्तमभक्तानां न कस्यचिदर्थे । स एव परमपुरुपार्थः ॥

ननु मामेव ये प्रपद्यन्ते इत्युक्तत्वात् ते ब्रह्म तद्विदुः इति पुनरुक्तमित्यत आह– **त एवेति ॥** अन्योपायनिवृत्त्यर्थमेतदित्यर्थः । स्यादेवं व्याख्यानम् । यदि भगवद्भजनेन विना ज्ञानस्यान्योपायाभावः प्रमितः स्यात् । स एव च कुतः? इत्यत आह– **यमिति ॥** भक्तमेव च वृणुत इति च प्रसिद्धम् ॥ २९,३० ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां
जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां सप्तमोऽध्यायः समाप्तः ॥

भावदीपः (रा.टि.)– 'आह च' इत्यनूद्य शेषमाह– **स्पष्टमित्यादि ॥** फलितमाह– **मोक्षार्थे ज्ञातव्य इति** ॥ नारायण इति योज्यम् । नान्यार्थ इत्यस्य फलितोक्तिः– **पर इत्यादि** ॥ **अन्योपायेति** ॥ भगवज्ज्ञानेन तद्भजनादन्योपायनिवृत्त्यर्थं 'ब्रह्म तद्विदुः' इति पुनर्वचनमित्यर्थः ॥ श्रुतेः उक्तार्थसंवादतासिद्ध्यर्थमाह– **भक्तमेवेति** ॥ २९,३० ॥

॥ इति श्रीमत्सुधीन्द्रतीर्थपूज्यपादशिष्यश्रीराघवेन्द्रयतिकृते
श्रीमद्गीताभाष्यटीकाभावदीपे राघवेन्द्रयतिकृते सप्तमोऽध्यायः ॥

**भावरत्नकोशः (सु.टि.)**– उदाहृतभागवतवाक्येनैव कामनाराहित्यस्य भक्तिलक्षणत्वाव-गतिसम्भवात् किं वाक्यान्तरेणेति चोद्यपरिहाराय भाष्यमनूद्य तत्र शेषमाह– **आह च स्पष्टमिति** ॥ एतत् कामनाराहित्यं भक्तिलक्षणमित्येतत्, 'अन्यत्राह' इत्यन्वय इति भावः । 'ब्रह्माद्याः ज्ञान-

योजकाः' इत्युक्तिं हृदि कृत्वोक्तम्– **नारायणज्ञानार्था इति**। 'मोक्षार्थे' इत्यनुवादः, 'ज्ञातव्यम्' इति शेषोक्तिः। **नान्यार्थः** नान्यशेषः। किन्तु परः **पुरुषार्थः** सर्वपुरुषार्थोत्तमः। **एवं** मोक्षार्थतयैव भगवानस्माभिर्ज्ञातव्य इत्येवम्, 'मध्यमभक्तानां चित्तवृत्तिः' इति शेषोक्तिः। कस्यचित्समीहित-स्यार्थे कारणे, 'अर्थः प्रकारे विषये चित्तकारणवस्तुषु' इति विश्वोक्तेः। यत्किञ्चित्समीहित-निष्पत्तय इति यावत्। किन्तु **स एव** नारायण एव **परमपुरुषार्थः** निरुपाधिकप्रेमास्पदम्॥

प्राचीनटीकायाम् 'ननु मुक्तिमप्यकामयमानानां तेषां किं हरिणाऽपि इत्यतः आह च' इति भाष्य'मित्युक्तम्। **एतत्** पुनर्वचनम्। **स एव** अन्योपायाभाव एव। उदाहृतश्रुतौ भगवत्कर्तृ-कवरणस्य ज्ञानहेतुत्वं प्रतीयते, न तु भजनस्य तत्प्राप्तिहेतुत्वम्, इत्यतोऽसङ्गतं तदुदाहरणमित्यत आह– **भक्तमेवेति**॥ भगवद्वरणविषयत्वं भजनवत एव, 'भक्तप्रियम्' 'भक्तौ', 'भक्त्यैव तुष्टि-मभ्येति', 'भक्त्यैकलभ्यः पुरुषोत्तमः' इत्यादिशास्त्रसिद्धमिति प्रकृतोपयोग इति भावः॥

त्वद्भजनेन किं फलं स्यादित्यतो 'मां भजन्ते' इत्युक्तानुवादेन फलमुच्यते जरामरणमोक्षा-येति। माम् एव शरणमागत्य यतन्ति यतन्ते, तद्विषयश्रवणादिप्रयतनं तन्वन्तीत्युक्तानुवादः। ते तद् ब्रह्म कृत्स्नं यथायोग्यं सम्पूर्णं विदुः जानन्ति। 'त एव विदुः' इति भगवद्भजनेन विना ज्ञानस्यान्योपायो नास्तीति प्रत्याययितुम्, 'मामेव ये प्रपद्यन्ते' इत्युक्तस्याप्यत्र पुनरुक्तिः। 'जरामरणमोक्षाय' एतत् लक्षणया 'स्वर्गादिकामनिवृत्तये' इत्यर्थकम् मोक्षासक्तिरन्यासक्तितोऽपि प्रशस्तेत्येतदर्थपरं वा, न पुनर्मोक्षस्य सर्वान् प्रति पुरुषार्थत्वस्फोरणेन भगवद्भजनं जरामरण-मोक्षोद्देशेन कार्यमित्येवं विधिरूपम्। एकान्तानां मुमुक्षाभावस्य 'नात्यन्तिकं विगणयन्त्यपि ते प्रसादम्' इत्यादिनाऽऽवेदनेन तत्कामिनस्तान् प्रति तद्विधानायोगात्। कृत्स्नमध्यात्मम् 'आत्मानं जीवमधिकृत्य तदुपकारित्वेन वर्तमानं वस्तु' इत्यादिरूपेणाध्यात्मादिशब्दार्थ उत्तराध्याये व्यक्तीभविष्यति। अखिलं कर्म च विदुः॥ २९॥

**भावदीपिका** (श्री.टि.)– 'आह च' इत्यनूद्य तच्छेषं पूरयति– **स्पष्टमेतदन्यत्रेति**॥ **नारायणज्ञानार्था** इति॥ अध्यात्मेन्द्रियादिप्रेरकत्वादित्यर्थः। 'नान्यार्थः' इत्येतत्कुत इत्यत आह– **परः पुरुषार्थ इति**॥ यः परः पुरुषार्थः, अतो नान्यार्थ इत्यर्थः। यद्वा 'न विद्यतेऽन्योऽर्थो यस्मात्' इति विग्रहमभिप्रेत्य तदभिप्रायमाह– **परः पुरपार्थ इति**॥ **न कस्यचिदर्थे नारायणो देवः**

'ज्ञातव्यः' इति शेषः । कुत इत्यत आह– **स एवेति** ॥ प्रमाणे **सर्वमन्यत्** मोक्षादिकं तदर्थं परमात्मसेवाद्यर्थकमेव, न स्वतः पुरुषार्थस्तेषामित्यर्थः ॥ **पुनरुक्तमिति** ॥ 'मामेव' इत्यत्र 'ये मामेव प्रपद्यन्ते ते ज्ञानं प्राप्य तद्द्वारा मायां तरन्ति' इत्यर्थस्याभिप्रेततया, तेन 'ये मामाश्रित्य यतन्ति' 'ते तद्ब्रह्म विदुः' इत्येतत् पुनरुक्तमित्यर्थः । **अन्योपायेति** ॥ 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायेन भगवद्भजनं विना ज्ञानस्यान्यः कोऽप्युपायो नास्तीत्यन्योपायनिवृत्त्यर्थमेव 'ब्रह्म तद्विदुः' इति पुनरुच्यत इत्यर्थः । **यमितीति** ॥ एषः भगवान् यं वृणुते तेन **लभ्यः** ज्ञेय इत्यर्थः । नन्वत्र भगवत्कर्तृकवरणस्यैव ज्ञानहेतुत्वमुच्यते, न भजनस्य इत्यत आह– **भक्तमेवेति** ॥ तथा च यमेवैष प्रसन्नः सन् भक्तत्वेन वृणुते तेनैव लभ्यो ज्ञेय इत्यर्थो द्रष्टव्यः ।

इति यदुवरगीताभाष्यटीकासु युक्ता-
शयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराट्छात्रचीर्णा
समगमदयमस्यां सप्तमोऽध्याय आन्तम् ॥

**॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते श्रीमद्गीताभाष्यटीकाविवरणे सप्तमोऽध्यायः ॥**

**भावप्रकाशः (कृ.टि.)**– ननु कामराहित्यस्य भक्तिलक्षणत्वेन पूर्ववाक्येनैवोक्तत्वादुत्तर-वाक्यवैयर्थ्यम् । किञ्च शब्देन प्राग् वाक्यान्यत् प्रमाणमुक्तम् । इदानीं तु वाक्यमिति भाति । तच्च पूर्वमन्यप्रमाणानुक्तेरयुक्तमित्यत आह– **आह च स्पष्टमिति** ॥ तथा च स्पष्टमभिधानान्न वैयर्थ्यम् । चशब्दस्यान्यग्रन्थसम्बन्धाच्च नानुपपत्तिरिति भावः । नन्वत्र भगवत्कर्तृकवरणस्य ज्ञानहेतुत्वमुच्यते न भजनस्येत्यत आह– **भक्तमेव चेति** ॥

**॥ इति श्रीमत्तिरुमलाचार्यसुतकृष्णविरचितायां प्रमेयदीपिकाभावप्रकाशे सप्तमोऽध्यायः ॥**

## साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
## प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥

**॥ ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥**

श्लोकः ३०

**भावरत्नकोशः (सु.टि.)– ॥ साधिभूतेति ।** साधिभूताधिदैवम् अधिभूताधिदैवसहितम्, साधियज्ञम् अधियज्ञसहितं च मां ये विदुः, अपि च प्रयाणकाले मरणकाले मामेव विदुः ते युक्त-चेतसः समाहितमानसाः । 'तद्ब्रह्म' इत्युक्तौ भगवतो ब्रह्मणोऽन्यत्वशङ्कायां तत्परिहारार्थं 'साधिभूताधिदैवं माम्' इत्युक्तमित्युत्तरप्रस्थाने भगवत्पादाः ॥

'कामैस्तैस्तैः' इत्यादेः 'यत्सर्वे मिश्रयाजिनः' इत्यादिना अथ केचन द्वेषिणोऽपि सन्ती-त्युच्यते– अव्यक्तमितीति । यत् केषाञ्चिदद्वैतज्ञानं तदपि मदिच्छयेत्युक्तम्– **नाहं प्रकाश इतीति ।**

'जीवधर्मानीश्वरे तु यो जीवेष्वैश्वरानपि ।
विद्याज्जीवैश्वरैक्यं वा द्वन्द्वमोही स उच्यते ॥'

इत्यादिना च तात्पर्यनिर्णयतट्टीकयोरर्थान्तरस्योक्तावपि, को विशेषस्तवान्येभ्य इत्यत आह– **अव्यक्तमिति ॥** अज्ञानं च मदिच्छयेत्याह– **नाहमिति ॥** 'द्वन्द्वमोहेन सुखदुःखादि-विषयमोहेन' इत्यादि भाष्यतट्टीकादिरीत्याऽत्रास्माभिरर्थ उक्त इति न विसंवादः शङ्कनीयः । एवमन्यत्रापीति ।

**॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सूरीन्द्रतीर्थपूज्यपादशिष्येण सुमतीन्द्रयतिना** विरचितायां **प्रमेयदीपिकाव्याख्यायां भावरत्नसमाख्यायां सप्तमोऽध्यायः ॥**

## ।। अष्टमोऽध्यायः ।।

**अर्जुन उवाच–**

**किं तद् ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ।। १ ।।**

**गीताक्षरार्थस्तु-** 'ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ।' 'साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।' इति च यदुक्तं पूर्वाध्यायान्ते, तद् ब्रह्मादिशब्दार्थव्याख्यानम् अत्रादौ क्रियत इति व्याख्यानव्याख्येयभावलक्षणया सङ्गत्या पूर्वानन्तर्यमस्याध्यायस्य । 'प्रयाणकालेऽपि च माम्' इत्युक्तव्याख्यानप्रसङ्गेनान्तकालस्मरणफलम्, तदुपायप्रकारः, ब्रह्मप्राप्तिमार्गश्चोच्यते । कर्तव्यस्मरणविषयत्वगम्यत्वादिरूपो भगवन्महिमैव वर्ण्यत इति षट्कान्तर्भावश्च ज्ञातव्यः । तत्र ब्रह्माध्यात्मादिस्वरूपजिज्ञासया अर्जुनः पृच्छतीत्युच्यते– **अर्जुन उवाचेति** । पप्रच्छेत्यर्थः ।

नन्वर्जुनस्य ज्ञानित्वाद् जानात्येवासौ 'भगवानेव ब्रह्म' इति । अतः 'किं तद् ब्रह्म' इति प्रश्नः कथं युज्यते ? कारणाभावादिति चेत् । उच्यते । अर्जुनस्य ज्ञानित्वेऽपि युक्तोऽयं प्रश्नः । 'ते ब्रह्म' इत्यत्र ब्रह्मणो भगवता 'तत्' इति परोक्ष्येणोक्तत्वात्, भगवतोऽन्यदेवात्रोक्तं ब्रह्मेति प्रतीयते । 'वासुदेवात्मकं ब्रह्म' इत्यादेः भगवान् ब्रह्मेति प्रतीयते । एवमुभयथा प्रतीतिजनितसंशयस्य प्रश्नकारणस्य सद्भावादिति । ननु ब्रह्मशब्दस्य भगवन्मात्रवृत्तित्वात् कथं 'तत्' इति विशेषि-तत्वेऽपि अन्यत्वप्रतीतिरिति चेन्न । ब्रह्मशब्दस्य भगवति मुख्यत्वेऽपि प्रकृतिवेदादेरप्यमुख्यतया तदर्थत्वात्, 'तत्' इति विशेषितत्वेन मुख्यार्थासम्भवे अमुख्यार्थः प्रकृत्यादीनां मध्ये किञ्चिदत्र स्यादिति प्रतीतेरप्रतिहतप्रसरत्वात् ।।

ननु 'तत्' इति विशेषणेन प्राप्ता ब्रह्मणो भगवदन्यत्वशङ्का 'साधिभूताधिदैवं माम्' इत्युपरितनवाक्येन भगवतैव परिहृता 'ब्रह्म' इति वक्तव्ये 'माम्' इत्युक्तत्वात् । अतः कथं ब्रह्मणो भगवदन्यत्वप्रतीतिः ? इति चेत् यद्यप्येषा प्रतीतिरुपरितनवाक्ये परिहृता । तथाऽपि पुनर्भवेदेव तत्र 'साधियज्ञं च' इति चशब्दस्य 'साधिभूताधिदैवं सधियज्ञं मां च' इति संयोजने अधिभूतादि-सहितत्वेन ब्रह्मज्ञानादन्यदेव विष्णुज्ञानमुच्यत इति 'तत्' इति विशेषणादेव प्रतीतिसम्भवात् ।

श्लोकः २

अतो युक्त एवायं प्रश्नोऽर्जुनस्येत्युत्तरप्रस्थाने स्फुटम् । 'ते ब्रह्म तद्विदुः' इति यत् पूर्वं ब्रह्मोपक्षिप्तं तद् ब्रह्म किम् ? इति स्वरूपप्रश्नः । यत्प्रोक्तमधिभूतं 'साधिभूताधिदैवम्' इति, तच्च किम् अस्मिन् लोके ॥ १ ॥

**अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ।**
**प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥**

## भाष्यम्

**मरणकालकर्तव्यगत्याद्यस्मिन्नध्याय उपदिशति ॥ १,२ ॥**

भावप्रदीपिका (प.टी.)– भगवन्महिमापरत्वे षट्कस्यापि स्थिते, अध्यायभेदार्थमेतदध्यायप्रतिपाद्यार्थमाह– **मरणेति** । उक्तव्याख्यानादेरादिपदाद्ग्रहणम् ।

भावप्रकाशिका (न.टी.)– उक्तव्याख्यानमुखेन, मरणकालध्येयत्वेन, मुक्तप्राप्यत्वेन च भगवन्महिमोक्तेः षट्कसङ्गतौ सिद्धायामध्यायभेदप्रदर्शनार्थमाह– **मरणकाल इत्यादिना** ।

प्रमेयदीपिका (ज.टी.)– अध्यायस्यावान्तरप्रतिपाद्यमर्थमाह– **मरणेति** ॥ गम्यत इति गतिः । आदिपदेन मार्गादिकम् । मरणकालकर्तव्यं च गतिश्च ते आदी यस्य तत् तथोक्तम् । कर्तव्यस्मरणविषयत्वगम्यत्वादिरूपो भगवन्महिमैव अत्र वर्ण्यत इति षट्कान्तर्भावसिद्धिः । 'उक्तव्याख्यानपूर्वकम्' इति चोपस्कर्तव्यम् । तेनाऽनन्तर्यलक्षणाऽपि सङ्गतिः सिद्धा । तत्प्रसङ्गेनैव मरणकालकर्तव्याद्युपदेशात् ॥ १,२ ॥

भावबोधः (र.टि.)– अत्र किं तद् ब्रह्मेत्यादिप्रश्नपरिहाररूपप्रथमभागस्य मरणकालकर्तव्यगत्याद्यप्रतिपादकत्वात् कथमयमध्यायार्थ इत्यत उक्तव्याख्यानपूर्वकं ब्रह्मप्राप्तिरुच्यते इति तात्पर्यं हृदि कृत्वा अध्यायप्रतिपाद्यांशमाह– **उक्तव्याख्यानपूर्वकमिति** । किं तद्ब्रह्मेत्यादिवाक्यसन्दर्भस्य प्रश्नपरिहाररूपतया ते ब्रह्मेत्याद्युक्तविवरणरूपतयोक्तव्याख्यानत्वमित्यर्थः । एतद्भागस्य विष्णुमाहात्म्यप्रतिपादकत्वं स्पष्टमिति षट्कान्तर्भाव इति भावः ॥ १,२ ॥

भावदीपः (रा.टि.)– ॥ अवान्तरेति ॥ भगवन्महिमत्वरूपैकार्थस्यैवैकवाक्यताहेतोरत्र

प्रतिपादनादित्यर्थः । कर्मणि रूपमुपेत्याऽऽह– **गम्यत इति** ॥ तात्पर्योक्तमाह– **उक्तव्याख्यानेति** ॥ १,२ ॥

**भावरत्नकोशः (सु.टि.)**– ननु सप्तमाध्यायोपक्रमे 'उत्तरैः षड्भिरध्यायैः भगवन्माहात्म्यं प्राधान्येनाह' इति षट्कप्रतिपाद्यस्योक्तत्वात्, इह मरणकालकर्तव्यस्मरणगत्यादिरूपार्थस्य प्रतिपाद्यत्ववर्णनं प्रकृतविरुद्धम् ? इत्याशङ्क्याह– **अवान्तरेति** । 'अध्यायभेदप्रदर्शनार्थम्' इति शेषः । 'मामनुस्मर' इति गम्यस्यैव वक्ष्यमाणत्वादाह– **गम्यत इतीति** । गमेः कर्मणि क्तिन् इति न **वक्ष्यमाणविसंवाद** इति भावः । तथा च नवमे वक्ष्यति भाष्यकारः 'गम्यते मुमुक्षुभिरिति गतिः' 'अथ कस्मादुच्यते गतिरिति ? ब्रह्मैव गतिः, तद्धि गम्यते पापविमुक्तैरिति' इति । **'मार्गादिकम्'** इत्यत्रादिपदेनान्त्यकालस्मरणफलम्, तदुपायप्रकारश्च ग्राह्यः । पुनरावृत्त्यपुनरावृत्तिसङ्ग्रह इत्यपि आहुः ।

उक्तव्याख्यानादेरादिपदाद् ग्रहणमिति तु भावप्रदीपिका । कर्तव्यत्वस्य गतिविशेषणत्वप्रतीतिं व्युदस्यन् विवक्षितविग्रहं दर्शयति– **मरणेति** । तत् प्रमेयम् । तर्हि कथमस्य द्वितीयषट्केऽन्तर्भाव इत्यत आह– **कर्तव्येति** । तथा च प्राचीनटीका 'मरणकाले ध्येयत्वेन मुक्तप्राप्यत्वेन च भगवन्महिमोक्तेः षट्कसङ्गतौ सिद्धायामिति' इति । एवमपि कथमस्य पूर्वेण सङ्गतिः ? इत्यतः तात्पर्योक्तमाह– **उक्तेति** । यदुक्तम् 'ते ब्रह्म तद्विदुः' इत्यादि तद्व्याख्यानपूर्वकम्, तथा 'प्रयाणकालेऽपि च माम्' इति यदुक्तम्, तद्व्याख्यानपूर्वकमित्यर्थः । **तत्प्रसङ्गेनैव** उक्तव्याख्यानप्रसङ्गेनैव ॥

**गीताक्षरार्थस्तु** अत्र एतस्मिन् परिदृश्यमाने लौकिके देहे कोऽयमधियज्ञ इति स्वरूपप्रश्नः । अनेन प्रसिद्धोऽग्न्यादिर्व्यावर्तितः । कथं केन प्रकारेणाधियज्ञ इति प्रकारप्रश्नः । 'देहे' इत्यादि पदकृत्यं तु प्रश्नोत्तरवाक्याक्षरार्थकथनावसरे स्पष्टीभविष्यति । प्रयाणकाले अन्तकाले नियतात्मभिः वशीकृतमनस्कैः कथं ज्ञेयोऽसि ? किमर्थम् ? कथम्भूतः ? केन प्रकारेण स्मर्तव्योऽसीति ॥ २ ॥

**भावदीपिका (श्री.टि.)**– ननु मरणकालकर्तव्यप्रतिपादनस्य कथमुक्तानन्तर्यम् ? येनानन्तर्यलक्षणा सङ्गतिः सिद्ध्येत्? इत्यत आह– **तत्प्रसङ्गेनैवेति** ॥ 'प्रयाणकालेऽपि च माम्' इत्युक्तव्याख्यानप्रसङ्गेनैवेत्यर्थः । **तथैवेति** ॥ निर्विशेषणतयैवेत्यर्थः । **उत्तरे त्विति** ॥ तथा च 'परमं ब्रह्म अक्षरम्' इति योजना तस्याभिप्रेतेति द्रष्टव्यम् । 'बृह वृद्धौ' इति देशतः कालतो

श्लोकः ४

भवति' इत्यप्यर्थमभिप्रेत्यात्रोदाहरणममिति ज्ञातव्यम् । अत एवैतत्सूत्रव्याख्यानावसरे काशिकायाम् 'गिरौ' डश्छन्दसि' इत्युक्तम्, 'गिरिशः' इति चोदाहृतम् । तत्र 'गिरौ' इत्यस्य प्रयोगसिद्धाधिकरणसामान्योपलक्षकत्वाद् अविरोध इति व्याख्यातम् अस्मदाचार्यचरणैः सुधाटिप्पण्याम् आनन्दमयाधिकरणे तत्रैवानुसन्धेयम् । भावबोधे तु दृशिग्रहणसामर्थ्याद् डप्रत्ययोऽत्र व्याख्येय इत्युक्तम् । **इत्यादिनेति** ॥

'वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥'

इति वचनादिति भावः । तथा च शरीरवाचके 'पुरि' इत्यस्मिन्नुपपदे शेतेर्धातोः डप्रत्यये, डित्त्वसामर्थ्याद् धातोः टिलोपे, 'पुरिश् अ' इति जाते, निरुक्तत्वाद् इकारस्य उकारे, शकारस्य षकारे च सति पुरुषशब्दः साधुरित्यर्थः । **अध्यात्मशब्देनेति** ॥ पुरुषशब्दोक्तजीवस्याधिदैवत्वे 'आत्माधिकारे यत्तद्' इत्येवं व्याख्याताध्यात्मशब्देन गतार्थतेत्यर्थः । **तत्प्रकरणेष्विति** ॥ देवप्रतिपादकप्रकरणेष्वित्यर्थः । ननु प्रकरणेषु सर्वदेवानामपि प्रतिपाद्यत्वात् कथमेकस्यैव सङ्कर्षणस्य ब्रह्मणो वा प्रतिपाद्यत्वम् ? इत्यत उक्तम्– **मुख्यत इति** ॥ 'देवाधिकारगं सर्वम्' इति प्रमाणानुरोधादाह– **सर्वदेवतेति** ॥ **अक्षरार्थस्त्विति** ॥ दैवतान्यधिकृत्य तत्प्रतिपादकत्वेन वर्तमानो ग्रन्थः अधिदैवम्, तस्मिन् यत् प्रतिपाद्यं तदप्यधिदैवम् इति शेषपूरणेनाधिदैवशब्दाक्षरार्थ 'आत्माधिकारे यत्तद्' इत्यध्यात्मशब्दाक्षरार्थवत् द्रष्टव्य इत्यर्थः ॥

**भावप्रकाशः (कृ.टि.)**– प्रसिद्धाकाशे अव्यक्तलयासम्भवाद् गौणमाश्रित्याह– **व्याप्त इति** ॥ प्रलयेपि क्षणलवादिसृष्ट्यादिव्यापारसत्वात् तद्व्यावृत्त्यर्थमुक्तम्– **प्रचुरेति** ॥ **अधिकरण इति** ॥ इतिशब्दः काचित्कः प्रामादिकः ॥ ततश्चाधिकरणवाचिनि पुरीत्यस्मिन्नुपपदे शेतेरन्येष्वपि दृश्यते इति डप्रत्यय इत्यर्थः । इतिशब्दपाठे तु अधिकरणे सुप्युपपदे शेतेर्ड इत्यर्थान्तरमभिप्रेत्योक्तसूत्रोदाहरणम् । उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता इत्युक्तेरिति समाधातव्यम् ॥ एतेन सूत्रस्याच्प्रत्ययमात्रविधायकत्वात् कथमेतदित्यपास्तम् । यद्वा अधिकरणे शेतेरित्यच्प्रत्यये प्राप्ते बाहुलकात् ड्ड इत्यध्याहारेण व्याख्येयम् ॥ ननु उकारषकारयोः श्रवणं कथम् । समासत्वात् सु लोपे पूरुश इति भाव्यत्वादित्यत आह– **वर्णागम इति** ॥ तथाचोवर्णागमः

शवर्णस्य षकारात्मना विकारश्चेति भावः ॥ ननूक्तव्युत्पत्तेः जीवमात्रसाधारण्यात् कथं सङ्कर्षणो वेत्यादि विशेषोक्तिरित्यत आह– **सर्वजीवेति** ॥ देवाधिकरणं सर्वमिति प्रमाणानुरोधादाह– **सर्वदेवतेति** ॥ सर्वदेवानधिकृत्येत्याद्युक्ताधिदैवतशब्दस्य सर्वदेवेष्वसम्भवादाह **अक्षरार्थस्तु पूर्ववदिति** ॥ अध्यात्मशब्दस्य द्वितीयव्याख्यानवदित्यर्थः ॥ ननु सर्वदेवतासु कथं पुरुषशब्द इत्यस्याप्येतदेवोत्तरं **अक्षरार्थस्त्विति** ॥ स्वदेहेषु प्रेरकतया अन्यजीवदेहेषु च स्थितत्वादित्यर्थः ॥

# भाष्यम्

**सर्वयज्ञभोक्तृत्वादेः अधियज्ञः ॥**

भावप्रदीपिका (प.टी.)– अधियज्ञः कथम् इत्यस्य परिहारो गीतास्वनुक्तः । अतस्तमाह– **सर्वेति** । आदिपदात् प्रवर्तकत्वफलदत्वादि ।

भावप्रकाशिका (न.टी.)– 'कथंरूपोऽधियज्ञः' इत्यस्य परिहारमाह– **सर्वेति** । आदिशब्दाद्यज्ञे फलदत्वात् तत्प्रवर्तकत्वाच्च ।

प्रमेयदीपिका (ज.टी.)– **'अधियज्ञः कथम्'** इत्यस्योत्तरं भगवताऽनुक्तं भाष्यकृदाह– **सर्वेति ॥** आदिपदेन तत्प्रवर्तकत्वादि । नाध्यात्मशब्दवदधियज्ञशब्देऽव्ययीभावः । किन्त्वधिगतो यज्ञमिति प्रादिसमासः । अधिष्ठितो यज्ञोऽनेनेति बहुव्रीहिर्वा ॥

भावबोधः (र.टि.)– ॥ **नाव्ययीभाव इति** ॥ अव्ययीभावत्वे नाव्ययीभावादित्युक्ताम्भावस्य नित्यत्वादधियज्ञमिति स्यात् नत्वधियज्ञ इति भावः । अधिगतो यज्ञमित्युपसर्गस्य ससाधनक्रियावाचित्वं गमिगम्यादीनामुपसङ्ख्यानमिति वचनात् द्वितीया वाच्येतिभावः । अत एव समासान्तरमाह– बहुव्रीहिरिति ।

भावदीपः (रा.टि.)– अधियज्ञः कथं कोऽत्र देह इति प्रश्नवाक्ये कोऽधियज्ञः, कथं चाधियज्ञ इति प्रश्नद्वयं प्रतीयते । तत्र क इति प्रश्नस्य 'अधियज्ञोऽहमेव' इति परिहारो गीतायामुक्तः । 'कथम्' इति प्रश्नस्य तु नोक्तः । अत उक्तम्– **भगवता अनुक्तमिति** ॥ **नाध्यात्मेति** ॥ 'नाव्ययीभावः' इत्यन्वयः । तथात्वे 'अधियज्ञम्' इति स्यादिति भावः ॥ द्वितीयस्य द्वितीयपादे 'कुगतिप्रादयः' इति सूत्रे 'कुशब्दो गतिसञ्ज्ञकः, प्राद्युपसर्गात् च समस्यन्ते' इति समासविधिसूत्रे

श्लोकः ४
'अत्यादयः क्रान्त्याद्यर्थे द्वितीया' इत्युक्तत्वात् 'अधि' इति उपसर्गस्य 'अति अधि' इत्यादिषु पाठाद्व्याख्याति । अत्यादिषु क्रान्तादीत्यादिपदेन गृहीत 'अधिगत' इत्यर्थे समासमुपेत्य अधिगतो यज्ञम् इति प्रादिसमास इत्युक्तम् ॥

**वाक्यार्थप्रदीपः (पां.टि.)– ॥ नाव्ययीभाव इति ॥** अव्ययीभावत्वे नाव्ययीभावा-दतोम्त्वपञ्चम्या इति अतः परस्य सुपः अम्भावस्य नित्यत्वादधियज्ञमिति स्यात् ॥ ननु अधियज्ञ इति पुल्लिङ्ग इति प्रयोग इति भावः । **प्रादिसमास इति ॥** अत्यादयः क्रताद्यर्थे द्वितीयेत्यनेन समास इत्यर्थः । उपसर्गस्य ससाधतनक्रियावाचित्वं गमिगम्यादीनाम् उपसङ्ख्यानमिति वचनात् द्वितीया चेति भावः । एतदपरितोषादेव समासान्तरमाह– **बहुव्रीहिरिति ॥**

**भावरत्नकोशः (सु.टि.)– कथमित्यस्य** 'केन प्रकारेणाधियज्ञः' इति प्रश्नस्य । 'तत्प्रवर्त-कत्वादि' इत्यत्रादिपदेन यज्ञफलप्रदत्वग्रहः । ननु 'अधियज्ञः' इति कथं पुल्लिङ्गप्रयोगः । अव्ययीभावसमासे 'अव्ययीभावश्च' इति क्लीबतानुशासनात् । न चात्र नाव्ययीभाव इति वाच्यम् । अध्यात्मादिशब्दसहचरितत्वेन तत्त्वावश्यम्भावादित्यत आह– **नाध्यात्मादीति** । 'येनाम्भावः, क्लीबत्वं च शङ्क्येत' इति शेषः । 'यज्ञम्' इत्यनन्तरम् 'अधियज्ञः' इति योज्यम् । समासप्रापकं शास्त्रमवगमयितुमुक्तं **प्रादिसमास इति** । 'कुगतिप्रादयः' इति सूत्रे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति उक्तत्वात् प्रादिगणपठिताधिशब्दस्य अधिगत्यर्थे वर्तमानस्य द्वितीयान्तेन सह समासोऽनुशिष्ट इत्यर्थः । 'अत्यादयः' इत्यादिशब्दाद् अन्येऽपि 'उद्गतो वेलाम् उद्वेलः' इत्यादयः प्रयोगानुसारतो ज्ञातव्या इति प्रसादादौ वैयाकरणैरभिधानात् समास इति भावः ॥

एतेन 'प्रादिसमासः' इति कथम् ,'प्रादयो गताद्यर्थे प्रथमया' इति प्रादीनां प्रथमान्तेनैव समासानुशासनात्, अत्र च द्वितीयान्तेन समासाभ्युपगमात्' इति चोद्यं निरस्तम् । प्रादिगणे पठितोपसर्गस्यापि प्रादित्वाशयादिति । **बहुव्रीहिर्वेति** । अनेन च यज्ञाधिष्ठातृत्वलाभे भगवतो यज्ञभोक्तृत्वयज्ञप्रवर्तकत्वादि च सम्पद्यते । अध्यात्मादिशब्दसहपाठस्तु पुल्लिङ्गस्यान्यथैव निर्वाह्यत्वादकिञ्चित्कर इति भावः ।

**भावदीपिका (श्री.टि.)–** 'तत्प्रवर्तकत्वादि' इत्यत्र तच्छब्देन यज्ञग्रहणम् । आदिपदेन यज्ञफलदातृत्वादिग्रहणम् । **नाव्ययीभाव इति** ॥ अव्ययीभावत्वे हि 'नाव्ययीभावा-

दतोम्त्वपञ्चम्याः' इति सूत्रेण 'अदन्ताव्ययीभावात् सुपो न लुक्, तस्य पञ्चमीं विनाऽमादेशः' इत्युक्ताम्भावस्य नित्यत्वात्, 'अधियज्ञम्' इति स्यात्, ननु 'अधियज्ञः' इतीति भावः । **प्रादि-समास इति** ।। 'प्रगत आचार्यः प्राचार्यः' इत्यादिवत् 'यज्ञमधिगतोऽधियज्ञः' इति प्रादिसमास इत्यर्थः । उपसर्गस्य ससाधनक्रियावाचित्वादिति ध्येयम् ।।

**भावप्रकाशः (कृ.टि.)**– ।। **तत्प्रवर्तकत्वादीति** ।। यज्ञफलदातृत्वसङ्ग्रहायादिपदम् ।।ननु अधियज्ञ इति कथं पुंस्त्वम् । अव्ययीभावश्चेत्यव्ययस्य क्लीवत्वोक्तेरित्यत आह– **नाध्यात्मादि-शब्दवदिति** ।।

## भाष्यम्

**अन्योऽधियज्ञोऽग्न्यादिः प्रसिद्ध इति देहे इति विशेषणम् । 'भोक्तारं यज्ञतपसाम्', 'त्रैविद्या माम्' 'येऽप्यन्यदेवताभक्ताः'। 'एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवाः' इत्यादेः ।।**

भावप्रदीपिका (प.टी.)– ननु कथं सर्वयज्ञभोक्तृत्वं भगवतः ? 'देहे' इति विशेषितत्वादित्याह– **अन्य इति** ।।

भावप्रकाशिका (न.टी.)– 'देहे' इति विशेषणं किमर्थम् ? इत्यत आह– **अन्य इति** । अग्न्यादेरपि ईषद्यज्ञभोक्तृत्वेनाधियज्ञत्वे सिद्धेऽपि न सर्वनियन्तृत्वं तस्येत्यर्थः । नन्वाप्तकामत्वाद्भगवतः किं तस्य भोक्तृत्वे मानम् ? इत्यत आह– **भोक्तारमिति** । आप्तकामोऽपि क्रीडया भुङ्क्ते इति भावः । ननु भोक्तृत्वेऽपि भगवतो विष्ण्वादिशब्दोद्दिष्टेष्वेव यज्ञेषु, न त्विन्द्रादिशब्दोद्दिष्टेष्विति कथं तस्य सर्वयज्ञभोक्तृत्वम् ? इत्यत आह– **त्रैविद्या इति** । 'मामिष्ट्वा प्रार्थयन्ते' इत्युक्तेः त्रैविद्यधर्मेष्वपि भगवानीड्यः फलदश्चेति सिद्ध्यति । येऽप्यन्यदेवता यजन्ते तेऽपि मामेव यजन्तीति च त्रैविद्येड्यो भगवान् । तथाऽपि स्वबुद्ध्याऽन्यदेवतोद्देशान्न ते भागवता इति भावः । तावद्भगवतः सर्वयज्ञभोक्तृत्वं फलदत्त्वं च तद्वाक्यैः साधयित्वा, तस्य सर्वयज्ञप्रवर्तकत्वं श्रुत्या दर्शयति– **एतस्येति** ।

प्रमेयदीपिका (ज.टी.)– अधियज्ञः कः? इति प्रश्ने तत्परिहारे च 'देहे' इत्यस्य प्रयोजनमाह– **अन्य इति** ।। अन्यो भगवतः' इति सिद्धार्थतापरिहारार्थं प्रश्नवाक्ये 'देहे' इति

श्लोकः ४

**विशेषणं प्रयुक्तम् । कर्तृभोक्तृफलदातॄणां देहप्रेरकत्वेन वर्तमान इति । अतः परिहारवाक्येऽपि यथाप्रश्नं तदुपात्तम्' इति वाक्यशेषः । भगवतः सर्वयज्ञभोक्तृत्वं कुतः? येनैवमुत्तरमध्याह्रियत इत्यत आह– भोक्तारमिति ॥ त्रैविद्यानुष्ठितयज्ञभोक्तृत्वाभावात् 'सर्वं' इत्यनुपपन्नमित्यत आह– त्रैविद्या इति ॥ प्रवर्तकत्वे श्रुतिमाह– एतस्येति ॥**

**भावबोधः (र.टि.)– ॥ सिद्धार्थतेति ॥** अधियज्ञः क इति प्रश्नस्येति शेषः ॥

**भावदीपः (रा.टि.)–** भाष्ये इतिपदं हेत्वर्थमित्युपेत्य तदनुवादपूर्वं तदनन्तरम् अध्याहार्यम् आह– **इति सिद्धार्थतेति ॥ कोधियज्ञ इति ॥** 'प्रश्नस्य' इति योज्यम् ॥ उक्तमित्यस्य 'अतः' इत्यादिना अन्वयः ॥ स्वयं प्रश्नवाक्यस्थ 'देह' इतिपदस्यार्थमाह– **'कर्तृभोक्तृ'** इत्यादिना **'श्रुतत्वात्'** इति पञ्चमान्तेन ॥ **येनैवमिति ॥** सङ्कर्षणाद्यर्थद्वयेऽपीत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)–** 'अन्यः' इति भाष्ये प्रतियोग्युक्तिः **भगवत इति । प्रसिद्धः** 'त्वं यज्ञेष्वीड्यः' इत्यादौ प्रसिद्धस्तेजोभूताभिमानिदेवतारूप इति भाष्यपदार्थः स्फुटत्वान्नोक्तः । 'अग्न्यादिरपीषद्यज्ञभोक्तृत्वेन प्रसिद्धः' इति तु प्राचीनटीका । 'इति' इतिपदमनूद्यानन्तर-मुपस्कर्तव्यमाह– **इति सिद्धार्थतेति ।**

'प्रश्नदोषा हि चत्वारः स्वव्याहतिरसङ्गतिः ।
सिद्धार्थता च वैफल्यम् ........................॥'

इत्यनुव्याख्याने सिद्धार्थतायाः प्रश्नदोषत्वोक्तेः तद्व्यावृत्त्यर्थमित्यर्थः । **प्रश्नवाक्ये** 'अधियज्ञः कः' इति प्रश्नवाक्ये । **उक्तं** 'कोऽत्र देह' इति गीतायाम् । एवमपि स्वदेहे अग्न्यादिस्थितेरपि विदितत्वेन सिद्धार्थतेत्यत उक्तम् **कर्तृभोक्तृफलदातॄणामिति । इति विशेषणम्** 'भूतले घटः' इत्यादाविव 'देहे' इत्येतद्व्यावर्तकम् । 'उक्तम्' इत्यन्वयः । **उत्तरम्** 'सर्वयज्ञभोक्तृत्वादेरधियज्ञः' इति सर्वयज्ञभोक्तृत्वतत्प्रवर्तकत्वतत्फलदातृत्वप्रकारैरित्येवमुत्तरं भाष्यकारेणाध्याह्रियत इत्यर्थः । यज्ञतपसां यज्ञानां तपसां च । **त्रैविद्यानुष्ठितयज्ञभोक्तृत्वाभावादिति ।** यज्ञानुष्ठानकाले त्रैविद्यानां भगवत एव सर्वयज्ञमुख्योद्देश्यत्वज्ञानशून्यतया तद्दत्तं न भगवान् भुङ्क्ते इति हृदयम् । **सर्वेत्यनु-पपन्नमिति ।** 'सर्वयज्ञभोक्तृत्वादेः' इति भाष्य इति योज्यम् । 'मामिष्ट्वा स्वर्गतिं प्रार्थयन्ते'

इत्युक्तेस्त्रैविद्यधर्मेष्वपि भगवानेवेज्यः, भोक्ता, फलप्रदश्चेति सिद्ध्यति । 'येऽप्यन्यदेवता भक्ता यजन्ते तेऽपि मामेव यजन्ते' इति च त्रैविद्ययज्ञेज्यो भगवानेवेति 'त्रैविद्यानाम्' इत्यादिभाष्यं प्राचीनटीकायां व्याख्यातम् । 'भगवद्धोगनिमित्तं हि फलम्' इत्यादिना नवमे टीकायां च व्याख्यास्यत इति तद्रीत्याऽपि त्रैविद्ययज्ञभोक्तृत्वं भगवतोऽस्तीति युक्तं 'सर्व' इत्युक्तमिति ।

**प्रवर्तकत्वे** सर्वयज्ञप्रवर्तकत्वे । **एतस्य** उक्तगुणकस्य । **अक्षरस्य** अक्षराधिकरणन्यायेन अक्षर-शब्दमुख्यार्थस्य भगवतः **प्रशासनेनैव** अनन्याधीनासङ्कुचिताज्ञानिमित्तेनैव । **ददतः** दातॄन् मनुष्याः प्रशंसन्ति भगवदाज्ञयैव **यजमानं** देवान् पूजयन्तं देवाः प्रशंसन्तीति श्रुत्या सर्वयज्ञप्रवर्तकत्वं लभ्यत इति भावः ।

**भावदीपिका (श्री.टि.)**– ॥ **सिद्धार्थतेति** ॥ 'अधियज्ञः कः' इति प्रश्नवाक्यस्येत्यर्थः ।

प्रश्नदोषा हि चत्वारः स्वव्याहतिरसङ्गतिः ।
सिद्धार्थता च वैफल्यम्... .. . . .॥

इति वचनबलात् तस्याः प्रश्नदोषत्वावगमादिति भावः । 'देहे' इति विशेषणवललब्धमर्थमाह– **कर्त्रित्यादिना** ॥ **तदुपात्तम्** 'देहे' इति विशेषणमुपात्तम् । **उत्तरमध्याह्रियत इति** ॥ 'अधियज्ञः कथम्' इति प्रश्नस्योत्तरम्– 'सर्वयज्ञभोक्तृत्वादेरधियज्ञः' इत्यनेनाध्याह्रियत इत्यर्थः । **सर्वेत्यनुपपन्नमिति** ॥ 'सर्वयज्ञभोक्तृत्वादेः' इत्यत्र 'सर्व' इत्येतदनुपपन्नमित्यर्थः । **एतस्येतीति** ॥ मनुष्याः द्रव्यादिकं ददतो जनान् प्रशंसन्ति, देवाश्च यजमानं प्रशंसन्तीति यत् तद् एतस्यअक्षरस्य प्रशासनेप्रेरणे सत्येव, नान्यथेति श्रुत्यर्थो द्रष्टव्यः ॥

**भावप्रकाशः (कृ.टि.)**– ननु अधियज्ञ इति कथं पुंस्त्वम् । अव्ययीभावश्चेत्यव्ययस्य क्लीवत्वोक्तेरित्यत आह– **नाध्यात्मादिशब्दवदिति** ॥ **सिद्धार्थतेति** ॥ अधियज्ञः कः इति प्रश्नस्येति शेषः । ननु देह इत्युक्तेपि सिद्धार्थतैव । अग्न्यादेरपि स्वदेहे स्थितत्वादित्यत आह– **कर्त्रिति** ॥

## भाष्यम्

**'कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैश्रेयसं पदम्' इत्यादि परिहाराच्च मोक्षधर्मे । भगवांश्चेद् भोक्तृत्वादेरधियज्ञत्वं सिद्धमिति कथम् इत्यस्य परिहारः पृथङ् नोक्तः । सर्वप्राणिदेहस्थरूपेण साधियज्ञः ॥**

श्लोकः ४

भावप्रदीपिका (प.टी.)– सर्वयज्ञभोक्तृत्वप्रवर्तकत्वफलदातृत्वादि हरेरन्यत्र सिद्धानीत्याह– **कुत इति ।** इत्यादेः प्रश्नस्य परिहारात् ॥ नन्वेवं चेत् 'कथम्' इत्यस्य परिहारः, तर्हि गीतायामेव किं नोक्तः ? इत्यत आह– **भगवांश्चेति ।** ननु पूर्वं 'साधियज्ञम्' इत्युक्त्वा 'अधियज्ञोऽहम्' इति कथमुच्यते इत्यत आह– **सर्वेति ।**

भावप्रकाशिका (न.टी.)– दानतत्प्रशंसनया भगवत्प्रशंसनादि भगवत्प्रशस्त्येत्यर्थः । तदेतत् त्रयं मोक्षधर्मेऽपि सिद्धमित्याह– **कुतो हीति ।** आदिशब्दात् 'विधिना केन वा जुह्वन् जैवं पित्र्यमथापि च' इत्यादि । अस्य परिहारो नारदनारायणसंवादादिरूपः तत्र तावन्नारदवाक्ये 'चत्वारो ह्याश्रमादेव सर्वे गार्हस्थ्य...... ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां
श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां .................... ॥

प्रमेयदीपिका (ज.टी.)– यज्ञफलदातृत्वादौ प्रमाणमाह– **कुतो हीति ॥ ध्रुवः** चिरन्तनः । नैश्रेयसे मुक्तौ भवं पदं सुखम् इत्यादेः प्रश्नस्य ॥ नन्वेष परिहारो भगवतैव कुतो नोक्तः? इत्यत आह– **भगवांश्चेदिति ॥** चेच्छब्दः यदाशब्दार्थे । अधियज्ञोऽहमिति यदाऽधियज्ञत्वेन भगवानुक्तः, तदा तस्य सर्वयज्ञभोक्तृत्वादेरधियज्ञत्वम् अर्जुनस्य सिद्धमेव। भोक्तारम् इत्यादेरर्थस्य तेन श्रुतत्वात् । अन्यत्वपक्ष एव कथम् इति पृष्टत्वात् । एवमालोच्य भगवता कथम् इत्यस्य प्रश्नस्य परिहारः अधियज्ञोऽहम् इत्यतः पृथङ्नोक्तः । अस्माभिस्तु मन्दान् बोधयितुमुक्त इति भावः ॥

ननु यद्यधियज्ञः स्वयमेव, कथं तर्हि साधियज्ञं माम् इति प्रागवोचत् ? इत्यत आह– **सर्वेति ॥** रूपविशेषापेक्षया साहित्यमुक्तमिति भावः । अनेन परिहारवाक्यस्थस्य देहे इति विशेषणस्य प्रयोजनान्तरं चोक्तं भवति ॥

भावबोधः (र.टि.)– ननु प्रसिद्धस्वर्गस्य ध्रुवत्वाभावादेतद्विशेषणत्वेन स्वर्गपदेन मोक्षसुखग्रहणे नैश्रेयसमिति पुनरुक्तं स्यादित्यत आह– **ध्रुवश्चिरन्तन इति ।** भगवतः अधियज्ञत्वस्य निर्णीतत्वेन पाक्षिकत्वासम्भवादाह– **चेच्छब्दो यदाशब्दार्थ इति ।** इत्यादेरित्यादिपदेन 'तांस्तथैव भजाम्यम् । 'मम वर्त्मानुवर्तन्ते' लभते च ततः कामान् मयैव विहितान् हि तान्' इत्यादेर्ग्रहणम् ।

**अन्यत्वपक्ष इति** । अधियज्ञः क इति प्रष्टुरर्जुनस्य प्रश्नकरणसमये भगवतोऽधियज्ञत्वस्यासिद्धत्वात् । यदि भगवतोऽन्यः अधियज्ञस्तर्हि कथं केन प्रकारेण तस्याधियज्ञत्वमित्यन्यत्वपक्ष इत्यर्थः । **प्रयोजनान्तरमिति** । न केवलं देहे प्रवर्तकप्रश्ने तदनुसारेण देहे प्रवर्तको वक्तव्य इत्येव परिहारवाक्ये देहशब्दोपादाने प्रयोजनम् । किन्तु 'प्राणिनां देहगो विष्णुरधियज्ञ इतीरितः' इति प्रमाणानुसारेण अधियज्ञोऽहमित्युक्तौ बहिष्ठस्त्वं कथं देहे प्रवर्तक इति शङ्कायाम् अधियज्ञाख्यदेहस्थरूपान्तरेणाहं प्रवर्तक इति प्रवर्तकरूपविशेषस्वरूपप्रदर्शनलक्षणं प्रयोजनान्तरमित्यर्थः । अहमेवेत्युक्तिस्तु स्वस्य प्रवर्तकरूपेणात्यन्ताभेदाभिप्रायेणेति भावः । **भगवतोऽन्यदेवेति** । वेदादिकमित्यर्थः ।

**भावदीपः (रा.टि.)– ॥ अन्यत्वपक्ष इति** ॥ भगवतोऽन्योऽग्न्यादिरेवाधियज्ञ इति पक्ष इत्यर्थः । अतो न प्रश्नायोग इति भावः ॥ **प्रागिति** ॥ पूर्वाध्यायान्त इत्यर्थः ॥ **प्रयोजनान्तरमिति** ॥सर्वप्राणिस्थरूपविशेषेणैव 'अधियज्ञोऽहम्, न बाह्यरूपेण' इति ज्ञापनरूपं प्रयोजनान्तरं सिद्धार्थतानिवृत्त्यर्थतया प्रश्नवाक्योपात्तदेहपदानुसाररूपप्रयोजनाद् अन्यत् प्रयोजनमित्यर्थः ॥

**भावरत्नकोशः (सु.टि.)–** यज्ञफलदातृत्वादौ यज्ञफलभूतस्वर्गदातृत्वे, ज्ञानफलभूतनिःश्रेयसदातृत्वे च प्रमाणोक्तिः । नैःश्रेयससौख्यमपि ददतः स्वर्गादिसौख्यदातृत्वमस्तीति किमु वक्तव्यम् इति कैमुत्यन्यायप्रदर्शनायेति ज्ञातव्यम् । 'यावदिन्द्रः' इत्यादिना स्वर्गस्यानित्यत्वावगमात् कथं नित्यपर्यायध्रुवशब्देन विशेषणम् ? इत्यतो गौणोऽयं शब्द इत्याह– **ध्रुवश्चिरन्तन इति** । 'अचतुरविचतुर' इत्यादिना निपातनान्निःश्रेयसशब्दोऽयमकारान्तः । ततः 'तत्र भवः' इत्यर्थेऽण्प्रत्यय इति भावेनाह **निश्रेयसे मुक्तौ भवमिति** ।

पद्यते गम्यत इति पदं प्राप्तव्यमिति भावेनोक्तम् **पदं सुखमिति** । 'कुतः' इति वाक्यस्य प्रश्नरूपत्वात्, 'इत्यादिपरिहारात्' इति कथमित्यत आह– **इत्यादेरिति** । भाष्ये न समानाधिकरणसमासः, किन्तु 'इत्यादेः परिहारात्' इति षष्ठीसमासः, तत्र 'प्रश्नस्य' इति योज्यमिति भावः । 'परिहारात्' इति भाष्यस्य 'तस्य प्रसादाद् गच्छन्ति तदादिष्टफलां गतिम्' इति मोक्षधर्मे कुतः पुरुषस्य स्वर्गः ? कुतश्च निःश्रेयसम् ? इति प्रश्नस्य । **तस्य** देवस्य

'प्रसादादधमाद्विष्णोः स्वर्गलोकः प्रकीर्तितः ।
मध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिदः ॥'

श्लोकः ४

इति शास्त्रावेदिताद् अधमाद्, उत्तमाच्च प्रसादात् तेन भगवता आदिष्टं दत्तं फलं सुखं यस्यां तां गतिं गच्छन्तीति परिहारे भगवत एव यज्ञज्ञानफलदातृत्वावगमादित्यर्थः । एषः 'सर्वयज्ञभोक्तृत्वादेः' इत्येषः । भगवतोऽधियज्ञत्वस्य नित्यसिद्धत्वेन पाक्षिकत्वाभावाद्, यद्यर्थकचेच्छब्दायोगः ? इत्यत आह– **चेच्छब्द इति** । 'पक्षान्तरे चेद्यदि च' इत्यभिधानेऽपि, अव्ययानामनेकार्थत्वाशयेन यदाशब्दार्थत्वोक्तिः ।

**इत्यादेरर्थस्येति** । सर्वयज्ञभोक्तृत्वस्य, आदिपदोपात्तस्य प्रवर्तकत्वोपपादकस्य 'अहं कृत्स्नस्य जगतः प्रभवः' इत्यर्थस्य, फलदातृत्वोपपादकस्य 'लभते च ततः कामान् मयैव विहितान् हि तान्' इत्यर्थस्य च, 'भोक्तारं यज्ञतपसाम्' इति, 'अहं कृत्स्नस्य जगतः' इति, 'मयैव'इत्यादौ पञ्चमान्तादौ अर्जुनेन श्रुतत्वाद् 'भोक्तारम्' इत्यत्र 'सर्वलोकमहेश्वरम्'इत्यनेन यज्ञादिसर्वलोकप्रवर्तकत्वस्य, तत्फलदातृत्वस्य श्रुतत्वादित्यर्थः । तर्हि 'कथमधियज्ञः' इति प्रश्नायोगः ? इत्यत आह– **अन्यत्वेति** । 'भगवतोऽन्योऽग्न्यादिरधियज्ञः' इति पक्ष एव 'कथमधियज्ञः' इति प्रश्नः, न भगवत्पक्ष इत्यतो नोक्तदोष इति भावः ।

'पृथक्' इत्यत्र प्रतियोग्याह– **अधियज्ञोऽहमित्यत इति** । **उक्तः** 'सर्वयज्ञभोक्तृत्वादेरधियज्ञः' इति परिहार उक्तः । **कथमिति** । साहित्यस्य भेदसापेक्षत्वादिति भावः । यद्वक्ष्यति भाष्यकारः 'साधियज्ञम् इति भेदप्रतीतेः' इति । 'साधिभूताधिदैवं मां साधियज्ञं च ये विदुः' इत्यस्यानुवादः **साधियज्ञं मामिति** । **रूपविशेषेति** । सर्वप्राणिदेहस्थरूपापेक्षयेत्यर्थः । **अनेन** 'सर्वप्राणिदेहस्थरूपेण' इति भाषणेन । **प्रयोजनान्तरम्** अन्योऽधियज्ञोऽग्न्यादिः प्रसिद्ध इति सिद्धार्थतापरिहारार्थं प्रश्नवाक्ये 'देहे' इतिवत्, परिहारवाक्येऽपि 'देहे' इति विशेषणमर्थवदिति प्रश्नानुसारित्वरूपं यत् प्राक् प्रयोजनमुक्तम्, ततोऽन्यद् बहिःष्ठरूपव्यावृत्तिलक्षणप्रयोजनं चेत्यर्थः ॥

**भावदीपिका (श्री.टि.)**– स्वर्गस्य ध्रुवशब्दोक्तनित्यत्वासम्भवादाह– **ध्रुवश्चिरन्तन** इति ॥ 'अचतुर' इत्यादिना निःश्रेयसशब्दस्य अच्प्रत्ययान्तस्य निपातितत्वात् 'निःश्रेयसे' इति ह्युक्तम् । 'नैःश्रेयसम्' इत्यत्र तद्धिताण्प्रत्ययार्थकथनम्– **भवमिति** ॥ पद्यते प्राप्यत इति पदम् इति व्युत्पत्तिमभिप्रेत्याह– **पदं सुखमिति** ॥ कथं सिद्धम् ? इत्यत आह– **भोक्तारमिति** ॥

'भोक्तारं यज्ञतपसां सर्वभूतमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥'

इति भगवतोक्तं यत्तु अस्य सर्वयज्ञभोक्तृत्वं तस्यार्जुनेन श्रुतत्वादित्यर्थः । ननु तर्हि 'अधियज्ञः कथम्' इति प्रश्न एवानुपपन्नः । सिद्धार्थत्वादित्यत आह– **अन्यत्वपक्ष एवेति** ॥ यज्ञभोक्तुर्भगवदन्यत्वपक्ष एव तस्याधियज्ञत्वं कथम् इति पृष्टत्वादित्यर्थः । इत्यत **पृथगिति** ॥ अनेनैव परिहारोऽपि लब्धप्राय इति भावः । **रूपविशेषेति** ॥ अन्तर्यामिरूपविशेषेत्यर्थः ।

**प्रयोजनान्तरमिति** ॥ न केवलं देहे प्रवर्तकप्रश्ने तदनुसारेण देहे प्रवर्तका वक्तव्य इत्येव परिहारवाक्ये देहशब्दोपादाने प्रयोजनं वाच्यम् । किन्तु 'प्राणिनां देहगो विष्णुरधियज्ञ इतीरितः' इति प्रमाणानुसारेण 'अधियज्ञोऽहम्' इत्युक्ते, 'बहिष्ठः त्वं कथं देहे प्रवर्तकः?' इति शङ्कायाम् अधियज्ञाख्यदेहस्थरूपान्तरेणाहं प्रवर्तक इति प्रवर्तकरूपविशेषस्वरूपप्रदर्शनलक्षणं प्रयोजनान्तरं चोक्तं भवतीत्यर्थः । 'अहमेव' इत्युक्तिस्तु स्वस्य प्रवर्तकरूपेणात्यन्ताभेदाभिप्रायेणेति भावः ।

**भावप्रकाशः (कृ.टि.)–** ॥ **प्रयोजनान्तरमिति** ॥ प्राग् अग्न्यादिव्यावृत्तिरूपं प्रयोजनमुक्तम् । इदानीं बहिष्ठरूपव्यावृत्त्याख्यप्रयोजनान्तरमुक्तमित्यर्थः ॥

## भाष्यम्

**अत्र इति स्वदेहनिवृत्त्यर्थम् । न हि तत्रेश्वरस्य नियन्तृत्वं पृथगस्ति । नात्रोक्तं ब्रह्म भगवतोऽन्यत् । 'ते ब्रह्म' इत्युक्त्वा 'साधिभूताधिदैवं मां साधियज्ञं च ये विदुः' इति परामर्शात् । तस्यैव च प्रश्नात् । साधियज्ञम् इति भेदप्रतीतेः तन्निवृत्त्यर्थम् अधियज्ञोऽहम् इत्युक्तम् । माम् इत्यभेदप्रसिद्धेः अक्षरम् इत्येवोक्तम् ॥**

भावप्रदीपिका (प.टी.)– 'अत्र' इति विशेषितत्वान्न सर्वं साधियज्ञत्वं हरेरित्यत आह– **अत्रेति** । किमर्थं स्वदेहो व्यावर्त्यते ? इत्यत आह– **न हीति** । एवं श्लोकद्वयं व्याख्याय, परकृतापव्याख्यां 'ब्रह्मशब्देन परमाक्षरं वेद' इति, तां निराकरोति **नात्रेति** । 'ते ब्रह्म' इत्युक्त्वा, अधिभूताधिदैवं ब्रह्मेत्यनुक्त्वा, 'माम्' इति ब्रह्मणो मच्छब्देन परामर्शात् । न च ब्रह्मज्ञानमुक्त्वा, स्वज्ञातृत्वमुच्यत इति वाच्यम् । मां चेति चशब्दाभावादिति । गताध्याये भगवानेव च ब्रह्म तर्ह्यत्रोक्तस्य किमायातम् ? इत्यत आह– **तस्येति** । नन्वेवमधियज्ञब्रह्मणो भगवत्स्वरूपत्वे, 'अहम्' इत्युक्तेः किं कारणम् ? इत्यत आह– **साधीति** ।

श्लोकः ४

**प्रमेयदीपिका (ज.टी.)**– 'अत्र' इति देहविशेषणं किमर्थम्? इत्यत आह– **अत्रेति ॥** इह लौकिके देह इत्यर्थः । कुत ईश्वरदेहो व्यावर्तनीयः? इत्यत आह– **न हीति ॥** तत्र स्वदेहे । पृथक् पृथग्भावेन यथा 'अधियज्ञोऽहमेव' इत्युक्तं न तथा 'ब्रह्माहम्' इति । अतो भगवतः अन्यदेवेदम् । ब्रह्म परमम् इति तु स्वरूपकथनम् । नतु विशेषणमिति शङ्कां निवारयति– **नात्रेति ॥** पूर्वाध्याये 'ते ब्रह्म तद्विदुः' इत्युक्त्वा कथम्भूतं ब्रह्म? इत्याकाङ्क्षायां 'साधिभूताधिदैवं साधियज्ञं च ब्रह्म' इति वक्तव्ये माम् इति ब्रह्मणः परामर्शात् । तत्रास्तु भगवानेव ब्रह्म । अत्र तु कुतः? इत्यत आह– **तस्यैवेति ॥** पृष्टस्यैव वक्तव्यत्वात् । तर्ह्यधियज्ञस्य ब्रह्मणश्च भगवत्त्वादेकत्र 'अहमेव' इत्युक्तिरपरत्र तदनुक्तिः किं निबन्धना? इत्यत आह– **साधियज्ञमिति ॥**

**भावबोधः (र.टि.)**– ननु तर्हि तद्व्यावृत्त्यर्थं परममिति अक्षरस्य परमत्वविशेषणं कथमुक्तमित्यत आह– **परममिति** । वेदादेः परमशब्देनेतरापेक्षयोत्तमत्वाख्यस्वरूपमेव कथ्यते, नतु वर्णक्रमं मध्यमाक्षरप्रकृतिद्वयमपि व्यावर्तयितुमक्षरगतं परमत्वविशेषणमुच्यते इत्यर्थः ॥

**भावदीपः (रा.टि.)**– 'अत्र' इति 'देह' इति पदद्वयार्थः– **इह लौकिकदेह इति** ॥ **साधिभूताधिदैवमिति** ॥ अधिभूतशब्दितसशरीरजीवोपकारित्वेन स्थितोत्पत्तेः विनाशिपदार्थस्थतया तत्सहितम्, अधिदैवशब्दितसर्वजीवाधिपतिब्रह्मादिस्थत्वेन तत्सहितम्, अधियज्ञशब्दितं, सर्वप्राणिदेहगतरूपेण सहितं चेति पदत्रयार्थः ॥ **परामर्शादिति** ॥ अस्मच्छब्देन वित्तिविषयतया प्रागुक्तस्येह पुनः कथनादित्यर्थः ॥

**भावरत्नकोशः (सु.टि.)**– 'अत्र' इत्यत्र प्रकृतिभूतैतच्छब्दस्य सप्तमीविभक्तेश्चार्थमाह– इहेति । 'इदम इश्' 'इदमो हः' इति त्रलपवादे हप्रत्यये च 'इह' इति रूपम्, तस्य विवक्षितार्थोक्तिः **लौकिक इति** । 'ईश्वरदेहः' इति वदन् 'स्वदेह' इति भाष्ये स्वस्य भगवतो देह इति विग्रहमभिसन्धत्ते । 'परः स्वो हरिरुद्दामा' इति भागवततात्पर्यरीत्या स्वशब्द एवेश्वरवचन इत्यपि आहुः । पृथङ्नियन्तृत्वं नास्तीत्युक्तौ, अन्येन सह तदस्तीति प्रतीयते, तन्निरासाय व्याचष्टे– **पृथग्भावेनेति** । यथाऽन्यदेहे स्थितस्य भगवतो देहात् पृथगवस्थितस्यैव नियन्तृत्वेनाधियज्ञत्वम्, न तथा नियम्यापेक्षया पार्थक्येन तत्स्थितस्य तस्य नियन्तृत्वमित्यर्थः । अतस्तद्व्यावर्तनाय 'अत्र'

इति देहविशेषणमर्थवदिति भावः । उत्तरभाष्यमवतारयति– **यथाधियज्ञ इति । इदम्** 'अक्षरं ब्रह्म परमम्' इति परिहारवाक्योक्तं ब्रह्म वेदादिरूपमन्यदेवेत्यर्थः । ननु 'अक्षरं ब्रह्म परमम्' इति वाक्ये अक्षरं परमत्वेन विशेषितम् । परमं चाक्षरम् अक्षराधिकरणादिरीत्या भगवानेवेति कथमन्यत्व-शङ्केत्यत उक्तम् **परममिति त्विति ।**

अयं भावः । यदुक्तं 'परमम्' इत्यनेनाक्षरं वेदादितो व्यावर्त्यत इति, तदयुक्तम् । 'किं ब्रह्म ?' इति प्रश्नस्य 'अक्षरं ब्रह्म' इत्युक्तिमात्रेण परिहारात् । वेदादेरप्यक्षरशब्दार्थस्य ब्रह्मत्वावबोधे विरोधाभावेनाव्यावर्तनीयत्वात् । न हि तद्व्यावृत्तिर्बोद्धव्येत्यत्र नियामकविशेषोऽस्ति । उपात्तस्य 'परमम्' इत्यस्य 'एको घटः', 'नीलधूमवान् पर्वतो वह्निमान्' इत्यादाविव वस्तुस्थितिकथन-रूपत्वमस्तु । तथा च न तद् भगवतोऽन्यस्य प्रतिपाद्यत्वशङ्कां निरुणद्धीति । **इत्याकाङ्क्षायां** कथम्भूतं ब्रह्म विदुः ? इत्याकाङ्क्षायाम् । **ब्रह्मणः परामर्शादिति ।** अस्मच्छब्देन पूर्वोक्तब्रह्मणः परामर्शाभावे **'कथम्भूतं ब्रह्म विदुः'** इत्याकाङ्क्षाया अशान्त्यापत्त्या तत्परामर्शो युक्त इति भावः । 'परामर्शात्' इत्यस्य 'अत्रोक्तं ब्रह्म न भगवतोऽन्यत्' इति पूर्वेणान्वयः । 'परामर्शात् तत्रास्तु' इत्येकं वाक्यमित्यपि आहुः । **तत्र** पूर्वाध्याये । **अत्र तु** 'अक्षरं ब्रह्म' इत्यत्र तु । **कुत इति ।** तत्रेवास्मच्छब्दादेर्भगवत्त्वज्ञापकस्याभावादिति भावः ॥

'ते ब्रह्म तद्विदुः' इति पूर्वाध्यायोपलक्षितस्यैव ब्रह्मणः 'किं तद्ब्रह्म' इति पृष्टत्वादिति भाष्यार्थं स्फुटत्वादनभिधाय, पूर्वोपक्षिप्तस्य पृष्टत्वेऽपि 'अक्षरं ब्रह्म' इति वाक्ये तद्ग्रहणं कुत इति चोद्यं परिहर्तुमाह– **पृष्टस्यैवेति ।** अत्रापि भगवदनन्यब्रह्मैवाभिमतमिति भावः । **तर्हि** यदि परिहार-वाक्येऽपि भगवानेव ब्रह्मेत्यभिमतं तर्हीत्यर्थः । **एकत्र** 'अधियज्ञोऽहम्' इत्यत्र । **अपरत्र** 'अक्षरं ब्रह्म परमम्' इत्यत्र ।

**साधियज्ञमितीति ।** अयं भावः । यदुक्तम् अधियज्ञवत् ब्रह्मणोऽपि विष्णुत्वे तत्र 'ब्रह्माहमेव' इत्यनुक्त्वा, अत्र 'अधियज्ञोऽहमेव' इति किमर्थमुच्यते ? कारणविशेषमन्तरेणोक्तिवैचित्र्या-योगात् । अतोऽधियज्ञ एव विष्णुः, न ब्रह्मेति, तदयुक्तम् । ब्रह्माधियज्ञयोरुभयोर्विष्णुत्वेऽपि 'ब्रह्माहमेव' इत्यनुक्त्वा 'अधियज्ञोऽहमेव' इत्युक्तिः कथं न युज्यते, 'साधियज्ञं माम्' इति भगवता स्वस्याधियज्ञसाहित्योक्त्या 'अधियज्ञो भगवतो भिन्न एव' इत्याशङ्कायां तत्परिहारार्थ-त्वात् 'अहमेव' इत्युक्तेः । 'ते ब्रह्म तद्विदुः' इत्युक्तत्वात् 'कथम्भूतं ब्रह्म विदुः' इत्याकाङ्क्षायां

श्लोकः ४

'साधिभूताधिदैवं साधियज्ञं ब्रह्म' इति वक्तव्ये 'माम्' इति भगवतो ब्रह्मत्वेन परामर्शाद् ब्रह्म-भगवतोरभेदसिद्धेः 'अक्षरं ब्रह्म' इत्येवोक्तम् । न पुनः 'अहमेव ब्रह्म' इति चोक्तमित्युक्तिवैचित्र्यं तन्निबन्धनमिति ॥

**भावदीपिका (श्री.टि.)**– ॥ **अत्रेतीति** ॥ 'अत्र' इत्यनुक्तौ 'देहप्रवर्तकोऽहमधियज्ञः' इत्युक्ते, ईश्वरदेहस्यापि प्राप्तेः, तद्व्यावृत्त्यर्थम् 'अत्र' इत्युक्तमित्यर्थः । तस्यार्थमाह– **इहेति** ॥ तस्याप्यर्थमाह– **लौकिक इति** ॥ ईश्वरदेहातिरिक्तदेहपरो लौकिकदेहशब्दः, तेन सर्वदेहसङ्ग्रह इति ध्येयम् । **पृथग्भावेनेति** ॥ देहे भिन्नतयाऽवस्थानेनेत्यर्थः । **भगवतोऽन्यदेवेति** ॥ वेदादिक-मेवेत्यर्थः । ननु वेदादिशङ्कानिवृत्त्यर्थमेव 'परमम्' इत्युक्तत्वात् कथमियं शङ्का ? इत्यत आह– **परममिति त्विति** ॥ परमशब्देन वेदादेः स्मृतिमहदादीतरापेक्षयोत्तमत्वाख्यं स्वरूपमेव कथ्यते, नतु वेद-प्रकृतिव्यावर्तकम् अक्षरगतं परमत्वविशेषणमुच्यत इत्यर्थः । **परामर्शादिति** ॥ ततश्च भगवानेव ब्रह्मेत्याशयः । **अपरत्रेति** ॥ 'अक्षरं ब्रह्म परमम्' इत्यत्र 'अहम्' इत्यनुक्तिरित्यर्थः ॥

**भावप्रकाशः (कृ.टि.)**– नन्वीश्वरस्य स्वदेहे पृथङ्नियन्तृत्वं नास्तीत्युक्तम् । अचिन्त्य-शक्त्या पृथक् पृथगेव स्वदेहेपि तथात्वान्नहीश्वरस्य सर्वपदार्थविषयो नियमनव्यापार एक एवेत्यत आह– **पृथग् भावेनेति** ॥ नियम्यापेक्षया पार्थक्येनेत्यर्थः ॥ **भगवतोन्यदेवेति** ॥ वेदादिकमित्यर्थः । ननु परममित्यक्षरविशेषणात् तद्व्यावृत्तिरित्यत आह– **परममिति त्विति** ॥ उक्तहेतोः परब्रह्मणः अप्रतिपाद्यत्वेन वेदादेरेव प्रतिपाद्यत्वादिति भावः ॥

**प्रमेयदीपिका (ज.टी.)– शेषं तात्पर्यनिर्णये ॥ एतेन अपव्याख्यानमपि निरस्तम् । द्वादशादौ च विस्तरेण वक्ष्यति ॥**

**भावबोधः (र.टि.)**– ॥ **शेषं तात्पर्यनिर्णय इति** ॥ ननु भगवानेवाधियज्ञश्चेत् कथं तत्साहित्यं प्रागुक्तमित्याशङ्का तस्यैव सर्वप्राणिदेहस्थितरूपान्तरापेक्षया सहितत्वं युज्यते इति तात्पर्यनिर्णये परिहृतेत्यर्थः । **एतेनेति** । भगवत एव ब्रह्मत्वाधियज्ञत्वोपपादनेनाधियज्ञोऽहमित्यत्र स्वाख्यं सगुणं ब्रह्म 'अक्षरं ब्रह्म परमम्' इत्यत्र निर्गुणं ब्रह्म प्रतिपाद्यते इति अपव्याख्यानं निरस्तमित्यर्थः । **द्वादशादाविति** । परन्तु ब्रह्म न हि भगवतोऽन्यदित्यादिनेत्यर्थः ।

**भावदीपः (रा.टि.)**– ननु 'तद्ब्रह्म विदुः' इत्युक्तस्य 'साधियज्ञं माम्' इत्युक्त्या भगवानेव ब्रह्म इति लाभात् तस्यैव च पृष्टतया पृष्टस्यैव वक्तव्यतया अस्तु परिहारेऽपि ब्रह्म भगवानिति । तथाऽपि साक्षादेव 'अहम्' इति कुतो नोक्तम्? इत्यतो विष्णोरक्षरत्वाज्ञानिनामक्षरत्वज्ञापनार्थम्, तथा **परमाक्षरं ब्रह्म** इत्युक्तावपि साक्षात् 'अहम्' इत्यनुक्तेः भगवतः अन्यदेव ब्रह्म अक्षरं चेति शङ्का 'अव्यक्तोऽक्षर उच्यते' इत्यादिना अग्रे, पूर्वत्र 'अव्यक्तं व्यक्तिमापन्नम्' इति हरौ प्रयुक्ताव्यक्तपदानुवादेनाक्षरत्वोक्त्या परिह्रियते । तथा ब्रह्मपदेन व्याप्तरूपम्, अधियज्ञपदेन देहगं रूपमित्याद्यभिप्रेत्याऽह– **शेषमिति** ।। **एतेनेति** ।। परमाक्षरस्य भगवत्त्वकथनेन परममक्षरं प्रधानमधियज्ञस्तु भगवान् इति वा, परममक्षरं ब्रह्म निर्गुणमिति वा, अपव्याख्यानं निरस्तमित्यर्थः ।। **द्वादशादौ विस्तरेणेति** ।। 'परं तु ब्रह्म नहि भगवतोऽन्यत्' इत्यादिना निरस्तमित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)**– नन्वेवं ब्रह्मणो भगवत्त्वाभिप्रायेऽपि 'ते ब्रह्म' इत्यत्र ब्रह्मणो भगवता 'तत्' इति पारोक्ष्येणोक्तत्वाद् भगवतोऽन्यदेवात्रोक्तं ब्रह्मेति प्रतीयते । न च ब्रह्मशब्दस्य भगवन्मात्रवृत्तित्वात् कथं 'तत्' इति विशेषितत्वेऽपि अन्यत्वप्रतीतिरिति वाच्यम् । ब्रह्मशब्दस्य भगवति मुख्यत्वेऽपि प्रकृतिवेदादेरप्यमुख्यतया तदर्थत्वात्, 'तत्' इति विशेषितत्वेन मुख्यार्थासम्भवे अमुख्यार्थप्रकृत्यादीनां मध्ये यत्किञ्चिदत्र स्यादिति प्रतीतेरनिवार्यत्वात् । नापि 'तत्' इति विशेषणेन प्राप्ता ब्रह्मणो भगवदन्यत्वशङ्का 'साधिभूताधिदैवं माम्' इत्युपरितनवाक्येन भगवतैव परिहृता । 'ब्रह्म' इति वक्तव्ये 'माम्' इत्युक्तत्वात्, अतः कथं ब्रह्मणो भगवदन्यत्वप्रतीतिरिति वाच्यम् । उपरितनवाक्ये 'साधियज्ञं च' इति चशब्दस्य 'साधिभूताधिदैवं साधियज्ञं मां च' इति व्यत्यस्य संयोजनेनाधिभूतादिसहितत्वेन ब्रह्मज्ञानाद् अन्यदेव विष्णुज्ञानमिति 'तत्' इति विशेषणादेव प्रतीतेरप्रतिबन्धादित्यत आह– **शेषं तात्पर्यनिर्णय इति** । तत्र भगवत एव ब्रह्मत्वे कथं 'तत्' इति पारोक्ष्येण निर्देशः ? इति शङ्कां परिहर्तुम्

'प्राणिनां देहगो विष्णुरधियज्ञ इतीरितः ।<br>स एव व्याप्तरूपेण ब्रह्मेति परिकीर्त्यते ।।'

इति सर्वप्राणिगतरूपापेक्षया ब्रह्मणः सर्वगतरूपान्तरस्यैवाभिसंहितत्वात् 'तत्' इति परोक्षोक्तिर्युक्ता । अत एव चशब्दस्य व्यत्यस्य योजनमपि प्रत्यस्तम् । ब्रह्माधियज्ञयोरेकत्वस्य साधितत्वादिति ।। शिष्टं प्रमेयं एतत्तात्पर्यनिर्णयतोऽवगन्तव्यमित्यर्थः ।

श्लोकः ४

'शेषोऽप्रधानेऽनन्ताख्यसर्पराजेऽथ शार्ङ्गिणः ।
अवतारान्तरेऽपत्ये त्रिष्वन्यत्रोपयुक्ततः ॥'

इति केशवाभिधानात् शेषशब्दस्त्रिलिङ्गः । तथा च दर्पणः 'शेष उक्त शेषस्त्रिलिङ्गकः' इति । 'अधियज्ञोऽहम्' इत्यत्र 'अहम्' इत्युक्तेर्वासुदेवाख्यविष्णुशब्दितसगुणं ब्रह्मोच्यते, स हि विष्णु-रहमेवेति हि सङ्करः । 'अक्षरं ब्रह्म' इत्यत्र तु निर्गुणं ब्रह्माभिधीयते । 'परमम्' इति च निरतिशयेऽक्षरे ब्रह्मण्युपपन्नतरं विशेषणम्' इति च सङ्करो यद् व्याख्यातवान् तद्दूषयति **एतेनेति** । 'नात्रोक्तं ब्रह्म' इत्यादिना ब्रह्माधियज्ञयोर्भगवदभेदप्रतिपादनेनेत्यर्थः ।

किञ्च भगवान् वासुदेव एव परं ब्रह्म, न ततोऽन्यत् । तथा च निर्गुणं सगुणमिति ब्रह्मद्वैविध्यमसदिति द्वादशाध्यायस्यादौ 'परन्तु ब्रह्म न हि भगवतोऽन्यत्' इत्युक्त्वा 'वासुदेव एव ब्रह्म, न ततोऽन्यत्' इत्युक्तार्थे 'आनन्दमानन्दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे' इति प्रमाणमुदाहरता भाष्यकृता समानन्यायेन निरस्तमित्याह– **द्वादशादौ चेति** । ननु तथाऽपि भगवतो वासुदेवस्य न ब्रह्मत्वं युक्तम् । भगवतः करचरणादिमद्रूपशालित्वात्, परब्रह्मणः 'अशब्दमस्पर्शम-रूपमव्ययम्' इत्यादिश्रुत्या अतथाभूतत्वादित्यत उक्तम्– **विस्तरेणेति** । 'रूपं चेदृशं साधितं पुरस्तात्' इत्यादिना 'अरूपत्वादेस्तु गतिरुक्ता' इत्यन्तेन भाष्येण' इति शेषः । वक्तव्यस्य भूयस्त्वाद् 'विस्तरेण' इत्येवोक्तम् ॥

**भावदीपिका (श्री.टि.)**– ॥ **शेषं तात्पर्यनिर्णय इति** ॥ ननु भगवानेवाधियज्ञश्चेत्, कथं तत्साहित्यं प्रागुक्तम् ? इत्याशङ्क्य 'तस्यैव सर्वप्राणिदेहस्थितरूपान्तरापेक्षया सहितत्वं युज्यते' इति तात्पर्यनिर्णये परिहृतेत्यर्थः । सगुणस्य भगवत एव ब्रह्मत्वाधियज्ञत्वोपपादनेनेत्यर्थः । **अपव्याख्यानमिति** ॥ 'अधियज्ञोऽहम्' इत्यत्र स्वाख्यं सगुणं ब्रह्म, 'अक्षरं ब्रह्म परमम्' इत्यत्र तु निर्गुणं ब्रह्म प्रतिपाद्यत इत्यपव्याख्यानमित्यर्थः । **विस्तरेणेति** ॥ 'परं तु ब्रह्म न हि भगवतोऽन्यत्' इत्यादिना विस्तरेण द्वादशाध्यायादौ च निरस्तमित्यर्थः ॥

**भावप्रकाशः (कृ.टि.)**– ननु भगवत एव ब्रह्मत्वे अधियज्ञत्वे च ते ब्रह्म तद्विदुः इत्यत्र तदिति परोक्षनिर्देशः साधियज्ञमिति अधियज्ञसाहित्योक्तिश्चायुक्तेत्यत आह– **शेषमिति** ॥ सर्वगरूपान्तरस्यैव ब्रह्मत्वात् तदित्युक्तिः देहस्थरूपविशेषस्याधियज्ञत्वात् तदपेक्षया साहित्यं च

युक्तमिति प्रमेयमित्यर्थः । अधियज्ञोहमित्यत्र स्वाख्यं सगुणं ब्रह्मोच्यते । अक्षरं ब्रह्म परममित्यत्र तु निर्गुणं ब्रह्मेति व्याख्यानं निराह– **एतेनेति** ।। भगवत एव ब्रह्मत्वाधियज्ञ-त्वोपपादनेनेत्यर्थः ।। ननु न तथापि भगवतो ब्रह्मत्वं युक्तं । भगवतः करचरणादिमद्रूपत्वात् । ब्रह्मणश्चाशब्दमस्पर्शमरूपमित्यादिश्रुत्या रूपत्वावगमादित्यत आह– **द्वादशादौ चेति** ।। द्वादशाध्यायोपक्रम इत्यर्थः ।। रूपं चेदृशं साधितं पुरस्तादित्यनेनेति शेषः ।।

## भाष्यम्

**आह च गीताकल्पे–**

**'देहस्थविष्णुरूपाणि अधियज्ञ इतीरितः ।**
**कर्मेश्वरस्य सृष्ट्यर्थं तच्चापीच्छाद्यमुच्यते ।।**

**अधिभूतं जडं प्रोक्तमध्यात्मं जीव उच्यते ।**
**हिरण्यगर्भोऽधिदैवं देवः सङ्कर्षणोऽपि वा ।।**

**ब्रह्म नारायणो देवः सर्वदेवेश्वरेश्वरः' इति ।**
**'यथा प्रतीतं वा सर्वमत्र नैव विरुध्यते' इति ।।**

भावप्रदीपिका (प.टी.)– उक्तार्थे प्रमाणमाह– **आह चेति** । न केवलमुक्त एवार्थोऽस्य, किन्त्वर्थान्तरमपि प्रमाणाविरोधि प्रतीतं चेत्, सोऽपि भगवदभिप्राय एवेत्याह– **यथेति** ।

प्रमेयदीपिका (ज.टी.)– आगमसम्मत्योक्तं स्थापयति– **आह चेति** ।। यानि देहस्थ-विष्णुरूपाणि सः अधियज्ञ इतीरितः । तदपि इच्छाप्रयत्नाद्यमेव । नतु परिणामरूपम् । जडं देहाद्बाह्यम् । न केवलमेषां पदानामेतावन्मात्रार्थत्वं किन्तु यथाप्रतीतं प्रतीतिमनतिक्रम्य शब्दशक्त्या यावत्प्रतीतं प्रमाणाविरुद्धं च तत् अत्र व्याख्यायमानं वक्तुरभिप्रायं न व्यभिचरतीत्यर्थः । किञ्चिद्व्यवहितत्वान्मध्येऽपि इतिशब्दः ।।

भावबोधः (र.टि.)– ।। किञ्चिद्व्यवहितत्वादिति ।। यथा प्रतीतमित्यस्य सर्वदेवेश्वरेश्वर इत्यस्मादित्यर्थः ।

श्लोकः ४

**भावदीपः (रा.टि.)**– 'इतीरितः' इत्यस्यान्वयायाह– **यानीति** ॥ **स इति** ॥ देहस्थानेकरूपात्मा विष्णुरित्यर्थः ॥ 'तच्च' इत्यादेरर्थः– **तदपीत्यादि** ॥ जडमित्यनुवादः, 'देहाद्बाह्यम्' इति व्याख्या । यद्यपि 'यथा' इत्याद्यपि गीताकल्पगतमेव वाक्यम् । तथाऽपि इतिपदस्य मध्ये कीर्तनस्याभिप्रायमाह– **किञ्चिदिति** ॥

**भावरत्नकोशः (सु.टि.)**– 'देहस्थविष्णुरूपाणि अधियज्ञ इतीरितानि' इति वक्तव्यम् । अनियतलिङ्गानां विधेयवाचिशब्दानाम् उद्देश्यसमानलिङ्गत्वनियमात्, इत्यत आह– **यानीति** । 'अधियज्ञः' इति विधेयापेक्षया 'सः' इति तावत् पुल्लिङ्गप्रयोगः । 'अणौ यत्कर्म णौ चेत् स कर्ता', 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा', 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इत्यादौ विधेयलिङ्गत्वदर्शनात् तदपेक्षया चेति 'सः' इति पुंलिङ्गत्वम्, एकवचनं च 'अन्नमयादयः पञ्चापि ब्रह्मैव', 'धर्मयज्ञसमयः प्रमाणं वेदाश्च' इत्यादाविवोपपद्यत इति भावः । यद्यपि 'योऽयमधियज्ञ इतीरितः स देहस्थविष्णुरूपाणि' इति योजनायामपि न लिङ्गव्यत्यासदोषादि । तथाऽपि गीतायामधियज्ञत्वस्य विधेयत्वेनाभिसंहितत्वात् तदनुसारेणैवमुक्तिरिति । अनेन 'सर्वप्राणिदेहस्थरूपेणाधियज्ञः' इत्यत्र प्रमाणमुक्तं भवति ।

'तच्च' इत्यत्र चशब्द एवार्थः, आद्यशब्दः प्रयत्नज्ञानसङ्कल्पाद्यर्थक इति भावेनाह– **तदपीति** । एवशब्दव्यावर्त्यम्– **न त्विति** । ईश्वरस्य सृष्ट्याख्यमेव कर्म । तदेव च विशेषेण सर्जनरूपमिति विसर्गः । न पुनः पररीत्या चरुपुरोडाशादिद्रव्यत्यागरूपमिति सिद्धवत्कृत्य, न तु परिणामरूपम् ईश्वरस्य कर्म कर्मशब्दार्थ इति व्यावर्त्यत इति भावेनैवमुक्तम् । अनेन 'ईश्वरक्रिया विसर्गः, विशेषेण सर्जनं विसर्गः' इत्यत्र प्रमाणमुक्तं भवति ॥

ननु 'जडमधिभूतम्' इति कथम् ? अन्तःकरणादेः देहपर्यन्तस्य जडस्यैव प्राग् अध्यात्मशब्दार्थतयोक्तत्वादित्यत आह– **देहाद्बाह्यमिति** । आत्मा ह्यभिमानविषय इत्यर्थः । अनेन 'सशरीरान् जीवान् अधिकृत्य यत् तदधिभूतम्' इत्यत्र प्रमाणमुक्तम् । 'अध्यात्मं जीवः' इति तु 'आत्माधिकारे यत् तदिति वा' इत्यत्र प्रमाणम् । 'हिरण्यगर्भः' इति 'सर्वदेवानधिकृत्य पतिः' इत्यधिदैवतम्, 'देवाधिकारस्थः' इति वा इत्यर्थद्वये प्रमाणम् । 'परममक्षरं ब्रह्म' इत्यत्र ब्रह्म नारायण इति भाष्यपदमनूद्य व्याचष्टे– **यथेति** । तस्यैव विवरणं– **शब्दशक्त्येति** । सर्वपदं

सम्भाषिताशेषपरमिति भावेनोक्तम् – **यावदिति** ।। तर्हि 'अध्यात्मम्' इत्यत्रात्मशब्देन देहस्य, 'विसर्गः कर्म' इत्यत्र विसर्गशब्देन चरुपुरोडाशादिपरित्यागरूपार्थस्य शब्दशक्त्या प्रतीतस्यापि ग्रहणं स्यात् ? इत्यत उक्तम्– **प्रमाणाविरुद्धं चेति** । अन्यत्तु तद्विरुद्धमिति भावः । **किञ्चिदिति** ।। 'ब्रह्म नारायणो देवः सर्वदेवेश्वरेश्वरः' इति वचनात् परं किमपि वचनमस्ति । तदनुदाहृत्य 'यथा प्रतीतम्' इति गीताकल्पवचनस्यैवोदाहृतत्वाद् उभयत्र इतिशब्द इत्यर्थः । अन्यथा पूर्वोत्तरार्धयोरेकश्लोकत्वं प्रतीयेत । नैव च प्रत्येतव्यमिति, इतिशब्दद्वयमिति भावः ।।

**भावदीपिका (श्री.टि.)**– यत्तच्छब्दाध्याहरेण योजयति– **यानीत्यादिना** ।। समुदायापेक्षया 'सः' इत्येकवचनम् । 'ईरितः' इति पुल्लिङ्गं विधेयलिङ्गापेक्षया । उद्देश्यलिङ्गापेक्षया चेद् 'ईरितानि' इति स्यादिति भावः । **तदपीति** ।। सृष्ट्याख्यं कर्मापीत्यर्थः । 'प्रयत्न' इति आदिशब्दार्थः । 'एव' इत्युक्त्या चशब्द एवार्थ इत्युक्तं भवति । तद्व्यावर्त्यं दर्शयति– **न त्विति** ।। 'भूतानि सशरीरान् जीवानधिकृत्य यत् तद् अधिभूतम्' इति भाष्येणैकार्थत्वायाह– **देहाद्बाह्यमिति** ।। वक्तुः गीताकारस्य । **किञ्चिद्व्यवहितत्वादिति** ।। 'देहस्थविष्णुरूपाणि' इत्यादिवाक्यस्य 'यथाप्रतीतम्' इति वाक्यस्य च गीताकल्पस्थत्वेनैकप्रकरणगतत्वेऽपि 'यथाप्रतीतम्' इति वाक्यस्य 'देहस्थ' इत्यादिवाक्यापेक्षया तद्ग्रन्थे किञ्चिद्व्यवहितत्वादेकानुपूर्वीगतत्वाभावादित्यर्थः ।।

**भावप्रकाशः (कृ.टि.)**– ननु देहस्थविष्णुरूपाणि अधियज्ञ इतीरितानीति वक्तव्यम् । अनियतलिङ्गानां विधेयशब्दानामुद्देश्यसमानलिङ्गत्वात् । तत्कथं पुंल्लिङ्गत्वमित्यत आह– **यानीति** ।। उद्देश्यपरामर्शकस्य तच्छब्दस्य नोद्देश्यसमानलिङ्गत्वनियमः । णेरणौ यत्कर्म णौ चेत् स कर्ता । शैत्यं हि यत् सा प्रकृतिर्जलस्य इत्यादौ विधेयलिङ्गत्वस्यापि दर्शनात् ।। ततश्च पुंल्लिङ्गत्वं युक्तमिति भावः ।। अवधारणार्थचशब्दस्येच्छाद्यमित्यनेनान्वयय इति दर्शयन् आद्यपदार्थमाह– **इच्छाप्रयत्नाद्यमेवेति** ।। एवशब्दव्यावर्त्यमाह– **नत्विति** ।। अनेन सृष्ट्याख्यमित्यस्येच्छाद्यमित्यनेन व्याख्याने प्रयोजनमुक्तं भवति । ननु जडमधिभूतमिति कथम् । देहादेर्जडस्याध्यात्वादित्यत आह– **देहाद् बाह्यमिति** ।। ननु यथाप्रतीतमित्यस्य गीताकल्पवाक्यत्वान्मध्ये इति शब्दो व्यर्थ इत्यत आह– **किञ्चिद्व्यवहितत्वादिति** ।।

श्लोकः ४

## भाष्यम्

**स्कान्दे च–**

**'आत्माभिमानाधिकारस्थितमध्यात्ममुच्यते ।**
**देहाद् बाह्यं विनाऽतीवबाह्यत्वादधिदैवतम् ॥**
**देवाधिकारगं सर्वं महाभूताधिकारगम् ।**
**तत्कारणं तथा कार्यमधिभूतं तदन्तिकात्' इति ॥**

**महाकौर्मे च–**

**'अध्यात्मं देहपर्यन्तं केवलात्मोपकारकम् ।**
**सदेहजीवभूतानि यत् तेषामुपकारकृत् ॥**
**अधिभूतं तु मायान्तं देवानामधिदैवतम्' इति ॥ ४ ॥**

भावप्रदीपिका (प.टी.)– किं तत् अर्थान्तरम् ? इत्यत आह– **स्कान्दे चेति** । देवानाम् उपकारकम् इति योज्यम् ॥ ४ ॥

प्रमेयदीपिका (ज.टी.)– एतदेव वाक्यान्तरेण स्पष्टयति– **स्कान्दे चेति** ॥ आत्मनोऽभिमानस्य विषयः । आत्माधिकारस्थं तत्र प्रतिपाद्यम् । **देहाद् बाह्यं विनेति** । सामर्थ्याद् आत्माभिमानस्थेन सम्बद्ध्यते । तत्र युक्तिः अतीव बाह्यत्वात् अत्यभिमान-विषयत्वाभावात् । महाभूताधिकारगं महाभूतम् । कार्यकारणग्रहणहेतुः । तदन्तिकात् तत्तादात्म्यात् । देवानाम् उपकारकृत् ॥

भावबोधः (र.टि.)– ॥ **आत्मन इति** । अनेनाभिमानश्चाधिकारश्चाभिमानाधिकारौ आत्मनोऽभिमानाधिकारयोः स्थितमिति विग्रहमभिप्रेत्य बुद्ध्या विवेकेन अध्यात्मपदेन केवलात्मो-पकारकदेहादिविवक्षायाम् अधिशब्दप्रातिपदिकसम्बन्धिसप्तम्याः षष्ठ्यर्थत्वं स्थितपदस्य विषयार्थत्वं जीवविवक्षायाम् आत्माधिकाररूपग्रन्थे स्थितं प्रतिपाद्यमित्यर्थम् अभिप्रेत्यात्माधिकारस्थितमित्ये-तद्व्याख्यातं भवति । आत्माधिकाररूपग्रन्थप्रतिपाद्यो जीवः अध्यात्ममित्युक्ते सदेहजीवोपकारक-भूतादेः आत्माधिकारप्रतिपाद्यत्वाभावेन आध्यात्मत्वाप्रसक्तेस्तद्व्यावृत्त्यर्थं देहाद्बाह्यं विनेत्येतन्न

वक्तव्यमित्याशयवानाह– **देहाद्बाह्यं विनेतीति** । अयमर्थः । आत्माभिमानविषयः अध्यात्म-मित्युक्ते देहव्यतिरिक्तभूतादेरप्यात्माभिमानविषयत्वादध्यात्मत्वं स्यादिति शङ्कायां देहाद्बाह्यं विनेत्युक्त एव निरासो नान्यथेति अतिप्रसङ्गनिवारणलक्षणसामर्थ्यात् देहाद्बाह्यसदेहजीवोपकारक-भूतादिकं विना यदात्माभिमानविषयभूतं देहादिकं तदध्यात्ममित्यनेन प्रकारेण देहाद्बाह्यं विनेत्येतदात्माभिमानमित्यनेन सम्बध्यत इति ।

ननु आत्माभिमानविषयत्वे भूतादितो देहादेः को विशेषः । येन देहादेरेवाध्यात्मत्वं न भूतादे-रित्याशङ्कानिवर्तकत्वेनातीवबाह्यत्वादित्येतद्व्याचष्टे **तत्र युक्तिरिति** । तत्र अध्यात्मत्वाभावे देहादेः स्फुटतराविवेकप्रयोजकात्मभिमानविषयत्वात् भूतादेस्तादृशाभिमानविषयत्वाभावादित्यर्थः । ननु भूतकार्यस्य भौतिकस्य तत्कारणस्याहङ्कारादेश्च महाभूताधिकारग्रन्थप्रतिपाद्यत्वाभावात् कुतोऽधि-भूतत्वमित्यत आह– **कार्यकारणग्रहण इति** । देवानामधिदैवतमित्यनन्वितमित्यत उपकारक-दित्यनुवर्तयति **देवानामुपकारकृदिति** ॥ अधिदैवतमिति सम्बन्धः ॥ ४ ॥

**भावदीपः (रा.टि.)**– ॥ **आत्माभिमान** इति आत्मपदं स्थितपदं च 'आत्माभिमान-स्थितम्' 'आत्माधिकारस्थितम्' इति प्रत्येकमन्वेति । तत्राद्यस्यार्थमाह– **आत्मनोऽभिमानस्य विषय इति** ॥ द्वितीयमनूद्यार्थमाह– **आत्मेत्यादिना** ॥ आत्माभिमानविषयः क इत्यपेक्षायां स्मृतौ 'देहाद्बाह्यं विना' इत्युक्तमिति भावेन 'देहाभिमानिस्थं देहाद्बाह्यं विना' इति निर्देशाभावात् कथमन्वय इत्यत आह– **सामर्थ्यादिति** ॥ योग्यताबलादित्यर्थः ॥ एतेन यत्प्राक् 'जीवोपकारितया स्थितं यच्च जीवस्वरूपं तदुभयमध्यात्मशब्दार्थः' इति प्रागुक्तं संपादितं भवति । 'देवानाम्' इत्यत्रानुवृत्तिमाह– **उपकारकृदिति** ॥ ४ ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **एतदेव** अध्यात्मादिशब्दार्थजातमेव ॥ यद्वा भावप्रदीपि-कारीत्या 'शब्दशक्त्या प्रतीतं प्रमाणाविरुद्धम्' इत्युक्तम् अर्थान्तरमेव 'आत्माभिमानस्थितम्' इति वाक्यान्तरेण स्पष्टयतीत्यर्थः । आत्मनोऽभिमानोऽधिकारश्च, तयोः स्थितम् आत्माभिमानाधिकार-स्थितम् इति विग्रहमभिप्रेत्य व्याचष्टे– **आत्मनोऽभिमानस्येति** । अभिमानस्थितत्वं विषयत्वेनेति भावः । आत्माधिकारो नाम ग्रन्थविशेषः । तत्र स्थितत्वं तत्प्रतिपाद्यत्वेनेति भावेनाह– **तत्र प्रतिपाद्यमिति** । नन्वात्मैव ह्यात्माधिकारे प्रतिपाद्यः, न देहाद् बाह्यं किमपि, इति कथं 'देहाद् बाह्यं विना' इति विशेषणम् आत्माधिकारस्थितस्य ? इत्यत आह– **देहाद् बाह्यं विनेतीति** ।

**सामर्थ्यात्** योग्यताबलात् । 'आत्माभिमानविषयो अध्यात्मम्' इत्युक्तौ गृहारामादेरप्यध्यात्मत्वं स्यात्, न चात्रोत्तरे तदभिप्रेतम् । 'केवलात्मोपकारकम्' इति व्यावर्तितत्वात् । अतो गृहारामादि-व्यावृत्तये 'देहाद् बाह्यं विना' इति विशेषणम् आत्मात्युपकारकमात्रग्रहणाय सार्थकम्, नात्माधिकारस्थितस्य विशेषणमिति न वैयर्थ्यशङ्केति भावः ।

आत्माभिमानविषयं शृङ्गग्राहिकया दर्शयितुं 'देहाद् बाह्यं विना' इत्युक्तं स्मृतौ इत्यभिप्रेत्य तस्य वौद्धेनात्माभिमानस्थितमित्यनेनान्वयो द्रष्टव्य इत्याह– **'देहाद् बाह्यम्' इत्यादीति व्याख्येयम्** । आत्मापेक्षया बाह्यत्वस्य देहादावपि सत्त्वात् तदप्यध्यात्मं किं न स्यात् ? इत्यतः 'अतीव बाह्यत्वात्' इत्युक्तम् । तदवतारयन् व्याचष्टे– **तत्रेति** । **'इति'** इति शेषः । 'युक्तिः' इति सम्बन्धः । न हि देहादेरिव गेहादेरत्यभिमानास्पदत्वम् आनुभाविकमिति युक्तं देहादेरेवाध्यात्मत्व-मिति भावः । **देवाधिकारगम्** तन्नामकग्रन्थप्रतिपाद्यं सर्वमधिदैवतमिति भाष्ययोजना । 'महाभूताधिकारगम्' इत्यस्य विशेष्यमध्याहरति– **महाभूतमिति** ॥

ननु महाभूताधिकारनामग्रन्थप्रतिपाद्यत्वं महाभूतस्यैवेति तस्यैवाधिभूतत्वमुचितम्, न तु महाभूतकारणस्याहङ्कारादेः, तत्कार्यस्य भौतिकस्य च । अतः कथं 'तत्कारणं तथा कार्यम्' इति प्रमाणे द्वयोर्ग्रहणम् ? इत्यत आह– **कार्येति** । 'महाभूताधिकारगम्' इति महाभूतस्येव कार्य-कारणयोरपि ग्रहणमुचितम् । तयोर्महाभूताभिन्नत्वविवक्षया अधिभूतशब्दार्थत्वस्याभिमतत्वादिति भावः । **तत्तादात्म्यात्** महाभूताभिन्नत्वात् । 'इति' इति शेषः । देवानाम् अधिदैवतम् देवानामप्युत्तमं दैवतं वस्तु अधिभूतमिति भगवतोऽधिभूतत्वमुच्यत इति प्रतीतिं निरस्यन् 'देवानाम्' इत्यनन्तरम् 'उपकारकृत्' इति पूर्वार्धोक्तमनुवर्त्य योज्यमित्याह– **देवानामुपकारकृदिति** ॥ 'देवाधिकारप्रतिपाद्यं सर्वमप्यधिदैवतम्' इत्यपि संयोज्यम् ॥ ४ ॥

**गीताक्षरार्थस्तु** 'अधिभूतं किम् ?' इति प्रश्नस्योत्तरम् अधिभूतं क्षर इति । भूतानि सशरीरान् जीवान् अधिकृत्य तदुपकारित्वेन वर्तमानं वस्तु । क्षरः विनाशी भावः पदार्थः । भवति उत्पद्यत इति व्युत्पत्त्या उत्पत्तिमान् कार्यभूतः भावः पदार्थः । स च शरीरजीवोपकारित्वेनाधिभूतशब्दार्थ इति प्रत्येकमुत्तरम् । नन्वव्यक्तमपि सशरीरजीवोपकारितया वर्तमानम् इति तस्याप्यधिभूतान्त-र्भावोऽस्त्येव । न च तद् विनाशिकार्यम् । 'नासतो विद्यते' इत्युक्तत्वात् । ततो अव्यापक-

मुत्तरमिति चेन्न । 'अव्यक्तं परमे व्योम्नि निष्क्रिये सम्प्रलीयते', 'तस्मादव्यक्तमुत्पन्नम्', 'विकारोऽव्यक्तजन्म हि' इत्यादिप्रमाणैरव्यक्तस्यापि वैषम्यपरित्यागेन साम्यावस्थापत्तिलक्षण-विनाशस्य, विक्रियालक्षणजन्मनश्चावेदनेन तस्याधिभूतान्तर्भावेऽपि, 'क्षरो भावः' इत्युत्तरस्य विवक्षितभूतोपकारिसर्वपदार्थविषयकत्वेनाव्यापकत्वाभावात् ।

'अधिदैवं किमुच्यते' इत्यस्योत्तरम् पुरुष इति । दैवतानि सर्वान् देवानधिकृत्य तत्पतित्वेन वर्तमानं वस्तु, पुरुषः पुरि शरीरे, शेते तिष्ठतीति व्युत्पत्त्या जीवः । न च जीव अध्यात्मशब्देनोक्त इति किमिह तदुक्त्येति वाच्यम् । सर्वजीवाभिमानिनः सङ्कर्षणस्य ब्रह्मणो वाऽत्र पुरुषशब्देन विवक्षितत्वात् । देवाधिकारनामके ग्रन्थे मुख्यतः प्रतिपाद्यं किमिति प्रश्नाशयेऽप्युक्तः 'पुरुषः' इत्युत्तरम् । देवाधिकारकनामकग्रन्थे प्रतिपाद्याः के इत्यधिदैवतशब्दार्थश्चेत्पृष्टः, तदा पुरुषः स्वशरीरे तिष्ठन्तः, अन्यशरीरे प्रेरकतया तिष्ठन्तश्च देवा इत्युत्तरम् ।

'अधियज्ञः कः' इति प्रश्नस्योत्तरम् अधियज्ञोऽहमिति । नायम् अध्यात्मादिशब्दवत् अधियज्ञशब्दोऽव्ययीभावः, येन 'अधियज्ञम्' इति नपुंसकत्वं स्यात् । किन्तु 'अधिगतो यज्ञ-मधियज्ञः' इति प्रादिसमासः । 'अधिष्ठितो यज्ञः अनेन' इति बहुव्रीहिर्वा । भगवतोऽन्योऽग्न्यादि-रधियज्ञः प्रसिद्ध इति सिद्धार्थतालक्षणदोषपरिहारार्थं प्रश्नवाक्ये 'देहे' इति विशेषणमुक्तम् । कर्तृभोक्तृफलदातॄणां देहे प्रवर्तकत्वेन वर्तमानः क इति । अतः परिहारवाक्येऽपि यथाप्रश्नं 'देहे' इति वक्तव्यमेवेति सप्रयोजनं विशेषणम् । 'कथमधियज्ञः' इति प्रश्नस्तु सर्वयज्ञभोक्तृत्वतत्प्रवर्त-कत्वादेरधियज्ञो भगवान् इति प्रतिवचनाध्याहारेण परिहरणीयः ।

नन्वेष परिहारो भगवतैव कुतो नोक्त इति चेत्, उच्यते । 'अधियज्ञोऽहम्' इति यदाऽधि-यज्ञत्वेन भगवानुक्तः, तदा तस्य सर्वयज्ञभोक्तृत्वादेरधियज्ञत्वम् अर्जुनस्य सिद्धमेव । 'भोक्तारं यज्ञतपसाम्' इत्यादेरर्थस्य तेन श्रुतत्वात् । अधियज्ञस्य भगवतोऽन्यत्वपक्ष एव 'कथम्' इति पृष्टत्वात् । एवमालोच्य भगवता 'कथम्' इत्यस्य प्रश्नस्य परिहारः 'अधियज्ञोऽहम्' इत्यतः पृथङ्नोक्तः । मन्दान् बोधयितुं तु भाष्यकारः 'सर्वयज्ञभोक्तृत्वादेरधियज्ञः' इत्यध्याहृत्य प्रश्नं पर्यहार्षीदिति । यद्यधियज्ञः स्वयमेव, तर्हि कथं 'साधियज्ञम्' इति प्रागधियज्ञसाहित्यं भगवत उक्तम्– इति शङ्कामपाकर्तुं च परिहारवाक्ये 'देहे' इति विशेषणं सर्वप्राणिदेहस्थरूप-

श्लोकः ४

विशेषापेक्षया साहित्यमुक्तमिति तात्पर्यात् । ईश्वरदेहं व्यावर्तयितुम् 'अत्र' इति देहविशेषणम् । न हि लौकिकदेह इव स्वदेहे ईश्वरस्य पृथग्भावेन नियन्तृत्वमस्ति ॥ ४ ॥

**भावदीपिका (श्री.टि.)**– 'अभिमानश्च अधिकारश्च अभिमानाधिकारौ, आत्मनोऽभि-मानाधिकारौ आत्माभिमानाधिकारौ, आत्माभिमानाधिकारयोः स्थितम् आत्माभिमानाधिकार-स्थितम्' इति विग्रहमभिप्रेत्य 'आत्माभिमाने' इति सप्तम्याः षष्ठ्यर्थत्वमङ्गीकृत्य, 'तत्र स्थितत्वम्' नाम 'तद्विषयत्वम्' आत्माधिकारे स्थितत्वं नाम तत्प्रतिपाद्यत्वमिति भावेन व्याचष्टे– **आत्मन इत्यादि** ॥ **तत्रेति** ॥ आत्माधिकाराख्यग्रन्थ इत्यर्थः ।

ननु 'आत्माधिकाररूपग्रन्थप्रतिपाद्यो जीवः अध्यात्मम्' इत्युक्ते देहाद् बाह्यस्य सदेहजीवोप-कारकस्य भूतादेः आत्माधिकारप्रतिपाद्यत्वाभावेन अध्यात्मत्वाप्रसक्तेः, तद्व्यावृत्त्यर्थं 'देहाद् बाह्यं विना' इत्येतन्न वक्तव्यम् ? इति चेत्, तत्राह– **देहाद् बाह्यं विनेतीति** ॥ आत्माभिमानविषयम्' अध्यात्मम्' इत्येवोक्ते देहव्यतिरिक्तभूतादेरपि आत्माभिमानविषयत्वाद् अध्यात्मत्वं स्यात् ? इति शङ्कानिरासो 'देहाद् बाह्यं विना' इत्युक्त एव भवति, नान्यथा, इत्येवम् अतिप्रसङ्गनिवारण-लक्षणसामर्थ्याद् देहाद् बाह्यं सदेहजीवोपकारकम् भूतादिकं विना यद् आत्माभिमानविषयभूतम् अन्तःकरणादि देहपर्यन्तं तद् अध्यात्मम् इत्यनेन प्रकारेण 'देहाद् बाह्यं विना' इत्येतद् 'आत्माभिमानस्य' इत्येनेन सम्बध्यत इत्यर्थः ॥

नन्वात्माभिमानाविषयत्वे भूतादितो देहादेः को विरोधः ? येन देहादेरेवाध्यात्मत्वम्, न भूतादेः, इत्याशङ्कापरिहाराय 'अतीव बाह्यत्वात्' इति वक्तव्यं स्यात् ? इत्यत आह– **तत्र युक्तिरिति** ॥ भूतादेरध्यात्मत्वाभाव इत्यर्थः । देहादेः स्फुटतराविवेकप्रयोजकात्यभिमानविषयत्ववत् भूतादेस्तादृशभिमानविषयत्वाभावेनातीव बाह्यत्वादित्यर्थः । 'महाभूताधिकारगं तत्करणम्' इत्यादि भाष्यकारानुक्तं व्याख्यानान्तरम् । 'महाभूताधिकारगम्' इत्यस्य विशेष्याप्रतीतेस्तदध्याहरति– **महाभूतमिति** ॥ तथा च महाभूताधिकारगं तद्ग्रन्थप्रतिपाद्यं महाभूतम् अधिभूतमित्यन्वयो द्रष्टव्यः ।

ननु तत्कारणं तथा कार्यम् अधिभूतमिति कथम् । महाभूतकार्यस्य भौतिकस्य तत्कारण-स्याहङ्कारादेश्च महाभूताधिकारग्रन्थप्रतिपाद्यत्वाभावेनाधिभूतत्वायोगाद्, इत्यत आह– **कार्यकारण-ग्रहण इति** ॥ अधिभूतशब्दार्थत्वेन ग्रहण इत्यर्थः । **तत्तादात्म्यादिति** ॥ तथा च न

महाभूताधिकारगत्वेन कार्यकारणयोरधिभूतशब्दवाच्यत्वम् अनेनोच्यते, किं नाम, भूतान्यधिकृत्य तदन्तिकात् तदात्मकतयेति यावत्, विद्यमानं यत्तत् कारणं कार्यं च तदधिभूतमिति व्युत्पत्त्यैवेत्युक्तं भवतीति द्रष्टव्यम् । 'देहपर्यन्तम्' इति भाष्ये अन्तःकरणादिदेहपर्यन्तमित्यर्थः । 'देवानामधिदैवतम्' इत्यनन्वितम् ? इत्यतः 'उपकारकृत्' इत्येतदनुवर्तते, अतो नानन्वयः, इत्याशयेनाह– **देवानामुपकारकृदिति** ॥ इन्द्रादिदेवानाम् उपकारकृत् सङ्कर्षणो ब्रह्मा वा अधिदैवतमिति सम्बन्धो द्रष्टव्यः ॥ ४ ॥

**भावप्रकाशः (कृ.टि.)–** आत्मनः अभिमानाधिकाराविति षष्ठीतत्पुरुषः । ततस्तयोः स्थितमिति सप्तमी समासः । तत्रात्माधिकारस्य प्रतिपादकतया विषयित्वे अप्यधिकरणत्ववदभिमानस्यापि वैवक्षिकाधिकरणत्वं युक्तमिति भावेनाभिमानस्थितत्वादिकं व्याचष्टे– **आत्मन इत्यादिना** ॥ नन्वात्माधिकारप्रतिपाद्यो जीव एव । अतः तत्र व्यावर्त्याभावाद् देहाद् बाह्यं विनेति विशेषणं व्यर्थमित्यत आह– **देहाद्बाह्यं विनेति** ॥ **सामर्थ्यादिति** ॥ अतिव्याप्तिनिराससामर्थ्यादित्यर्थः । तथाचात्माभिमानस्थमध्यात्ममित्युक्ते गृहादावतिव्यापकमुत्तरं स्यात् । तद्व्यावृत्त्यै देहाद्बाह्यमिति सार्थकमिति भावः ॥ नन्वेवं सति देहाद् बाह्यस्याध्यात्मत्वं नास्तीत्यापन्नम् । तत्कुत इत्यतः प्रतिजानीते– **तत्र युक्तिरिति** ॥ देहाद् बाह्यस्याध्यात्मत्वाभावे युक्तिरित्यर्थः ॥ ननु गृहादिकं नाध्यात्मम् । आत्मापेक्षया अतीव बाह्यत्वादित्युक्ते देहे व्यभिचारः प्रकृतिबन्धः । ततः सत्वादिगुणबन्धः, ततः कर्मादिकम्, ततो लिङ्गदेहः, ततः स्थूलदेह इत्येवं स्थूलदेहस्यापि सावधिकातीवबाह्यत्वसद्भावादित्यत आह– **अत्यभिमानेति** ॥ स्फुटतराविवेकप्रयोजकाभिमानाविषयत्वादित्यर्थः ॥ ननु महाभूतस्य योगेनाधिभूतशब्दवाच्यत्वेपि न तत्कार्यकारणयोरधिभूतशब्दवाच्यत्वम् । अतः तद्ग्रहणमयुक्तमित्यत आह– **कार्येति** ॥ तथाच महाभूतस्याधिभूतत्वे तत्तादात्म्यात् तयोरप्यधिभूतत्वमेवेति युक्तं तद्ग्रहणमिति भावः ॥ ननु तदन्तिकादित्युक्तं भूतसामीप्यमसिद्धम् । भूतकार्यकारणयोर्भूताभिन्नत्वेन भेदगर्भसामीप्ययोगादित्यत आह– **तत्तादात्म्यादिति** ॥ देवानामधिदैवतमित्यनन्वितमित्याशङ्क्य पूर्वानुवृत्तिं दर्शयति– **देवानामिति** ॥ ४ ॥

**अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् ।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥**

श्लोकः ५

# भाष्यम्

**मद्भावं मयि सत्ताम् । निर्दुःखनिरतिशयानन्दात्मिकाम् । तच्चोक्तम्–**
**'मुक्तानां च गतिर्ब्रह्मन् क्षेत्रज्ञ इति कल्पितः' इति मोक्षधर्मे ॥ ५ ॥**

भावप्रदीपिका (प.टी.)– 'मद्भाव'पदमन्यथाप्रतीतिनिरासाय व्याचष्टे– **मद्भावमिति** । कथं सर्वेश्वरसादृश्यं जीवस्य ? इत्यत आह– **निर्दुःखेति** । मयि सत्ताम् इति पाठे तु सर्वेषामपि भगवदाश्रयत्वात् को विशेषः ? मुक्तानामित्याशङ्क्याह **निर्दुःखेति** । प्रतीतार्थ एव किं न स्यात् ? इत्यत आह– **मुक्तानां चेति** ॥ ५ ॥

प्रमेयदीपिका (ज.टी.)– 'मद्भावम्' इत्यस्य 'मदात्मकत्वम्' इत्यन्यथाप्रतीतिनिरासाय आह– **मद्भावमिति** ॥ ननु भगवति स्थितिः सर्वदाऽस्ति । सा कथं फलम्? इत्यतो विशिनष्टि– **निर्दुःखेति** ॥ क्वचित् पाठो मद्भावं मद्भद्भावम् इति । तत्र भगवत्प्रतिबिम्बानां जीवानां तत्सादृश्यं सदाऽस्ति । तत् कथं प्राप्यमुच्यते? इत्यत उक्तम्– **निर्दुःखेति** ॥ अत्र आत्मकमिति पाठः॥ 'अभिव्यक्तम्' इति शेषः । प्रतीत एवार्थः किं न स्यात्? इति चेन्न । मुक्तानां भगवदाश्रितत्वेन तद्भावायोगात् । तदपि कुतः? इत्यत आह– **तच्चेति** ॥ क्षेत्रज्ञः परमात्मा गतिरिति समर्थितः ॥ ५ ॥

भावदीपः (रा.टि.)– ॥ अत्रेति ॥ 'मद्भद्भावम्' इति पाठपक्ष इत्यर्थः । भावपदस्य पुल्लिङ्गत्वादिति भावः । कल्पितपदार्थः **समर्थित** इति ॥ ५ ॥

**भावरत्नकोशः** (सु.टि.)– भगवत्प्रतिबिम्बानां भगवता भिन्नत्वे सति अर्थप्रकाशत्वानुकूलवेदनीयत्वादिना तज्ज्ञानानन्दादिसदृशज्ञानानन्दादिरूपकिञ्चित्सादृश्यसम्पन्नानाम् । लिङ्गानन्वयमाशङ्क्याह **अत्रेति** । 'मद्भद्भावम्' इति पाठपक्षे, इति पाठ इति । 'निर्दुःखनिरतिशयानन्दात्मकम्' इति भाष्यपाठ इत्यर्थः । निर्दुःखनिरतिशयानन्दात्मकरूपसादृश्यस्यापि

'बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् ।
स्वरूपाण्येव जीवस्य ...........................॥'

इति सनातनत्वात् कथं फलत्वम् ? इति कृतचोद्यं परिहर्तुं भाष्ये शेषमाह– **अभिव्यक्तमिति ।** अभिव्यक्तिस्तु प्राङ् नैवेति भावः । **प्रतीत एवार्थः** 'मद्भावम्' इत्यस्य 'मदात्मकत्वम्' इत्यापातप्रतीत एवार्थः । **तदपि** तदेव । क्षेत्रज्ञशब्दार्थं वदन् तदन्वितम् 'इति' शब्दं व्यत्यस्य योजयति **क्षेत्रज्ञ इति ।** 'स ह्यन्तरात्मा भूतानां क्षेत्रज्ञ इति कथ्यते' इति, 'आत्मा भिन्नः स विज्ञेयः ततस्तं पूजयावहे' इति आत्मादिशब्देन परमात्मा प्रस्तुत इति भावः । गम्यत इति गतिः आश्रयः । 'कृपू सामर्थ्ये' इति धातुव्याख्यानादाह– **समर्थित इति । 'ब्रह्मन्'** इति नारदसम्बोधनम् ॥ ५ ॥

**गीताक्षरार्थस्तु-** अन्तकाले 'किमर्थं स्मर्तव्योऽसि ?' इत्यस्य परिहार उच्यते **अन्तकाल इति ।** प्रयाणकाले मामेव स्मरन् कलेवरं देहं त्यक्त्वा यः प्रयाति गच्छति स मद्भावं मयि सत्तां निर्दुःखनिरतिशयानन्दात्मिकां याति । मद्भद्भावम् अभिव्यक्तनिरतिशयानन्दानुभवात्मकम् इति वा । मत्प्राप्तिमेवान्तकाले मत्स्मरणं फलतीति ॥ ५ ॥

**भावदीपिका (श्री.टि.)–** 'मद्भावं मद्भद्भावम्' इति पाठपक्षे 'निर्दुःखनिरतिशयानन्दात्मिकाम्' इति पाठासम्भवादाह– **अत्रात्मकमिति** ॥ **गतिरिति** ॥ आश्रय इत्यर्थः ॥ ५ ॥

**यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।**
**तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥**

**गीताक्षरार्थस्तु-** तत्स्मरणेन तद्भावप्राप्तिः कथम् । इत्यतो व्याप्तिरुच्यते यं यमिति । अन्ते स्मरन् यः कलेवरं त्यजति स तं तं भावं याति । अन्तकाले स्मरणोपायः कथ्यते सदेति । तस्मिन् भावः अन्तर्गतं मनः तेन भावितः अतिवासितः संस्कृतः निरन्तरचिन्ताजाततद्गोचरस्मृतिजनकसंस्कारशालीत्यर्थः ॥ ६ ॥

**तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च ।**
**मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥**

श्लोकः ६,७

# भाष्यम्

**स्मरन् पुरुषः त्यजतीति भिन्नकालीनत्वेऽप्यविरोध इति मन्दमतेः शङ्का मा भूदिति अन्ते इति विशेषणम् । सुमतेः नैव शङ्कावकाशः । स्मरन् त्यजतीत्येककालीनत्वप्रतीतेः ॥**

भावप्रदीपिका (प.टी.)– ननु 'त्यजति' इत्यनेनैवान्तकालसिद्धेः किम् 'अन्त'पदेन ? इत्यत आह– **स्मरन्निति ।** 'भुञ्जन्नुत्थितः' इतिवत् । नन्वेवमर्थप्रतीतेः सुमतेरपि सम्भवात् किं दुर्मतेः ? इत्यत आह– सुमतेरिति ॥

प्रमेयदीपिका (ज.टी.)– ननु कलेवरत्यागस्यान्ताव्यभिचारात् 'अन्ते' इति व्यर्थमित्यत आह– **स्मरन्निति ॥** न 'अन्ते' इत्येतत् 'कलेवरं त्यजति' इत्यस्य विशेषणम् । येन व्यर्थं स्यात् । किन्तु 'अन्ते स्मरन्' इति स्मरणस्यैव । तत्रापि किं प्रयोजनम्? इति चेदुच्यते । 'लक्षणहेत्वोः क्रियायाः' इति लक्षणेऽपि शतुर्विधानात् 'स्मरन् पुरुषः कलेवरं त्यजति' इति स्मरणकलेवरत्यागयोः भिन्नकालत्वेऽपि न कश्चिच्छब्दविरोध इति मन्दमतेः शङ्का स्यात् । सा मा भूदित्येवमर्थम् 'अन्ते' इति स्मरणस्य विशेषणमुपात्तम् । तेनात्र स्मरणकलेवरत्यागयोरेककालत्वसिद्धिरिति ॥

'मन्दमतेः' इत्यस्य कृत्यमाह– **सुमतेरिति ॥** कुतः? इत्यत आह– **स्मरन् इति ॥** 'लटः शतृशानचौ' इति लडादेशत्वेनापि शतुर्विधानमस्ति । स च 'लट्' इति वर्तमाने पुनः लड्ग्रहणसामर्थ्यात् क्वचित् प्रथमासामानाधिकरण्येऽपि भवति । लक्षणे विहितत्वाच्च लडादेशो बलीयान् । तत्र क्रियायाम् इत्युपपदसापेक्षत्वात् । अस्यानपेक्षत्वात् । 'अप्रथमासमानाधिकरणे' इत्यस्य अतिप्रसक्तिपरिहारमात्रार्थत्वात् । तथाच बलवतो ग्राह्यत्वे 'स्मरंस्त्यजति' इत्यस्य स्मरति च त्यजति चेत्यर्थः स्यात् । एवञ्च 'अन्ते' इत्यनुक्तेऽपि स्मरणत्यागयोरेककालीनत्वप्रतीतेः सुमतेर्नैव शङ्कावकाशः इति भावः ॥

भाववोधः (र.टि.)– ॥ लक्षणेऽपि शतुर्विधानादिति ॥ देहत्यागरूपक्रियायाः कर्तुः पुंसः स्मरणरूपलक्षणवत्त्वस्य भिन्नकालीनस्मरणयोगेनापि सम्भवादिति भावः । लडितीति । 'वर्तमाने लट्' इति पूर्वसूत्रादित्यर्थः । क्वचिदिति ॥ तथा च स्मरन् पुरुषस्त्यजतीति प्रथमासामानाधि-

करण्येऽपि न दोषः इति भावः । उक्तं च काशिकायाम् । लडिति वर्तमाने पुनस्तद्ग्रहणम् अधिक-विधानार्थम् । क्वचित् प्रथमासमानाधिकरणेऽपि भवतः । उदाहृतं च तत्रैव । सन् ब्राह्मणोऽधीयानो ब्राह्मण इति ।

केचित्तु 'तन्वोर्विभाषा' इत्यतो विभाषाग्रहणमनुवर्त्यैममेवार्थमुपपादितवन्तः । **अतिप्रसक्तीति ।** अवश्यं चैतदेवं लक्षणहेत्वोरपि लट एव शतृशानचोर्विधानादप्रथमासमानाधिकरण इत्यस्य सर्वथा पर्युदासत्वाङ्गीकारे जपन् वसतीत्यादौ प्रथमासामानाधिकरण्यसद्भावेन शतृशानचौ न स्याताम् । एवं च लट इति सूत्रविहितशतृशानच्स्थानिभूतलडन्तप्रकृतिप्रतिपादितक्रियायाः क्रियान्तरसमान-कालीनत्वनियमः । लक्षणहेत्वोरिति सूत्रविहितशतृशानच्स्थानिभूतलडन्तप्रकृतिप्रतिपादितक्रियायाः न क्रियान्तरसमानकालीनत्वनियमः भिन्नकालीनक्रियायाः लक्षणहेत्वहेतुत्वयोः सम्भवादित्युक्तं भवति ।

**भावदीपः (रा.टि.)– ॥ लक्षण इति ॥** तृतीयस्य द्वितीयपादे 'लक्षणहेत्वोः क्रियायाः' इति सूत्रम् । 'लटः शतृ शानचावप्रथमासमानाधिकरणे' इति पूर्वसूत्रात् लटः शतृशानचाविति लक्ष्यते विद्यते लक्ष्यते चिह्न्यते येन लक्षणं तल्लक्षणहेतुः । हेतुजनकलक्षणे हेतौ च वर्तमानाद्धातोः परस्य लटः शतृशानचौ भवतः । तौ चेत् लक्षणहेतुक्रियाविषये भवत इति तस्यार्थमुक्त्वा, 'तिष्ठन्तोनु-शासति गणकाः, शयाना भुञ्जन्ते यवनाः' इत्यादेः वृत्तौ उदाहृतत्वात् । यवनानां शयनभोजन-योरिव स्मरणत्यागयोरेककालतैव प्रतीयते । तथाऽपि स्मरणस्य लडादेशशत्रन्तशब्दोक्तत्वेऽपि कृद्योगत्यागे लक्षणे महादुःखान्तकालता न सम्भाविनीति शतृप्रत्ययस्य त्यक्तुः पुंसः स्मरणरूप-लक्षण एव तात्पर्यम्, नत्वेककालत्व इति भावो ध्येयः ॥ **अन्त इति** ॥ अन्तकालपदेनेत्यर्थः ॥

ननु तस्मिन् सूत्रे प्रथमान्तपदासमानाधिकरणेसति शतृशानचौ न भवत इत्युक्तेः, इह च 'स्मरन् यः पुमान्' इति प्रथमान्तयच्छब्देन सामानाधिकरण्यात् कथं तेन सूत्रेण शतृप्रत्यय इत्यतः अत्र वृत्तिकारोक्तमेवाह– **स च इति** ॥ शतृप्रत्यय इत्यर्थः । 'वर्तमाने लट्' इति सूत्रात् लट् इति वर्तमान इत्यर्थः । **लडादेश इति** ॥ लक्षणाद्यर्थहीनलडादेश इत्यर्थः । ननु सोऽपि अप्रथमान्तपद-सामानाधिकरण्यमपेक्षत एव । अतः कथं बलीयान्? इत्यत आह– **अप्रथमेति** ॥ **अतिप्रसङ्गेति** ॥ प्रथमासामानाधिकरण्ये सर्वत्र माभूदित्येतदर्थत्वादित्यर्थः ॥

श्लोकः ६,७

**वाक्यार्थप्रदीपः (पां.टि.)**– ॥ **लक्षणेति** ॥ लक्ष्यते अनेनेति लक्षणं चिह्नं जनको हेतुः । लक्षणे हेतौ च वर्तमानाद्धातोः परस्य शतृशानचौ भवतः । तौ चेल्लक्षणहेतूक्तिविषयौ भवतः इति सूत्रार्थः । तथा च लक्षणार्थकधातोः लडादेशत्वेन शतृविधानादित्यर्थः । **न कश्चिद्विरोध इति** ॥ न चास्यापि लडादेशत्वेन वर्तमानार्थकत्वात् न भिन्नकालीनत्वशङ्कावकाश इति वाच्यम् । लक्षणादेः धात्वर्थतयोक्तार्थस्य क्रियालक्षणत्वं तद्धातोः लटः शतृविधानसामर्थ्यात् भिन्नकालीनस्यापि लक्षणत्वे तदर्थकधातोरपि लटः शत्रादेश सम्भवादित्याशयादिति ध्येयम् । **लडादेशत्वेनापीति** । लक्षणाद्यनर्थकात् यत्किञ्चिद्धातोः परस्य लिटः आदेशत्वेनापीत्यर्थः ॥

ननु नात्र लट इति सूत्रविहितलडादेशत्वनिश्चयः सुमतेः । तस्मिन् सूत्रे अप्रथमासमानाधिकरण इत्युक्तत्वात् । अत्र च स्मरंस्त्यजतीति प्रथमासामानाधिकरण्यसत्वात् इत्यत आह– **सत्त्वेति** ॥ **लडितीति** ॥ वर्तमाने लडिति पूर्वसूत्रादित्यर्थः । **सामर्थ्यादिति** ॥ वैय्यर्थ्यान्यथानुपपत्त्या अधिकविधानार्थत्वलाभादित्यर्थः । उक्तं च काशिकायां लडिति वर्तमाने पुनः स्वग्रहणम् अधिकविधानार्थं क्वचित् प्रथमासामानाधिकरण्येऽपि भवत इति । उदाहृतं चैतत् तत्रैव सन् आत्मनां अधीयानो ब्राह्मण इति । ननु सुमतेरपि न लडादेशत्वनिश्चयः तत्साधकादर्शनात् इत्यतः साधकविषये तदीयन्यायानुसन्धानप्रकारमाह– **लक्षणे विहितत्वादिति** ॥ न च क्रियायाः इत्यस्याः षष्ठीत्वेन तत्रोपपदं सप्तमीस्थमित्युपपदलक्षणाभावात् उपपदत्वोक्तिरयुक्तेति वाच्यम् । उपपदस्यात्यावश्यकत्ववत् लक्षणहेतुप्रतिलक्ष्यसाध्यसमर्पकतया अवश्यमपेक्षिततया अवश्यमपेक्षितत्वेन उपपदसाम्येन तथा व्यवहारोपपत्तेः । वस्तुतः क्रियायामित्येव मूलपाठः । एवञ्चोपपदत्वोक्तिः स्वरसैवेहेति द्रष्टव्यम् ।

ननु लडादेशत्वेऽपि अप्रथमासमानाधिकरण एव इत्यपर्युदासतया द्वितीयान्तस्यावश्यमपेक्षितत्वात् उपपदसाम्यमेव । तथाह्ययमर्थः– प्रथमायाऽप्रथमाद्वितीयादिः । तत्प्रत्ययग्रहणपरिभावयति देतविधिः । अप्रथमान्तं द्वितीयाद्यन्त इत्यर्थः । समानं साधारणं अधिकरणमभिधेयं यस्य तत् समानाधिकरणम् । अप्रथमान्तेन समानाधिकरणम् अप्रथमासमानाधिकरणम् । तृतीयेति योगविभागात् समासः । त्रिपादो वा बहुव्रीहिः । अप्रथमान्तेन समानाधिकरणं यस्येति । ततो यस्य च भावेनेति सति सप्तमी । अप्रथमासमानाधिकरणे लटि सतीति । तथासति द्वितीयान्तसामानाधिकरण्य एव शतृशानचौ भवत इति पर्यवसानेन सापेक्षत्वात् न लडादेशस्य निरपेक्षतया

बलीयस्त्वनिश्चय इत्यत आह– **अप्रथमेति** ॥ कुर्वतो अपत्यं , कुर्वतो भक्तिः कुर्वद्भक्तिः कुर्वालभक्तिरित्यादौ द्वितीयाद्यन्तेन पदेन सामानाधिकरण्याभावेऽपि प्रथमासमानाधिकरण्या-भावमात्रेण शतृशानचोः दृष्टत्ववत् न पर्युदासपक्षाश्रयणं युक्तम् । तथा च द्वितीयान्तपद-स्यापेक्षितत्वाभावेनोपपदसाम्याभावयुक्तो निरपेक्षितत्वेन लडादेशस्य बलीस्त्वनिश्चय इति भावः ।

**भावरत्नकोशः (सु.टि.)**– ॥ **अव्यभिचारादिति** । अन्त्यकालान्यकाले कलेवरत्यागस्या-सम्भवेन व्यभिचाराभावाद् व्यर्थं विशेषणम् । 'सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इति वचनादिति भावः । **स्मरणस्यैव विशेषणम्** । **'लक्षणहेत्वोः क्रियायाम्'** इति लक्षणेऽपि **शतुर्विधानादिति** । लक्ष्यते चिन्ह्यते येन तत् लक्षणं जनको हेतुः, धात्वर्थविशेषणं चैतत् । लक्षणे हेतौ च वर्तमानाद्धातोः परस्य लटः शतृशानचावादेशौ भवतः, तौ चेत् लक्षणहेतू क्रियाविषयौ । 'शयाना भुञ्जते यवनाः', 'तिष्ठन्तोऽनुशासति गणकाः' । हेतुः फलं कारणं च इति पक्षे 'अर्जयन् वसति', 'हरिं पश्यन् मुच्यते' इति सूत्रार्थोदाहरणे वृत्त्यादावुक्तेः । अत्र चावस्थानस्यानु-शासनक्रियां प्रति लक्षणत्ववत्, कलेवरत्यागक्रियां प्रति स्मरणस्य लक्षकत्वविवक्षयैव शतृप्रत्ययः, न त्वेककालत्वाभिसन्धिनेति न शब्दकृतविरोध इति भावः । स्पष्टीकरिष्यति तदनुपदमेव ।

यद्यपि 'लक्षणहेत्वोः क्रियायाः' इति षष्ठ्यन्तमेव सूत्रं पठित्वा क्रियाया लक्षके परिचायके, हेतौ च वर्तमानाद्धातोः लटः शतृशानचावादेशौ स्त इति सूत्रार्थः शाब्दिकैरुक्तः । तथाऽपि 'क्रियायाम्' इत्यपि पाठम्, तस्य 'क्रियायामुपपदे सति' इत्यर्थं चाभ्युपेत्येदमुदितम्, इष्टं च । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्यत्र 'क्रियायाम्' इत्यस्य 'क्रियायामुपपदे' इति व्याख्यातम् । अनुमतं चैतत् सूत्रकारवार्तिककारयोः । 'सम्बोधने च', 'माङि आक्रोशे' इत्युभय-त्रापि सप्तम्यन्तत्वदर्शनात्, अत्रापि 'तौ चेत् क्रियाविषयौ' इति वृत्तिकारवचनाच्च । अत एव 'क्रियाया इति शेषलक्षणैव षष्ठी' इति हरदत्तवचनमनादरणीयम् । अनेनैव 'तस्य क्रियायामित्युप-पदसापेक्षत्वात्' इति टीकाऽपि समर्थिता ज्ञातव्या । दृश्यते च सूत्रेऽपि पाठभेदः 'तुन्दिवलिवटेर्भः' इत्यत्र 'तुण्डि' इति पाठाभ्युपगमात् । ऋग्भाष्यटीकायाम् 'सप्तनोऽण् छन्दसि', 'सप्तनोऽञ् छन्दसि' इति सूत्रपाठद्वयाभ्युपगमाच्च । ऋग्भाष्यटीकायां तु 'लक्षणहेत्वोः क्रियायाः' इति षष्ठ्यन्तमेव सूत्रं पठितम् । **भिन्नकालत्वेऽपीति** । एतच्च 'दुर्मतिर्दुःखान्न स्मरन्त्यजतीति भविष्यति शङ्का' इत्युपरितनभाष्यव्याख्याऽवसरे आकार एव स्पष्टीभविष्यति । **तेन** विशेषणोपादानेन ।

श्लोकः ६,७

नन्वनुपदमेव 'स्मरन् पुरुषस्त्यजति इति भिन्नकालत्वेऽप्यविरोधः' इति भाषितम् । तत्कथ-मत्रैककालत्वप्रतीतिः इति भाष्यत इत्यत आह– **लटः शतृशानचाविततीति** । द्विविधो हि शताऽस्ति । लक्षणे विहितः, केवललडादेशत्वेन विहित इति । तत्र पूर्वभाषितः शता लक्षणे विहितः । अत्र भाष्यमाणस्तु लडादेशतया विहितः । तथा च न पूर्वोत्तरभाषणयोर्भिन्नकालत्व एककालत्वाभ्युपगमपरयोर्विसंवाद इति भावः । ननु तस्मिन् सूत्रे प्रथमान्तपदसामाधिकरण्ये सति शतृशनचौ न भवत इति प्रतिषेधात्, 'स्मरन् पुरुषः' इति च प्रथमान्तपदसामानाधिकरण्यात् कथं शतृप्रत्ययः ? इत्यत आह– **स चेति** । शत्रादेश इत्यर्थः । **इति वर्तमान इति** । 'वर्तमाने लट्' इति सूत्रादनुवृत्तस्य षष्ठ्यन्तत्वेन विपरिणामसम्भवे अत्र पुनः 'लटः' इति लड्ग्रहणस्य प्रयोजन-विशेषानिरूपणादिति भावः । **प्रथमासामानाधिकरण्येऽपीति** । तथा चोदाहरन् 'सन् ब्राह्मणः', 'अस्ति ब्राह्मणः', 'विद्यमानो ब्राह्मणः', विद्यते ब्राह्मणः' इत्यादि ।

ननूभयोरपि प्राप्तौ कथं निर्णय इत्यत आह– **लक्षण इति** । लक्षणे वर्तमानाद्धातोः परस्य लट आदेशत्वेन विहितादित्यर्थः । **लडादेशः** 'लटः शतृशानचौ' इति विहितलडादेशः । **तस्य** लक्षणे विहितस्य शतुः । **सापेक्षत्वात्** । क्रियायामुपपदे सत्येव भवतीति, अन्यप्रतीतिसापेक्षप्रतीति-कत्वात् । **अस्य** लडादेशस्य । ननु कथमस्यानपेक्षत्वम् । तत्रापि 'अप्रथमासामानाधिकरणे' इत्यन्यसापेक्षप्रतीतिकत्वस्यावभासादित्यत आह– **अप्रथमेति** । **अतिप्रसक्तीति** । प्रथमा-सामानाधिकरण्येऽपि सर्वत्र शतृशानचौ भवतश्चेत् 'पचति देवदत्तः' इत्यादावपि प्रसक्तिरित्येवम् अतिप्रसक्तिपरिहारमात्रार्थत्वादित्यर्थः, न पुनरुपपदत्वोपस्थापनार्थत्वमपीति मात्रपदार्थः । एवं बलाबलचिन्तायाः फलमाह– **तथा चेति** । **एककालीनत्वेति** । ' 'खः सर्वधुरात्' इति सूत्रे 'खः' इति योगविभागः कर्तव्य इष्टसङ्ग्रहार्थः' इति वृत्तिकारवचनाद् इहैककालशब्दादपि खप्रत्ययः । अत एव 'दक्षिणधुरीणः', 'उत्तरधुरीणः', 'शातोदरीखरश्वरीकलनाधुरीणः' इत्यादिप्रयोगा उपपद्यन्ते । तथा च अवश्यकर्तव्यत्वेन योगविभागेनैव एककालादिशब्दादपि खप्रत्ययनिष्पादनसम्भवे 'कालाट्ठञ्' इति सूत्रे 'समानकालीनम्' इत्यादिप्रयोगा अपभ्रंशा एवेति प्रलपन्नाधुनिकः प्रत्यस्तः । तथा च शरणदेवः 'चिरकालीनादयः 'खः सर्वधुरात्' इत्यत्र योगविभागेन' इति ॥

**भावदीपिका (श्री.टि.)– ॥ तत्रापीति** ॥ 'अन्ते' इत्यस्य स्मरणविशेषणत्वपक्षेऽपीत्यर्थः । 'स्मरन् पुरुषः' इत्यादिकम् आदौ योज्यम् । यदाकदाचित् स्मरणवान् पुरुष इत्यर्थः । ननु 'स्मरन्

त्यजति' इत्युक्तस्मरणकलेवरत्यागयोर्भिन्नकालीनत्वेऽपि 'स्मरन्', 'त्यजति' इत्यनयोः शब्दयोर्विरोध एव । 'लटः शतृशानचौ' इति वर्तमानार्थकलडादेशत्वेन शतुर्विधानात् । 'स्मरन्' इत्यस्य च 'स्मृ चिन्तायाम्' इत्यस्माल्लटि तस्य परस्मैपदिनि शत्रादेशे शकार-ऋवर्णयोर्लोपे, गुणे, तस्य रपरत्वे, 'स्मरन् अत्' इति जाते, ऋकारस्य इत्त्वेन शतृप्रत्ययस्य उगित्त्वाद् 'उगिदचाम्' इति सूत्रेण नुमागमे संयोगान्तनकारलोपे च सति निष्पन्नतया शत्रन्तत्वे वर्तमानार्थकत्वात् 'त्यजति' इत्युक्तत्यागसमानकालीनत्वप्राप्तेः भिन्नकालीनत्वप्रयुक्त-शब्दविरोधाभावशङ्का कथं स्यात् ? इत्यत उक्तम्– **लक्षणहेत्वोः क्रियाया इति लक्षणेऽपि शतुर्विधानादिति** ॥

अत्र 'लटः शतृशानचौ' इति सूत्रात् 'शतृशानचौ' इत्यनुवर्तते । क्रियायाः लक्षणहेत्वोः-क्रियाविषययोर्लक्षणहेत्वोरर्थवत्त्वेन विवक्षितयोः सतोः, धातोः शतृशानचौ प्रत्ययौ स्तः । 'शयानाः भुञ्जते यवनाः' । अत्र भोजनक्रियालक्षणत्वेन शयनस्य विवक्षितत्वात्, तस्मिन् लक्षणे विवक्षिते सति, 'शीङ् स्वप्ने' इति धातोः शानच्प्रत्यये 'शयानाः' इति भवति । तथा 'अर्जयन् वसति' । अत्र वासक्रियायाः द्रव्यार्जनस्य हेतुतया विवक्षितत्वात्, तस्मिन् हेतौ विवक्षिते सति ऋजधातोः शतृप्रत्यये 'अर्जयन्' इति भवति । ततश्चैवं लक्षणेऽपि शतृप्रत्ययस्य विहितत्वात्, तत्र च कालविशेषानुक्तेः, भिन्नकालीनत्वेऽपि शतुः सम्भवेन, प्रकृते च 'त्यजति' इत्युक्तदेहत्याग-रूपक्रियायाः कर्तुः पुंसः स्मरणरूपलक्षणवत्त्वस्य भिन्नकालीनस्मरणयोगेनापि सम्भवात् न कश्चिच्छब्दविरोध इति भावः । किमनेन प्रयोजनमुक्तं भवति ? इत्यत आह– **तेनेति** ॥ 'अन्ते' इति स्मरणविशेषणदानेनेत्यर्थः । **एककालत्वेति** ॥ 'अन्ते स्मरन्' इत्यस्य 'देहत्यागकाले स्मरन्' इत्यर्थकत्वादिति भावः । कथमेककालीनत्वप्रतीतिः ? इत्यतस्तामुपपादयति– **लट इति** ॥ 'लट; शतृशानचौ अप्रथमासमानाधिकरणे' वर्तमानार्थकस्य लटः परस्मैपदिन्यात्मनेपदिनि च क्रमात् शतृशानचावादेशौ स्तः प्रथमाविभक्त्यन्तसामानाधिकरण्याभावे सति सूत्रार्थः । 'पचन्तं चैत्रं पश्य', 'पचमानं चैत्रं पश्य' इत्याद्युदाहरणम् । अत्र द्वितीयाविभक्तिसामानाधिकरण्यसद्भावेना-प्रथमासमानाधिकरणत्वात् । **लडादेशत्वेनापीति** ॥ वर्तमानार्थकलडादेशत्वेनापीत्यर्थः ।

नन्विदं विरुद्धम् । 'लटः शतृशानचौ' इति सूत्रेण 'स्मरन्' इत्यत्र लडादेशभूतशतृ-प्राप्त्यनुपपत्तेः । तत्र 'अप्रथमासमानाधिकरणे' इत्युक्तत्वाद् अत्र पुनः 'स्मरन् पुरुषस्त्यजति' इति

श्लोकः ६,७

प्रथमासामानाधिकरणस्यैव सद्भावादिति चेत्, तत्राह– **सचेति** ।। वर्तमानार्थकलडादेशत्वेन विहितः शतृप्रत्यय इत्यर्थः । **वर्तमान इति** ।। अनुवर्तमान इत्यर्थः । अयं भावः । 'लटः शतृ' इति सूत्रे 'लटः' इति न वक्तव्यम् । 'वर्तमाने लट्' इति पूर्वसूत्राद् विभक्तिविपरिणामेन 'लटः' इत्यनुवृत्तिसम्भवेन पुनर्लड्ग्रहणस्य व्यर्थत्वात् । तथा च 'व्यर्थं सत् किञ्चिदिष्टं ज्ञापयति' इति न्यायसामर्थ्यात् क्वचित् प्रथमासमानाधिकरणेऽपि लडादेशः शतृप्रत्ययः शानच्प्रत्ययश्च भवतीति ज्ञायते । 'सन् ब्राह्मणः' 'अधीयनो ब्राह्मणः' इत्यादिप्रयोगदर्शनात् । यथोक्तं काशिकायाम् 'लट्' इति वर्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम् । तेन क्वचित् प्रथमासमानाधिकरणेऽपि शतृशानचौ भवतः । 'सन् ब्राह्मणः', 'अधीयानो ब्राह्मणः' इति दर्शनात् इति ।। तथा च 'स्मरन् पुरुषस्त्यजति' इति प्रथमासामानाधिकरण्येऽपि वर्तमानार्थलडादेशभूतशतृप्रत्ययसम्भवाद् 'अन्ते' इत्यनुक्तावपि 'स्मरंस्त्यजति' इत्यस्य 'तदानीं स्मरणवान् देहं त्यजति' इत्यर्थसम्भवेन स्मरणत्यागयोरेककालीनत्वप्रतीतेर्नैव सुमतेः शङ्कोत्पत्तिरिति ।

ननु लक्षणे विहितलडादेशमादायोक्तरीत्या स्मरणत्यागयोर्भिन्नकालीनत्वेऽपि न कश्चिच्छब्द-विरोध इति मन्दमतेः शङ्कानिरासाय 'अन्ते' इत्येतदपेक्षितम्, आहोस्वित् लडादेशत्वेनोक्तं शतृप्रत्ययमादाय एककालीनत्वं स्मरणत्यागयोरङ्गीकृत्य भिन्नकालीनत्वशङ्काया एवाभावेन 'अन्ते' इत्येतदपेक्षितं वेति सुमतेरपि सन्देह एव स्यात्, न निश्चय इत्यत आह– **लक्षणे विहिताचेति** ।। लक्षणेऽर्थे विहितात् शतृप्रत्ययादित्यर्थः । लक्षणे विहितः शतृप्रत्ययः शानच्प्रत्ययश्च स्वतन्त्र एव, न तु लडादेशभूतः । अत एव पूर्वं 'लक्षणेऽपि शतुर्विधानात्' इत्युक्त्वा, 'लडादेशत्वेनापि' इत्युक्तम् । **लडादेशः** 'लटः' इति सूत्रोक्तः शतृप्रत्ययः । कथं बलवत्त्वम् ? इत्यतः लक्षणे विहितस्य शतुर्दौर्बल्यमुपपादयति– **तत्रेति** ।। 'लक्षणहेत्वोः' इति सूत्रे । 'लक्षणे विहितस्य शतृप्रत्ययस्य' इति शेषः । यत् सापेक्षं तत् दुर्बलमिति भावः ।

ननु 'क्रियायाः' इति षष्ठ्यन्तस्य कथमुपपदत्वम्? 'तत्रोपपदं सप्तमीस्थम्' इति सप्तम्यन्त-स्यैवोपपदत्वोक्तेः, 'कर्मण्यण्' , 'सुपि स्थः' इत्यादौ तादृशस्यैवोपपदत्वदर्शनाच्च, इति चेदुच्यते। 'तत्रोपपदम्' इत्युक्तपारिभाषिकोपपदत्वस्य अत्रासम्भवेऽपि, 'उपसमीपे विद्यमानं पदमुपपदम्' इति योगेनोपपदत्वसम्भवात् । 'शयाना भुञ्जते', 'अर्जयन् वसति' इत्यादौ भोजनादिक्रियायाः समीपे सत्त्वात् । यद्वाऽस्तु सप्तम्यन्तस्यैवोपपदत्वनियमः । प्रकृते च 'तौ चेत्

लक्षणहेतू क्रियाविषयौ भवतः' इति व्याख्यातत्वेन विषयत्वस्य सप्तम्यर्थत्वाद् उपपदत्वं षष्ठ्यन्त-स्यापि विभक्तिविपरिणामेनास्तीति सूत्रेऽभिप्रेतत्वेन न दोष इति द्रष्टव्यम् ।

**अस्येति** ॥ 'लटः शतृ' इति सूत्रोक्तलडादेशभूतशतृप्रत्ययस्येत्यर्थः । **अनपेक्षत्वादिति** ॥ उपपदसापेक्षत्वाभावादित्यर्थः । नन्वेतदयुक्तम् । अप्रथमासमानाधिकरणस्य 'प्रथमासमानाधि-करणभिन्ने उपपदे' इत्यर्थकत्वेन लडादेशशतुरपि उपपदसापेक्षतया दौर्बल्यमेव ? इत्याशङ्क्याह– **अप्रथमेति** ॥ स्यादप्येषा शङ्का यद्यत्र 'अप्रथमासमानाधिकरणे' इत्यस्य पर्युदासत्वमभ्युप-गच्छामः । नचैवम् । किं नाम, प्रथमासमानाधिकरणेऽपि भवनरूपातिप्रसक्तिपरिहाराय 'प्रथमा-समानधिकरणे लडादेशः शतृप्रत्ययः शानच्प्रत्ययश्च न भवति' इति प्रसज्य प्रतिषेधार्थकत्वात् । नह्येवं व्याख्यानेऽस्योपपदत्वसम्भावनाऽप्यस्तीति' 'परिहार' इत्युक्त्या प्रसज्य प्रतिषेधोऽयमिति सूचितम् । 'मात्र' इत्यनेन नोपपदत्वाभावः सूचित इति ध्येयम् । अत्र 'प्रथमासमानाधिकरणे न भवति' इत्येतदप्युत्सर्गरूपमेव । 'सन् ब्राह्मणः' इत्यादिप्रयोगदर्शनरूपापवादबलेन, पुनर्लडुक्त्या प्रथमासमानाधिकरणेऽपि लडादेशे शतृप्रत्ययभवनाङ्गीकारात् । 'अतिप्रसक्तिमात्रपरिहारार्थत्वात्' इति वचनं तु प्रथमासमानाधिकरणेऽपि भवनरूपातिप्रसक्तिः सर्वथा कुत्रापि नास्तीत्याशयेन नोक्तम्, किन्तु बाहुलिकाभिप्रायेणैवेत्याद्यालोचनीयं सूरिभिरित्युपरम्यते । **बलवतः** लडादेश-शतृप्रत्ययस्य ।

**भावप्रकाशः (कृ.टि.)**– ॥ **लक्षणहेत्वोरिति** ॥ यद्यपि क्रियायाः परिचायके हेतौ चार्थे वर्तमानाद्धातोः लटः शतृशानचौ स्त इति सूत्रार्थः शाब्दिकैरुक्तः । तथापि क्रियायमिति पाठं लक्षणे हेतौ चार्थे धातोः शतृशानचौ स्तः क्रियापदे सतीत्यर्थं चाभिप्रेत्यैवमुक्तम् । उपेयप्रति-पत्त्यर्था उपाया अव्यवस्थित इति न्यायात् । एवं च लक्षणेपि शतुर्विधानात् क्रियायामित्युपपद-सापेक्षत्वादुक्तमुपपन्नमिति बोध्यम् ॥ **लक्षणेपीति**॥ लडादेशं विना स्वातन्त्र्येणैव द्विषः अमित्र इतिवत् शतुर्विधानादित्यर्थः ॥ ननु स्मरन् पुरुष इति प्रथमासामानाधिकरण्यात् कथं प्रकृते लटः शत्रादेशः ॥ लटः शतृशानचावप्रथमासमानाधिकरण इति प्रथमासामानाधिकरण्ये तन्निषेधा-दित्यत आह– **लडिति वर्तमान इति**॥ वर्तमाने लट् इति पूर्वसूत्रादिति शेषः ॥ **क्वचिदिति** ॥ सन् ब्राह्मण इत्यत्रेत्यर्थः ॥ ननु लडादेशोपि सापेक्ष एव । अप्रथमासमानाधिकरण इत्युक्त-त्वादित्यत आह– **अप्रथमेति**।. **अतिप्रसक्तीति** ॥ प्रथमासामानाधिकरण्यं यत्र तत्र शतृशानचौ न स्त इत्येवमर्थत्वादित्यर्थः ॥

श्लोकः ६,७

## भाष्यम्

**दुर्मतेः दुःखान्न स्मरन् त्यजतीति भविष्यति शङ्का । 'त्यजन् देहं न कश्चित्तु मोहमाप्नोत्यसंशयम्'इति स्कान्दे । 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति' इति हि श्रुतिः ॥**

भावप्रदीपिका (प.टी.)– नन्वेककालीनता दुर्मतेरपि शब्दबलात् प्रतीयत इत्यत आह– **दुर्मतेरिति ।** तर्हि शङ्काबीजमाशङ्कमानः कथं दुर्मतिः ? इत्यत आह– **त्यजन्निति ।** मोहोऽज्ञानमभिमानश्च । एतदुभयाभावात् कस्यापि न दुःखं किमुत ज्ञानिन इति भावेनोक्तस्य साक्षात् श्रुतिमप्याह– **तस्येति ।**

प्रमेयदीपिका (ज.टी.)– ननु दुर्मतिरपि शाब्दं न्यायं जानात्येव । अन्यथा शास्त्रे नाधिक्रियेत । केवलमध्यात्मविषये न प्रवीणः । तत्कथं तस्याप्येषा शङ्का स्यात्? ततश्च तं प्रत्यपि 'अन्ते' इत्येतद्व्यर्थमित्यत आह– **दुर्मतेरिति ॥** दुर्मतेर्भविष्यति शङ्का भिन्नकालत्वविषया । कुतः? मरणकाले महद्दुःखं जायते । दुःखस्य च संस्कारविलोपहेतुत्वं प्रसिद्धम् । अतो दुःखात् कारणात् मूर्छितो न स्मरन् त्यजति । कलेवरत्यागसमये स्मरणमसम्भवीति यावत् । एतामनुपपत्तिं पश्यन् बलवन्तमपि लडादेशं विहाय लक्षणार्थमेव हि मन्यत इति भावः ॥

ननु सुमतेरप्येवं शङ्का स्यादेव । कथं चेयं शङ्का तत्त्वप्रतीतिरेवेति चेन्न । अज्ञानिन एव देहाभिमानिनो देहत्यागमात्मत्यागमिव मन्यमानस्य मरणकाले दुःखं भवति । तदपि मरणक्षणात् पूर्वमेव ज्ञानी तु सर्वदा देहं हेयमेव मन्यमानः न मनागपि दुःखायते । किन्तु विशिष्टमेव तस्योत्क्रमणमित्यध्यात्मशास्त्रमनुसन्दधानस्य सुमतेः शङ्काऽनवकाशात् । किं तदध्यात्मशास्त्रम् ? इत्यत आह– **त्यजन् इति ॥ कश्चित्** विद्वान् । **अविद्वानपि** तत्काले । तस्य इति मरणवैशिष्ट्यमात्रपरम् ॥

**भावबोधः** (र.टि.)– ननु यदि शाब्दन्यायं जानाति स कथं दुर्मतिरित्यत आह– **केवलमध्यात्मशास्त्र इति । तत्त्वप्रतीतिरिति ।** मरणकाले दुःखायते तस्य च संस्कारविलोपहेतुत्वस्य च सत्त्वादिति भावः । ननु मरणकाले महद्दुःखमित्यादिना मरणसमये ज्ञानिनो मूर्च्छोक्तेः कथं त्यजन् देहं न कश्चिदित्युक्तमित्यत आह– **अविद्वानपीति ।** तत्काले देहत्यागक्षणे मोहं नाप्नोतीत्यर्थः । यदि तत्कालेऽपि मोहस्तदा तत्क्षणे प्राप्यस्मरणाभावेन तत्प्राप्तिरेव न स्यादिति भावः ॥

**भावदीपः (रा.टि.)**– ॥ **न प्रवीणो नाधिक्रियेत** इत्यन्वयः ॥ **दुःखायते** दुःखिवदाचरतीत्यर्थः ॥ **तत्काल इति** ॥ मोहं नाप्नोति, किन्तु तत्पूर्वमेवेति योज्यम् । **मरणवैशिष्ट्येति** ॥ 'ज्ञानिनः' इति योज्यम् । तावत एव प्रकृतोपयोगादिति भावः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **नाधिक्रियेतेति** । तथा च मन्दमतेः शङ्कापनोदार्थम् 'अन्ते' इति विशेषणमित्युक्तमयुक्तमिति भावः । ननु शाब्दन्यायं जानन् शास्त्रे अधिकारी च कथं मन्दमतिः ? इत्यत आह– **केवलमध्यात्मेति** । ननु स्मरणाभावः संस्काराभावे सति स्यात् । स्मरणस्य संस्कारान्वयव्यतिरेकित्वात् । न तु दुःखे सति स्मरणाभावः । दुःखाभावस्य स्मरणहेतुत्वानवधृतेः ? इत्यत आह– **दुःखस्येति** । **प्रसिद्धम्** अनुभवसिद्धम् । 'दुःखात्' इत्यत्र पञ्चमीविभक्त्यर्थोक्तिः– **दुःखकारणादिति** । दुःखरूपकारणादित्यर्थः । कारणशब्दात् पञ्चमी तु 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति वक्तव्यात् । **मूर्छितः** सञ्जातमूर्छाऽवस्थः लुप्तसंस्कार इत्यर्थः । ननु न नञस्त्यागेनान्वयबोधः ? कलेवरत्यागस्य प्रमितत्वात्, नैसर्गिकश्च नञः क्रियान्वयः, इत्यतस्तात्पर्यमाह– **कलेवरत्यागेति** । **एतां** स्मरणासम्भवलक्षणाम् । **लक्षणार्थम्** 'लक्षणहेत्वोः क्रियायाम्' इति शास्त्रविहितम् ।

ननु कलेवरत्यागसमये दुःखाविनाभावेन संस्कारविलोपप्राप्त्या 'अस्मरणसम्भवात्, सुमतेरपि विभिन्नकालत्वविषया शङ्का युक्तैव । किञ्च शङ्का नाम वितर्कापरनामा संशयः । 'शङ्का वितर्कभययोः' इत्यभिधानात् । इयं च निश्चयरूपा प्रमितिरिति कथं संशयात्मा ? इति भावेन शङ्कते **सुमतेरपीत्यादिना** । **तत्त्वप्रतीतिः** प्रमा । **मरणकाल इति** । तत्र दुःखापादितसंस्कारविलोपस्यावर्जनीयत्वादिति भावः । **मनाक्** ईषत् । **दुःखायत इति** । दुःखशब्दो वृत्तिविषये दुःखवति वर्तते । ओजो यश आदिशब्दो यथा । ततः 'कर्तुः क्यङ्' इति क्यङि, 'सनाद्यन्ता धातवः' इति धातुत्वे, 'अकृत्सार्वधातुकयोः' इति दीर्घत्वे च दुःखिवदाचरतीत्यर्थः । कण्ड्वादौ पठितस्य दुःखधातोः कण्ड्वादिलक्षणे 'यत्किञ्चित्सुखदुःखतत्क्रियायाम्' इति व्याख्यानात्, दुःख्यति दुःखमनुभवतीत्यर्थः । पचाद्यचि, 'यस्य हलः' इति, 'अतो लोपः' इति च यकाराकारयोर्लोपे, कर्तुः क्यङि च, 'दुःखायते' इति रूपम्, दुःखमनुभवन्निवाचरतीत्यर्थ इत्यपि आहुः ।

**विशिष्टम्** दुःखापादितसंस्कारविलोपशून्यम् । अज्ञानिनो मरणक्षणात् पूर्वमेव दुःखस्य समर्थितत्वात् कश्चिदपि मोहं नाप्नोतीति कथमुच्यते ? इत्यत आह– **तत्काल इति** । मरणक्षणे ।

श्लोकः ६,७
'मोहम्' इति भाष्यपदस्य 'मूर्च्छाम्' इत्यर्थः । 'मूर्च्छा तु कश्मलं मोहः' इत्यभिधानात् । तथा च तस्य संस्कारविलोपहेतुमूर्च्छाऽभावेन प्राप्यस्मरणसम्भवात् 'तं तमेति' इति युज्यत इति भावो ज्ञेयः । 'तस्य ह एतस्य' इति भाष्योदाहृतश्रुतौ 'मरणक्षणे मोहं नाप्नोति' इत्यस्य 'तत्क्षणे प्राप्य स्मरणमस्ति' इत्यस्य वाऽर्थस्याप्रतिभासादसङ्गतं तदुदाहरणम् ? इत्यतस्तात्पर्यमाह– **तस्येति । मरणवैशिष्ट्यमात्रपरमिति ।** अज्ञानिमरणात् ज्ञानिमरणे अतिशयप्रतिपादनपरेयं श्रुतिरित्यतो विशिष्टमेव तस्योत्क्रमणम् इत्युक्तार्थप्रमापकत्वाद् युक्तं तदुदाहरणम् । व्यवस्थापितं चैतत् 'तदेकोऽग्रज्वलनम्' इत्यधिकरण इति भावः । भावप्रदीपिकायां तु 'मोहः अज्ञानम् अभिमानश्च, एतदुभयाभावे कस्यापि न दुःखम्, किमुत ज्ञानिन इति भावेनोक्तार्थे श्रुतिमप्याह– **'तस्येति'** इत्युक्तम् ॥

**भावदीपिका (श्री.टि.)**– ननु यदि शाब्दन्यायं जानाति तर्हि स कथं दुर्मतिः ? इत्यत आह– **केवलमिति ॥ प्रवीणः** कुशलः । एतन्निमित्तादेव स दुर्मतिरित्युच्यत इति भावः । **भिन्नकालत्वेति** ॥ 'स्मरणकलेवरत्यागयोः' इति शेषः । **अत इति** ॥ भगवदनुभवजन्य-तत्संस्काराख्यस्मृतिकारणस्य विरुद्धत्वादित्यर्थः । **लडादेशं** शतृप्रत्ययम् । **लक्षणार्थ** शतृप्रत्ययम् । 'जघन्यमपि' इति शेषः । **तत्त्वेति** ॥ मरणकाले दुःखस्य तत्प्रयुक्तसंस्कारविलोपस्य च सत्त्वेन तत्त्वप्रतीतित्वान्न संशयरूपेत्यर्थः । **आत्मत्यागं** स्वस्वरूपत्यागम् । **पूर्वमेवेति** ॥ न तु देहवियोगरूपमरणक्षणे । तथात्वे उत्तरत्र प्राप्यस्मरणाभावप्रसङ्ग इति भावः । **मनागपि** कदाऽपि, ईषदपीति वा । **विशिष्टमेवेति** ॥ अज्ञमरणविलक्षणमेवेत्यर्थः । ननु 'मरणकाले महद्दुःखं जायते' इत्यादिना मरणसमयेऽज्ञानिनो मूर्च्छोक्तेः कथं 'त्यजन् देहं न कश्चित्' इत्युक्तम् ? इत्यत आह– **अविद्वानपि तत्काल इति** ॥ देहत्यागक्षणे मोहं नाप्नोतीत्यर्थः । अविदुषोऽपि तत्काले उत्तरजन्मनि प्राप्यशरीरस्मृतेरावश्यकतया यदि तत्कालेऽपि मोहस्तदा तत्क्षणे प्राप्यस्मरणाभावेन तत्प्राप्तिरेव न स्यादित्याशयः । **मरणवैशिष्ट्यमात्रेति** ॥ ज्ञानिमरणस्याज्ञानिमरणापेक्षया वैलक्षण्यप्रतिपादनपरमेवेदम् । न तु ज्ञानिनस्तत्काले स्मरणप्रतिपादकमित्यर्थः । **तदुपायत्वेन** अन्तकालस्मरणोपायत्वेन ॥

**भावप्रकाशः (कृ.टि.)**– ननु शाब्दन्यायश्चेत् कथं दुर्मतिरित्यत आह– **केवलमध्यात्मेति ॥ मूर्छित इति ॥** लुप्तसंस्कार इत्यर्थः ॥ ननु नञो विशेष्यान्वये बाधः । कलेवरत्यागस्य

प्रमाणसिद्धत्वात् । विशेषणान्वये च विशेष्यवैयर्थ्यमित्यतो व्याचष्टे– **कलेवरत्यागसमय इति** ।। **तत्वप्रतीतिरिति** ।। मरणकाले दुःखस्य तज्जन्यसंस्कारलोपस्य च सत्वादिति भावः ।। **मनागपीति** ।। ईषदपीत्यर्थः ।। **दुःखायत इति**।। दुःखमनुभवतीत्यर्थः । सुखादिभ्यः कर्तृवेद-नायामिति क्यङ्विधानादिति भावः ।। अज्ञानिनो मरणकाले दुःखं भवतीति साधितत्वात् कश्चिदपि मोहं नाप्नोतीत्ययुक्तमित्यत आह **तत्काल इति** ।। मरणक्षण इत्यर्थः ।। अन्यथा प्राप्यस्मरणाभावेन तत्प्राप्त्ययोगादिति भावः ।।

## भाष्यम्

**'सदा तद्भावभावितः' इत्यन्तकालस्मरणोपायम् आह । भावः अन्तर्गतं मनः । तथाऽभिधानात् । भावितत्वम् अतिवासितत्वम् । 'भावना त्वति-वासना' इत्यभिधानात् ।। ६,७ ।।**

भावप्रदीपिका (प.टी.)– यद्यन्तकालस्मरणमेव मुक्तिहेतुः, तर्हि किं श्रवणादिना ? इत्यत आह– **सदेति** । तदर्थमाह– **भाव इति** । तथाभिधानात् इति 'स्याद्भावोऽन्तर्गतं मनः, इत्येव ।। ६,७ ।।

प्रमेयदीपिका (ज.टी.)– ननु 'अन्ते' इत्येतत् स्मरणविशेषणं चेत् तदा 'सदा तद्भावभावितः' इत्यनेनैव गतार्थं स्यात् । अन्यथा तद्व्यर्थं भवेदित्यत आह– **सदेति** ।। अन्तकालस्मरणमेव तत्प्राप्तिसाधनम् । नच तदकस्माद् भवति । अतस्तदुपायत्वेन सदा तद्भावभावितत्वमुच्यत इति भावः। कथम्? इत्यतो यथाऽयं तदुपायः स्यात् तथा व्याचष्टे– **भाव इति ।। तथाऽभिधानात् इति** । 'स्याद्भावोऽन्तर्गतं मनः' इत्येवंरूपादभिधाना-दित्यर्थः । **वासितत्वं** संस्कृतत्वम् । तस्मिन् भावस्तद्भावः । तेन भावितः इति मनोधर्मेण आत्मोपचर्यते ।। ६,७ ।।

भावदीपः (रा.टि.)– ।। **मनोधर्मेण** भावितत्वरूपेण ।। ६. ७ ।।

भावरत्नकोशः (सु.टि.)– ।। तत् 'सदा तद्भावभावितः' इति स्मृतिविशेषणम् । तत् अन्तकाले स्मरणम् । **तस्मिन् भावः** तस्मिन् मनसोऽन्तर्गतिः । नन्वन्तर्गतिर्मनसो धर्मः तत्कथं सा स्मृतपुरुषविशेषणम् ? इत्यत आह– **आत्मोपचर्यत इति** ।। ६,७ ।।

श्लोकः ८

**गीताक्षरार्थस्तु**- प्रकृतमनुसन्धीयते– **तस्मादिति** । निरन्तरमद्भावनाया मत्प्राप्तिहेतुस्मृति-जनकत्वात् मय्यर्पितमनोबुद्धिः सन्निति । अत्र बुद्धिर्मनोवृत्तिविशेषः । अत्रार्थे संशयाभावः ॥ ७ ॥

भावदीपिका (श्री.टि.)– ननु सदा तद्भावभावितत्वस्य मनोधर्मत्वात् कथं स्मरणकर्त्रात्म-विशेषणत्वम् इत्यत आह– **मनोधर्मेणेति** ॥ ६,७ ॥

**अभ्यासयोगयुक्तेन चेतसाऽनन्यगामिना ।**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥**

## भाष्यम्

**सदा तद्भावभावितत्वं स्पष्टयति– अभ्यासेति ॥ अभ्यास एव योगो अभ्यासयोगः । दिव्यं पुरुषं पुरि शयं पूर्णं च । 'स वा अयं पुरुषः सर्वासु पूर्षु पुरि शयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम्' इति श्रुतेः । दिव्यं सृष्ट्यादिक्रीडादियुक्तम् । 'दिवु क्रीडा' इति धातोः ॥ ८ ॥**

भावप्रदीपिका (प.टी.)– कथं मनसस्तदन्तर्गमनम् ? किञ्च तेनात्मनो वासितत्वम् ? इत्यत उत्तरश्लोकमवतारयति– **सदेति** । 'अभ्यासयोगाभ्याम्' इति प्रतीतिं वारयति– **अभ्यासेति** । 'पुरुषश्चाधिदैवतम्' इत्युक्तः पुरुषोऽयं न भवति । दिव्यत्वेन विशेषणा-दित्यभिप्रायेण 'पुरुष'पदं सप्रमाणकं व्याचष्टे– **दिव्यमिति** । 'दिव्य'शब्देनान्यव्यावृत्तिः कथम् ? इत्यत आह– **दिव्यमिति** ॥ ८ ॥

प्रमेयदीपिका (ज.टी.)– कुतोऽयमर्थः ? इत्यत उत्तरत्रैवमेव व्याख्यानादिति भावेनाऽह– **सदेति** ॥ द्वन्द्वादिशङ्काव्युदासार्थमाह– **अभ्यास एवेति** ॥ अभ्यासातिरिक्तस्य योगस्य प्रकृते उपयोगिनोऽभावादिति भावः । पुरुषश्चाधिदैवतमिति प्रकृतो हिरण्यगर्भोऽत्रोच्यत इति प्रतीति निरासार्थमाह– **दिव्यमिति** ॥ दिव्यत्वेन विशेषणादीश्वर एवायमित्यर्थः । 'पॄ पालनपूरणयोः' इत्यतो 'विदिपुरोश्च' इति कुपन्प्रत्ययविधानात् पूर्णं चेति सिद्ध्यति । 'सर्वासु पूर्षु वर्तमानः' इति स्वरूपानुवादेन 'पुरुषः' इति विधेयम् । तस्य व्याख्यानम् पुरि शयमित्यादि । **आवरणम्** अन्तर्व्याप्तिः । **संवरणं** बहिराच्छादनम् । ननु दिवि भवो दिव्यः ।

**सच सूर्यमण्डलस्थत्वात् हिरण्यगर्भोऽपि भवतीति कश्चित्। अत आह– दिव्यमिति ।। औणादिको यक्प्रत्ययः । 'परमम्' इति विशेषणादिति भावः ॥ ८ ॥**

**भाववोधः (र.टि.)– ॥ प्रकृते उपयोगिन इति ।** कर्मकरणादेरन्तकालस्मरणं प्रति साक्षादहेतुत्वादिति । **कुषन्प्रत्यय इति ।** 'पॄ पालनपूरणयोः' इत्यतः कुषन्प्रत्यये कित्वाद्गुणाभावे 'ऋत इद्धातोः' इति प्राप्ते त्वपवादत्वेन 'उदोष्ठ्यपूर्वस्य' इति उत्वे 'उरण् रपर' इति रपरत्वे पुरुषशब्दः पूरणार्थक इत्यर्थः ।

**भावदीपः (रा.टि.)– ॥ द्वन्द्वादीति ॥** षष्ठीतत्पुरुषादिरादिपदार्थः । 'विदिपुरोश्च' इत्युणादिसूत्रेण कुषन्प्रत्यये कित्वाद् गुणाभावे 'उदोष्ठ्यपूर्वस्य'इति उत्त्वे,'उरण् रपरः' इति रपरत्वे पुरुष इति रूपसिद्धेरिति भावः ॥ ८ ॥

**वाक्यार्थप्रदीपः (पां.टि.)– ॥ विदि पुरोश्चेति कुषन्प्रत्ययविधानादिति ॥** पॄ पालन-पूरणयोरित्यस्मात् कुषन्प्रत्यये कित्वात् गुणाभावे ऋत इद्धातोरिति प्राप्ते अपवादकत्वेन उदोष्ठ्यपूर्वस्येत्युत्वे उरण्रपर इति रपरत्वे पुरुषशब्दार्थक इत्यर्थः ॥ ननु दिव् धातोः इगुपधलक्षणकप्रत्यये दिव् इति भवेत् । पचाद्यचि च लघूपधगुणे देवमिति भवितव्यम् । तत्कथं दिव्यमिति रूपनिष्पत्तिरित्यत आह– **औणादिको यक्प्रत्यय इति ॥** तथा च उणादयो बहुलमित्यनेन यकि तस्य कित्वाद् गुणाभावे दिव्यमिति रूपनिष्पत्तिरिति भावः ।

**भावरत्नकोशः (सु.टि.)– ॥ द्वन्द्वादीति ।** 'अभ्यासश्च योगश्च' इति द्वन्द्वः । 'अभ्यासस्य योगः सम्बन्धः' इति षष्ठीतत्पुरुषः । 'अभ्याससहितो योगोऽभ्यासयोगः' इति समानाधिकरण-समास इति प्रतीतिनिरासार्थमित्यर्थः । तन्निरासम् एवकारतात्पर्योक्त्या विशदयति **अभ्यासाति-रिक्तस्येति ।** 'दिव्यम्' इति विशेषणानुवादः साभिप्राय इति भावेन व्याख्याति– **दिव्यत्वेनेति । कुषन् प्रत्ययेति ।** 'पुरःकुषन्' इति पूर्वसूत्राद् औणादिकः कुषन्प्रत्ययः 'विदिपुरोश्च' इत्यत्राप्यनु-वर्तते । तस्य च कित्त्वाद् गुणाभावे 'उदोष्ठ्यपूर्वस्य' इत्युत्वे, रपरत्वे च पुरुषशब्दः 'पिपर्ति', 'पूर्यते वा' इति कर्तरि निष्पन्नः पूर्णमाहेति भावः । 'सर्वासु पूर्षु पुरिशयः' इति श्रौतपदानि नान्वितानि ? इत्यतोऽध्याहरति– **वर्तमान इति ।** न चेदं पुरुषशब्दार्थविवरणपरम्, शरीरे वर्तमानत्वमात्रप्रतीत्या अभिलषितार्थानवभासादित्यत उक्तम्– **इति स्वरूपानुवादेनेति ।** तस्य

श्लोकः ९

'पुरुषः' इत्यस्य । **पुरि शयमितीति** । पुरि शरीरे, 'अधिकरणे शेतेः' इति डः, 'वर्णागमो वर्णविपर्ययश्च' इत्यादिना साधुरिति भावः । 'इत्यादि' इत्यादिपदेन 'नैनेन किञ्चनानावृत्तम्, नैनेन किञ्चनासंवृतम्' इति श्रुतिशेषग्रहः । तत्राऽवृतसंवृतपदयोरपौनरुक्त्याय, 'नानेन किञ्चिदव्याप्तं नानेनाच्छादितं न च' इति बृहद्भाष्यरीत्या विवक्षितं प्रकृत्यर्थमाह– **आवरणमित्यादि** । श्रुतिशेषे अन्तर्बहिर्व्याप्तिप्रतीत्या पूर्णत्वं लभ्यत इति भाष्योक्तपूर्णत्वे प्रमाणमिदम् । 'पॄ पालनपूरणयोः' इति धातुव्याख्याने 'पूरणं सर्वत्र व्याप्तिः' इत्यभिमतमिति भावः । श्रुतौ इदम एतदो वा 'द्वितीयाटौस्स्वेनः' इत्यन्वादेशे 'एनेन' इति रूपम् ।

**कश्चिदिति** ।। यद्यपि सङ्करः 'दिवि सूर्यमण्डले भवं पुरुषं यान्ति' इत्येवात्र श्लोके अभाषत । तथाऽपि 'स एवादित्यमण्डलान्तर्गतो हिरण्यगर्भ एव पुरुषोऽधिदैवतं च' इति, 'पुरुषश्चाधिदैवतम्' इत्यत्र भाषितवान्, इत्यत एवमुक्तम् । **औणादिको यक् प्रत्यय इति** । 'अघ्न्यादयश्च' इत्यत्र 'जनेर्यक्' इत्यतो यक्प्रत्ययानुवृत्तेरघ्न्यादिगणपठिततया तत्रत्यत्वविवक्षया दीव्यतेर्यगुत्पादनीयः, 'हलि च' इति दीर्घाभावश्चेति भावः । 'दिवि भवं दिव्यम्' इति परोक्तं कुतो न स्यात् ? इत्यत आह– **परममितीति** । न हि हिरण्यगर्भस्य निरुपचरितं परमत्वं युक्तमिति भावः । 'सृष्ट्यादिक्रीडादियुक्तम्' इति भाष्ये सृष्ट्यादिश्च सा क्रीडा चेति विग्रहः । आद्यादिपदेन स्थित्यादेः सङ्ग्रहः, द्वितीयेन विजिगीषादेः । दीव्यतेः क्रीडादिकमर्थ इति कुतः ? इत्यत उक्तम्– **दिवु क्रीडेति धातोरिति** । तथा व्याख्यानादित्यर्थ इति व्याख्यानं द्रष्टव्यम् ।। ८ ।।

**गीताक्षरार्थस्तु-** सदा तद्भावभावितत्वं स्पष्टीक्रियते **अभ्यासेति** । अभ्यासः आवर्तनमेव योगः उपायः, तद्युक्तेन अनन्यगामिना अनन्यविषयेण । श्रितादिषु गमिगाम्यादेरुपसङ्ख्यानात् समासः । 'नान्यगामिना' इति पाठेऽप्ययमेवार्थः । दिव्यं सृष्ट्यादिक्रीडादियुक्तम्, पुरि शेते, पिपर्तीति वा पुरुषं प्राणिदेहे नियन्तृत्वेन वर्तमानम्, पूर्णं वा मामिति यावत् ।। ८ ।।

**भावदीपिका (श्री.टि.)–** 'द्वन्द्वादि' इत्यत्रादिपदेन षष्ठीविग्रहादिग्रहणम् । **आहेति** ।। 'कर्मधारय इति' आहेत्यर्थः । **अभ्यासातिरिक्तस्य** ध्यानापरपर्यायसमाधिभिन्नस्य । **योगस्य** कर्मयोगस्य । **प्रकृतेति** कर्मकरणादेरन्तकालस्मरणं प्रति साक्षादहेतुत्वादित्यर्थः । **विदिपुरोश्चेति** ।। **कुपन्निति** ।। तथा च 'पॄ' इत्यस्मात् कुषन्प्रत्यये नलोपे कित्त्वाद्गुणाभावे ऋवर्णस्य 'उदोष्ठ्य-

पूर्वस्य' इति उत्वे, 'उरण् रपरः' इति तस्य रपरत्वे 'पुरुषः' इति रूपं द्रष्टव्यम् । **अन्तर्व्याप्तिरित्यादि** ॥ तथा च एनेन किञ्चनानावृतम् अन्तर्व्याप्तं न भवति, किन्तु सर्वमप्यन्तः अनेन व्याप्तमेव, सर्वान्तर्यामीति यावत् । तथैनेन किञ्चन नासंवृतम् बहिरनाच्छादितं न भवति । किन्तु सर्वमपि बहिरनेनाच्छादितमेव, सर्वाच्छादकत्वात् व्याप्त इत्यर्थः । **दिवि भव इति** ॥ तथा च दिव्यत्वेन विशेषणादीश्वर एव, न हिरण्यगर्भ इति, उक्तमसदिति भावः । **यगिति** ॥ 'दिव्' अस्माद् यक्प्रत्यये 'दिव्यम्' इति रूपम्, कित्त्वाद् गुणाभावः । अन्यथा 'देव्यम्' इति स्यात् । कुत एवं व्याख्येयम् । परोक्त एवार्थः कस्मान्न स्यात् ? इत्यत आह– **परममिति** ॥ सूर्यमण्डलस्थे हिरण्यगर्भे परमत्वासम्भवाद् इत्थं व्याख्येयमिति भावः ॥ ८ ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **द्वन्द्वादीति** ॥ आदिपदेनाभ्याससहितो योग इति समासो ग्राह्यः । द्वन्द्वादिपक्षे दोषमाह– **अभ्यासेति** ॥ **प्रकृतोपययोगिन इति** ॥ कर्मयोगादेः साक्षादन्तकालस्मृत्यहेतुत्वादिति भावः । पुरुषशब्दे व्याख्येये यद् दिव्यमनूद्यते तत्फलमाह– **दिव्यत्वेनेति** ॥ **कुषन्प्रत्ययेति** ॥ कित्वाद् गुणाभावे उदोष्ट्यपूर्वस्येत्युत्वे रपरत्वे च पुरुषशब्दसिद्धिरिति भावः ॥ ८ ॥

**कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ९ ॥**

## भाष्यम्

**ध्येयमाह– कविमिति ॥ कविं सर्वज्ञम् । 'यः सर्वज्ञः' इति श्रुतेः । 'त्वं कविः सर्ववेदनात्' इति च ब्राह्मे ।**

**भावप्रदीपिका (प.टी.)**– तत्काले स्मर्तव्यो हरिरित्युक्तम् । कीदृशोऽसौ ध्येयः ? इत्याशङ्कानिवारणायोत्तरश्लोकमवतारयति– **ध्येयमिति** । 'कवि'शब्देन विवक्षितार्थमाह– **कविमिति** । भगवतः सार्वज्ञ्ये प्रमाणमाह– **य इति** । सर्वज्ञः 'कवि'शब्दार्थ इत्यत्र प्रमाणमाह– **त्वमिति** ।

**प्रमेयदीपिका (ज.टी.)**– उत्तरश्लोकगतविशेषणबलाच्च परमात्मैवायमिति भावेन

श्लोकः ९

तत्तात्पर्यमाह– **ध्येयमिति ॥ आह** विशिनष्टीत्यर्थः । ननु कवित्वमन्येषामप्यस्ति । तत्कथं भगवतो विशेषणमित्यत आह– **कविमिति ॥** परमेश्वरस्य सार्वज्ञे प्रमिते भवेदिदं व्याख्यानम् । तदेव कुतः ? इत्यत आह– **त्वमिति ॥ सर्वज्ञः** कविशब्दार्थ इत्येतत् कुत इत्यत आह– **य इति ॥** अन्येषां तु सर्वे विमोहितधियः इत्यादिना सार्वज्ञाभावः प्रमितः ॥

**भावरत्नकोशः (सु.टि.)**– 'अयं दिव्यं परमपुरुषम् अनुचिन्तयन्' इति चिन्तना-परपर्याय-ध्यानविषयस्योक्तत्वाद् 'आह' इत्यस्य तात्पर्यमाह– **विशिनष्टीति** । ध्येय उक्तः । कीदृशोऽसावित्यपेक्षायाम्, अत्र तस्य विशेषणान्युच्यन्त इत्यतो न पुनरुक्तिर्दोष इति भावः । **विशेषणमिति** । तस्येतरव्यावृत्तस्वभावत्वादिति भावः । **तदेव** सार्वज्ञमेव । **'वेदनात्'** इति भाष्यपदस्य 'ज्ञानात्' इत्यर्थः । कवित्वमन्येषां ब्रह्मादीनामप्यस्तीति कृतचोद्यं परिहर्तुमाह– **अन्येषां त्विति** । एकादशस्कन्धे 'सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः' इति प्रमाणमस्ति । यत्र च ब्रह्मादीनां विमोहितधीत्वम्, ब्रह्मवायुसरस्वतीभारतीनाम्–

'सर्वेषां ब्रह्मपदवीयोग्यानां पूर्वमेव तु ।
अभावस्त्वापरोक्षस्य मोहो ज्ञानस्य भण्यते ॥'

इति भगवत्पादव्याख्यानात् शतजन्मभ्यः पूर्वमपरोक्षज्ञानाभाववत्त्वम्, रुद्रादीनां तु 'रुद्राद्यास्तन्वभीमानाद् बहिरर्थयुजस्तथा' इति वचनाद् गौणमेव विमोहितधीत्वम् । तत एवोभयेषामपि अनादितः अपरोक्षज्ञानाभावलक्षणसार्वज्ञाभावः प्रमाणसिद्ध इति युक्तं कवित्वस्य विशेषणत्वमिति भावः । अत्र श्लोके ज्ञातव्यविशेषस्तत्तात्पर्यनिर्णयं व्याकुर्वद्भिः सुधीन्द्रतीर्थश्रीमच्चरणैर्भागवतोपासनायां स्पष्टीकृतः ॥

**भावदीपिका (श्री.टि.)**– ॥ **अयमिति** ॥ दिव्य इत्यर्थः । **इत्यादिनेति** ॥ 'सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः' इत्येकादशस्कन्धे भगवन्तं प्रत्युद्धववचनम् ॥

**भावप्रकाशः (कृ.टि.)**– परमपुरुषं चिन्तयन् इति ध्येयस्योक्तत्वादाह– **विशिनष्टीत्यर्थ** इति ॥ कवित्वमन्येषामप्यस्तीत्युक्तदोषं परिहरति– **अन्येषां त्विति** ॥

# भाष्यम्

**धातारं धारणपोषणकर्तारम् । 'डु धाञ् धारणपोषणयोः' इति धातोः । 'धाता विधाता परमोत सन्दृक्' इति च श्रुतिः । 'ब्रह्मा स्थाणुः' इत्यारभ्य 'तस्य प्रसादादिच्छन्ति तदादिष्टफलां गतिम्' इति च मोक्षधर्मे ।**

भावप्रदीपिका (प.टी.)– विवक्षितं 'धातृ'शब्दार्थमाह– **धातारमिति** । 'धातृ'शब्द उक्तार्थः कुतः ? इत्यत आह– **डुधाञिति** । भगवतो धारणपोषणकर्तृत्वे प्रमाणमाह– **धातेति ॥**

प्रमेयदीपिका (ज.टी.)– ननु धाता विरिञ्चोऽपि प्रसिद्धः । तत्कथमेतद्भगवतो विशेषणम् ? इत्यत आह– धातारमिति ॥ कुतोऽयमर्थः? इत्यत आह– **डु धाञिति ॥** तृचः कर्तृवाचित्वं प्रसिद्धमेव । परमेश्वरस्य धातृत्वसद्भावे किं प्रमाणम्? इत्यत आह– **धातेति ॥** **विधाता** कर्ता । परमा सन्दृक् परमज्ञानरूपः । सर्वस्य धातारम् इत्येतद्भगवत एव नान्येपा-मित्यत्र प्रमाणमाह– **ब्रह्मेति ॥** तेन भगवता दिष्टं दत्तं फलं सुखं यस्यां सा तथोक्ता। मोक्षधर्मे 'कथितम्' इति शेषः ॥

भावदीपः (रा.टि.)– ॥ **कर्तृवाचित्वं प्रसिद्धमेवेति** ॥ 'ण्वुल् तृचौ' इति सूत्रे कर्तरि विधानादिति भावः । धातृपदेन धारणपोषणकर्त्रर्थकेन अपौनरुक्त्याय आह– विधाता कर्ता इति ॥

वाक्यार्थप्रदीपः (पां.टि.)– ॥ **तृचः कर्तृवाचित्वं प्रसिद्धमेवेति** । ण्वुल् तृचाविति कर्त्रर्थ एव तृज्विधानादिति भावः ।

भावरत्नकोशः (सु.टि.)– ॥ **प्रसिद्धः** 'धाताऽब्जयोनिर्द्रुहिणो विरिञ्चः कमलासनः' इत्यभिधाने । ननु धातुव्याख्याने धारणपोषणे प्रतीयेते, न तत्कर्तृत्वमपि, तत्कथं भाष्यते ? इत्यत आह– **तृच इति** । दधातेः 'ण्वुल्तृचौ' इति ण्वुल्प्रत्यये कृते, 'कर्तरि' इत्यनुवृत्त्या तस्य कर्तृत्वमर्थ इति व्याकरणशास्त्रे प्रसिद्धमित्यर्थः । विपूर्वो दधातिः करोत्यर्थ इति प्रसिद्धेराह विधाता **कर्तेति** । **नान्येपामितीति** । तथा च रूढ्या विरिञ्चस्य, 'धारणकर्तारम्' इति योगेन, 'व्यक्ता-व्यक्तं भरते विश्वमीशः' इत्यादिवचनेन च शिवादीनां च न धातृपदार्थता । 'ब्रह्मा स्थाणुः' इत्यत्र

श्लोकः १०

विरिञ्चिशिवादीनां भगवत्प्रसादायत्ततत्फलप्राप्त्यावेदनाद् ध्येयस्य चानन्यायत्ततया स्वप्रधानत्वौचित्यादिति भावः । 'तदादिष्टफलाम्' इत्यत्र तच्छब्दार्थं वदन् विवक्षितविग्रहं दर्शयति– **तेनेति** । ल्यबुपपत्तये शेषमाह– **कथितमिति** । 'ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तथा यमः' इत्यारभ्य 'तस्य वेदस्य मर्यादां पूजयन्तः सनातनीम्' इत्युक्त्वा, 'तस्य प्रसादात्' इति मोक्षधर्मे नारायणीये कथितमित्यर्थः ॥

**भावदीपिका** (श्री.टि.)– धा धातोस्तृच्प्रत्यये चकारलोपे 'धातृ' इति प्रातिपदिके सिद्धे पश्चात् स्वाद्युत्पत्तौ 'धारणकर्ता धाता' इति सिद्ध्यति । तत्र तृचः कर्माद्यर्थत्वे कथमयमर्थः सिद्ध्येत् ? इत्यत आह– **तृच इति** ॥ विपूर्वो दधातिः करोत्यर्थ इति भावेन व्यचष्टे– **विधाता कर्तेति** ॥

## भाष्यम्

**तमसः अव्यक्तात् परतः स्थितम् । तमसः परस्तात् इति ॥'अव्यक्तं वै तमः' 'परस्तात् हि स ततः' इति पिप्पलादशाखायाम् । 'मृत्युर्वा व तमो मृत्युर्वै तमो ज्योतिरमृतम्' इति श्रुतेः ॥ ९ ॥**

भावप्रदीपिका (प.टी.)– आदित्यवर्णत्वे (सविग्रहत्वेन) **मरणादि स्यादित्यतोऽन्त्यपादं अत्र सप्रमाणकं व्याचष्टे– तमस इति** ॥ ९ ॥

प्रमेयदीपिका (ज.टी.)– तमसः परस्तात् इत्येतदादित्यादिसाधारणमित्यतो द्वेधा सप्रमाणकं व्याचष्टे– **तमस इति** ॥ 'स्थितम्' इति शेषोक्तिः । **अप्राकृतविग्रहमित्यर्थः** ॥ ९ ॥

**भावरत्नकोशः** (सु.टि.)– ॥ आदित्यादीति । तस्य तेजोरूपतया तद्विरुद्धत्वादिति भावः । ननु मूलप्रकृतिरूपाव्यक्तात् परतः स्थितत्वं भगवति न वक्तुं युक्तम् । 'समना चासृत्युपक्रमात्' इति सूत्रे ईश्वरमूलप्रकृत्योः समव्याप्तिस्थितेः । गुणत्रयरूपाव्यक्तपरत्वं तु अव्याकृतादिसाधारणम्, इत्यतः 'परतः स्थितम्' इति भाष्यभावं तात्पर्यनिर्णयोक्तमाह– **अप्राकृतेति** । 'अव्यक्तशब्देन प्रकृतिः' इत्यन्यत्र भगवत्पादीयवचनात् 'अप्राकृत' इत्युक्तिः । **सः** परमात्मा, **ततः** तमसः परस्ताद् 'हि' इति प्रसिद्धिः । तमःशब्दस्यार्थान्तरं भाषते **मृत्युर्वा व तम इतीति** । 'मृत्युः' इत्यादिभाष्यं

स्पष्टार्थत्वाद्, 'द्वेधा सप्रमाणकम्' इत्यवतारितत्वाच्च न विशिष्य व्याख्यातम् । मृत्युमतिक्रान्तमित्यर्थः । भावप्रदीपिकायां तु आदित्यवर्णत्वे सविग्रहत्वेन मरणादि स्यात्, इत्यतोऽन्त्यपादं सप्रमाणकं व्याचष्टे– 'तमस इत्यादि' इत्यवतारितम् । एवं व्याख्यानद्वयेनाप्यादित्यादिव्यावृत्तं किं विशेषणं लब्धम् ? इत्यतः 'अप्राकृतविग्रहम्' इत्युक्तमित्यपि आहुः ॥ ९ ॥

**गीताक्षरार्थस्तु**- 'अन्तकाले कथंभूतः स्मर्तव्योऽसि' इति प्रश्नस्य ध्येयगुणकथनेन परिहारः श्लोकद्वयेनोच्यते कविमित्यादिना । कविं सर्वज्ञं पुराणम् 'पुरा' इत्यव्ययं चिरविप्रकृष्टकालमाह । ततः 'तत्र भवः' इत्यर्थे 'सायं चिरम्' इत्यादिना ट्युप्रत्यये 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' इति निर्देशसामर्थ्यात् तुडागमाभावे च पुराणशब्दोऽतिविप्रकृष्टभूतकालसम्बन्धिनमर्थमाह । 'पुराऽपि नवम् इति पुराणम्' इति विवृतिकृतः । अनुशासितारं शिक्षकम् अणोरणीयांसं धातारं धारण-पोषणकर्तारम् अचिन्त्यरूपं साकल्येनाचिन्तनीयस्वरूपम्, आदित्यस्य वर्ण इव वर्णो यस्य तं तथोक्तम् । आदित्यवर्णश्चेच्छरीरित्वेन जन्मादिप्रसङ्गः ? इत्यत उक्तम् तमसः परस्तादिति ॥ अव्यक्तात् परतः स्थितम् अप्राकृतविग्रहं मृत्युरहितं वा । तेन नोक्तदोष इति भावः ॥ ९ ॥

**भावदीपिका (श्री.टि.)**– ॥ शेषोक्तिरिति ॥ 'गीतायाम्' इति शेषः ॥ ९ ॥

**भावप्रकाशः (कृ.टि.)**– ननु मूलप्रकृतिरूपाव्यक्तपरत्वं बाधितम् । ईश्वरवन्मूलप्रकृतेरपि व्याप्तत्वात् । गुणत्रयरूपाव्यक्तपरत्वं तु अव्याकृताकाशादिसाधारणमित्यत आह–**अप्राकृतविग्रहमित्यर्थ** इति ॥ ९ ॥

**प्रयाणकाले मनसाऽचलेन**
**भक्त्या युक्तो योगबलेन चैव ।**
**भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्**
**स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥**

## भाष्यम्

**वायुजयादियोगयुक्तानां मृतिकाले कर्तव्यमाह– विशेषतः प्रयाणकाल इति ॥**

श्लोकः १०

भावप्रदीपिका (प.टी.)– उत्तरश्लोकमवतारयति– **वाय्विति ।**

प्रमेयदीपिका (ज.टी.)– 'उत्तरश्लोकोक्तं सर्वं सर्वोच्चिक्रमिषुसाधारणम्' इति प्रतीतिनिरासार्थमाह– **वायुजयादीति** ।। साधकाः द्विविधाः भक्त्यादिप्रधाना वायुजयादि-प्रधानाश्चेत्यतो विशेषणम् । विशेषतः इत्यनेन भक्त्यादीनां साधारण्यमाह ।।

भावबोधः (र.टि.)– ।। **विशेषणमिति** । वायुजयादियुक्तानामितीत्यर्थः ।।

भावदीपः (रा.टि.)– ।। **विशेषणमिति** ।। 'योगयुक्तानाम्' इत्यस्य 'वायुजयादि' इति विशेषणमिति । 'विशेषतो मृतिकाले कर्तव्यम्' इत्युक्तिलब्धार्थमाह– **भक्त्यादीनामिति** ।। **साधारण्यमिति** ।। 'द्विविधसाधकानाम्' इति योज्यम् ।।

भावरत्नकोशः (सु.टि.)– ।। **उच्चिक्रमिषुसाधारणम्** उत्क्रमणेच्छुसाधारणं कथं सर्वसाधारणं न भवति ? इत्यतस्तद्वक्तुमाह– **साधका इति** । 'मोक्षस्य' इति संयोज्यम् । **विशेषणं** 'वायुजयादि' इति योगविशेषणम् । **भक्त्यादीनाम्** भक्तिज्ञानवैराग्यादीनाम् ।

भावदीपिका (श्री.टि.)– ।। **सर्वोच्चिक्रमिषुसाधारणमिति** ।। उत्क्रान्तिमिच्छन्ति उच्चिक्रमिषन्ति, उच्चिक्रमिषन्तीति उच्चिक्रमिषवः, सर्वे च त उच्चिक्रमिषवश्च सर्वोच्चिक्रमिषवः, तेषां साधारणमिति विग्रहः । **आहेति** ।। उत्तरश्लोकोक्तं किञ्चित्साधारणम्, किञ्चिदसाधारण-मित्याहेत्यर्थः । **विशेषणमिति** ।। 'वायुजयादियुक्तानाम्' इति विशेषणमित्यर्थः । 'भक्त्यादीनाम्' इत्यत्रादिपदेन ज्ञानवैराग्यादीनां ग्रहणम् ।

भावप्रकाशः (कृ.टि.)– वायुजयादियुक्तानामिति विशेषणं किमर्थमित्यत आह– **साधका इति** । **न सर्वविषयमिति** । द्विविधसाधकविषयं नेत्यर्थः । वायुजयादिप्रधानसाधकमात्रविषयत्वादिति भावः । **किञ्चित्साधारणमिति** । सर्ववर्णाश्रमसाधारणमित्यर्थः । **किञ्चिदसाधारणमिति** । अथ सन्ध्यामुपासीत वेदानावर्तयीतेत्यादिकं त्रैवर्णिकानामेवाग्निहोत्रमुपासीतेत्यादिकं गृहस्थानामेवासाधारणमित्यर्थः ।

श्लोकः १०

# भाष्यम्

**वायुजयादिरहितानामपि ज्ञानभक्तिवैराग्यादिसम्पूर्णानां भवत्येव मुक्तिः । तद्वतां त्वीषज्ज्ञानाद्यसम्पूर्णानामपि निपुणानां तद्बलात् कथञ्चिद् भवतीति विशेषः ।**

भावप्रदीपिका (प.टी.)– नन्वेवं चेद्वायुजयादिमतामेव मुक्तिर्नान्येषामन्यथाऽभ्यास-वैयर्थ्यादित्येतत् सप्रमाणकं परिहरति– **वायुजयादीति** ॥ १० ॥

प्रमेयदीपिका (ज.टी.)– ननु च 'अनुस्मरेद् यः । स तं परं पुरुषमुपैति' इत्यन्वया-देकस्य वाक्यस्य कथं भिन्नविषयत्वमुच्यते । एकस्मिन्नपि वाक्ये योगबलेनैव 'भ्रुवोर्मध्ये प्राण-मावेश्य' इत्येतन्न सर्वविषयमित्येतावन्मात्रमत्र प्रतिपाद्यते । यथा 'प्रातरुत्थाय' इति श्रुतौ **'न भृशं वदेत्'** इत्यादिकं किञ्चित् साधारणं किञ्चिदसाधारणम् । कुतोऽस्याऽसाधारण्यं कल्प्यते ? इत्यत आह– **वायुजयादीति ॥** अतो 'न तत् सर्वसाधारणम्' इति शेषः । तर्हि को विशेषोऽन्येषाम्, येन वायुजयादिक्लेशमधिकमनुभवन्ति? इत्यत आह– **तद्वतां त्विति ॥ निपुणानां** वायुजयादौ । **कथञ्चित्** अल्पा इत्यर्थः । किञ्चिच्छीघ्रं चेत्यपि ग्राह्यम् ॥

**भावबोधः** (र.टि.)– ॥ न **सर्वविषयमिति** । वायुजयादिप्रधानसाधकमात्रविषयं न भक्त्यादिप्रधानसाधकविषयमित्यर्थः । **किञ्चित्साधारणमिति** । न भृशं वदेत् न विस्मरेदात्मान-मित्यादिकं सर्ववर्णाश्रमाणां साधारणमित्यर्थः । **किञ्चिदसाधारणमिति** । 'अथ सन्ध्यामुपासीत वेदानावर्तयीत' इत्यादिकं त्रैवर्णिकानामेव । जुहुयादित्यादिकं गृहस्थानामेवासाधारणमित्यर्थः ॥ १० ॥

**भावदीपः** (रा.टि.)– 'कविम्' इति श्लोकस्थयच्छब्दस्य 'प्रयाण' इति श्लोकस्थतच्छब्दे-नान्वयं दर्शयति– **इत्यन्वयादिति** ॥ **भिन्नविषयत्वमिति** ॥ 'कविम्' इत्यस्य द्विविधसाधक-विषयत्वं 'प्रयाण' इत्यस्य वायुजयादियोगिविषयत्वमित्यर्थः ॥ **इति श्रुताविति** ॥ 'प्रातरुत्थाय सन्ध्यामुपासीत, यत् सन्ध्यामुपास्ते ब्रह्मैव तदुपास्ते' इत्यादि ज्ञानपादीयपरामर्श 'जैमिनिः' इति सूत्रभाष्योदाहृतश्रुतौ सन्ध्योपासनादिकं वर्णत्रयसाधारणं, होमादिकं गृहस्थाद्यसाधारणं, 'न भृशम्' इत्यादि सर्वसाधारणमित्यर्थः ॥

श्लोकः १०

लभ्यते, इति मनसि निधाय तन्निर्गलितार्थमाह– **यथा यथार्थमिति** । उपमाऽर्थत्वे साधकयोर्द्वयोरपि फलसाम्यं प्रतीयेत । तथा च 'अञ्जसा' इति, तेषां 'श्रमः स्यात्' इति चायुक्तं स्यादिति हृदयम् । 'धिष्ण्यं सद्मनि नक्षत्रे स्थाने शक्तौ च पावके' इति विश्वप्रकाशोक्त्या, 'धिष्ण्यं तेजश्च सामर्थ्यं महिमा धाम चोच्यते' इति चतुर्थस्कन्धतात्पर्योदाहृताभिधानेन च, धिष्ण्यशब्दस्य शक्तिमहिमाद्यर्थत्वे, अञ्जसा तु अञ्जसैव ते शक्तिं महिमानं वा प्रापुरित्यर्थः प्रतीयते । स च 'न ते विष्णो जायमानो न जातो देवमहिम्नः परमन्तमाप' इत्यादिशास्त्रप्रतिषिद्धः इत्यत आह– **धिष्ण्यं मन्दिरमिति** । 'त्वामेव धीराः पुरुषं विशन्ते' इत्यत्र विशतेरात्मनेपदं छान्दसम्, तेन च 'एव'शब्दस्य सम्बन्ध इत्यभिसन्धाय तत्फलितं च दर्शयति– **विशन्त्येव, न तु त इवाञ्जसेति** ॥ वैराग्यभक्तिज्ञानपूर्तिसम्पन्ना इत्येवेत्यर्थः । **अञ्जसा** सम्यक् ।

अनेन हे देव, ते कथासुधायाः पानेन श्रवणादिलक्षणेन प्रवृद्धभक्त्या विशदाशयाः निर्मलान्तःकरणाः, 'ते' इत्यावर्तते, शेषो वा, वैराग्यसारं वैराग्यफलं यथाबोधम् अर्थाव्यभिचारिज्ञानं साक्षात्काररूपं प्रतिलभ्य, अकुण्ठधिष्ण्यम् अप्रतिहतसत्पान्थजनमन्दिरम्, 'अकुण्ठ' इति देवविशेषणं वा, त्वा त्वाम् आपुरिति प्रथमः श्लोको भक्त्यादिप्रधानसाधकविषयः । ये च परे वायुजयादिनिपुणा ईषज्ज्ञानाद्यसम्पूर्णाः ते तु आत्मसमाधियोगबलेन आत्मनि परमात्मनि समाधिः चित्तैकाग्र्यं योगो वायुजयादिरूपोपायः, तयोः सामर्थ्येन बलिष्ठाम् अन्यसाधनाजेयां प्रकृतिं बन्धकशक्तयभिमानिनीम्, 'वायोश्च प्रकृतेर्विष्णोर्जयो भक्त्यैव नान्यथा' इतिवचनाद् भक्त्यैव जित्वा, प्रसाद्य तदभिमन्यमानां जडप्रकृतिं हित्वा च पुरुषं त्वां विशन्ते विशन्त्येव, न तु ज्ञानभक्तिवैराग्यादिसम्पूर्णा इवाञ्जसा विशन्ति । तेषां वायुजयादियुतयोगिनां श्रमो वायुजयादिक्लेशः सम्यङ्मुक्तिः भावलक्षणश्च स्यात्, सेवया ज्ञानभक्तिवैराग्यादिपूर्तिलक्षणया युतानां तु न तथेति, द्वितीयो वायुजयादियुतसाधकविषय इति श्लोकद्वयार्थ उक्तो भवति । भागवतटीकायां प्रकाशिकायां चैतच्छ्लोकद्वयम् अन्यथाऽपि व्याख्यातम् ।

**वासिताः** संस्कृताः, तदनुग्रहप्राप्तभक्त्यादिसम्पन्ना इत्यर्थः । 'मुक्तानां च गतिर्ब्रह्मन्' इत्यादौ,

> 'तं सदा स्वाश्रमाश्चैव नानामतसमास्थिताः ।
> भक्त्या सम्पूज्य यन्त्याशु गतिं चैषां ददाति सः ॥'

इति पूर्वश्लोके च गतिशब्देन मुक्तेः प्रस्तुतत्वात् कथं नपुंसकलिङ्गम् ? इति चोद्यं परिहर्तुमाह–

**एतन्मुक्तिलक्षणं फलमिति ।** 'सामान्ये नपुंसकम्' इति प्रसिद्धेरिति हृदयम् । प्रकरणस्य नारायणत्वप्रसिद्धेर्नारायणशब्दसमानार्थब्रह्मात्मादिशब्दैर्व्यवहारात्, 'अहं तत्तेजो रश्मीन्नारायणम्' इति श्रुतौ आहत्य ज्योतिषो नारायणत्वावेदनाच्चाह **तेजो नारायणाख्यमिति ।** 'ईरजयादि' इत्यत्राप्रतीतेः ईरशब्दार्थमाह– **ईरः समीर इति ।** वायुरित्यर्थः । प्रकृतोपयोगाय ध्रुवशब्द-विवक्षितार्थमाह– **ब्रह्मेति ।** 'आप्यते' इत्यत्र 'ईरजयादियुतयोगिनाम्' इत्यस्यान्वयायोगादाह– **तैरिति ।** ईरजयादियुतयोगिभिरित्यर्थः ॥ १० ॥

**गीताक्षरार्थस्तु-** वायुजयादियोगयुक्तानां मृतिकाले कर्तव्यमुच्यते विशेषतः **प्रयाणकाल इति ।** ननु 'अनुस्मरेद्यः स तं पुरुषमुपैति' इत्यन्वयादेकस्य वाक्यस्य कथं भिन्नविषयत्वम् । उच्यते । एकस्मिन्नपि वाक्ये 'योगबलेनैव भ्रुवोर्मध्ये प्राणमावेश्य' इत्येतावन्मात्रं वायुजयादिप्रधानसाधक-विषयं प्रतिपत्तव्यम् । यथा 'प्रातरुत्थाय' इति श्रुतौ 'न भृशं वदेत्' इत्यादिकं किञ्चित्साधारणं किञ्चिदसाधारणम् । कुतो 'योगबलेन' इत्यादेर्वायुजयादिप्रधानसाधकविषयत्वमिति चेत् । वायुजयादिरहितानामपि ज्ञानभक्तिवैराग्यादिसम्पूर्णानां भवत्येव मुक्तिः । तद्वतां त्वीषज्ज्ञानाद्य-सम्पूर्णानामपि वायुजयादिनिपुणानां तद्बलादल्पा किञ्चिच्छीघ्रगामिनी च सा भवतीति विशेषस्य प्रामाणिकत्वेन सर्वसाधारणत्वाभाव इति ॥ १० ॥

**भावदीपिका (श्री.टि.)–** 'पानेन' इति तृतीयस्कन्धे भगवन्तं प्रति ब्रह्माण्डाद् बहि-रुत्पन्नानां तत्त्वाभिमानिदेवतानां वचनम् । हे देव! ते कथासुधायाः पानेनश्रवणेन प्रवृद्धभक्त्या ये विशदाशयाः, ते वैराग्यस्य सारंपरम्परया फलभूतं यथोबोधम् अपरोक्षज्ञानं प्रतिलभ्य, 'अकुण्ठं धिष्ण्यं वैकुण्ठादिमन्दिरम् अस्य' इति अकुण्ठधिष्ण्यं त्वा त्वाम् अञ्जसा आपुः प्रविष्टाः सायुज्यादिरूपां मुक्तिं प्राप्ता इति यावत् । तथाऽपरेऽपि धीराः आत्मसमाधियोग-बलेनस्वल्पसमाधिबहुतमवायुजयादियोगबलेन बलिष्ठां प्रकृतिं जित्वा लिङ्गभङ्गं सम्पाद्येति यावत्, त्वां विशन्त्येव, न तु त इवाञ्जसा । तदेवाह– तेषां श्रमः स्यात् ते सेवया श्रवणादि-रूपया तु श्रमो न स्यादिति श्लोकद्वयार्थः ॥

'एतदभ्यधिकम्' इत्यस्यैव विवरणार्थम्–'तत्तेजः' इति वाक्यं प्रवृत्तम् ॥ तत्र तेजः-शब्दार्थमाह– **तेज इति ॥** प्रमाणे **ईषत् पूर्वं** भक्त्यादिप्रधानयोगिभ्यः किञ्चित्पूर्वमित्यर्थः । **तैरिति** ॥ ईरजयादियुतयोगिभिरित्यर्थः ॥ १० ॥

श्लोकः ११

भावप्रकाशः (कृ.टि.)– ननु विशतेः परस्मैपदित्वात् कथमात्मनेपदत्वमिति शङ्कां परिहन्नेव शब्दसम्बन्धमुक्त्वा तत्फलं चाह– **विशन्त्येवेत्यादिना** ॥ १० ॥

**यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥ ११ ॥**

## भाष्यम्

**तदेव ध्येयं प्रपञ्चयति– यदक्षरमित्यादिना ॥ प्राप्यते मुमुक्षुभिरिति पदं स्वरूपम् । 'पद गतौ' इति धातोः ॥ 'तद्विष्णोः परमं पदम्' इति च श्रुतेश्च । 'गीयसे पदमित्येव मुनिभिः पद्यसे यतः' इति वचनान्नारदीये ॥ ११ ॥**

भावप्रदीपिका (प.टी.)– उत्तरश्लोकचतुष्टयमवतारयति– **तदेवेति** । मरणकाल-कर्तव्यम् । 'पद'शब्देन प्रणव इति शङ्कानिरासाय 'पद'शब्दं सप्रमाणकं व्याचष्टे– **प्राप्यत इति** । अनेन 'अक्षर'शब्दोऽपि विष्णुपर इत्युक्तं भवति ॥ ११ ॥

प्रमेयदीपिका (ज.टी.)– 'क्रममुक्त्यर्थमोङ्कारोपासनमुच्यते' इत्यन्यथाव्याख्यानमपा-कर्तुमाह– **तदेवेति** ॥ वायुजययुतानां मरणकाले कर्तव्यमेव । 'मामनुस्मरन्' इत्यादि-विरोधादिति भावः । ननु पदत्वं शब्दस्यैवोङ्कारस्य सम्भवति । न विष्णोरित्यत आह– **प्राप्यत इति** ॥ कर्मण्यकारप्रत्ययः । पदं स्वरूपमिति प्रयोगप्रदर्शनम्– तद्विष्णोरिति ॥११॥

भावबोधः (र.टि.)– ॥ **क्रममुक्त्यर्थमिति** । जीवन्मुक्तिरूपसगुणमुक्तिद्वारा निर्गुण-मुक्त्यर्थमित्यर्थः । **मामनुस्मरन्** इत्यादिविरोधादिति । तन्मते ओङ्कारस्य शुद्धब्रह्मपरत्वेन कृष्णाख्यविशिष्टपरत्वाभावादिति भावः । आदिपदेन मद्भावं यातीत्यस्य ग्रहणम् । विशिष्ट-प्राप्तेरोङ्कारोपासनाफलत्वाभावादिति भावः ॥ ११ ॥

भावदीपः (रा.टि.)– ॥ **क्रममुक्त्यर्थमिति** ॥ अर्चिरादिलोकप्राप्तिद्वारकमुक्त्यर्थमित्यर्थः । 'तदेव' इत्यस्यार्थः– **वायुजयेत्यादि** ॥ अपव्याख्याने दोषमाह– **मामिति** ॥ आदिपदेन 'यो मां स्मरति' इत्यादिग्रहः ॥ ११ ॥

**भावरत्नकोशः (सु.टि.)**– 'परस्य ब्रह्मणो वाचकरूपेण, प्रतिमावत् प्रतीकरूपेण च परब्रह्मप्रतिपत्तिसाधनत्वेन मन्दमध्यमबुद्धीनां विवक्षितस्योङ्कारस्योपासनं कालान्तरे मुक्तिफलं यत् तदेव 'यदक्षरं वेदविदः' इत्युपन्यस्यते' इति सङ्करभाष्यं सङ्क्षेपतोऽनुवदति– **क्रममुक्त्यर्थमिति** । कालान्तरभावि निर्गुणमुक्तिफलकमित्यर्थः । तदेव ध्येयसहितं कर्तव्यमेव, इति एवशब्देन न पुनः परोक्तमभिसन्धत्त इति प्राप्तम् । तत्कुतः ? इत्यत आह– **मामिति** । परकीयव्याख्याने

'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ।।'

इति भगवदनुस्मरणवतः परगतिशब्दितमुक्तिरत्रोच्यमाना अनुपपन्ना । ओङ्कारोपासनाभिसन्धाने तदनुस्मरणस्यैव वक्तव्यत्वात् । उच्यते चात्र 'मामनुस्मरन्', 'अनन्यचेता मां स्मरति' इति भगवदनुस्मरणम् । न च तद्युक्तम् । उपास्यस्यैवानुस्मर्तव्यत्वौचित्यात् । 'तस्याहं सुलभः' इति भगवतः सुखेन लभ्यत्वोक्तेरनौचित्याच्च । न ह्यन्योपासकं प्रति स्वात्मा सुलभ इति भाष्याशय इति भावः । 'क्रममुक्त्यर्थम्' इत्ययुक्तम् । परमगम्यस्य भगवत एवात्र 'माम्' इत्यनुस्मर्तव्यत्वावेदनादिति भाव इत्यपि आहुः ।

॥ **शब्दस्येति** । तत उत्पन्नस्य सुपः 'अव्ययात्' इति लुका लुप्तत्वेऽपि 'दधि' इत्यादाविव स्वार्थबोधकत्वाप्रतिहतिरिति भावः । 'शब्दस्यैवोङ्कारस्य' इत्यत्र पररूपत्वाद् वृद्ध्यभावो युक्तः । 'प्राप्यते' इतःपूर्वं भाष्ये 'पठ्यते' इति शेषो वक्तव्यः । **कर्मण्यकारप्रत्यय इति** । 'घञर्थे कविधानम्' इत्यत्र 'अकर्तरि कारके' इत्यनुवृत्तेः, कर्मणि तेन कप्रत्यये कस्येत्त्वेन लोपे, अकारः शिष्यत इति मुक्तानुबन्धकप्रत्ययग्रहणमिदमिति ज्ञातव्यम् ।

पदशब्दस्यार्थान्तरमप्यस्तीत्यत्र किं प्रमाणम् ? इति शङ्कापनोदाय 'तद्विष्णोः' इति श्रुतिः प्रमाणीकृता । तत्रत्यं पदमनूद्य व्याख्याति– **पदं स्वरूपमिति** । इदं च पदशब्दस्य स्वरूपे प्रयोगे दर्शनं श्रुतिवचनमुदाहृतमित्यर्थः । प्रयोगस्य दर्शनं प्रदर्शनमिदं कृतमिति वा । दर्शयतेरपि ल्युटि 'दर्शनम्' इति हि रूपम् । 'प्रयोगप्रदर्शनम्' इत्यपि कोशेषु पाठो दृश्यते । न च तत्रापि स्वरूपार्थत्वं कुत इति वाच्यम् । 'पद्यते गम्यते' इति योगवृत्तेः सम्भवात् । 'सदा पश्यन्ति सूरयः' इति वाक्यशेषे दर्शनकर्मत्वावेदनाच्च नोङ्कारस्य श्रावणस्यैतद्युक्तम् । तथा च विष्णोः परमं

पदमवभाति' इति यजुर्वेदभाष्ये भट्टभास्करः 'परमम् उत्तमं पदं स्वरूपम्' इति व्याचख्याविति । भाष्ये **पद्यसे** गम्यसे प्राप्स्यस इत्यर्थः ॥ ११ ॥

**गीताक्षरार्थस्तु-** वायुजयादियुतानां मरणकाले कर्तव्यमेव सध्येयं प्रपञ्च्यते **यदक्षरमिति** । यदक्षरं सर्वथा नाशरहितं वेदविदो वेदार्थतत्त्वज्ञाः यत् च वीतरागाः अपगतरागादिदोषाः यतयो यत्नवन्तः विशन्ति मुक्तौ, यत् च इच्छन्तो ब्रह्मचर्यं मनआदीनां ब्रह्मणि चरणं चरन्ति अनुतिष्ठन्ति । तत् पद्यते गम्यते प्राप्यते मुमुक्षुभिरिति पदं गम्यं सङ्ग्रहेण प्रवक्ष्ये व्याख्यास्यामि ॥११॥

भावदीपिका (श्री.टि.)– ॥ **क्रममुक्त्यर्थमिति** ॥ जीवन्मुक्तिरूपसगुणमुक्तिद्वारा निर्गुणमुक्तिः प्राप्त्यर्थमित्यर्थः । अन्यथाव्याख्याने बाधकमाह– **मामनुस्मरन्नित्यादीति** ॥ तन्मते ओङ्कारस्य शुद्धब्रह्मपरत्वेन कृष्णाख्यविशिष्टपरत्वाभावात्, 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्' सत्यनेन विरोधः स्यादित्यर्थः । आदिपदेन 'मद्भावं याति' इत्यस्य ग्रहणम् । विशिष्टप्राप्तेः ओङ्कारोपासनाफलत्वाभावादिति भावः । **न विष्णोरिति** ॥ अतोऽन्यथाव्याख्यानमेव युक्तमिति भावः । **अकारेति** ॥ तथा च 'पद्' अस्माद्धातोः कर्मण्यकारप्रत्यये 'पद' इति रूपम् । **पदं स्वरूपमिति** ॥ तद् विष्णोः परमम् उत्तमम्, 'पद्यते' इति पदं स्वरूपं सदा सूरय इत्यर्थः । **प्रयोगप्रदर्शनमिति** ॥ पदशब्दस्य 'पद्यते' इति व्युत्पत्त्या प्राप्यार्थत्वे इत्यर्थः ॥ ११ ॥

भावप्रकाशः (कृ.टि.)– ॥ **क्रममुक्त्यर्थमिति** । जीवन्मुक्तिरूपसगुणमुक्तिद्वारा निर्गुणमुक्त्यर्थमोङ्कारोपासनमुच्यत इत्ययुक्तम् । विशिष्टोपासनतत्प्राप्त्योरुक्तिविरोधादिति भावः । **अकारप्रत्यय इति** । घञर्थे कविधानमिति कप्रत्यय इत्यर्थः । कस्य लोपेऽकार एवावशिष्यत इति भावेनाकारप्रत्यय इत्येवोक्तम् । न च स्थास्नापाव्यधिहनियुध्यर्थमिति परिगणनविरोधः । शब्दकौस्तुभे येन विधिरिति सूत्रे पणनं पणः, घञर्थे कविधानमिति क इत्युक्तत्वेन स्थास्नेत्यादेरुदाहरणमात्रत्वादिति ॥ ११ ॥

**सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।**
**मूर्ध्न्याधायाऽऽत्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥**

भावरत्नकोशः (सु.टि.)– **गीताक्षरार्थस्तु**– एवं ध्येयमुक्त्वा तत्स्मरणप्रकारः प्रपञ्च्यते **सर्वेति** । सर्वद्वाराणि प्राणवायुसञ्चरणद्वारभूतसुषुम्नाव्यतिरिक्तनाडीः संयम्य हृदि नारायणे मनो

निरुध्य विष्णुविषयं कृत्वा । 'मनो निरुध्य' इत्यनेनैव सर्वेन्द्रियसंयमनं लब्धम् । तत्किं पुनरुच्यते 'द्वाराणीन्द्रियाणि' इति । मैवम् । वायुसञ्चरणद्वाराणां नाडीनामत्र ग्रहणात् । आत्मनः स्वस्य प्राणं प्राणवायुं मूर्ध्न्याधाय, 'सुषुम्नानाडीमार्गेण ब्रह्मरन्ध्रे निधाय' इति विवृतिकृत्सूक्तिः । योगधारणाम् आस्थितः अखण्डस्मृतिरूपयोगभरण एवाभियुक्तः ॥ १२ ॥

**ओ३म् इत्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।**
**यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ १३ ॥**

## भाष्यम्

**ब्रह्मनाडीं विना यद्यन्यत्र गच्छति तर्हि विना मोक्षं स्थानान्तरं प्राप्नोतीति सर्वद्वाराणि संयम्य । 'निर्गच्छन् चक्षुषा सूर्यं दिशः श्रोत्रेण चैव हि' इत्यादि वचनात् व्यासयोगे, मोक्षधर्मे च ॥**

भावप्रदीपिका (प.टी.)– ननु सर्वद्वारसंयमनं किमर्थमुच्यते इत्याशङ्कां सप्रमाणकं परिहरति– **ब्रह्मेति ।**

प्रमेयदीपिका (ज.टी.)– ननु 'मनो निरुध्य' इत्यनेनैव सर्वेन्द्रियसंयमनं लब्धम् । तत् किं पुनरुच्यते? मैवम् । वायुसञ्चरणद्वाराणां नाडीनामत्र ग्रहणात् । तन्नियमनं किमर्थम् ? इत्यत आह– **ब्रह्मेति ॥ इति** हेतौ । 'इत्युक्तम्' इति शेषः । अत्र प्रमाणमाह– **निर्गच्छन्निति ॥ सूर्यं** गच्छति । **मोक्षधर्मे च** 'अयमेवार्थ उक्तः' इति शेषः ॥

भावदीपः (रा.टि.)– 'संयम्य' इत्यनन्तरमुत्तरं शेषमाह– इत्युक्तमिति ॥ 'सूर्यम्' इत्यनूद्य 'गच्छति' इति शेषोक्तिः ॥

भावरत्नकोशः (सु.टि.)– ॥ पुनरुच्यते 'सर्वद्वाराणि संयम्य' इत्यनेन । **नाडीनामिति ।** अन्यथा 'सर्वेन्द्रियाणि संयम्य' इत्येवावक्ष्यदिति भावः । **तन्नियमनं** वायुसञ्चरणद्वाराणां नाडीनां नियमनम् । **इतिशब्दः** 'प्राप्नोति' इत्यतःपरं श्रूयमाणः । 'इति शेषः' इत्यत्र 'संयम्येत्यनन्तरम्' इति शेषः । 'चक्षुषा निर्गच्छन् सूर्यम्' इत्यत्र शेषमाह– **गच्छतीति । अयमर्थः** चक्षुरादिना

निर्गच्छन् सूर्यादिं गच्छति, न तु मोक्षमित्ययमर्थः । व्यासयोगवचनस्यैव मोक्षधर्मेऽपि पाठात् पृथगनुदाहरणमिति भावप्रदीपिकायाम् ॥ १२ ॥

भावदीपिका (श्री.टि.)– ॥ लब्धमिति ॥ सर्वेन्द्रियनियमनस्य मनोनियमनाधीनत्वा-दित्यर्थः । **पुनरुच्यत इति** ॥ 'सर्वद्वाराणि संयम्य' इति पुनः किमुच्यत इत्यर्थः । **तन्नियमनं** नाडीनियमनम् । **हेताविति** ॥ इति हेतोः 'सर्वद्वाराणि संयम्य' इत्युक्तमित्यर्थः ।

## भाष्यम्

**हृदि नारायणे । 'ह्रियते त्वया जगद्यस्मात् हृदित्येव प्रभाषसे' इति पाद्मे । न हि मूर्धनि प्राणे स्थिते हृदि मनसः स्थितिः सम्भवति । 'यत्र प्राणो मनस्तत्र तत्र जीवः परस्तथा' इति व्यासयोगे । योगधारणामास्थितः योगभरण एवाभियुक्त इत्यर्थः ॥ १२-१३ ॥**

भावप्रदीपिका (प.टी.)– मोक्षधर्मे चैतदेवोक्तं वचनमित्यर्थः । 'हृत्'शब्दस्य विवक्षितार्थं सप्रमाणकमाह– **हृदीति** । 'हृत्'शब्देन हृदयमेव किं न स्यात् ? इत्यत आह– **न हीति** । कुतो न सम्भवति ? इत्यत आह– **यत्रेति** । खण्डस्मृतेरत्रायोगात् 'धारणा'पदस्य विवक्षितार्थमाह– **योगेति** ॥ १२ ॥

प्रमेयदीपिका (ज.टी.)– 'हृदि' इत्यस्य प्रसिद्धार्थतानिरासार्थमाह– **हृदीति** ॥ हरतेः 'क्विप् च'इति क्विप् । प्रसिद्धार्थ एव किं न स्यात्? इत्यत आह– नहीति ॥ कुतो न सम्भवति? इत्यत आह– **यत्रेति** ॥ आदौ हृदि निरुध्येत्यध्याहारो दोषः । मरणवेलाया-मखण्डस्मृतिर्वक्तव्या, तत्कथं धारणोच्यते? इत्यत आह– **योगेति** ॥ १२-१३ ॥

भाववोधः (र.टि.)– ॥ हरतेरिति । ह्रस्वस्य पिति कृति तुगिति तुगागमश्चेति भावः ॥ १२ ॥

भावदीपः (रा.टि.)– ॥ **क्विविति** ॥ तथाच क्विपः 'लशाकतद्धिते' 'हलन्त्यम्' 'इदमपृक्तस्य' इति सूत्रैः सर्वलोपे सति ह्रस्वस्य पिति कृति तुक्' इति तुगागमे 'हृत्' इति

रूपमिति भावः । ननु 'मूर्ध्नि प्राणादीन् आदौ हृदि मनो निरुद्ध्य पश्चात् प्राणं मूर्ध्नि आधाय' इति व्याख्यायां न दोष इत्यत आह– **आदौ हृदि निरुध्येत्यध्याहारो दोष इति** ॥१२,१३॥

**वाक्यार्थप्रदीपः (पां.टि.)– ॥ हरतेरिति ॥** उपपदे सति हृधातोः क्विप् स्यात् सर्वत्रेत्यर्थः । तथा च करणे क्विपि तस्य पित्वात् तुक्, स्वस्य पिति कृति तुगिति तुगागमे क्विपः सर्वात्मना लोपे हृच्छब्दनिष्पत्तिरिति भावः ।

**भावरत्नकोशः (सु.टि.)– ॥ प्रसिद्धार्थता** हृदयार्थत्वम् । **'क्विप् च' इति क्विविति ।** 'अन्येभ्योऽपि दृश्यते' इति पूर्वसूत्रात् अपिशब्दस्य सर्वोपाधिव्यभिचारार्थस्येहानुवृत्तेः' इति हरदत्तवचनात्, हरतेरुपपदाभावेऽपि क्विप्प्रत्यये, 'ह्रस्वस्य पिति कृति तुक्' इत्यनेन तुकि, तकारस्य दकारे च रूपम् । 'ह्रियते त्वया' इति प्रमाणे कर्तरि तृतीयेति भावः ।

ननु 'हृदि हृदयपुण्डरीके आदौ मनो नियम्य, पश्चान्मूर्ध्नि आधायात्मनः प्राणम्' इति व्याख्याने न कोऽपि दोषः ? इत्यत आह– **आदाविति ।** इति व्याख्याने अध्याहारः 'आदौ' इति, 'पश्चात्' इति चाध्याहारः । स च सहश्रुतनिखिलपदानां सम्भूयैकार्थकारित्वे सम्भवत्ययुक्त इति भावः । अखण्डस्मृतिः ध्यानम्, धारणा खण्डस्मृतिः । योगभरणे योगस्य धृतौ, अभियुक्तः आग्रहशालीति तात्पर्यार्थ इति भाष्यार्थः ॥ १३ ॥

**गीताक्षरार्थस्तु–** ओमित्येकम् अक्षरं वाचकं यस्य तद् ओमित्येकाक्षरं ब्रह्म परं ब्रह्म माम् ओमित्येकाक्षरं प्रणवं व्याहरन् एव अनुस्मरन् त्यजन् देहं यः प्रयाति स याति परमां गतिं परमगम्यं मामाप्नोति । न च 'एकाक्षरवाच्यत्वाद् एकाक्षरं ब्रह्म' इत्युत्तरप्रस्थाने व्याख्यानाद् अत्र प्रणवपरत्वेन कथं व्याख्यानमिति वाच्यम् । ब्रह्मपरत्वाप्रहाणेनैवेह प्रणवार्थकत्वाङ्गीकारात् । अत एव न्यायदीपिकायां ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वान्न प्रतीत एवार्थ इत्येवकारः प्रयुक्तः ॥ १३ ॥

**भावदीपिका (श्री.टि.)– ॥ हरतेरिति ॥** तथा च 'हृञ्हरणे' इत्यस्मात् क्विपि, तस्य लोपे, कित्त्वाद् गुणाभावे, क्विप्प्रत्ययस्य पित्त्वात् 'ह्रस्वस्य पिति कृति तुक्' ह्रस्वान्तस्य धातोः तुगागमः स्यात् पिति कृति, इति तुगागमे 'हृद्' इति रूपमिति भावः । मूर्ध्नि

श्लोकः १४
प्राणाधानाद् आदौ मनो हृदि निरुध्य पश्चान्मूर्ध्नि प्राणमाधायेति व्याख्यानादविरोधः इत्यत आह– **आदाविति ॥** अध्याहार इति ॥ 'आदौ' इत्यस्येत्यर्थः ।

**धारणेति ॥** खण्डस्मृतिरित्यर्थः । 'खण्डस्मृतिर्धारणा स्यात्' इति वचनादिति ज्ञेयम् । भाष्ये योगभरण एव वायुजयादियोगसम्पूर्ताविव आग्रहवानित्यर्थः ॥ १२,१३ ॥

**भावप्रकाशः (कृ.टि.)– ॥ क्विप् चेति क्विबिति ।** यद्यपि उखास्रदित्याद्युदाहरणादयं क्विप् सोपपदाद्धातोः भवति । तथाऽपि दृशिग्रहणानुवृत्तेर्निरुपपदादपि भवति । ततश्च क्विपि सति ह्रस्वस्य पिति कृति तुगिति तुगागमो निर्वचनत्वात् तकारस्य दकारश्चेति भावः । नन्वादौ मनो हृदि निरुध्य ततः प्राणं मूर्ध्न्याधायेति व्याख्यानान्नोक्तदोष इत्यत आह– **आदौ हृदीति । अध्याहारः** आदिशब्दाध्याहारः । **धारणेति** । खण्डस्मृतिरित्यर्थः ॥ १२ ॥

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥**

## भाष्यम्

**नित्ययुक्तस्य नित्योपायवतः । योगिनः परिपूर्णयोगस्य ॥**

भावप्रदीपिका (प.टी.)– नित्ययुक्तयोगिपदयोरर्थभेदमाह– **नित्येति ।** अनयोर्हेतु-हेतुमद्भावादिति ॥ १४ ॥

प्रमेयदीपिका (ज.टी.)– 'नित्ययुक्तस्य' 'योगिनः' इत्येतयोरेकार्थतानिरासार्थमाह– **नित्येति ॥** नित्योपायवत्त्वेन सम्पूर्णयोगस्येत्यर्थः ॥ १४ ॥

भावरत्नकोशः (सु.टि.)– नित्ययुक्तपदावैयर्थ्याय भाष्यभावमाह– **नित्योपायत्वेनेति ।** प्रयोज्यप्रयोजकार्थत्वान्नानर्थक्यमिति भावः ॥

**गीताक्षरार्थस्तु–** अन्तकाले स्मरणं नित्याभ्यासशालिन एव भवति । भवच्च तत् मत्प्राप्ति-हेतुरित्युच्यते **अनन्यचेता** इति । सततम् अनन्यविषयचित्तः यो नित्यशो मां स्मरति, 'सततम्'

इति नैरन्तर्यम्, नित्यशः 'सङ्ख्यैकवचनाच्च वीप्सायाम्' इति शस् । नित्यमिति दीर्घ-कालत्वमभिसंहितमिति आहुः । नित्ययुक्तस्य नित्योपायवतः योगिनः परिपूर्णयोगस्य नित्योपायत्वेन सम्पूर्णयोगस्येत्यर्थः । तस्य 'कृत्यानां कर्तरि वा' इति षष्ठी । सुलभः अकृच्छ्रेण लभ्यः ॥ १४ ॥

**भावदीपिका (श्री.टि.)**– योगित्वे नित्ययुक्तत्वं हेतुरिति भावेनाह– **नित्यापायत्वेनेति** ॥ नित्यम्अहरहः वायुजयादियोगरूपोपायानुष्ठातृत्वेनेत्यर्थः ॥ १४ ॥

**भावप्रकाशः (कृ.टि.)**– नित्ययुक्तपदवैयर्थ्यमाशङ्क्य योगित्वे कारणप्रतिपादकत्वान्न वैयर्थ्यमित्याह– **नित्योपायवत्वेनेति** ॥ १४ ॥

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाऽप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥**

## भाष्यम्

तत्प्राप्तिं स्तौति– **मामिति** ॥ परमां सिद्धिं गताः इति हि तत्र हेतुः ॥

**भावप्रदीपिका (प.टी.)**– उत्तरश्लोकमवतारयति– **तदिति** । मामुपेत्य इत्यनेन संसिद्धिम् इत्यस्यागतार्थत्वमाह– परमामिति ॥ १५ ॥

**प्रमेयदीपिका (ज.टी.)**– 'स याति परमां गतिम्' 'तस्याहं सुलभः' इति द्वेधा वचनात् परमागतिः भगवल्लाभश्च पृथगिति न मन्तव्यम् । भगवत्प्राप्तेरेवोत्तरत्र स्तुतेः । अन्यथोभयस्तुतिप्रसङ्गादित्यभिप्रायेणाऽह– **तत्प्राप्तिमिति** ॥ तर्हि कथं 'मामुपेत्य' इत्युक्त्वा 'संसिद्धिं परमां गताः' इति पृथगुक्तिः? इत्यत आह– **परमामिति** ॥ ये मामुपेताः ते परमां सिद्धिं मोक्षलक्षणां हि गताः । नच मुक्तानां निर्बीजं जन्म सम्भव-तीत्येवं तत्र स्वं प्राप्तानां जन्माभावे हेतुरयमुच्यते । नतु भगवत्प्राप्तेरन्या परमसंसिद्धि-प्राप्तिरित्यर्थः ॥ १५ ॥

**भावरत्नकोशः (सु.टि.)**– ॥ द्वेधा वचनात् 'स याति परमां गतिम्' इति, 'तस्याहं सुलभः' इति च द्वेधा वचनात् । उत्तरत्र 'मामुपेत्य पुनर्जन्म न प्राप्नुवन्ति' इत्यत्र । स्तुतेः स्तवनात् । अन्यथा

श्लोकः १६

परमगतेः भगवल्लाभात् पृथक्त्वे । **तत्प्राप्तिम्** 'तस्याहम्' इत्यस्मच्छब्देन प्रकृतभगवत्प्राप्तिमिति भाष्यार्थः । 'तत्र' इत्यनुवादः, 'स्वं प्राप्तानां जन्माभावे' इति व्याख्या ॥

**गीताक्षरार्थस्तु-** 'स याति परमां गतिम्' , 'तस्याहं सुलभः' इति द्वेधा वचनात् परमगतिः, भगवत्प्राप्तिश्च पृथक् फलमिति न मन्तव्यम् । किन्तूभयमपि मत्प्राप्तिरूपम् एकमेव फलम् इति भावेन स्वप्राप्तिः स्तूयते **मामुपेत्येति** । महात्मानः महान् आत्मा मनो ज्ञानं येषां ते तथोक्ता ज्ञानिनः । दुःखालयम् आध्यात्मिकादिदुःखकारणम् अशाश्वतम् अनवस्थितस्वरूपं पुनर्जन्म पुनर्देहयोगं नाप्नुवन्ति । एवं भगवत्प्राप्तिस्तुत्या परमगतिः मल्लाभश्च मत्प्राप्तिरूपकमेव फल-मित्युक्तम् । कुत इत्यत उक्तम् संसिद्धिं परमां गता इति । ये मामुपेतास्ते परमां सिद्धिं मोक्षलक्षणां हि गताः । न च मुक्तानां निर्बीजं जन्म सम्भवतीत्येवं तत्र स्वं प्राप्तानां जन्माभावे हेतुरयमुच्यते ॥ १५ ॥

**भावदीपिका (श्री.टि.)–** ॥ **भगवल्लाभः** भगवत्प्राप्तिः । **उभयेति** ॥ परमगतिभगव-ल्लाभयोरित्यर्थः । ननु मोक्षलक्षणसिद्धिं गतानामपि जन्म किं न स्यात् ? इत्यत आह– **न चेति** ॥ १५ ॥

**आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥**

## भाष्यम्

**महामेरुस्थब्रह्मसदनमारभ्य न पुनरावृत्तिः । तच्चोक्तं नारायणगोपालकल्पे–**

**'आमेरुब्रह्मसदनादाजनान्न जनिर्भुवि ।**
**तथाऽप्यभावस्सर्वत्र प्राप्यैव वसुदेवजम्' इति ॥ १६ ॥**

भावप्रदीपिका (प.टी.)– अन्यं प्राप्तानामप्यपुनरावृत्तेः किं विशिष्याभिधीयते 'मामुपेत्य' इति ? एतत्परिहारायोत्तरश्लोकम्..। ब्रह्मलोकादितरत्र विद्यमानानां पुनरावृत्तिरेव । ब्रह्मलोकेऽपि मत्प्राप्त्यैवापुनरावृत्तिरित्यर्थः । तत्र 'ब्रह्मभवन'शब्देन न सत्यलोको विवक्षितः ।

जनादिष्वप्यपुनरावृत्तेः । अतो मेरुस्थब्रह्मसदनमारभ्योत्तरवैजयन्तसदनपर्यन्तेष्वप्यपुनरावृत्ति-रेवार्थ इत्याह– **महामेरुरिति** । श्लोकार्थे प्रमाणमाह– **तथेति** । मार्गभेदात् पृथगुक्तिः ॥१६॥

**प्रमेयदीपिका (ज.टी.)**– 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनः' इति सत्यलोक-सहितानां पुनरावृत्तिरुच्यते' इत्येतदपव्याख्यानमिति भावेनाऽह– **महामेरुस्थेति** ॥ **परतः स्थितानाम्** । एवं जनोलोकम् आरभ्य इत्यपि ग्राह्यम् । कुत एतत् ? इत्यतः श्लोक-मागमेनैव व्याचष्टे– **तच्चेति** ॥ पृथिवीसम्बन्धिनां तदसम्बन्धिनां लोकानां ग्रहणायो-भयोपादानम् । 'परतः स्थितानाम्','यद्यपि' इति शेषः । **अभावः** 'जनैर्लभ्यते' इति शेषः । अनेनैवं व्याख्यातं भवति । महामेरुस्थब्रह्मसदनं जनोलोकं चारभ्य न पुनरावृत्तिः । अतो **'मामुपेत्य पुनर्जन्म'** इति किमुच्यते ? इति चेत् । सत्यम्, आब्रह्मभुवनात् एवम् आजनाच्चार्वाग्भवा एव लोकाः पुनरावर्तिनः । परे न पुनरावर्तिन इति यावत् । तथाऽपि नोक्तमयुक्तम् ।यतस्तेषु लोकेषु स्थितं **मामुपेत्य** अवस्थितस्य पुनर्जन्म न विद्यत इति । अन्यथा **'मामुपेत्य पुनर्जन्म'** इत्युक्तत्वादुत्तरार्धवैयर्थ्यं च ॥ १६ ॥

**भावबोधः (र.टि.)**– ननु मूर्ध्नि प्राणाधानादादौ 'मनो हृदि निरुध्य' इति व्याख्यानाद-विरोध इत्यत आह– **आदावित्यस्येत्यर्थः परतःस्थितानामिति** । एतच्चारभ्येत्यत्र शेषपूरणम् । ततश्च मेरुस्थब्रह्मसदनं जनलोकं चारभ्य परतः स्थितानामिति बहुवचनमित्यर्थः । **पृथिवी-सम्बन्धिनामिति** । मेरुस्थब्रह्मसदनानन्तासनश्वेतद्वीपानां पृथिवीसम्बन्धिनामपुनरावृत्तिलोकानां तदसम्बन्धिनां जनलोकादिवैकुण्ठान्तानामपुनरावृत्तिलोकानां ग्रहणाय मेरुब्रह्मसदनादा-जनादित्युभयोपादानमित्यर्थः । 'आब्रह्मभुवनात्' इति गीतानुसारेण आमेरुब्रह्मसदनादि-त्येवोक्तौ अन्तरिक्षादिलोकानामपुनरावृत्तिलोकत्वं प्रसज्येतेति भावः । **परे न पुनरावर्तिन इति यावदिति** । अर्वाक्तनलोकाः पुनरावर्तिन इत्युक्तेरुक्ताक्षेपकत्वेन प्रकृतानुपयोगादिति भावः ॥ सत्यलोकसहितानामित्यादिपरकीयव्याख्याने बाधकमाह– **उत्तरार्धेति** । 'मामुपेत्य तु कौन्तेय' इत्यस्येत्यर्थः । आमेरुब्रह्मसदनादित्येतदागमविरोधसमुच्चयार्थश्चशब्दः ॥ १६ ॥

**भावदीपः (रा.टि.)**– ॥ **आरभ्येति** ॥ 'परतः स्थितानाम्' इति शेषः ॥ वक्ष्य-माणागमानुरोधाद् आह– **एवं जनेति** ॥ **पृथिवीति** ॥ पृथिवीसम्बन्धिनां मेरुश्वेतद्वीपा-नन्तासनानां ग्रहणाय जनोलोकमारभ्य स्थितलोकानां ग्रहणाय च– **मेरुस्थब्रह्मसदनमिति** ॥

श्लोकः १६

**'आजनात्'** इत्युभयोपादनम् इत्यर्थः ॥ 'आजनात्' इत्यनन्तरं 'परतः स्थितानाम्' इति, 'भुवि' इत्यनन्तरं 'यद्यपि' इति शेषमाह– **इति शेष इति** ॥ गीतावाक्यं योजयति– **आब्रह्मे-त्यादिना** ॥ **नोक्तमिति** ॥ 'मामुपेत्य न पुनर्जन्म' इत्युक्तमयुक्तं नेत्यर्थः ॥ **अन्यथेति** ॥ लोकावाप्तिमात्रस्य न पुनर्जन्महेतुरित्यर्थः ॥ **वैयर्थ्यं चेति** ॥ न केवलं पुनरुक्ततेति चार्थः ॥ १६ ॥

**भावरत्नकोशः (सु.टि.)–** ॥ **इत्येतदपव्याख्यानमिति** । 'आब्रह्मभुवनात् सह ब्रह्मलोकेन लोकाः सर्वेऽपि पुनरावर्तनस्वभावाः' इति सङ्करव्याख्यानमसाध्वित्यर्थः । भाष्ये 'आरभ्य' इत्यनन्तरपूरणीयमाह– **परतः स्थितानामिति** । वक्ष्यमाणागमानुसारेण संयोजयति **एवमिति** । **एतत्** 'महामेरुस्थब्रह्मसदनादारभ्य परतः स्थितानां न पुनरावृत्तिः' इत्येतत् । हिरण्यगर्भस्य हि त्रीणि सदनानि महामेरावेकम्, अन्तरिक्षे जयन्ताख्यम् अपरम्, सत्यलोकेऽन्यत् । तथा च छान्दोग्यभाष्यम्–

> 'पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् ।
> तृतीयं सत्यलोके च त्रिविधं सदनं स्मृतम् ॥' इति ।

तदभिप्रायेण 'आमेरुब्रह्मसदनात्' इत्युक्तं भाष्ये । तच्च पृथिवीसम्बन्धिनां महामेरुस्थब्रह्म-सदनानन्तासनश्वेतद्वीपानां ग्रहणाय । जनपदग्रहणं तु पृथिव्यसम्बन्धिनां जनस्तपस्सत्य इत्यादीनां लोकानामुपादानायेत्याह– **पृथिवीत्यादि** । 'आमेरुब्रह्मसदनात्' इत्यनन्तरम्, 'आजनात्' इत्यनन्तरं च शेषोक्तिः 'परतः स्थितानाम्' इति । 'तथाऽपि' इति श्रवणादाह– **यद्यपीतीति** । स्वपक्षे गीता कथं व्याख्येया इति शङ्कां परिहरन्नाह **अनेनैवमिति** । परोदीरितार्थविरोधि-प्रमाणोदाहरणेन । **अतः** भगवदितरलोकप्राप्तावप्यपुनरावृत्तिसद्भावात् । **किमुच्यते** किं विशिष्यो-च्यते ।

ननु 'आब्रह्मभवनात्, आजनाच्च' इत्ययं परोक्ताक्षेपानुवादः । न च परेणावार्क्तना लोकाः पुनरावर्तिन इत्याक्षिप्तम् । अतो असदनुवादोऽयमित्यत आह– **परे न पुनरावर्तिन इति यावदिति** ॥ **उक्तं** 'मामुपेत्य पुनर्जन्म न प्राप्नुवन्ति' इति विशिष्योक्तम् । ल्यबुपपत्तय आह– **अवस्थितस्येति** । तिष्ठतेः कर्तरि 'गत्यर्थाकर्मक' इति क्तः । तेन क्रिययोः समानकर्तृकत्वलाभः । अपव्याख्याने

प्रमाणविसंवादो भाष्येऽभिहितः । दोषान्तरं च स्वयमाह– **अन्यथेति** । 'आब्रह्मभुवनात्' इति गीतावाक्यस्योक्तार्थमनादृत्य सत्यलोकसहितानां लोकानां पुनरावृत्तिपरत्वे तावतैवाभिप्रेतार्थसिद्धेः 'मामुपेत्य तु कौन्तेय' इत्युत्तरार्धस्य व्यर्थत्वं स्यादित्यर्थः । उक्तागमविरोधसमुच्चयार्थश्चशब्दः । स्वपक्षे तु ब्रह्मसदनात्, जनाच्च परलोकानाम् उपादानम् अपुनरावर्तिलोकत्वं च तत्रत्यभगवत्प्राप्त्यैव, न लोकप्राप्तिमात्रेणेति ज्ञापनस्य प्रयोजनत्वाद्वैयर्थ्यमिति भावः ॥ १६ ॥

**गीताक्षरार्थस्तु-** महामेरुस्थब्रह्मसदनं जनलोकं चारभ्य परतः स्थितानामपि न पुनरावृत्तिः । अतः 'मामुपेत्य पुनर्जन्म नाप्नुवन्ति' इति किमुच्यते ? इत्यत उच्यते **आब्रह्मभुवनादिति** ॥ सत्यम् । आब्रह्मसदनाद् एवम् आजनाच्च अर्वाग् भवा एव लोकाः तत्रत्या जनाः पुनरावर्तिनः, परे त्वपुनरावर्तिन इति । तथाऽपि नोक्तमयुक्तम् । यतस्तेषु लोकेषु स्थितं माम् उपेत्य अवस्थितस्य पुनर्जन्म न विद्यते इति ॥ १६ ॥

**भावदीपिका (श्री.टि.)–** महामेरुस्थब्रह्मसदनम् आरभ्याधःस्थितानां लोकानां न पुनरावृत्तिः इत्यन्यथाप्रतीतिनिरासायाह– **परत इति** ॥

'पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् ।
तृतीयं सत्यलोके च सदनं त्रिविधं स्मृतम् ॥'

इति वचनबलात् महामेरुस्थं यद् ब्रह्मणश्चतुर्मुखस्य सदनं शतकोटिनामकं तदारभ्य परतः स्थितानन्तासनश्वेतद्वीपयोरपुनरावृत्तित्वमुच्यत इति द्रष्टव्यम् ।

अत्र यद्यपि मेरुस्थब्रह्मसदनात् परतः श्वेतद्वीपानन्तासनयोर्द्वयोरेव सत्त्वेन 'परतः स्थितानाम्' इति बहुवचनमयुक्तम् । तथापि महामेरुस्थब्रह्मसदनस्यापि परतःस्थितशब्दविषयत्वमभिप्रेत्येति भावबोधे व्याख्यातम् । अनन्तासने श्वेतद्वीपे च श्रीभूदुर्गाभागभेदेन बहुत्वमाश्रित्येत्यपि आहुः । 'पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः' इति वचनात्, 'यावानुच्चः स्वर्गलोकस्तावानुच्चतया स च श्वेतद्वीपः' इति वचनात् मेरुस्थब्रह्मसदनात् परतः स्थितत्वं तयोर्युक्तमिति द्रष्टव्यम् । 'आजनात्' इति प्रमाणानुसारेणाह– **एवमिति** ॥ 'आब्रह्मभवनात्' इति गीतानुसारेण 'मेरुब्रह्मसदनात्' इत्येवोक्तौ, अन्तरिक्षादिलोकानामप्य-

पुनरावृत्तिलोकत्वं प्रसज्यत इति भावः । **पृथिवीसम्बन्धिनामिति** ।। मेरुस्थब्रह्मसदनानन्तासनश्वेतद्वीपानां पृथिवीसम्बन्धिनामपुनरवृत्तिलोकानाम्, तदसम्बन्धिनां जनलोकादिवैकुण्ठान्तानामपुनरावृत्तिलोकानां च ग्रहणाय 'आमेरुब्रह्मसदनात्' 'अजनात्' इत्युभयोपादानमित्यर्थः ।

**यद्यपीत्यादि** ।। तथा च आमेरुब्रह्मसदनाद् आजनात् परतः स्थितं लोकं प्राप्तानां यद्यपि भुवि न जनिः । तथापि नायं तल्लोकमहिमा, किन्तु सर्वत्रैषु लोकेषु स्थितं वसुदेवजं मां प्राप्यैव जनेरभावो लभ्यते, नान्यथेति श्लोकार्थो द्रष्टव्यः । **अनेन** प्रमाणोदाहरणेन । **आरभ्य** 'परतः स्थितलोकं गतानाम्' इति शेषः । **'सत्यम्'** इत्यनन्तरं 'यद्यपि' इति शेषः । ननु 'आब्रह्म' इत्यादिनाऽऽशङ्कितस्यानुवादे कर्तव्ये तत्र 'पुनरावर्तिनः' इत्येतदसङ्गतम् । तेन मेरुस्थब्रह्मसदनाद् अर्वाक्तनानां पुनरावर्तिताया अनुक्तत्वात्, इत्यत आह– **परे न पुनरावर्तिन इति यावदिति** ।। **परे** परतः स्थिताः । उक्तं 'मामुपेत्य' इत्युक्तम् । 'सत्यलोकादिसहितानाम्' इत्यपव्याख्याने बाधकमाह– **अन्यथेति** ।। भगवन्तं प्राप्तानां पुनर्जन्माभावस्य 'मामुपेत्य पुनर्जन्म' इत्यादिश्लोकेनोक्तत्वात्, सत्यलोकं प्राप्तानां पुनर्जन्मसद्भावस्य 'आब्रह्मभवनात्' इत्युक्तत्वात्, 'मामुपेत्य तु कौन्तेय' इति भगवन्तं प्राप्तानां पुनर्जन्माभावकथनमयुक्तम्, 'मामुपेत्य पुनर्जन्म' इति श्लोकेन पुनरुक्तत्वादित्यर्थः । 'आमेरु' इति प्रमाणसमुच्चयार्थश्चशब्द इति ज्ञातव्यम् ।

केचित्तु ब्रह्मसदनजनलोकादिप्राप्तिमात्रेणैवापुनरावृत्तिरस्तु, न तु तत्रत्यं भगवन्तं प्राप्य, इति, इत्यङ्गीकारे बाधकमाह– **अन्यथेति** ।। **वैयर्थ्यं चेति** ।। तथा च 'व्यर्थं सत् किञ्चिज्ज्ञापयति' इति न्यायेन 'तत्रत्यं भगवन्तं प्राप्य' इत्येतल्लभ्यत इति भाव इत्याहुः ।। १६ ।।

**भावप्रकाशः (कृ.टि.)**– नन्वर्वाक्स्थितानां पुनरावृत्तिरस्त्येवेत्याशङ्क्यारभ्येत्यतः परमध्याहरति– **परतः स्थितानामिति** । ऊर्ध्वलोकेषु स्थितानामित्यर्थः । यद्वोर्ध्वं स्थितानां लोकानामित्यर्थः । अत्र पृथिवीसम्बन्धित्वं विशेषणम् । तेन स्वर्गादेः व्यावृत्तिः । पञ्चमस्कन्धे पृथिव्या उपरि कतिपययोजनव्यवधानेऽन्तरिक्षलोकोक्तेरन्तरिक्षस्यापि व्यावृत्तिः । एवञ्च मेरुस्थब्रह्मसदनश्वेतद्वीपानन्तासनमात्रलाभ इति बोध्यम् । अग्रिमप्रमाणानुसारेणाह– **एवं जनलोकमिति** ।

नन्वाब्रह्मभवनाल्लोका इत्ययं परोक्ताक्षेपानुवादः । न च परेणावार्क्तनलोकाः न पुनरावर्तिन इत्याक्षिप्तम् । अतोऽसदनुवादोऽयमित्यत आह– **परे न पुनरावर्तिन इति यावदिति** । सत्यलोकसहितानामित्याद्यपद्यव्याख्याने दोषमाह– **अन्यथेति** । आमेरुब्रह्मसदनादित्यागमविरोधसमुच्चयार्थश्चशब्दः ॥ १६ ॥

**सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७ ॥**

**गीताक्षरार्थस्तु**– 'मां प्राप्यावस्थितानां तु न पुनरावृत्तिः' इति प्रतिज्ञामात्रेण प्रागुक्तमर्थं स्थापयितुम् अशेषसृष्टिप्रलयादिकारणत्वरूपसामर्थ्यम् आत्मनो वक्तुम् उपोद्घात उच्यते **सहस्रेति** । सहस्रशब्दोऽत्र न दशशतवाची, किन्तु ततोऽपि बह्वर्थपरः । यद् ये जनाः सहस्रयुगपर्यन्तं बहुसहस्रयुगानि पर्यन्तः अवसानं यस्य तत् तथा द्विपरार्धात्मकम् अहर्विदुः युगसहस्रां तां बहुसहस्रयुगादधिकां द्विपरार्धप्रलयात्मिकां रात्रिं च ब्रह्मणः परब्रह्मणः विदुः, त एवाहोरात्रविदः । परब्रह्मणः कूटस्थनित्यस्यापि सृष्ट्यादिसव्यापारनिर्व्यापारावस्थे रात्राविव प्रलयकाले प्रवृत्त्यभावाद्, अह्नीवान्यदा प्रवृत्तिसद्भावाद् अहोरात्रत्वेनोपचर्यत इत्याकरादौ स्फुटम् ॥ १७ ॥

**अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसञ्ज्ञके ॥ १८ ॥**

**गीताक्षरार्थस्तु**– ततः किम् । इत्यत उच्यते **अव्यक्तादिति** ॥ 'मामुपेत्य' इत्युक्तस्यार्थस्य 'यं प्राप्य न निवर्तन्ते' इत्यव्यक्तविषयतया परामर्शात्, 'अव्यक्तं परमं विष्णुम्' इति पुराणे प्रयोगाच्चाव्यक्तो भगवान् । तस्माद् अहरागमे द्विपरार्धावसाने, सृष्टिकाल इति यावत् । 'व्यज्यन्ते' इति व्यक्तयः सृज्यपदार्थाः प्रभवन्ति उत्पद्यन्ते, रात्र्यागमे अव्यक्तसंज्ञके अव्यक्त इति संज्ञा यस्य सोऽव्यक्तसंज्ञकः, 'आपोऽन्यतरस्याम्' इति ह्रस्वः, शैषिकः कः । एतस्मिन् प्रलीयन्ते ॥ १८ ॥

**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।**
**रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥**

श्लोकः १७-१९

## भाष्यम्

**मां प्राप्य न पुनरावृत्तिरिति स्थापयितुमव्यक्ताख्यात्मसामर्थ्यं दर्शयितुं प्रलयादि दर्शयति– सहस्रयुगेत्यादिना ॥ सहस्रशब्दोऽनेकवाची । ब्रह्म परम् । 'सा विश्वरूपस्य रजनी' इति श्रुतिः । द्विपरार्धप्रलय एवात्र विवक्षितः । 'अव्यक्ताद् व्यक्तयः सर्वाः' इत्युक्तेः ॥**

भावप्रदीपिका (प.टी.)– कुतस्त्वां प्राप्यैवापुनरावृत्तिर्नान्यप्राप्त्या ? इत्याशङ्क्य, उत्तर-श्लोकसन्दर्भमवतारयति– **मामिति** । 'सहस्र'शब्दस्य प्रातीतिकोऽर्थोऽत्र न भवतीत्याह– **सहस्रेति** । ननु विरिञ्चाहोरात्रयोः सहस्रयुगात्मकत्वात् किमित्येवं व्याख्या ? इत्यत आह– **ब्रह्मेति** । ननु परब्रह्मणः कथं रात्रिः ? इत्यत आह– **सेति** । सा प्रलयवेला पूर्णरूपस्य हरे रजनीत्यर्थः । ननु 'सहस्रयुग'शब्दश्रवणात् कल्पप्रलय एवायं किं न स्यात् ? इत्यत आह– **द्विपरार्धेति** ।

प्रमेयदीपिका (ज.टी.)– उत्तरप्रकरणस्यासङ्गतिमाशङ्क्याऽह– **मां प्राप्येति** ॥ 'अवस्थितानाम्' इति शेषः । प्रतिज्ञामात्रेण हि तदुक्तम् । अव्यक्तसामर्थ्यस्यात्र कथनात् कथम् 'आत्म' इत्युच्यत इत्यत उक्तम्– **अव्यक्ताख्येति** ॥ **प्रलयादीति** ॥ तत्कारणत्व-मात्मनः । सृष्टिप्रलययोरिदम्पूर्वत्वाभावज्ञापनाय गीतामुल्लङ्घ्योक्तम् । अत्र सहस्रशब्दो दशशतवाचीति प्रतीतिनिरासायाऽह– **सहस्रेति** ॥ बहुशब्दपर्यायोऽयम् । नतु प्रसिद्धार्थः ॥

विरिञ्चाहोरात्रयोः प्रसिद्धस्य सहस्रचतुर्युगपर्यन्तत्वात् कथमेतत्? इत्यत आह– **ब्रह्मेति** ॥ तथाच द्विपरार्धप्रलयस्याऽदिसृष्टेश्चात्र विवक्षितत्वादुक्तं युक्तम् । ननु परस्य ब्रह्मणो नित्यत्वादहोरात्रे न स्तः । तत्कथं तत्परमेतत्? इत्यत आह– **सेति** ॥ सा निर्व्यापारावस्था परिपूर्णरूपस्यापि हरेः रजनी इत्यर्थः । अनेनाहरपि सिद्धम् ॥ भवेदेतत्, यद्यत्र द्विपरार्ध-प्रलयस्य आदिसृष्टेश्च विवक्षेत्यत्र प्रमाणं स्यादित्यत आह– **द्विपरार्धेति** ॥ एवमादिसृष्टेश्चेत्यपि ग्राह्यम् । न ह्यवान्तरसृष्टिप्रलययोः सर्वकार्योत्पत्तिविनाशाविति भावः ॥

भावबोधः (र.टि.)– ॥ **अवस्थितानामिति शेष इति** । तेन प्राप्येत्यस्य समानकर्तृ-कतेत्यर्थः । **गीतामुल्लङ्घ्येति** । अन्यथा 'प्रभवन्त्यहरागमे' इति सृष्टेः प्रागुक्तत्वात्

सृष्ट्यादीति वक्तव्यमित्यर्थः । **याश्चेति** । यस्य कालादेरित्यर्थत्वे ता आहेत्यनुपपन्नमिति भावः ॥ १७,१९ ॥

**भावदीपः (रा.टि.)**– ल्यबन्तनिर्वाहाय– **अवस्थितानामिति॥ तदुक्तमिति** ॥ 'मामुपेत्य तु कौन्तेय' इत्याद्युक्तमित्यर्थः । तथाच स्थापनं सङ्गतमेवेति भावः ॥ गीतानुरोधात् 'सृष्ट्यादि' इति वक्तव्ये कथं 'प्रलयादि' इति व्युत्क्रमेणोक्तिरित्यत आह– **सृष्टीति** ॥ **इदम्पूर्वेति** ॥ सृष्टिः पूर्वः लयः पश्चादिति वा, लयः पूर्वः सृष्टिः पश्चादिति वा न नियमोऽस्ति । पौर्णमास्यमावास्योः तिथ्योरिव चक्रवत् परिवर्तमानत्वादिति ज्ञापनायेत्यर्थः ॥ **अत्रेति** ॥ गीतायामित्यर्थः ॥ १९ ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ॥ **अवस्थितानामिति शेष इति** ॥ तेनावस्थितिप्राप्त्योः समानकर्तृकत्वात् प्राप्येति क्त्वाप्रत्ययो युक्त इति भावः ॥

**भावरत्नकोशः (सु.टि.)**– 'मां प्राप्य' इति भाष्यस्थल्यबन्वययाह– **अवस्थितानामितीति । 'इममर्थम्'** इति भाष्यार्थः । 'स्थापयितुम्' इति भाष्योक्तस्थापनमुपपादयितुमाह– **प्रतिज्ञामात्रेण हीति । तत्** 'मामुपेत्यावस्थितानां पुनर्जन्म न विद्यते' इति गीतोक्तम् । **अत्र** 'अव्यक्ताद् व्यक्तयस्सर्वाः' इति गीतायाम् । अव्यक्तशब्दस्य प्रधाने प्रसिद्धत्वादिति शङ्कितुर्हृदयम् । प्रलयादेर्दोषतया प्रसिद्धस्य कथं भगवदीयत्वमित्यत आह– **तत्कारणत्वमिति । इदंपूर्वत्वेति** । इदंप्रथमत्वाभावज्ञापनाय 'प्रभवन्त्यहरागमे रात्र्यागमे प्रलीयन्ते' इति गीतोक्तसृष्टिप्रलयक्रममुल्लङ्घ्य भाष्ये 'प्रलयादि' इत्युक्तमित्यर्थः । पौर्णमास्यमावास्यातिथ्योरिव विपरिवर्तमानत्वादिति भाव इति स्वामिनः । 'दशशत' इति विशेषणसमासोऽयम्, न द्विगुः । तेन ङीबभाव उपपन्नः । अनेकशब्देन द्वयोरपि प्रतीतावर्थस्वारस्यादाह– **बहुशब्देति** ।

**प्रसिद्धसहस्रचतुर्युगेति** । 'सहस्रवृत्तं तदहः स्वयम्भुवो निशा च' इति निर्णयवचनादिति भावः । उत्तरभाष्ये 'प्रलय एव' इत्युक्तावपि, 'प्रलयादि' इति पूर्वभाष्यानुसारेणाह– **तथा च द्विपरार्धेति । नित्यत्वादिति** ॥ कालकृतविकाराभावोपलक्षणम् । **एतत्** ब्रह्मपदम्, 'सहस्रयुगपर्यन्तम्' इति वाक्यं वा । विश्वरूपस्य इत्यस्यार्थः– **परिपूर्णरूपस्येति** । अनेन 'रजनी' इति वचनेन, तस्या अहरविनाभावादिति भावः । अत्र 'सहस्रयुगपर्यन्तम्' इति गीतायाम् । आदिसृष्टिश्च विवक्षिता । उभयत्र हेत्वाकाङ्क्षां पूरयद् भाष्यम् **अव्यक्तादिति** ॥ तत्र सर्वपदोपादानतात्पर्यमाह– **न हीति** । एवं द्विपरार्धप्रलय आदिसृष्टिः विवक्षिते ॥

श्लोक: १७-१९

**गीताक्षरार्थस्तु-** महामहिमस्थापनायोक्तौ सृष्टिलयौ न सकृदेव तस्मादित्युच्यते **भूतग्राम इति** । यो व्यक्तिशब्देनोक्तो भूतग्रामः ब्रह्मादिचेतनाचेतनसमुदायः, स एवायम् अहरागमे 'प्रभवति' इत्युक्तोत्पत्तिमनूद्य लय उच्यते । भूत्वा उत्पद्य रात्र्यागमे अवशो भगवद्वशः सन् तत्र प्रलीयत इति ॥ १९ ॥

**भावदीपिका (श्री.टि.)**– 'स्थापयितुम्' इत्यस्य विशेषणस्य कृत्यमाह– प्रतिज्ञेति ॥ 'मामुपेत्य पुनर्जन्म न विद्यते' इत्येतत् प्रतिज्ञामात्रेणैवोक्तम्, न तु युक्त्यादिभिः स्थापित-मित्यर्थः । समानकर्तृकत्वलाभायाह– अवस्थितानामिति ॥ इदंपूर्वत्वाभावेति ॥ चक्रवत् परिवृत्तेः प्रमितत्वादिति भावः । आत्मन इति स्वस्य भगवत इत्यर्थः । गीतामुल्लङ्घ्येति ॥ अन्यथा गीतानुसारेण वक्तव्यं 'प्रभवन्त्यहरागमे' इति गीतायां सृष्टेः प्रागुक्तत्वात् सृष्ट्यादि दर्शयतीति वक्तव्यं स्यादित्यर्थः । प्रसिद्धार्थः दशशतरूपः । विरिञ्चेति ॥

'सहस्रवृत्तं तदहः स्वयम्भवो निशा च तन्मानमितं शरच्छतम्'

'चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते ।
रात्रिश्च तावती..॥'

इत्यादिवचनादिति भावः । **उक्तं** सहस्रशब्दस्यानेकवाचित्वम् । 'विश्वं समस्तं पूर्णं च' इत्याभिधानात् 'परिपूर्ण' इत्युक्तम् । कालतः परिपूर्णरूपवतो नित्यदेहादिमतोऽपीति यावत् । **अनेन** रजनीसद्भाववचनेन । **अहरपीति** ॥ सव्यापारावस्थैवाहरिति भावः ॥ **अवान्तर-सृष्टिप्रलययोरिति** ॥ दैनन्दिनसृष्टिप्रलययोरित्यर्थः । **आकाशादीनामिति** ॥ ब्रह्माण्डावरण-भूतानामित्यर्थः । **नापीति** ॥ ब्रह्माण्डावरणभूतपञ्चमहाभूतनाशानन्तरम् अहंतत्त्वनाशः, तदनन्तरं विरिञ्चदेहस्य महतत्त्वस्यापि नाशो भवत्येवेत्यर्थः ॥ १७,१९ ॥

**भावप्रकाशः (कृ.टि.)**– समानकर्तृकतानिर्वाहार्थं प्राप्येत्यतः परमध्याहरति– **अवस्थितानामिति शेष इति** । ननु मामुपेत्य पुनर्जन्मेत्यादिनोक्तत्वात् पुनरुक्तिरित्यत आह– **प्रतिज्ञामात्रेणेति** । ननु प्रलयादिमात्रं नात्मसामर्थ्यम् । प्रपञ्चधर्मत्वादित्यत आह– **तत्कारणत्व-मिति** । आत्मन इति शेषोक्तिः । **नित्यत्वादिति** ॥ कालकृतविकाराभावादित्यर्थः । उप-लक्षणमेतत् । परनामनिमेषकान्त इत्यादौ द्विपरार्धकालस्य निमेषत्वेनोक्तत्वाच्चेत्यपि ग्राह्यम् ॥ १७-१९ ॥

## भाष्यम्

**उक्तं च महाकौर्मे–**

**'अनेकयुगपर्यन्तं महाविष्णोस्तथा निशा ।**
**रात्र्यादौ लीयते सर्वमहरादौ तु जायते' इति च ।**

**'यः स सर्वेषु भूतेषु' इति वाक्यशेषाच्च ॥ १७-१९ ॥**

भावप्रदीपिका (प.टी.)– ततश्चास्योक्त एवार्थो मानान्तरसंवादादित्याह– **उक्तं चेति ।** इतश्च द्विपरार्धप्रलयोऽयमित्याह– **य इति ।** नहि विरिञ्चाहनि सर्वनाश इत्यर्थः ॥

प्रमेयदीपिका (ज.टी.)– आगमान्तरसम्मतेश्चैवमित्याह– **उक्तं चेति ॥** इतोऽप्येवमित्याह– **य इति ॥** न ह्यवान्तरप्रलये सर्वेषामाकाशादीनां भूतानां नाशः । नापि विरिञ्चस्य पञ्चभूतनाशेऽप्यविनाशित्वमिति भावः ॥ १७-१९ ॥

भावरत्नकोशः (सु.टि.)– भाष्ये रात्र्यादौ रात्रेरादिभागे । अहरादौ अपररात्रे । 'लयस्य त्वष्टमो भागः सृष्टिकालः' इति वचनात् । ब्रह्मशब्दस्य विरिञ्चार्थत्वे दोषमाह– **नापीति** ॥ १७-१९ ॥

गीताक्षरार्थस्तु- महामहिमस्थापनायोक्तौ सृष्टिलयौ न सकृदेव तस्मादित्युच्यते भूतग्राम इति । यो व्यक्तिशब्देनोक्तो भूतग्रामः ब्रह्मादिचेतनाचेतनसमुदायः, स एवायम् अहरागमे प्रभवति इत्युक्तोत्पत्तिमनूद्य लय उच्यते । भूत्वा उत्पद्य रात्र्यागमे अवशो भगवद्वशः सन् तत्र प्रलीयत इति ॥ १९ ॥

**परस्तस्मात्तु भावोऽन्योऽव्यक्तो व्यक्तात्सनातनः ।**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥**

भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु- भूतग्राम इव किं भगवानप्युत्पत्त्यादिमान् ? नेत्युच्यते **पर इति द्वाभ्याम्** । अव्यक्तो भगवांस्तु तस्मात् उत्पत्तिलयोपेताद् व्यक्ताद् भूतग्रामाद् अन्यो विलक्षणो भावयतीति भावः स्वतन्त्रः पदार्थः ।

श्लोकः २१

'सृष्टिः स्थितिश्च संहारो भावनं समुदाहृतम् ।
तद्यः करोति पुरुषः स भाव इति कीर्तितः ॥'

इति वचनादिति विवृतिकृत्सूक्तिः । परः उत्तमो यः सनातनः चिरन्तनः भूतेषु सर्वेषु नश्यत्सु अपि न विनश्यति ॥ २० ॥

**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥**

## भाष्यम्

**अव्यक्तः भगवान् । 'यं प्राप्य न निवर्तन्ते' इति 'मामुपेत्य' इत्यस्य परामर्शात् । 'अव्यक्तं परमं विष्णुः' इति प्रयोगाच्च गारुडे । धाम स्वरूपम् । 'तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते' इत्यभिधानात् ॥ २०,२१ ॥**

भावप्रदीपिका (प.टी.)– नन्वेवं महिमाऽव्यक्तस्यैवोक्तो न तु हरेरित्यत आह– **अव्यक्त इति ।** नन्वव्यक्तस्य 'तद्धाम मम' इति भगवदधिष्ठानत्वोक्तेः कथमव्यक्तो हरिः ? इत्यत आह– **धामेति** ॥ २१ ॥

प्रमेयदीपिका (ज.टी.)– इदानीम् 'अव्यक्ताख्यात्मा' इति यदुक्तं तत्साधयितुमाह– **अव्यक्त इति ॥** 'मामुपेत्य' इत्युक्तार्थस्य 'यं प्राप्य न निवर्तन्ते' इत्यव्यक्तविषयतया परामर्शात् । न केवलम् अव्यक्तशब्दो युक्तिबलाद् भगवति नीयते । किन्तु वाचकश्च तस्येत्याह– **अव्यक्तमिति ॥** कथं तर्हि भगवतोऽव्यक्तस्य **स्वस्थानत्वम्** उच्यते? इत्यत आह– **धामेति ॥**

भावदीपः (रा.टि.)– ॥ धामपदार्थमाश्रयं मत्वा आह– **कथं तर्हीति** ॥ २१ ॥

भावरत्नकोशः (सु.टि.)– ॥ **स्वस्थानत्वम्** । यं प्राप्य न निवर्तन्ते तद्धाम परमं मम इत्यत्र ॥ २१ ॥

**गीताक्षरार्थस्तु–** सर्वात्मना प्रभवप्रलयाभावाद् अव्यक्तोऽक्षर इत्युक्तः 'तस्मादक्षरं तस्मादक्षरम्' इत्यादिशास्त्रेषु, तं परमां गतिमाहुः । सा च परमगतिर्भगवल्लाभरूपैवेत्युक्तार्थस्मरणाय यं प्राप्य न निवर्तन्ते तन्मम धाम स्वरूपमित्युक्तम् ॥ २१ ॥

भावदीपिका (श्री.टि.)– ॥ स्वस्थानत्वमिति ॥ 'तद्धाम परमं मम' इत्यनेनेत्यर्थः ॥ २१ ॥

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।**
**यस्यान्तस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥**

## भाष्यम्

**परमसाधनमाह– पुरुष इति ॥ २२ ॥**

भावप्रदीपिका (प.टी.)– यत्पूर्वं भगवत्प्राप्तौ साधनमुक्तं सदा तद्भावभावितत्वं, न तावता तत्प्राप्तिः, द्वेषिणामपि सम्भवात् । अतः परमसाधनमन्यदस्तीत्यभिप्रेत्योत्तरं श्लोकमवतारयति– **परमेति** ॥ २२ ॥

प्रमेयदीपिका (ज.टी.)– **'भक्त्या युक्तः'** इति भक्तेः भगवत्प्राप्तिसाधनत्वस्योक्तत्वात् पुनरुक्तमुत्तरं वाक्यमित्यत आह– **परमेति** ॥ अन्यैः साधनैः सहोक्तत्वेन तत्साम्यशङ्कायां साधनेषु भक्तेः परमत्वमनेनाऽह । तच्च पुनर्वचनेनैव द्योत्यमिति भावः ॥ २२ ॥

भावदीपः (रा.टि.)– ॥ अन्यैः साधनैरिति ॥ 'मनसा अचलेन भक्त्या युक्तो योगबलेन चैव' इत्याद्युक्तेरिति भावः । अनेनेति ॥ 'परमम्' इति श्लोकेनेत्यर्थः ॥ २२ ॥

भावरत्नकोशः (सु.टि.)– ॥ **भक्त्या युक्त इतीति** । 'भक्त्या युक्तो योगबलेन च' इत्यत्र । **अन्यैः साधनैः** 'मनसाऽचलेन', 'योगबलेन', 'चक्षुर्भ्रुवोर्मध्ये' इत्यादिनोक्तभक्त्यतिरिक्तसाधनैः । **अनेन** 'भक्त्या लभ्यस्त्वनन्यया' इति वचनेन । भावप्रदीपिकायां तु यत् पूर्वं भगवत्प्राप्तौ साधनमुक्तं सदा तद्भावभावितत्वम्, न तावता तत्प्राप्तिः, द्वेषिणामपि तत्सम्भवात् । अतः परमसाधनम् अन्यदस्तीत्यभिप्रेत्योत्तरं श्लोकमवतारयतीति 'परमसाधनमाह' इति भाष्यमवतारितम् ॥ २२ ॥

**गीताक्षरार्थस्तु**- एतादृशी भगवत्प्राप्तिः केन साधनेन स्यात् ? इति शङ्कापनोदाय भक्ते-र्भगवत्प्राप्तिसाधनत्वं 'भक्त्या युक्तो योगबलेन च' इत्यत्रोक्तम् । तत्र योगादिसाधनैः सहोक्तत्वेन तत्साम्यशङ्कायाम्, साधनेषु भक्तेरेवोत्तमत्वं वक्तुम्, पुनरत्र भक्तेः साधनत्वमुच्यते पुरुष इति । अनन्यया अनन्यसाधारण्या भक्त्या तु भक्त्यैव लभ्यः प्राप्यः । 'परमया' इत्यनुक्तावपि पुनः साधनोक्तिबलादेव तल्लाभ इति ज्ञातव्यम् ॥ २२ ॥

भावदीपिका (श्री.टि.)– ॥ **सहोक्तत्वेनेति** ॥ 'भक्त्या युक्तो योगबलेन चैव इत्यनेन' इति शेषः । **पुनर्वचनेनैवेति** ॥ 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायेनेत्यर्थः ॥ २२ ॥

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥**

## भाष्यम्

**यत्कालाद्यभिमानिदेवतागता आवृत्त्यनावृत्ती गच्छन्ति ता आह– यत्रे-त्यादिना ॥ 'कालः' इत्युपलक्षणम् । अग्न्यादेरपि वक्ष्यमाणत्वात् ॥ २३ ॥**

भावप्रदीपिका (प.टी.)– पूर्वं भगवद्भक्तानामपुनरावृत्तिरन्येषां पुनरावृत्तिश्चोक्ता । तद्द्वयं केन पथा गतानाम् ? इत्यत उत्तरश्लोकान् सङ्ग्रहेण व्याचक्षाणोऽवतारयति– **यदिति** ॥ गीतायां 'काल'पदस्यैव श्रवणात् किमर्थम् आदिपदम् ? इत्यत आह– **काल इति** ॥ २३ ॥

प्रमेयदीपिका (ज.टी.)– 'यस्मिन् काले मृता आवृत्त्यनावृत्ती यान्ति तत्प्रतिपादनार्थ-मुत्तरोग्रन्थः' इत्यन्यथाप्रतीतिनिरासार्थमाह– **यदिति** ॥ याश्च ताः कालाभिमानिन्यश्चेति विग्रहः ॥ **देवतागता इति** ॥ तदधिष्ठितमार्गाभ्यां गता इत्यर्थः । 'कालः' इत्युक्तत्वात् कथमादिपदप्रक्षेपेण व्याख्यानम्? इत्यत आह– **काल इति** ॥ कुतः? इत्यत आह– **अग्न्यादेरिति** ॥ अग्निज्योतिर्धूमानाम् ॥ २३ ॥

भावदीपः (रा.टि.)– आदिपदार्थमाह– अग्निज्योतिर्धूमानामिति ॥ २३ ॥

**भावरत्नकोशः (सु.टि.)–** ताः इत्युत्तरत्र भाषणात् तत्सामानाधिकरण्यानुकूलविग्रहं दर्शयति– **याश्च ता इति** ॥

**गीताक्षरार्थस्तु–** यत्कालाग्निज्योतिर्धूमलोकाभिमानिदेवताधिष्ठितमार्गाभ्यां गता आवृत्त्यनावृत्ती गच्छन्ति ता उच्यन्ते यत्रेत्यादि त्रिश्लोक्या ॥ यत्र यत्कालाभिमानिदेवताऽधिष्ठितमार्गेषु धूमादिलोकाभिमानिदेवताऽधिष्ठितमार्गेषु च मृत्यनन्तरं च प्रयाता योगिनः ज्ञानयोगिनः कर्मयोगिनश्च अनावृत्तिम् आवृत्तिं चैव यान्ति तं कालं कालाभिमानिदेवताधिष्ठितमार्गम् । अग्निज्योतिर्धूमानाम् अकालत्वेऽपि कालाभिमानिनां बाहुल्याद् अल्पसलिलयुतपयसि पयःपदस्य सलिलोपलक्षकत्ववत् कालपदस्येतरगम्यदेवताधिष्ठितमार्गोपलक्षकत्वाशयेन 'कालम्' इत्येवोक्तम् ॥ २३ ॥

**भावदीपिका (श्री.टि.)–** ॥ **याश्चेति** ॥ 'यस्य कालादेः' इत्यर्थत्वे 'ता आह' इत्यनुपपन्नं स्यादिति भावः । भाष्ये काल इत्युपलक्षणं मार्गाभिमानिदेवतोपलक्षणमित्यर्थः । आदिशब्देन ज्योतिर्धूमौ ग्राह्यावित्याशयेनाह– **अग्निज्योतिर्धूमानामिति** ॥ मार्गाभिमानिदेवानामित्यर्थः ॥ २३ ॥

**भावप्रकाशः (कृ.टि.)–** यश्चासौ कालादिश्चेति कृते ता आहेत्यनुपपन्नमत आह– **याश्च ता इति** । अग्न्यादेरित्यादिपदेनाहरादेरपि ग्रहणे कालशब्दस्य तदुपलक्षकत्वमयुक्तम् । अहरादेः कालशब्दशक्त्यैव लाभादित्यत आह– **अग्निज्योतिर्धूमानामिति** ॥ २३ ॥

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥**

## भाष्यम्

**ज्योतिः अर्चिः । 'ते अर्चिषमभिसम्भवन्ति' इति हि श्रुतिः । तथाच नारदीये 'अग्निं प्राप्य ततश्चार्चिस्ततश्चाप्यहरादिकम्' इति । अभिमानिदेवताश्चाग्न्यादयः । कथमन्यथा 'अह्न आपूर्यमाणपक्षम्' इति युज्यते?**

श्लोकः २४

**'दिवादिदेवताभिस्तु पूजितो ब्रह्म याति हि' इति ब्राह्मे ।**

भावप्रदीपिका (प.टी.)– 'ज्योतिः' शब्दार्थं सप्रमाणकमाह– **ज्योतिरिति ।** अहःप्राप्तेः पूर्वमर्चिःप्राप्तिनियमादत्राहरधस्तादुक्तज्योतिरर्चिरेवेत्यर्थः । नन्वस्त्वग्न्यादिश्रवणादादिपदम् । देवतापदं व्यर्थम् । अत्राश्रवणादित्येतत्सप्रमाणकं परिहरति– **अभिमानीति ।**

प्रमेयदीपिका (ज.टी.)– ज्योतिश्शब्दस्यानेकार्थत्वाद् विवक्षितमर्थमाह– **ज्योतिरिति ॥ अभिसम्भवन्ति** प्राप्नुवन्ति । श्रुतिपुराणयोरह्नः प्रागर्चिषः प्राप्तेरुक्तेः तत्समाख्यानादित्यर्थः । प्रातीतिक एवार्थः किं न स्यात्? कुतोऽभिमानिदेवताग्रहणम्? इत्यत आह– **अभिमानीति ॥** आदिशब्दसमर्थनेन सह समुच्चयार्थश्चशब्दः । **अन्यथा** मरणकालपरिग्रहे। **इति 'श्रुतिः'** । उपलक्षणमेतत् । 'अहः शुक्लः' इति गीताऽपि । अहोरात्रव्यतिरिक्तपक्षाभावाद् इति भावः । **समाख्यानाच्चैवमित्याह– दिवादीति ॥**

भावदीपः (रा.टि.)– चशब्दसमुच्चयाप्रतीतेराह– आदिशब्देति ॥ 'अग्न्यादेः' इति भाष्ये आदिपदोपात्तज्योतिःशब्दस्य अर्चिरर्थकत्वं यच्छ्रुतिपुराणाभ्यां समर्थनं कृतं तेनेत्यर्थः । यद्वा 'अग्न्यादेः' इत्यादिपदेन अह्नः प्राक् अर्चिषः प्राप्तेः श्रुतिपुराणाभ्यां समर्थनेनेत्यर्थः ॥ अन्यथा इत्यनुवादः, मरणकालपरिग्रहे इति व्याख्या । इतिपदानुवादपूर्वं शेषमाह– इति **श्रुतिरिति** ॥ एतदिति ॥ भाष्यमित्यर्थः । **गीताऽपीति** ॥ 'कथं युज्यते' इत्यनुषङ्ग इति भावः ॥

भावरत्नकोशः (सु.टि.)– ॥ अनेकार्थत्वादिति ॥

'ज्योतिरात्मनि सूर्येऽग्नौ हविर्होमार्चिदीप्तिषु ।
ग्रहनक्षत्रतारासु नक्षत्रे च विशेषतः ॥
विलोचने धने पुत्रे सामभेदेषु केषुचित् ।
ज्योतिष्टोमाख्ययज्ञे च क्लीबं दीप्तौ तु वा स्त्रियाम् ॥
पुंनपुंसकलिङ्गस्तु ज्योतिष्टोमे मतो मम ॥'

इति केशवाभिधानादिति भावः । 'अर्चिषम्' इति श्रुतिपदं 'ज्वालाभासोर्नपुंस्यर्चिः' इत्यत्र 'पुंसि न' इति निषेधात्, स्त्रियां नपुंसके च वर्तत इति व्याख्यानात्, स्त्रीलिङ्गमपीति स्फुटत्वाद-

श्लोकः २४

व्याख्याय, 'अभिसम्भवन्ति' इति पदमनूद्य व्याचष्टे– **अभिसम्भवन्तीति** । प्राप्त्यर्थस्यापि भवतेरात्मनेपदाभावः छन्दस्त्वादिति भावः । **तत्समाख्यानात्** 'अत्रापि ज्योतिःशब्दः अर्चिरर्थकः' इति शेषः । **आदिशब्दसमर्थनेन** 'काल इत्युपलक्षणम्' इत्यादिरूपेण । भाष्ये अग्न्यादयः 'ग्राह्याः' इति शेषः । भाष्ये 'इति' इत्यतः परं शेषमाह– इति **श्रुतिरिति** । 'आपूर्यमाणपक्षम्' इति श्रौतपदस्य 'शुक्लपक्षम्' इत्यर्थः ।

**एतत्** श्रुतिग्रहणम् । **गीताऽपि** 'कथं युज्यते' इत्यन्वेति । 'दिवादि' इति वचने देवता-पदप्रयोगाद् अग्न्यादयोऽभिमानिदेवता ग्राह्या इति भावः । 'अर्चिरादिना तत्प्रथितेः' इति सूत्रभाष्यादौ अर्चिःप्राप्तेः प्रथमत्वावगमाद्, अत्राग्निप्राप्तिः कथं प्रथमोच्यते ? इति शङ्का,

'उत्क्रान्तस्तु शरीरात् स्वाद् गच्छत्यर्चिषमेव तु ।
ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽऽतिवाहिकः ॥
ततोऽहः पूर्वपक्षं चाप्युदक्संवत्सरं तथा ।
तटितं वरुणं चैव प्रजापं सूर्यमेव च ॥
सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ॥'

इति भाष्योदाहृतवचने अग्नेः सोमादनन्तरप्राप्यत्वावेदनात् कथं प्रथमप्राप्यत्वोक्तिः ? इति शङ्का च,

'अग्निर्ज्योतिरिरिति द्वेधैवार्चिषः सम्प्रतिष्ठितिः ।
अग्निं गत्वा ज्योतिरेति प्रथमं ब्रह्म संव्रजन् ॥' इति,
'एकस्मिंस्तु पुरे संस्थो द्विरूपोऽग्नेः सुतो महान्'

इति भाष्योदाहृतवचनेन , 'अग्निं प्राप्य ततश्चार्चिः ततश्चाप्याहरादिकम्' इति, अत्र वचनेन च, अर्चिष एवाग्निर्ज्योतिर्नामकरूपद्वयमङ्गीकृत्य, अग्निशब्दस्य प्रधानाग्निपुत्रवाचकत्वमभ्युपगम्य च परिहृता । स्पष्टं चैतत् तत्त्वप्रकाशिकायाम् ॥

**भावदीपिका (श्री.टि.)**– ॥ **श्रुतीति** ॥ 'तेऽर्चिषमभिसम्भवन्ति, अर्चिषोऽहः' इति

श्रुतिशेषेऽभिहितत्वादिति भाव: । **प्रातीतिक एवेति** ॥ कालप्रतिपादनरूप इत्यर्थ: । नन्वग्न्यादिशब्दानाम् अर्थान्तरस्यानुक्तत्वात् कथं चशब्द: ? इत्यत आह– **आदिशब्देति** ॥ 'यत्कालाद्यभिमानिदेवता:' इत्यत्रत्यादिशब्दसमर्थनम्, 'काल इत्यपलक्षणम्' इत्यादिना कृतम् । इदानीं त्वग्न्यादिशब्दानाम् अभिमानिदेवतापरत्वसमर्थनं क्रियत इति आदिशब्दसमर्थनेन सहास्य समुच्चयार्थश्चशब्द इत्यर्थ: ॥

भावप्रकाश: (कृ.टि.)– ॥ **अनेकार्थत्वादिति** ॥ ज्योतिस्ताराग्निभाज्वालादृक्पुत्रार्थाध्वरात्मसु इति कोशादिति भाव: ॥ नन्वग्न्यादिशब्दानामर्थान्तरस्यानुक्ते: कथं देवताश्चेति चशब्द इत्यत आह– **आदिशब्देति** ॥ यत्कालाद्यभिमानिदेवतेति भाष्ये आदित्याभिमानिदेवतेति चोक्तम्। तत्रादिशब्दसमर्थनं काल इत्युपलक्षणमित्यादि भाष्येण कृतम् ।अधुना अभिमानिदेवतेत्येतत् समर्थ्यते ।अतस्तत्समुच्चयार्थ: चशब्द इत्यर्थ: ॥ **गीतापीति** ॥ कथं युज्यत इति योज्यम् ॥

## भाष्यम्

**मासाभिमानिभ्यो अयनाभिमानी च पृथक् । तच्चोक्तं गारुडे–**

**'पूजितस्त्वयनेनासौ मासै: परिवृतेन हि'इति ।**

**अहरभिजिता शुक्लं पौर्णमास्या अयनं विषुवा सह ॥ तच्चोक्तं ब्रह्मवैवर्ते–**

**'साह्ना मध्यन्दिनेनाथ शुक्लेन च सपूर्णिमा ।**
**सविष्वा चायनेनासौ पूजित: केशवं व्रजेत् ॥' इति ॥ २४ ॥**

भावप्रदीपिका (प.टी.)– ननु षण्मासायनयोरेकत्वात् कथं पृथक्प्राप्यत्वम् ? इत्यत आह– **मासेति । न केवलमत्रोक्तदेवतानां प्राप्यत्वम्, अन्यासां चेत्येतत्सप्रमाणकमाह– अहरिति । मध्यन्दिनसहितेनाह्ना सपूर्णिमेन ॥ २४-२६ ॥**

प्रमेयदीपिका (ज.टी.)– किञ्च 'षण्मासा उत्तरायणम्' 'षण्मासा दक्षिणायनम्' इत्येतदप्यभिमानिदेवतां गमयति । मासातिरिक्तायनाभावात् । अभिमानिनां च पृथक्त्वेन पृथगुक्तिसम्भवादिति भावेनाऽह– **मासेति** ॥ अनेन 'षण्मासा एवायनम्' इति व्याख्यानं

निरस्तं भवति । पुराणविरोधात् । अत्रानुक्तमपि किञ्चिदध्याहरति– **अहरिति ॥** सह स्थितं यातीत्यप्यत्र द्रष्टव्यमिति भावः ॥ एतदप्यभिमानिदेवतापरिग्रहसमर्थनार्थम् । प्राधान्यादेरविवक्षितत्वात् 'साह्ना' इत्युक्तम् । **सपूर्णिमा** सपूर्णिमेन । 'सुपां सुलुक्' इत्यादेः । विपुशब्दस्योवङ्यणादेशविकल्पश्छान्दसः ॥ २४ ॥

**भावबोधः (र.टि.)–** नन्वग्न्यादिशब्दानामर्थान्तरस्यानुक्तेः कथं देवताश्चेति चशब्द इत्यत आह– **आदिशब्दसमर्थनेनेति** । अग्न्यादेरपीत्यनेनेत्यर्थः । एतेन जडसमुच्चायकताप्रतीतिरप्यपास्ता । **अभिमानिदेवतेति** । अभिजित्पौर्णमासीविषुवव्यतिरिक्तानामहश्शुक्लपक्षायनानामभावादिति भावः । ननु मध्याह्नाभिमान्यपेक्षया अहरभिमानिन उत्तमत्वात् कथं साह्नेत्युक्तमित्यत आह– **प्राधान्यादेरिति** ॥ २४ ॥

॥ इति रघूत्तमयतिकृते श्रीमद्गीताभाष्यटीकाभावबोधे अष्टमोऽध्यायः ॥

**भावदीपः (रा.टि.)– ॥ समर्थनार्थमिति ॥** अहरादेः जडस्य जडान्तरसाहित्यायोगादिति भावः ॥ **इत्युक्तमिति ॥** अन्यथा 'सहयुक्ते अप्रधाने' इत्युक्तदिशा अप्राधान्यादेः विवक्षितत्वे प्रमाणेऽपि 'अहर्मन्ध्यन्दिन' इत्यादि निर्देशः स्यादिति भावः ॥ **'इत्यादेः'इति** छान्दसः तृतीयायाः प्रथमेत्यर्थः ॥ **विकल्प इति** ॥ भाष्ये उवङ्प्रमाणे यणादेश इति विकल्प इत्यर्थः ॥ २४ ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** सपूर्णिमेत्यस्य युक्तेनेत्येतद्विशेषणत्वात् सपूर्णिमेनेति भवितव्यमिति तत्राह– **सुपां सुलुगित्यादेरिति** । छन्दसि विषये सुपां स्थाने सु लुक् पूर्वसवर्णे आ, आत्, शे, डा, ड्या याच्, आल्, इत्येते आदेशा भवन्तीति सूत्रार्थः । तथा च सपूर्णिमेनेत्यत्रेनेति तृतीयायाः त्यादेशात् सपूर्णिमा शुक्लेन इति विशेषणविशेष्यभावो युक्त इति भावः । ननु इको यणचीति यणि भाष्यप्रमाणयोरुभयत्रापि यणेव स्यात् । उवङ्पक्षे वा उभयत्रापि उवङेव स्यात् । तत्कथं क्वचित् यणा निर्देशः क्वचित् उवङेति । न च विकल्पः । तद्विधायकाभावादित्यत आह– **विपुशब्दस्येति** ॥

॥ इति श्रीपदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां
श्रीमद्विद्याधीशपूज्यचरणानां निजशिष्यकेशवेन विरचिते
व्याकरणस्पष्टप्रमेयदीपिकावाक्यार्थप्रदीपे अष्टमोऽध्यायः ॥

श्लोकः २४

**भावरत्नकोशः (सु.टि.)– ॥ सम्भवात्** 'नास्मद्व्याख्याने उक्तो दोषः' इति शेषः । **अनेन** 'मासाभिमानिभ्यो अयनाभिमानी' इति भाषणेन । **इति व्याख्यानमिति** । 'षण्मासा एवोत्तरायणम्, तद्देवतैव मार्गभूता' इति सङ्करव्याख्यानमित्यर्थः । एकतरपक्षपरिग्रहे किं नियामकम् ? इत्यत आह– **पुराणेति** । तत्र मासैः मासाभिमानिभिः परिवृतेन अयनेन अयनाभिमानिना देवेन पूजितो ब्रह्म याति इति पृथग्देवताभिधानाद् उभयोरेकैव देवतेति व्याख्यानमयुक्तमिति भावः । 'अनेन' इत्युक्तं व्यनक्ति 'पुराणेति' इत्यपि आहुः । **अत्र** अग्न्यादिदेवानां प्राप्यत्ववर्णनप्रकरणे । 'सह' इत्युपरितनभाष्यपदं संयोजयन् 'शुक्लम्' इति भाष्यस्थद्वितीयानुसाराद् अपेक्षितमध्याहरति– **सहस्थितं यातीति । अत्र** मार्गप्रकरणे । भाष्ये द्वितीयाश्रवणाद् 'याति' इति तावद्वक्तव्यमेव । मार्गप्रकरणे च गीतायां यथायोगं प्रथमान्तपदं संयोजनीयमिति भावः । **एतदपि 'अहरभिजिता'** इति भाषणमपि । **अभिमानीति । अन्यथा** अहरादिप्राप्तावुदितायां तद्व्यतिरिक्ताभिजितोऽभावेन । **तत्प्राप्तेरुक्तत्वात्** 'साह्ना माध्यन्दिनेन' इत्यत्र माध्यन्दिनशब्दिताभिजितः पृथक् प्राप्यत्वोक्तिरयुक्ता स्यादिति भावः ।

ननु 'अहरभिजिता सह स्थितं याति' इति भाषणेनाह्नः प्राधान्यम्, अभिजितोऽप्राधान्यं च प्राप्तम् । 'सहयुक्तेऽप्रधाने' इत्यप्रधाने तृतीयानुशासनात् । तत्कथं तद्विरुद्धं 'साह्ना' इति वचनम् ? इत्यत आह– **प्राधान्यादेरिति** । आदिपदेन साहित्यं ग्राह्यम् । गुणप्रधानभावस्य गम्यत्वे पूजकत्वे च साहित्यस्य चाविवक्षितत्वात् प्रमाणेन तथोक्तिर्युक्तेत्यर्थः । 'सपूर्णिमा' इत्यस्य प्रथमान्तत्वे प्रकृतासङ्गतेः तदनूद्यार्थमाह– **सपूर्णिमा सपूर्णिमेनेति** । 'पूरी आप्यायने' इत्यतो भावे क्तप्रत्यये पूर्णचन्द्रस्य पूरणम्, तेन निर्वृत्ता पूर्णिमा, भावप्रत्ययान्तान् 'तेन निर्वृत्तम्' इत्यर्थे तद्धित इमप्प्रत्ययः, टाप् च, सति चैवं 'पूर्णिमा' इति रूपम् । 'पूर्णिमया सहितः सपूर्णिमः' इति बहुव्रीहौ, 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वे, सपूर्णिमः शुक्लपक्षः, तेन 'सपूर्णिमेन' इत्यनेन शुक्लं पूर्णमासीत्येतत् प्रमापितं भवतीति भावः । प्रमाणे 'सपूर्णिमेन' इति निर्देशः किमिति न कृतः ? इत्यत आह– **सुपां सुलुगित्यादेरिति** । 'सुपां, सुलुक् पूर्वसवर्णाऽऽच्छेयाडाड्यायाजालः' इति सूत्रात् तृतीयाविभक्तेः पूर्वसवर्णदीर्घे 'सपूर्णिमा' इति छान्दसं रूपमित्यर्थः ।

ननु 'अयनं विषुवा सह' इत्यत्र 'विषुवा' इति कथं भाषणम् ? विविधं सुवतीति विसूः, विपूर्वात् 'षु प्रेरणे' इत्यतः कर्तरि क्विपि, 'उपसर्गात् सुनोति' इत्यादिना षत्वे च, विषुशब्दस्य

निष्पत्त्या, ततस्तृतीयैकवचने 'विष्वा' इत्येव वक्तव्यत्वात्, इत्यत आह– **विषुशब्दस्योवङिति** । 'तन्वादीनां छन्दसि वेति वक्तव्यम्' इति वार्तिकाच्छन्दसि 'अग्ने यन्मे तनुवा ऊनं तन्म आ पृण' इत्यादाविव 'विषुवा' इति उवङादेशे रूपमित्यर्थः । ननु तथाऽपि पुराणे 'सविष्वा' इति कथं रूपम् । उक्तरीत्या तत्राप्युवङादेशे 'विषुवा' इति निर्देष्टव्यत्वात् । न च 'विषुवा सहितम्' इत्यत्र अयनविशेषणतया नपुंसकभावे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वेन 'सविषु' इति प्रातिपदिकनिष्पत्तौ ततस्तृतीयायाम् 'इकोऽचि विभक्तौ' इति नुमागमे च 'सविषुणा' इति भवितव्यमिति वाच्यम् । एवमपि 'सविष्वा' इति प्रयोगानुपपत्तेस्तदवस्थत्वादित्यत आह– **यणादेशविकल्पश्चेति** । सत्यं नुमागमेन भवितव्यमिति । छन्दस्तुल्यत्वात् पुराणस्य यणादेशोऽप्यत्र नुमागमेन विकल्पेन क्रियते । तथा च 'सविषुणा' इतिवत् 'सविष्वा' इति रूपमपि छन्दसि साध्वेवेति भावः । न केवलं 'सपूर्णिमा' इत्यत्र पूर्वसवर्णदीर्घः, तथा 'विषुवा' इत्यत्र उवङादेशश्छान्दसः । किन्तु 'सविष्वा' इत्यत्र यणादेशविकल्पश्चेति चशब्दार्थः ।

यद्यपि विषुवच्छब्द एव कालार्थः । 'अथो एष वै विषूवान् विष्णुं विषूवन्तो भवन्ति । य एवं विद्वाँ स एता आसते' इति यजुस्संहिताभाष्ये 'विषुवान् इति संवत्सरमध्यवर्ती मुख्योऽहर्विशेषः' इति माधववचनात् । विषूवान् दिवा कार्त्यम्' इति यजुर्ब्राह्मणे पाठात्, पुराणे च भविष्योत्तरे 'दशार्वाङ् नाडिकाः पुण्याः पश्चादपि विषूवति' इति, शातातपस्मृतौ 'कुर्यात् सदायने मध्ये विष्णुपद्यां विषूवति' इत्युक्तत्वात् ।

'साङ्गं बलं पार्श्वयुगे स राजा बिभ्रद्विषूवानिव पक्षसी द्वे ।
ऋद्धिं प्रदित्सन्निजसेवकानां शालामिव स्वां नगरीं प्रपेदे ॥'

इति वाक्यकारप्रयोगाच्च । तथाऽप्यत्र भाष्यपुराणयोः विषुशब्द एव विषुवच्छब्दार्थ एष्टव्यः । शुक्लादिशब्दे मतुब्लोपेनेवात्रापि मतुब्लोपेन उक्तरीत्या विविधफलापादनहेतुना योगेन वा काले व्याख्यातव्यत्वात् । 'अहरभिजिता' इत्यादिकालवाचकशब्दैः सह पठितत्वादिति ज्ञातव्यम् । 'विषुशब्दस्य' इति पाठेऽपि उवङादेशो यणादेशविकल्पश्च पूर्ववद्विषुशब्द एव विषुवच्छब्दार्थक इति व्याख्यानं द्रष्टव्यम् ।

तेन 'समरात्रन्दिवे काले विषुवद्विषुवं च तत्' इत्यमरव्याख्याने 'विषु साम्येऽव्ययम्, ततो मतुप्, 'संज्ञायाम्' इति वत्वम् । 'अन्यत्रापि' इत्युक्तेः मत्वर्थीयो वप्रत्ययः । समरात्रन्दिवं यस्मिन्

श्लोकः २४
मेषतुलावच्छिन्ने काले स कालः 'विषुवत्', 'विषुवम्' चैतदित्युच्यते' इति व्युत्पादनात् विषुशब्दश्चादिगणे पठितोऽव्ययमिति, ततः 'अव्ययादाप्सुपः' इति लुकि तृतीयैकवचनाभावात् कथमुवङ् ? कथं च यण् ? इति चोद्यं प्रत्यस्तम् । भाष्यादौ विषुशब्दस्यैव मतुब्लोपेन, अभेदोपचारेण वा 'समरात्रन्दिवे' इति वासरार्थकत्वेन द्रव्यार्थतयाऽनव्ययत्वेन तत्र उवङ्यणादेशयोर्व्याख्यातुं शक्यत्वात् । अत एव तृतीयस्कन्धतात्पर्ये–

> 'मध्याह्नस्त्वभिजित्प्रोक्त आषाढोत्तर एव च ।
> श्रवणस्यापि पूर्वार्धो विषुवद्वाऽभिजित्स्मृतः ॥'

इति विषुवच्छब्द एव कालार्थ उक्तः । पठ्यते च विषुवच्छब्दः छान्दोग्यब्राह्मणे दशरात्रे चतुर्थाध्याये षष्ठे खण्डे 'विषुवानेष भवति । देवलोको वा एषः, यद्विषुवान्' इति 'विषुवत् एव तद्रूपम्' इति च । तत्रैव पञ्चमखण्डे 'तदाहुर्विविधमिव वा एतत् यदग्निष्टोमः विषुवानग्निष्टोमः' इति। तथा चात्रापि तुल्यनक्तंदिवकालतदभिमानिदेवतास्मरणस्य आवश्यकताज्ञापनाय विषुवच्छब्दार्थकेन विषुशब्देनैव तत्प्रत्यायनाय युक्तमेवोवङादेशादिव्युत्पादनम् । दृश्यते च स्वतोऽव्ययादपि अर्थान्तरवाचिनः शब्दात् सुबुत्पत्तिः 'स्फ्यः स्वस्तिर्विधनः स्वस्तिः परशुर्वेदिः परशुर्न स्वस्तिः' इति । अत्र भट्टभास्करेण स्वस्तिशब्दोऽयं निपातो गुणमात्रे अविनाशे वर्तते । सोऽयमिदानीं मतुब्लोपाद्, अभेदोपचाराद्वा शुक्लादिशब्दवत् गुणिन्यविनाशहेतौ वर्तत इत्युक्तत्वात् ।

केचित्तु यद्यपि 'विषुवा', 'सविष्वा' इति भाष्यप्रमाणप्रयोगौ द्वावपि विषुवच्छब्दप्रकृतिकावेव । तत्र भाष्ये विषुवच्छब्दात् तृतीयाविभक्तेः 'सुपां सुलुक्' इति पूर्वसवर्णदीर्घे रूपम् । प्रमाणे च षवर्णगतोकारलोपः, ततो न नुमागमप्रसक्तिः, अनिगन्तत्वात् । पूर्ववत् सवर्णदीर्घे 'विष्वा' इति रूपमिति शक्यं व्याख्यातुम् । प्रसिद्धश्च विषुवच्छब्द उक्ताभिधानादौ । तथाऽपि 'तनुवा', 'तन्वा' इत्यादाविवोकारान्तत्वस्य झटिति प्रतीतिकत्वाद्, उपायस्योपायान्तरादूषकत्वात्, उपलक्षणत्वेनैवं व्याख्यातमित्याहुः । तत्रातीव चतुरस्रम् । प्रमाणे 'सविष्वा' इत्यत्रोकारान्तत्वाभावे उकारलोपः, टाविभक्तेः पूर्वसवर्णदीर्घत्वं चेति द्वयं कल्पनीयम् । टीकारीत्या यणादेशनिपातनमात्रे कृते सर्वं समञ्जसमित्यतो भाष्येऽप्युकारान्तत्वस्य वक्तुमुचितत्वादिति ॥ २४-२६ ॥

श्लोकः २४

ता देवता उद्देशेन निरूप्यन्ते **अग्निरिति** । अत्राग्निशब्देनाग्निनामा प्रधानवह्निपुत्रो गृह्यते । ज्योतिःशब्देन त्वर्चिर्नामाऽग्निपुत्र एव ग्राह्यः । तावुभावप्येकरूपौ, एकपुरस्थौ चेति सूत्रभाष्ये स्फुटम् । तेन 'तेऽर्चिषमभिसम्भवन्ति', 'अर्चिरादिना तत्प्रथितेः' इत्यादौ अर्चिर्नामक-ज्योतिषः प्रथमप्राप्यत्वावगमाद् अत्र कथमग्नेः प्रथमप्राप्यत्वोक्तिरिति चोद्यं निरस्तम् । प्राप्यलोकभेदाभावात् । आह– च 'एकस्मिंस्तु पुरे संस्थो द्विरूपोऽग्नेः सुतो महान्' इति प्राप्तिक्रमापेक्षया चाग्निर्ज्योतिरित्युक्तिः । तथा च भाष्यम् 'अग्निं प्राप्य ततश्चार्चिः' इति । अहः अहरभिमानिनी देवता, अभिजित्कालाभिमानिदेवता चात्र ग्राह्या । शुक्लः शुक्लपक्षाभिमानि-देवता । अत्र पौर्णिमास्यभिमानिदेवताऽपि ज्ञातव्या । षण्मासाः षण्मासाभिमानिन्यो देवताः, उत्तरायणं तदभिमानिनी देवता षण्मासदेवतातोऽन्या । तत्र उक्तदेवताधिष्ठितमार्गेषु ॥ २४ ॥

**भावदीपिका (श्री.टि.)**– ॥ **मासातिरिक्तेति** ॥ षण्मासातिरिक्तेत्यर्थः । अभिमानि-ग्रहणेऽपि पृथगुक्तिर्न सम्भवतीति चेत्, तत्राह– **अभिमानिनां त्विति** ॥ **पुराणेति** ॥ 'मासैः परिवृतेनायनेन' इत्युक्तत्वादिति भावः । **सह स्थितमिति** ॥ अभिजिता सह स्थितमहः, पौर्णमास्या सह स्थितं शुक्लम्, विषुवा सह स्थितमयनं यातीत्यर्थो द्रष्टव्यः । अत्राभिजिच्छब्देन मध्याह्नाभिमानिदेवता ग्राह्या । अनुक्ताध्याहारे किं प्रयोजनम् ? इत्यत आह– **एतदपीति** ॥ अभिजित्, पौर्णमासी,विषुव्यतिरिक्तानाम् अहः, शुक्लपक्ष,अयनानामभावादभिजिदादिनां सह-भावोऽहरादीनां कालरूपत्वेन न सम्भवति, अतोऽभिमानिदेवता एव ग्राह्या इति समर्थनार्थ-मित्यर्थः । ननु मध्याह्नाभिमानिदेवतापेक्षया अहरभिमानिन उत्तमत्वात्, अत एव भाष्ये 'अहरभिजिता' इत्युक्तत्वात् कथं 'साह्ना' इत्युक्तम् ? इत्यत आह– **प्राधान्यादेरिति** ॥ ननु 'सपूर्णिमा' इत्येतत् 'शुक्लेन' इत्यस्य कथं विशेषणम् । 'पूर्णिमया सहितः सपूर्णिमः, तेन सपूर्णिमेन' इति वक्तव्यत्वात्, इत्यत आह– **सपूर्णिमेनेति** ॥ **सुपां सुलुगिति** ॥ तथा च सपूर्णिमशब्दात् परतः स्थितायाः 'टा' इति तृतीयाविभक्तेः 'सुपां सुलुक्' इत्यादिसूत्रेण आकारादेशे 'सपूर्णिमा' इति तृतीयाविभक्तिर्युक्तेति भावः ।

ननु भाष्यप्रमाणयोः 'विषुवा', 'सविष्वा' इति कथं विचित्रप्रयोगः ? इत्यत आह– **उवङ्यणादेशविकल्प इति** ॥ उवङ्यणादेशयोः विकल्प एकदोवङ्, एकदा यणादेश इत्येवंरूपो विकल्प इत्यर्थः । तथा च 'विषुवा सह' इत्यत्र 'विषु टा' इति स्थिते 'चुटू' इति

श्लोकः २४
टकारलोपे 'विषु आ' इति जाते, इकः स्थाने प्राप्तयणादेशबाधकत्वेन 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' 'श्नुप्रत्ययान्तस्य, इवर्णोवर्णान्तस्य धातोः 'भ्रू' इत्येतस्य चाङ्गस्य इयङुवङौ स्तोऽजादौ प्रत्यये परे' इति सूत्रेण विषुशब्दस्य उवर्णान्तधातुत्वाद् उवर्णस्योवङादेशे ङकार-लोपे, 'विषुव् आ विषुवा' इति तृतीया भाष्ये युक्ता ।

प्रमाणे च 'विषु टा' इति स्थिते टकारलोपे 'इको यणचि' इति उकारस्य वकार-रूपयणादेशे सति विष्व् आ 'सविष्वा' इति तृतीया युक्तेत्यर्थः । अत्र यस्मिन् सङ्क्रमणेऽ-होरात्रयोः साम्यं तद् विषुशब्दोक्तम् । तच्चोत्तरायणे मेषसङ्क्रमणम्, दक्षिणायने तुला-सङ्क्रमणमिति ज्ञेयम् । तथा च 'अयनं विषुवा सह' इति भाष्ये 'अयनम्' इति यदोत्तरायण-कालाभिमानिदेवताविवक्षा तदा 'विषुवा सह' इत्यस्य 'मेषसङ्क्रमणाभिमानिदेवतया सह स्थितम्' इत्यर्थः । यदा तु दक्षिणायनाभिमानिदेवताविवक्षा तदा 'विषुवा सह' इत्यस्य 'तुलासङ्क्रमणादिभिमानिदेवतया सह' इत्यर्थो द्रष्टव्यः । एवमेव 'सविष्वा चायनेन' इति प्रमाणार्थो व्यवसेयः । यद्यपि 'समरात्रन्दिवे काले विषुवद्विषुवं च तत्' इत्यमरकोशकारेण समरात्रन्दिनोपेते मेषतुलासङ्क्रमणरूपे काले विषुवच्छब्दो विषुवशब्दश्च प्रवर्तत इति विषु-वच्छब्दस्य च तद्वाचित्वमुक्तम्, न विषुशब्दस्य । तथापि 'सविष्वा' इति प्रमाणानुसारेण विषुशब्दोऽपि तद्वाची वर्तते इति द्रष्टव्यम् ॥

**भावप्रकाशः (कृ.टि.)–** सहेत्यस्य कर्त्रन्वयभ्रान्तिं निराह– **सहस्थितमिति** । **अभिमानिदेवतेति** । अन्यथाऽहरादिप्राप्तावुक्तायामभिजिदादिप्राप्तेरप्युक्तप्रायत्वात् पृथक्तदुक्तिः स्यादिति भावः । नन्वभिजिता सहेत्यनेनाभिजितोऽप्राधान्यमह्नः प्राधान्यं च लब्धम् । सहयुक्तेऽप्रधान इत्युक्तेः । अभिजित् सहितस्यैवाह्ना गम्यत्वं लब्धम् । सहशब्दसामर्थ्यात् । तत्कथं तद्विरुद्धं साह्नेत्युक्तमित्यत आह– **प्राधान्यादेरिति** । आदिपदेन साहित्यं ग्राह्यम् । **गुणप्रधानभावस्य गम्यत्वे च साहित्यस्य चाविवक्षितत्वादित्यर्थः** । **सुपामिति** । सु लुक्, पूर्वसवर्णः, आ, आत्, शे, या, डा, ड्या, याच्, आल्, एते आदेशाः सुपां स्युरित्यर्थकेन सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजाल इति सूत्रेण पूर्वसवर्णदीर्घ इत्यर्थः ।

ननु साम्यवाचिविषुशब्दस्याद्रव्यार्थत्वे चादिषु पाठादद्रव्यत्वेन सुब्लोप एव । साम्य-विशिष्टकाले तु द्रव्यार्थत्वादनव्ययत्वेऽपि विषुणेति तृतीयैकवचने रूपं स्यात् । विषुवेति सविष्वेति च कथमित्यत आह– **विपुशब्दस्येति** । उवङादेशविकल्पे विषुवा विषुणेति स्यात्र

तु विष्वेति । यणादेशविकल्पे च विष्वा विषुणेति स्यान्न तु विषुवेति । अत उभयानुगुण्यायो-वङ्यणादेशविकल्प इत्युक्तम् ॥ २४ ॥

**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥**

**भावरत्नकोशः (सु.टि.)–** 'धूमः' इत्यत्र धूमादिशब्दैर्दशदेवता उच्यन्ते । **तत्र** तत्त-द्देवताधिष्ठितमार्गेषु । **चान्द्रमसं** चन्द्रमसि भवं ज्योतिः प्रकाशं योगी इष्ट्यादिकारी ॥ २५ ॥

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**
**एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ २६ ॥**

**भावरत्नकोशः (सु.टि.)–** निरयमार्गं प्राप्तस्यापि कालभेदेन स्वर्गमार्गगमनमिव धूमादिमार्गं गतस्यापि कदाचिदर्चिरादिमार्गगमनमपि व्यत्यस्यास्ति किम् ? इति शङ्कां परिहर्तुं मुक्तौ मार्गौ निगमनेन व्यवस्थाप्येते शुक्लकृष्ण इति । शुक्ला च कृष्णा च त एव ह्रस्वत्वेन शुक्लकृष्णे, ज्ञानलक्षणप्रकाशसाध्यत्वाद् अर्चिरादिः शुक्ला गतिः, तदभावात् कर्मसाध्यत्वाच्च धूमादिगतिः कृष्णा । जगतः ज्ञानकर्मिलोकस्य शाश्वते शाश्वत्यौ सदैकप्रकारे, न तु कदाऽपि व्यत्यस्ते । तत्र एकया शुक्लगत्या अर्चिरादिमार्गेण, अन्यया कृष्णगत्या धूमादिमार्गेण ॥ २६ ॥

**नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।**
**तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥**

## भाष्यम्

**एते सृती सोपाये ज्ञात्वाऽनुष्ठाय न मुह्यति । तच्चाह स्कान्दे– 'सृती ज्ञात्वा च सोपाये अनुष्ठाय च साधनम् । न कश्चिन्मोहमाप्नोति न चान्या तत्र वै गतिः' इति ॥ २७ ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये अष्टमोऽध्यायः ॥

श्लोकः २७

भावप्रदीपिका (प.टी.)– न केवलभक्त्या भगवद्भावभावितत्वेनान्तकालस्मरणं भवति, किन्तु मार्गज्ञानध्यानाभ्यां चेत्यभिप्रायं श्लोकं सप्रमाणकं व्याचष्टे– **एतदिति ।** सोपायेऽनुष्ठाय च साधनम् इति 'योगी' इत्यस्यार्थः ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां श्रीपद्मनाभतीर्थभट्टारकविरचितयां श्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां अष्टमोऽध्यायः ॥ २७ ॥

प्रमेयदीपिका (ज.टी.)– 'नैते सृती पार्थ' इति मार्गज्ञानमात्रेण मोहाभावोऽभिधीयत इति प्रतीतिनिरासार्थमाह– **एत इति ॥** अनुष्ठाय 'उपायम्' इति शेषः । कुत एतत्? 'योगी' इत्युक्तत्वात् । पुराणसंवादाचेत्याह– **तच्चेति ॥** मोहः भगवद्विस्मृतिरूपः । अन्या भगवत्प्राप्तेः ॥

भाष्ये पुराणे च 'अनुष्ठाय' इत्याकारस्थाने क्वचिदीकारो लेखकदोषेण पतितः । मूलपुस्तकेष्वदर्शनात् ॥ २७ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकायां श्रीजयमुनिविरचितायां प्रमेयदीपिकायाम् अष्टमोऽध्यायः समाप्तः ॥ ८ ॥

भावदीपः (रा.टि.)– ॥ उपायमितीति ॥ ज्ञानं कर्म चेत्यर्थः ॥ २७ ॥

॥ इति श्रीमत्सुधीन्द्रतीर्थश्रीपादशिष्यश्रीराघवेन्द्रयतिकृते श्रीगीताभाष्यटीकाभावदीपे अष्टमोऽध्यायः ॥

भावरत्नकोशः (सु.टि.)– 'अनुष्ठाय च साधनम्' इति वचनानुसारेण भाष्ये शेषमाह– **उपायमितीति** । ज्ञानकर्मरूपमित्यर्थः । भाष्ये 'सृती' इत्यस्य मार्गावित्यर्थः । **योगीत्युक्तत्वादिति** ॥ सोपायमार्गज्ञानस्य तदपायानुष्ठानस्यैवात्र योगत्वेन विवक्षितत्वात् 'न मुह्यति' इति युक्तमिति भावः । ननु भगवदनुस्मरणं कर्तव्यम् । तादर्थ्येन मार्गादिज्ञानमप्यापादनीयमिति प्रकृतत्वात्, अत्र मिथ्याज्ञानस्य प्रतिषेध्यतया अप्राप्तस्याभाववचनं न प्रकृतसङ्गतम् ? इत्यतो विवक्षितमोहशब्दार्थं दर्शयति– **मोहो भगवदिति** ॥ अन्यत्वं किमपेक्षयेत्यतः प्रतियोग्याह– **भगवत्प्राप्तेरिति** । एवं च तत्रोक्तसाधनानुष्ठानेन मोहाभावे भगवत्प्राप्तिरेव फलं योगिन इति भाष्यं व्याख्यातम् भवति । **लेखकेति** । अनुपूर्वात् 'ष्ठा गतिनिवृत्तौ' इत्यतः क्त्वाप्रत्ययस्य समासे ल्यपि

'अनुष्ठाय' इत्याकारस्यैव श्रवणौचित्येन ईकारस्यालाक्षणिकत्वात् । 'घुमास्थागापाजहातिसां हलि' इति प्राप्तम् ईत्वं तु 'न ल्यपि' इति प्रतिषिद्धमिति भावः । हेत्वन्तरं चाह **मूलेति । अदर्शनात्** ईकारपाठस्य ॥ २७,२८ ॥

मार्गकथनस्य प्रयोजनमुच्यते **नैत इति ।** एते उक्ते सृती मार्गौ जानन् योगी ते सोपाये ज्ञात्वा तदुपायम् अनुतिष्ठन् कोऽपि न मुह्यति भगवद्विस्मृतिरूपं मोहं न प्राप्नोति । **तस्मात्** भगवदनुस्मृत्यनुकूलत्वात् । सर्वदा योगयुक्तो भगवज्ज्ञानभक्तिपूर्वकस्वोचितकर्मानुष्ठानलक्षणोपायवान् भव । द्विःसम्बोधनम् आदरसम्पादनार्थम् ॥ २७ ॥

**भावदीपिका (श्री.टि.)**– ॥ **कुत एतदिति** ॥ 'अनुष्ठाय' इति कुतः पूरणीयमित्यर्थः । **योगीतीति** ॥ योगानुष्ठाता हि योगीत्युच्यते यतः, अतः 'अनुष्ठाय' इत्यवश्यं वाच्यमेवेति भावः । यथोक्तं सूत्रकृता 'योगिनः प्रति स्मर्येते' इति ॥ **अन्येति** ॥ तथा च तत्र मोहतरणे भगवत्प्राप्तेरन्या गतिः साधनं नास्तीत्यर्थ इति आहुः । वस्तुतस्तु तत्र एवं भगवद्विस्मृतिरूपमोहापगमानन्तरं तस्य पुंसो भगवत्प्राप्तेरन्या गतिर्नास्तीति भगवत्प्राप्तिरेव भवतीत्यर्थो द्रष्टव्यः । **ईकार इति** ॥ 'अनुष्ठीय' इति पाठ इत्यर्थः ॥ २७ ॥

इति यदुवरगीताभाष्यटीकासु युक्ता–
शयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराट्छात्रचीर्णा
समगमदयमस्यामष्टमोऽध्याय आन्तम् ॥ १ ॥

**॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां श्रीमद्भगवद्गीताभाष्यटीकाविवृत्तौ भावदीपिकाख्यायामष्टमोऽध्यायः ॥**

**भावप्रकाशः (कृ.टि.)**– ननु नैते सृती इत्यनेन मार्गज्ञानस्य प्रयोजनमुच्यते । तत्र मोहाभावमात्रग्रहणे उपक्रमविरोधः । मरणकालकर्तव्यत्वेन भगवत्स्मृतेरेवोपक्रमप्रतिपाद्यत्वात् । तत्रैव च प्रमाणस्य प्रवृत्तत्वादित्यत आह– **मोहो भगवद्विस्मृतिरूप इति ।** यद्वा ननु सृती ज्ञात्वा साधनमनुष्ठाय न मोहमाप्नोति इति मार्गज्ञानोपायानुष्ठानाभ्यां मोहाभाव उक्तः । स न युक्तः । मार्गविषयत्वे मोहस्य भगवद्विषयमोहस्य वा निवृत्तौ साधनानुष्ठानस्य साक्षादहेतुत्वात् ।

श्लोकः २८
मोहस्य ज्ञानेनैव निवृत्तेरित्यत आह– **मोह इति** । प्रमाणे भगवत्स्मृतेः फलमुक्तम्– **न चेति** । तस्यार्थः । तत्र च भगवत्स्मृतौ सत्यां चान्या गतिर्नास्तीति । तत्रान्यत्वस्य सावधिकत्वादाह– **भगवत्प्राप्तेरिति** ॥ २७,२८ ॥

॥ इतिश्रीमत्तिरुमलाचार्यसुतकृष्णविरचितायां प्रमेयदीपिकाभावप्रकाशे अष्टमोऽध्यायः ॥

**वेदेषु यज्ञेषु तपस्सु चैव दानेषु यत् पुण्यफलं प्रदिष्टम् ।**
**अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥२८॥**

॥ ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे अक्षरपरब्रह्मयोगो नामाष्टमोऽध्यायः ॥

**भावरत्नकोशः** (सु.टि.)– एवं 'किं तद् ब्रह्म' इत्यादिप्रश्ननिर्णयद्वारेण अवधारितम् अक्षराख्यपरब्रह्म, तत्प्राप्त्यनुकूलमार्गादिकं च विदुषः सर्वातिशायि फलं निगद्यते **वेदेष्विति** ॥ सम्यगधीतेषु वेदेषु यज्ञेषु साद्गुण्येनानुष्ठितेषु तपस्सु कायक्लेशात्मकचान्द्रायणादिषु सुतप्तेषु दानेषु सत्पात्रे प्रतिपादनेषु यत् पुण्यफलं प्रदिष्टं शास्त्रेणोपदिष्टं तत् सर्वमत्येति अतिक्रामति न गणयति । इदम् अक्षराख्यब्रह्मस्वरूपं तत्प्राप्तिमार्गादि विदित्वा उक्तरीत्या परिज्ञाय स्थितो योगी परम् उत्कृष्टं दिव्यम् आद्यम् आदौ भवं कारणं स्थानं वैष्णवं पदम् उपैति प्रतिपद्यते च इति ॥ २८ ॥

स्वतन्त्रः कर्ताऽयं लघुरहं कर्मसु परं
प्रतिच्छायारूपः किमपि च करोमि स्वविहितम् ।
इति प्राज्ञैर्ज्ञात्वा सकलसुकृतानि प्रतिदिनं
हरावेव न्यस्यन् प्रथित इह कर्मज्ञ इति सः ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सुरेन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रतीर्थविरचितायां
प्रमेयदीपिकाव्याख्यायां भावरत्नकोशसमाख्यायामष्टमोऽध्यायः ॥